ततः कोऽपि शब्दप्रयोगे पिकशब्दवत् प्रत्ययो न प्रयुज्येत, न तु केवलाया. प्रकृतेः प्रयोगः, अपभ्रंशप्रसङ्गात्। तेन यस्मिन् कस्मिंश्चित् प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते, नान्योऽप्यधिकार्थान्वयापत्तिप्रसङ्गात् । ननु च, ' इक्श्तिपौ धातुनिर्देशे ' विहितौ अतस्तद्युक्तौ करोतिभावयती प्रयुज्येयाताम् । नैतदस्ति । तथा सति शब्दपदार्थकत्वादेव साम्यामाख्यातार्थः कथ्येत । यत्तु कश्चिदर्थेऽपि धातुनिर्देशमनन्तं प्रयुङ्क्ते यजिः, पचतिः, इति च, तत् शब्दे अभिहिते लक्षणया अर्थप्रतीतिरित्यवगन्तव्यम् । न चेह किञ्चिल्लक्षणाश्रयणे प्रयोजनमस्ति, येनावाचकः प्रयुज्येत । तथा ह्येव अनिष्टगौरवेण, कृञ्भुवौ धातू मिथः अभिधीयेते इति । तस्मादर्थपरत्वसिद्ध्यर्थमाख्यातप्रत्ययसहितावेव प्रयुज्येते । यदि च भावनैवैका प्रत्ययार्थः स्यात् करोतिभावयती वा समस्तप्रत्ययार्थोपादानसमर्थौ भवेताम्, ततः केवलप्रयोगोऽप्याशङ्क्येत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृसंख्यादिप्रत्यायनार्थं पुनः प्रत्ययः उच्चार्यते । यत्तु तत्र भावनाभिधानमात्रः स भावस्यादनूद्यते, अन्यथा हि भावनैवैका प्रत्ययार्थः, करोतिभावयती वा कर्तृसंख्यादीनामपि अभिधायकाविति भ्रान्तिः स्यात् । नित्य च पूर्वापरीभूता भावना भावरूपत्वेनोच्यते । तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयतिभ्यां द्रव्यवदुपसंहृतरूपोच्यमाना नैवाऽऽख्यातशब्दैः कथ्येत । तस्मादुभयत्र तदपि प्रयोक्तव्यमिति । किञ्च— ' भावना गम्यमाना च धातुप्रत्ययसंनिधौ । कस्य वाच्येति विस्पष्टं न कदाचित् प्रतीयते ॥ ' यदि द्वैधान्तेन अस्याः प्रत्ययार्थत्वमवधार्येत, ततः करोतिभावयतिभ्यां प्रत्ययेनैकत्वाशङ्का स्यात्, न तु तदस्ति, उभयसंनिधौ गम्यमानत्वात् । केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि [illegible] विवेको विज्ञायते । शक्यते हि वक्तुं धातुरहितेन प्रत्ययेनोच्यते इति, भावना प्रत्ययानुगृहीतेन धातुना, अथवोभाभ्याम् । न च शक्तिकल्पनायां विशेषः, सर्वथा त्वर्थापत्तिसाम्यात् । न च विवेकज्ञानप्रयोजनमस्ति । स्यादेतत्, कृदन्तादधातोरप्रतीतेः विङ् व्यभिचारित्वेन नेति । तदयुक्तम् । अस्ति-

विद्यतिभवतिपरेषु प्रत्ययेष्वप्यदर्शनात् । न वा कृदन्तेष्वत्यन्तं भावना नास्ति, किञ्चिदपक्रम्यमाणरूपप्रतीतेः । कृत्येषु तावत् भोक्तव्यम्, यष्टव्यमिति किञ्चिन्न्यूना आख्यातादवगम्यते । तत्रापि कर्मोत्पत्तेषु द्रव्यप्राधान्यात् ' ब्राह्मणो न हन्तव्यः ' इति भावोत्पन्नेभ्यो न्यूनतरा । नहि तत्र प्रयोजकव्यापारप्राधान्यम्, एकत्र धात्वर्थप्राधान्यादपरत्र व्यापारविशिष्टप्रयोज्यपरत्वात् । एतेन भावकर्मोत्पन्नलकारास्तिङोऽपि व्याख्याताः । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा । अतो न निष्ठान्ता तुल्यकल्पत्वम् । तथा ' अव्ययकृतो भावे भवन्ति ' इति स्मरणाविशेषेऽपि स्वमन्तेष्वसीमन्नम्भावनाविज्ञानम् । ' अग्निज्ञानं जुहोति ' ' दर्भस्तम्बकेनोपघातं जुहोति ' ' अभिपूल्य हुत्वा भक्षयन्ति ' ' पुरा याचः प्रवदितोः ' इति सर्वत्र श्रुत्यैव भावनान्तरापेक्षा भावना अवगम्यते । यतः पक्तुकामित्यपि निर्वृत्तरूपभावनोपसर्जनत्वप्रतीतिः प्रत्यक्षा । एवं पाचकादिष्वपि द्रष्टव्यम् । तथा च सर्वत्र कारकापेक्षा दृश्यते । अन्यथा हि कृदितद्धितसमासेष्विव इव न स्यात् । न च निर्व्यापाराणामेते व्यपदेशा भवन्ति । न चास्ति स व्यापारः, यत्र किञ्चित्स्वत्र जन्यते । ततश्च सिद्धः करोतिभावयत्योरर्थः । शक्यते च सर्वत्र सामानाधिकरण्यमपि दर्शयितुं विनाऽपि पूर्वापरीभूतत्वेन । तथा ' किं कर्तव्यम् ? पक्तव्यम् ' ' कथंकारं जुहोति ? अग्निनामम् ' ' किं कृत्वा जुहोति ? अभिपूल्य ' ' किं कृतवान् ? पक्तवान् ' ' किं कृतम् ? पक्वम् ' ' किंक्रियो देवदत्तः ? पक्ता ' ' केयं क्रिया ? पाकः ' इति । न च करोतिसामानाधिकरण्यातिरिक्त आख्यातेष्वपि भावनाप्रमाणं विद्यते । तस्मादाख्यातेऽपि भावना न मुह्यन्ति । तथा चाऽऽहुः ' करोतिरर्थेष्विव सर्वधातून् ' इति । यत्तु अस्याः प्राधान्यम्, तत् सर्वं विहाऽभिधेय व्योत्य वा अन्वयव्यतिरेकाभ्यामस्तु, [illegible] स्वरूपम् । नन्वेवमपि यागेनेति धात्वर्थे निष्कृष्टे तेनैव भावनाऽप्युपात्तेति भावयेदिति पुनः प्रयोगो न प्राप्नोति । नैष दोषः । तथाहि, अर्थस्य धातोर्भेदेनार्थो कथ्यमाने यागेनेति निर्योगस्य करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरेण भावयेदित्यनेन कथ्यते । अथवा केचित्

द्रव्यस्य 'पाके स्पन्दो' इत्यर्थं केचित् व्याचक्षते । तथा 'यन्नायमर्थश्चातोऽवगम्यते । भावनेति चेदुच्यते कीदृशी पुनरसौ यतात् भावनाऽवगम्यते इत्यपेक्षायाम्, तथा यतेत यथा विक्लिद्यति' इति प्रयत्नवाचिता आख्यातस्य भाष्यकृता विवृता । दर्शेन्द्रियकामाधिकरणे च (२।२।११) 'जुहुयात् इति शब्दस्यैतत् सामर्थ्यम्, यत् होमविशिष्टं प्रयत्नमाह' इत्यभिधानात् (भा. पृ. ५४९) 'जुहुयात्' इत्यस्य 'होमे यतेत' इत्यर्थः सूचितो भवति । प्रयत्नस्य च इच्छायोनित्वात्, निष्पन्ने चेच्छाऽयोगात् भाव्यनिष्ठत्वावगतेः धात्वर्थनिष्पत्तिमात्रेण च फलस्यासिद्धेः तन्निष्पत्तिमात्रेण पर्यवसानायोगेन धात्वर्थकरणकस्य प्रयत्नस्य फलसाधनत्वाविघातात् प्रयत्नस्य भावनात्वे न कश्चिद्दोषः । प्रयत्नाभावे च वातरोगादिना देवदत्ते स्पन्दमाने 'नायं स्पन्दं करोति किन्तु वातादिवशात् अस्य स्पन्दो भवति' इति व्यवहारदर्शनात् प्रयत्न एव करोत्यर्थोऽवगम्यते । रथादावपि 'न रथः स्वयं गमनं करोति, किन्तु अश्वा विना अस्य गमनं क्रियते' इति व्यवहारदर्शनात् धातुवाच्यस्पन्दातिरिक्तकरोत्यर्थभावनाप्रतीत्यभावः सिद्धः । आख्यातप्रयोगान्यथाऽनुपपत्त्या तु रथादौ भावनाकल्पने 'रथो भवति' इत्यत्रापि सर्वदा भावनाकल्पनापत्तेः भूतादिकर्मणेऽपि अवयवादिस्पन्दभेदानाश्रयणे 'धात्वर्थमात्रम्, कर्तृसंख्यादयश्च आख्यातपदार्थत्वेनाभ्युपगम्यन्ते, न च भावनाव्यभिचारेण दोषः' इति वार्तिके (पृ. ३८२ प. २–६) निरूप्यते । अनयैव स्थूलभेदविवक्षया रथादौ भावनाऽभ्युपगमः पूर्वोक्तरीत्या पर्यालोचनया गौणभावेनेति युक्तम् । अथवा सोऽपि प्रयत्नाभिप्रायेण व्याख्यातुं शक्यते । नित्यस्यात्मनः शरीरशरीरिणोः अभेदविवक्षया शरीरनिष्पत्तौ अनिर्वाच्यव्यपदेशोपपत्तेः । 'पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभु' इत्यादिस्मृतिपर्यालोचनया चात्मनः शरीरोत्पादनप्रयत्नावगमात् सिद्धभवनशरीरावयवाधिष्ठानेन आत्मना सिद्धभवनान् शरीरावयवान् प्रति प्रयोजकस्य प्रयत्नात्मिका भावना न विरुध्यते । एवं च 'सिद्धकर्तृक्रियावाचिनि' (वा. पृ २७६ प. २५) इत्यपि चैतदभिप्रायं व्याख्यातुं शक्यम् । यद्वा अर्थभावनायाश्चेतनमात्राश्रयत्वेऽपि शब्दभावनायाश्चेतनाश्रयत्वायोगात् उभयथाप्यर्थं सिद्धमात्रग्रहणम् । नित्यस्यापि शब्दस्याभिव्यक्तिः सिद्धिरभिप्रेता । भाव्यनिष्ठप्रयोजकव्यापारलक्षणयोगाच्च शब्दव्यापारस्यापि अविरुद्धं भावनात्वम् । यथैव हि इच्छायोनित्वात् प्रयत्नस्य इष्यमाणभाव्यं विना आत्मलाभायोगात् भाव्यनिष्ठत्वम्, तथा लिङादिव्यापारस्यापि प्रेरणाख्यस्य प्रवृत्त्यात्मकभाव्यकरत्वेन तन्निष्ठता अवसीयते । न च (भाव्यनिष्ठत्वाभावः इत्यनेन अन्वयः) यथा स्पन्दमात्रमेव यथोक्तविभागोपपत्तेः आकाङ्क्षातः प्रागेव आकाङ्क्षणीयस्याभावे स्पन्दस्याकाङ्क्षानिमित्ताकाङ्क्षाऽनुपपत्तेः अन्यथा च कदाचित् नैराकाङ्क्ष्यानुपपत्तिप्रसङ्गात् स्पन्दस्य भाव्याकाङ्क्षालक्षणं भाव्यनिष्ठत्वं नास्ति, तथा प्रेरणायाः भाव्यनिष्ठत्वाभावः ('नच' इति अन्वयः । कुतः ?) पुरुषप्रवृत्तेः साध्यसाधनेतिकर्तव्यतापर्यालोचनासापेक्षत्वेन प्रेरणानन्तरमनुत्पत्तेः । अनेनैव न्यायेन सर्वशब्दगतस्य अभिधानलक्षणस्यापि व्यापारस्य अर्थप्रतिपत्त्यात्मकभाव्यकल्पितस्य भावनात्वमनुसन्धेयम् । तस्या अनभिहिताया एव कार्योपयोगित्वात् 'लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते' इत्यादौ भावनाद्वयोपन्यासाविरोधः । 'स्पन्दप्रयत्नयोरेव भावनात्वमिति भ्रमम् । अपनेतुं प्रसक्तानुप्रसक्तमेतदुदीरितम् ॥ प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते । वक्तुमाख्यातवाच्येह प्रस्तुतेऽनुपयुज्यते ॥' (सुधा. पृ ५७६–५७९) । ये तु तदनुरञ्जनसमर्थाः कर्तृकर्मगता विशेषास्ते तत्र एव करणेतिकर्तव्यतायोगे निविशन्ते । एवं तर्हि धात्वर्थसामान्यं भावनेत्युक्तं भवति । सत्यं धात्वर्थसामान्यम्, न तु गोत्वादिरूपेण । कथम् ? 'अन्यदेव हि यागादौ सामान्यं करणात्मकम् । अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥' भावनाया हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ भवतः । तथा तत्करणभूते यागादौ समवेतं भावनाकरणांशापेक्षितं धात्वर्थसामान्यं नाम यत् कर्मशब्देनैव अभिधीयते । विशेषणभावाच्च यागादयो भावनाविशेषा इत्युच्यन्ते, न तद्वाचित्वेन । शास्त्रप्रदेशे तु क्रियाकर्मशब्दौ कदाचि-

**सर्वेषां भावोऽर्थ इति चेत् । २ ॥**

**भाष्यम्—** एवं चेत् भवान् पश्यति, अभाव-शब्दत्वात् द्रव्यगुणशब्दा अपूर्वस्य विधायका इति सर्वेषां भावोऽर्थः । स्वर्गकामो दर्शपूर्णमासाभ्यामित्येतयोः सम्बन्ध 'यजेत' इति वक्ष्यति, 'श्येनेनाभिचरन्' इत्येतयोश्च । तथा 'चित्रया पशुकाम.' इति । तस्मादेवेऽपि साकाङ्क्षत्वात् भाववचनाः । सर्वेषु भाववचनेषु नास्ति विनिगमनाया हेतुः, कर्मशब्दा एवापूर्वस्य विधायकाः, न द्रव्यगुणशब्दा इति ।

**वा—** 'न तावत्प्रत्ययस्येष्टमपूर्वप्रतिपादनम् । न च धातोः स्वरूपात् स्वात्मान्तो वा परतः समम् ॥' यदि हि भावाभिधानस्यैवापूर्वप्रतिपादकत्व मिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य, ततो नामपक्षो दुर्बलः स्यात्, इह तु यथैव धातोः प्रत्ययसम्बन्धानुगृहीतस्य भावनानुरञ्जननिमित्तं फलवाचित्वं भवति, एवं नाम-पदस्यापीत्यविशेषः ।

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे । ३ ॥**

**भाष्यम्—** येषां शब्दानां उच्चारणोत्पत्तौ स्वेऽर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सद्रूपस्य कालान्तरे तिष्ठति, न क्रियेव उत्पद्यमाना विनश्यतीत्यर्थः । तानि नामानि । ते द्रव्यगुणशब्दाः । ईदृशो द्रव्यगुणशब्दा-नामर्थः । ते द्रव्यगुणशब्दा इति वक्तव्ये, तानि नामानीति सूत्रितम् । अतो नामानीत्येषां पर्यायशब्दः । कथं गम्यते ? यत्र एता विभक्तयो नामिकय उच्यन्ते । कतमास्ताः ? वृक्षः वृक्षौ वृक्षाः, शुक्लः शुक्लौ शुक्ला इत्येवमादयः । तस्मात् सम्यक् सूत्रितम् । यत. एषां न क्षणिकोऽर्थः, ततस्तेभ्य. पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यते, इति नैषामुत्पत्तिः कर्मत्वात्, भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वादित्यर्थः ।

**वा—**यदुक्तं यदेकस्मादपूर्वं तदेतरत्तदर्थं भविष्यतीति तद्वत् तावत् वस्तुधर्मेण विशेषं दर्शयति । कथम् ? **'वहुदृष्टप्रसङ्गाद्धि धर्मो नेष्टः पदेपदे । नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥'** एकस्या-दृष्टे कल्पिते यदीतरद् दृष्टार्थत्वेन तादर्थ्यं भजते, ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्धये ततोऽपि पुनरदृष्टं कल्प्यते एव, ततो वरं फलेनैव सर्वाणि सम्बद्धानि । न च सम्बन्धैरूप्यकृतं आश्रयणम्, नाम्नश्च फलसम्बन्धे अवश्यं भावार्थस्तदनुग्राहकोऽभ्युपगन्तव्यः । [illegible] च स्वयं निष्पन्न-सिद्धरूपस्य नामार्थस्य न शक्नोति दृष्टेनोपकर्तुम् । नहि नामार्थमन्तरेण दृष्टे, शब्दप्रयोगवेलायामेव निष्पन्न-तया गम्यमानत्वात् अपेक्षणीयस्य वा सिद्धत्वेनायोग्य-त्वात् प्रयुज्यतेऽस्मिन्निति चाभिधेये एव प्रयोगः । तदाकारेण हि निष्पन्नस्योपलब्धिः अनुत्पन्नत्वे क्रिया-रूपस्य सत्त्वे नित्यत्वप्रदर्शनं निष्पन्नस्यापि क्षणिकत्वेन पुनः पुनर्निष्पत्त्यपेक्षोपपत्तेः । तेभ्यः पराकाङ्क्षा अन्याकाङ्क्षा, निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यते इत्यध्या-हारः । अथवा तेभ्यः परा दूरे, आकाङ्क्षेत्यर्थः । कुतः ? भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्तं निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्टं सूत्रकारेण ।

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्या-ख्यातानि, तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ ॥**

**भाष्यम्—**येषां तु शब्दानामुच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते । प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः । तान्याख्यातानीति भावशब्दान् पर्यायशब्दे-नोपदिशति । कथं पर्यायशब्दता भावशब्दानाम् ? यत एता विभक्तय आख्यातिक्य इत्युच्यन्ते । कतमास्ताः ? पचति पचतः पचन्ति इत्येवमादयः । तस्मात् तेभ्यो-ऽपूर्वं प्रतीयेत । भावार्थास्ते भूतार्थे समुच्चारिताः । भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवत-उत्पत्तिरर्थवती । सा च भूतेन क्रियते इति दृष्टोऽर्थः । भव्यस्य पुनर्भूतार्थतायां न किञ्चिद् दृश्यते, कल्प्यते चादृष्टम् । तस्माद् यागो द्रव्यार्थः । किंच आश्रित-त्वात् प्रयोगस्य । एतेषां प्रयोगः पुरुषेण आश्रितो भवति, पुरुषप्रयत्नो भावना उच्यते । पुरुषं हि वदति भावयेदिति । तेन 'स्वर्गकामो यजेत' इति पुरुषोऽपि प्रतीयते, यागोऽपि, सम्बन्धोऽपि । 'स्वर्गकामो द्रव्येण' इति द्रव्यं प्रतीयते पुरुषश्च, न [illegible] संबन्धः ।

ननु एतदुक्तं भवति, अर्थिनश्च द्रव्यस्य च सम्बन्धं यजेतेति वक्ष्यति, द्रव्येण भावयेदिति, अतो द्रव्येणार्थस्य भावना गम्येत, आकाङ्क्षा चेति । सत्यं गम्यते । द्रव्येण भावयेदिति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या । यदा तु, यागेन भावयेदिति यागसम्बन्धो विधीयते, न तदा द्रव्येण भावयेदिति द्रव्यसम्बन्धः । न च द्रव्यसंबन्धे विधीयमाने यजेतेत्यनेन सम्बन्धः । अनूद्यमाने तु सम्भवति । न च यौगपद्येन विध्यनुवादौ संभवतः । तस्मात् श्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिनः न द्रव्यसम्बन्धः । तस्य द्रव्यमस्ति स्वर्गकामसम्बन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् । एष विनिगमनायां हेतुः, येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दा इति । यदा यागेन कुर्यादिति, तदा यागवचनमेव भवति दर्शपूर्णमासाभ्यामिति लक्षणया, दर्शे च पूर्णमासे च यागो विहित इति ।

वा— 'आख्यातपदी धात्वर्थः साध्यरूपः प्रतीयते । तस्मिन् फलवतीष्टे तु नाम्नो द्रव्यार्थतेष्यते ॥' धात्वर्थस्तावत् प्रकृत्यैव साध्यात्मको विशेषतस्तु भाव्यभावकत्वेन धातुना उच्यमानः । स यदि फलसाधनत्वेन चोद्यते, ततोऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वोभयथाऽपि द्रव्येणैव तद्रूप्यं लभते । ननु नामधेयपक्षे नामपदमपि साध्यार्थं भविष्यतीति धातुतुल्यं स्यात् । न, तस्य फलसम्बन्धे गुणविधित्वेन सिद्धार्थत्वात् । अपि च 'साध्यात्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते । तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥' यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यः तथापि नामपदेन उच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता चाऽऽकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्मादुक्ता धातोरेवाऽऽकाङ्क्षा, न नाम्न इति । 'क्रियाऽऽभिमुख्यात्प्रयोगस्य' इति । अधुना शब्दप्रत्ययाधिकृतो विशेषोऽभिधीयते । पुरुषव्यापारात्मिकया भावनाया धात्वर्थोपश्लेषोऽपि पुरुषेण आश्रितः तदतिक्रमहेत्वभावाच्च न नामपदग्रहणम् । तस्मादस्ति विशेषः ।

शा— यदा एवं ( अपूर्वं ) तदा संदेहः किं भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्य इति । तदर्थं च किं भावार्थाः फलेन संबध्यन्ते, किंवा द्रव्यगुणशब्दार्था इति । ...तत्र अनध्यवसायमेव केचित् ( प्राभाकराः ) पूर्वपक्षमाहुः । तदयुक्तम् । तथा हि अप्रामाण्यमेव स्यात्, नत्वायुक्तम् । तथा सति प्रमाणलक्षणे एवायं विचारः स्यात् न त्विह, सिद्धत्वात् प्रामाण्यस्य । ननु पक्षद्वयेऽपि अनुष्ठानस्य एकरूपत्वेन अध्यवसितत्वात् नाप्रामाण्यम् । मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चित् अनुष्ठाने विशेषः, किमर्थमधिकरणम् । अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण यष्टव्यम्, सिद्धान्ते तु नामधेयत्वात् सोमेन यष्टव्यं इत्यस्ति विशेषः । यथा आह भाष्यकारः 'स्थिते एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः' ( भा. पृ. ३८६ ) इति । यत्र तु न सिद्धान्तेऽपि नामधेयं यथा 'सोमेन यजेत' इति, तत्र प्रतिनिधिसद्भावः प्रयोजनम् । तदप्याह भाष्यकारः ( भा. पृ. ४०५ ) 'यदि द्रव्यगुणशब्दाः अपूर्वं बोधयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः, यथा तर्हि सिद्धान्तः, द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः' इति ( भा २।१।२।९ पृ. ४०५ ) । तस्मात् प्रकल्पने एव अप्रामाण्यमिति नैवं पूर्वपक्षः । किन्तु द्रव्यादिभ्य अपूर्वम्, ते एव फलसाधनमिति । कुतः ? 'फलं हि साध्यमानत्वात् सिद्धं साधनमिच्छति । द्रव्यादि च तथा, यागः स्वयं साध्यो, न साधनम् ॥' इति प्राप्ते, अभिधीयते । 'भावनैव हि भाव्येन फलेनान्वेतुमर्हति । धात्वर्थः करणं तस्यां लाघवात् संनिकर्षतः ॥'

सोम— सूत्रार्थस्तु— भावार्थाः प्रत्ययेन भावनाप्रतिपादकाः प्रकृत्या कर्मवचनाः ये शब्दाः तेभ्य अपूर्वं प्रतीयेत । यद्वा भावार्थाः भावनाप्रयोजनकाः ये कर्मशब्दाः धातवः तेभ्यः अपूर्वं प्रतीयेत इति ।

प्रयोजनम्— यदि द्रव्यगुणशब्दाः अपूर्वं प्रतिपादयन्तीति पक्षः, तदा द्रव्यादीनामदृष्टार्थत्वात् अदृष्टार्थस्य प्रतिनिध्यमानात् न प्रतिनिधिः । यदा तु भावशब्देभ्यः

धात्वर्थस्यैव भावनाकरणत्वम्, न तु नामार्थस्य इति भावार्थाधिकरणे वक्ष्यते । सोम १।२।१

* यत्र धात्वर्थे प्राप्त गुणश्रवणम् तत्रैव गुणफलसंबन्ध भावार्थाधिकरणापवादेन, न तु यत्र गुणेऽपि प्राप्त । अत दर्शपूर्णमासवाक्येऽपि, आग्नेयादिवाक्येषु कालयागयोरुभयोरपि प्राप्तौ, गुणफलसंबन्धानुपपत्ति । कौ १।४।४।४,

* पूर्वोक्त तु लक्षणद्वय ( द्रव्योपकारित्व गुणकर्मलक्षणम्, द्रव्योपकाराभाव प्राधान्यलक्षणम् ) न गुणप्रधानविषयम्, अपि तु अपूर्वसद्भावविषयम् । तन्मात्रस्यैव भावार्थाधिकरणापवादत्वेन प्रतिपिपादयिषितत्वात् । शा ३।१।८ पृ १०८

* भावार्थाधिकरणादौ न्यायसुधाकृताऽपि 'कृदन्तशब्दस्थले अयाथार्थ्येऽपि भावनाया तात्पर्यवृत्त्या शाब्दत्वम्' इत्यादिग्रन्थे तात्पर्यस्यापि वृत्तित्वमङ्गीकृतम् । कौ १।३।८।२४

* भावार्थाधिकरणन्याय । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियकर्मिकाया भावनाया भावार्थाधिकरणन्यायेन होमस्यैव करणत्वोपपत्तौ न गुणस्य करणत्वोपपत्ति इति पूर्वपक्ष । भावार्थाधिकरणन्यायो यत्र धात्वर्थानुसारेण विधेः तत्रैव । यदपि च यत्र धात्वर्थ-नाम भवतः धात्वर्थनामार्थौ उभौ अप्राप्तौ, यत्र चोभौ समप्राप्तिकौ, प्राप्तौ वा । यथा- 'अग्निहोत्रं जुहोति', 'सोमेन यजेत', 'उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् य कामयेत॰' इत्यादौ । यत्र तु नामार्थ एवाप्राप्त तत्र धात्वर्थादौ विधेयताया अभावेन प्रयोजनाकाङ्क्षत्वात् फलसंबन्धस्य यत्रेऽपि अप्राप्तत्वेन प्रत्यासत्तेरविशेषाच्च न भावार्थाधिकरणन्यायप्रवृत्ति । कौ २।२।१।२९

* भावार्थाधिकरणन्याय । 'यजेत स्वर्गकाम' इत्यत्र आख्यातांशेन आर्थी भावना अभिधीयते- भावयेदिति । सा चांशत्रयमपेक्षते १ किं भावयेत्, २ केन भावयेत्, ३ कथं भावयेदिति । तत्र भाव्याकाङ्क्षाया पराग्न्यायेन स्वर्गो भाव्यतयाऽन्वेति स्वर्गं भावयेदिति । करणाकाङ्क्षाया समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयाऽन्वेति यागेन स्वर्गं भावयेदित्यादि । साहस्री ८५१.

* यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्ति, समकक्ष्याप्ति, प्राप्तिवेन वा, धात्वर्थस्यैव वा प्राप्ति तत्र भावार्थाधिकरणन्याय । यथा- 'सोमेन यजेत', 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति', 'ऐन्द्रवायवाग्रान् गृह्णीयात् य कामयेत॰', 'अग्निहोत्रं जुहोति' इत्यादौ । भाट्ट २।२।१२. * भावार्थाधिकरणन्यायेन कर्मण एव फलाय विध्यन्वयमप्राप्त । 'कर्मणः फलं' इति भावार्थाधिकरणे साधितम् । कु ३।३।४।११ * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव पूर्वप्रवृत्त्या विधेयत्वं अङ्गीकर्तव्यम् । कौ १।४।५।१७, * भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसंबन्धोपपत्ति । २।२।४।८, * भावार्थाधिकरणन्यायेन फले यागविधानात् यागान्तर ( दाक्षायणयज्ञादि इति पूर्वपक्ष ) । शा २।३।४।५ पृ ५९५. * भावार्थाधिकरणन्यायेन यागकर्मिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्वेन अन्वय । भाट्ट ४।१।४ * अध्ययनं न भावार्थाधिकरणन्यायेन भावनायां करणत्वेन अन्वेति । कु १।२।१।१८ * गुण-धात्वर्थयो उभयोरपि प्राप्तौ भावार्थाधिकरणन्यायेन विशिष्टधात्वर्थस्यैव फलसंबन्धोपपत्ति दाक्षायणयज्ञादौ (इद पूर्वपक्षे) । कस्तूरि २।३।४ * धात्वर्थश्च समवस्थापितोऽपि भावार्थाधिकरणन्यायेन प्रयोजनान्तरार्थं विधीयते 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादौ । भाट्ट ५।१।१ * धात्वर्थस्य भाव्यत्वात् प्रच्युतस्य भावार्थाधिकरणन्यायेन करणत्वम् । सोम ६।१।१ * भावनायां भावार्थाधिकरणन्यायेन यागादि करणत्वेन अन्वेति । कौ २।१।२।५ पृ ४१. * 'मासमग्निहोत्रं जुहोति' इत्यत्र मासानुवादेन अग्निहोत्रादिधर्मा एव भावार्थाधिकरणन्यायेन विधेयता । कु २।३।११।२४

* न च गुणभावनाया आश्रयस्यान्वय संभावयितुं शक्य ('एतस्यैव रेवतीषु वारवन्तीयम्॰' इत्यत्र) । स हि न तावत् करणत्वेन, तथात्वे भावार्थाधिकरण-

न्यायप्रवृत्त्या तस्यैव फलवत्त्वापत्तेः । कौ. ३।२।१२।२६.

* भावार्थाधिकरणन्यायस्वरूपम्— ' भावनायाः करणाकाङ्क्षया धात्वर्थैकरूपलक्षणा मतौ स्यात्, करणाकाङ्क्षा च विशेषाः भावनायाः स्यात्, नानूद्यमानायाः ' इति । बाल. पृ. ९७.

* भावार्थाधिकरणप्रवृत्तेः ' एकस्माद्यूर्ज ' इति निर्णयाधीनत्वात् तदुपोद्घातत्वेन प्रतिपदाधिकरणमारभ्यते । कु. २।१।१।१.

* भावनाभेदकधीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तरात् भेदोऽभिधीयते । भाट्ट. २।२।१.

* ' भावार्थ. (परिगृह्यते) ' इत्यप्ययुक्तम्, भावार्थाधिकरणविपरीतत्वात् । ( भावार्थाधिकरणे हि धात्वर्थ एव फलभावनाया करणम्, न नामार्थो इत्युक्तम् ) । टुप्. ७।१।१।२.

* भावार्थाधिकरणसिद्धकर्मफलसंबन्धमूलोऽपूर्वसद्भावः । तन्त्र. ६।१।१।१.

* भावार्थाधिकरणसिद्धान्तः ( प्राभाकरमते ) ' क्रियाविशेषितस्य द्रव्यादेर्न विषयत्वम्, द्रव्यादेः क्रियां प्रति उपसर्जनतया सिद्धतया च प्रतीतस्य अपूर्वविषयतानुपपत्तेः । धातोः एकफलार्थान्वितानेकक्रियालक्षणनियतवाचकत्वेन धातुना अभ्योत्पादानुकूल्येन अवगतस्य धात्वर्थस्य तदन्यथाऽनुपपत्त्या साध्यत्वेन प्रतीतेः प्राभाकरैरङ्गीकृतेन तस्यैव विषयत्वात् । अतो भावार्थस्यैव नियतत्वं इति । सोम २।१।१ पृ. ९७.

* भावार्थपदं आख्यातप्रत्ययान्वयपूर्वप्रतिपादकम् । वि. २।१।१

* भावाख्याते ' खीयते ' इत्यादौ सत्या अन्विनैव धात्वर्थान्विता या । अनुशासनाच्च द्विवचनादीनां असाधुत्वम् । इति वैयाकरणाः । भणि. पृ. १०५.

* भावाख्यातस्थले सत्ताया अन्वयः । ' सत्त्वाया अपि तिसाधुत्वायाः० ' इति विन्दौ द्रष्टव्यम् ।

* भावकृतां तु पाको याग इत्यादौ धात्वर्थमात्रे शक्तिः । कृतेस्तु आक्षेप. । भणि. पृ. ११५.

* भावप्रत्यय. । गोमतो भावो गोमत्त्वं इति हि ' यन्निमित्तमपेक्ष्यायं गोमच्छन्दः प्रवर्तते । स एव गोमतो भाव उच्यते त्वतलादिभिः ॥ ' तेन भावप्रत्ययः ' आनर्थक्यात्तदङ्गेषु ' ( ३।१।१९।१८ ) इति अर्थमात्र सम्बन्धमवलम्बते निमित्तत्वमपि च तस्य वस्तुतत्त्वगमखि । वा. ३।१।६।१२ पृ. ६७७, * भावप्रत्यय. । यत्र उपसर्जनत्वेन ( गुणे ) विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र तस्य गुणस्य भावात् द्रव्ये शब्दनिवेशः तदभिधाने ' श्वेतो ' इति भावप्रत्ययोत्पत्तिः । ३।४।४।११ पृ. ९२४ पं. १५–१७, * भावप्रत्ययः समवेतगुणग्राही । ३।१।६।१२ पृ. ६७७, * ' शब्दप्रवृत्तिनिमित्ते हि भावप्रत्यय इष्यते ।' ३।१।६।१२ पृ ६७१, * सर्वेण हि भावप्रत्ययः सम्बन्धमभिधत्ते राजपुरुषत्वं औपगवत्वं पाचकत्वं इति ( पूर्वपक्षे स्थित्वा ) । ३।१।६।१२ पृ. ६७४. * ' भावप्रत्ययं विनापि गुणप्रधानो भवति निर्देश. ' इति महाभाष्ये स्पष्टमुदाहृतम् । सु. पृ. १४२२. * भावप्रत्ययेन विशेषणभूता जातिः निष्कृष्य अभिधीयते इति गोपदस्य तेन धात्वर्थेन गमा इता, तथा देवदत्तस्य गोमत्त्वं इत्युक्ते गति प्रतिपत्त्यभावात् सम्बन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽध्यवसीयते ( पूर्वपक्षे इदम् ) । वा. ३।१।६।१२ पृ. ६७८. * भावप्रत्ययस्य त्वतलादेरर्थ. मीको. पृ. ९३३ ' तद्धितार्थः ' इति विन्दौ मणौ द्रष्टव्यः । मणि. पृ. १६१–१६२. * भावप्रत्ययस्य लक्षणास्थले साधारणगुणाश्रयत्वम्, अन्यत्र च गुणनिष्ठधर्मसाक्षित्वम् । कौ. ३।१।६।१२ * भावप्रत्ययानां धात्वर्थातिरिक्तवाच्याभावनियमः । भणि. पृ. १०४.

* भावप्रत्ययार्थः स. स एव प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् ( पूर्वपक्षे ) । वा ३।१।६।१२ पृ. ६७८.

* भावप्रत्ययार्थवादार्थः मीको. पृ. ६०५ ' अरुणान्याय. ' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

* भावप्रत्ययार्थवादिभि. एव मत्वर्थलक्षणं प्रणीतम्, नेतरैः । वा. ३।४।४।१२ पृ. ९०३.

* भावप्रधानं आख्यातम् । आख्याते न कर्ता न क्रिया प्रधानतः । भा. ११।१।४।२४. * 'भावप्रधानमाख्यानम्' इति निरुक्तसूत्रात् १।१।९ भावशब्दवाच्यव्यापारस्य प्राधान्यावगतिः । कौ. २।१।२।५. * 'भावप्रधानमाख्यातम्' इति स्मृत्या अनेकार्थप्रतिपादकेषु आख्यातेषु भावनाप्राधान्यनियम क्रियते । मणि. पृ. ११२. * 'भावप्रधानमाख्यातम्' इति स्मृते. आख्याते भावनायाः प्राधान्यम् । सु. पृ. ७०१. * भावप्रधानः निर्देशः । अन्तरेणापि भावप्रत्ययं प्रत्ययप्रयोगमन्तरेणापि निर्देशः भावप्रधानो निर्देशः इत्युच्यते । यत्र गुणः प्रथममेव स्वप्रधानो विवक्ष्यते । के. * भावप्रधानो निर्देशः । कथमन्तरेण भावप्रत्ययं भावप्रधानो भवति निर्देश. इति पृष्टे, भवति यदा प्रथम एव गुणः स्वप्राधान्येन निर्दिश्यते, इति व्याहृतम् । तथाहि 'पूर्वमेव गुण. कश्चित् स्वातन्त्र्येण विधीयते । कश्चिद् द्रव्याङ्गभावेन, ततो निष्कृष्य चापरः ॥' यत्र गुणः प्रथममेव स्वप्रधानो विवक्षित तत्र अनुत्पाद्यैव भावप्रत्ययं भिन्ना च समानाधिकरण्य सम्बद्धो भवति 'पटस्य शुक्लः' इति । यत्र तु द्रव्योपसर्जनत्वेन च न निष्कर्षो विवक्ष्यते तत्र सामानाधिकरण्य भवति 'शुक्लः पट.' इति । यत्र पुनरुपसर्जनत्वेन विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेश. तदभिधाने त्वतलौ इति भावप्रत्ययोत्पत्तिः । स्वप्राधान्यविवक्षाया तु यतो (गुण) अनङ्गत्वात् गुण एव न भवति, न तद्द्वारेण द्रव्ये शब्दनिवेशः, तेन नासौ तदा तस्य द्रव्यस्य शब्दप्रयोग भावयति इति भावप्रत्ययेन नाभिधीयते । पूर्वमेव निष्कृष्टत्वात् निष्कर्षकारिण प्रत्ययस्य निष्फलत्वं स्यात् । वा. ३।४।४।१३ पृ ९९४ प. ९-२०.

* भावप्रधानत्वादाख्यातेषु न कदाचित् धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यमिति स्थितम् (भावार्थाधिकरणे) । वा ३।४।४।१२ पृ. ९०३.

* भावप्रयुक्त साधनक्रम. अपेक्षित. । यजेत केन, किमर्थम्, कथमिति । कर्तृप्राधान्ये कार्याभावात् न साधनाकाङ्क्षया भवितव्यम् । नहि भवति 'पाचक' केन किमर्थं कथमिति । (अत. भावप्रधानमाख्यातम्) । भा. ११।१।४।२४.

* भावविषयः अन्यतरकोटिव्यवस्थया कोऽप्यन्तरस्य आर्थिक-व्यवस्थाविधिः यथा, 'पूर्वेद्युरमावास्याया वेदिं करोति' इति अमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते अर्थात् हविरभिवासनोत्तर वेदिकरण पौर्णमास्यामवस्थितं भवति । इद उदाहरणं पञ्चमे सिद्धम् 'प्राकर्षाद् ब्राह्मणस्य' (५।४।४।१०) इत्यत्र । बाल. पृ. १९.

* भावशब्दश्च घञन्ताद्भवतेः 'एरच्' (पा० ३।३।५६) इत्यचि व्युत्पत्तेर्भावनावाचकः । कणिका. पृ ९५९. * भावशब्दो मन्त्रगतो न विधायक., किन्तु अभिधानवान् । २।१।६।१०-११. * भावशब्दाः । के पुनर्भाव, के ते पुनर्भावशब्दा इति । यजतिददातिजुहोति इत्येवमादयः । ननु यागदानहोमशब्दा एते, न भावशब्दा. । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । अन्यार्थश्चातोऽन्यगम्यते भावयेदिति च । तथा यजेत यथा किञ्चिद्भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्यय, न भावनाया । अतस्ते न भावशब्दा. । भा २।१।१।१ पृ ३७४-३७५, * भावशब्दा सर्वे प्रधानकर्मणो विधायका उत केचित् संस्कारकर्मण इति विचारे केचित् भावशब्दा प्रधानकर्मण केचित् गुणकर्मण. विधायका इति सिद्धान्त । २।१।३।६-८, * भावशब्दान् आख्यातानीति पर्यायशब्देनोपदिशति (सूत्रकारः) । २।१।१।४. * भावशब्दादेवापूर्वम्, न द्रव्यगुणशब्देभ्य । २।१।१।१-४.

* भावना अपूर्वनमपेक्षते साध्य साधन इतिकर्तव्यता चेति । किम्, केन, कथ इति । सीन्या. * भावना अन्योत्पादनानुकूल व्यापारसामान्यम् । भवितुर्भवनानुकूलो भावक व्यापारो भावना इत्यन्ये । सीन्या * भावना अर्थवादाधिकरणे विशेषतो वर्णिता । वा. २।१।१।१ पृ ३७८. * भावना आख्यातप्रत्ययार्थो भावयितुर्व्यापार । भावना द्विविधा शब्दभावना, अर्थभावना चेति । लिट्-लेट्-लोट्-तव्य-प्रत्ययमानगता शब्दभावना । सर्वाख्यातगता अर्थभावना । भिन्नासु भावनासु

प्रतीयते । २।२।१।१. * भावना तावत् न धात्वर्थविशेषाद् विना इतिकर्तव्यता शक्नोति ग्रहीतुम् । वा. ३।६।१६।४२ पृ. १०६५, * भावना तु अनुपस्थानाद् भिद्यमानाऽवधार्यते । भावनान्यत्वानन्यत्वपरीक्षायेन्यया तत्रापि धात्वर्थेऽपि भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेण अनुपनीयमाना न कथञ्चित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्व ( कर्मान्तरत्वम् ) । २।२।११।२४ पृ ६१६, * भावना । ' तेन भूतिषु ( भवनेषु ) कर्तृत्वं प्रतिपन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥ ' ( भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषो भावना इत्यर्थः ) । २।१।१।१ पृ. ३५८. * भावना व्यंशा । त्रितयस्य फलकरणेतिकर्तव्यतास्य यजेतेत्यनेन कर्ता पश्चोच्यते । यस्मादेन येनाया स्वर्गो भवने कर्तृत्वं प्रतिपन्नो तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । टुप्. ५।१।५।८, * भावना व्यंशा । प्रकृतौ षोडशी विधीयते ' षोडशिनं गृह्णाति ' इति । विधीयमानस्य त्र्यंशा भावना, किं केन कथमिति । तत्र किमंशं करणोपकारो विपरिवर्तमानो निराकाङ्क्षं करोति । केन इत्यत्र षोडशी । कथमंशं षोडशिन इतिकर्तव्यता या आम्नायते सा निराकाङ्क्षं करोति । तत्र वाक्यं परिसमाप्तम् । न केनाप्यंशेनापरिपूर्णम् । १०।५।५।१७, * भावना द्रव्यदेवताविशिष्टा यागमन्तरेणानाश्रया यागं कल्पयति, प्रकृत चोपादत्ते । ६।५।१।२. * भावना । ( यजेत इत्यस्य यागेन भावयेत् इति कथमर्थ. । ) धार्त्वर्थस्य धातो. भेदेनार्थे कथ्यमाने यागेन इति निर्देशस्य करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरेण भावयेत् इत्यनेन कथ्यते । वा. ५।१।१।१ पृ. ३८० * भावना द्विविधा शब्दभावना अर्थभावना च । तत्र अर्थभावनाविचारः मीको. पृ. ६२९ ' अर्थभावना ' इति ' शिन्दो द्रष्टव्यः । शब्दभावनाविचारश्च ' शब्दभावना ' इति शिन्दो द्रष्टव्यः । * भावना धात्वर्थातिरिक्ता कृतिरूपा आख्यातार्थः । आश्रयस्तु आर्थपत्यम. । मणि. पृ. ११५. * भावना । धात्वर्थैत्वव्याप्य-सामान्यविशेषोऽपि भावनात्वविशेषरूपत्वाभाव. बाधाभावात् प्रमाणम् । सु. पृ. ७०६.

* भावना नाम भवितुर्भवनानुकूलप्रयोजकव्यापारः । तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावना इत्युच्यते । सोम. ३।३।४ पृ. २३७. * भावना । पचतीत्युक्ते पाकं करोति इत्येतमर्थं सर्वे जना. प्रतियन्ति । तत्र पाकः, पक्ति., पचन इत्येते. शब्दै. व्यवह्रियमाणो लिङ्गकारकसंख्यायोगी धात्वर्थः सिद्धस्वभावः । करोति इत्यनेन व्यवह्रियमाणो लिङ्गापेत. साध्यस्वभाव. । तत्र सिद्धस्वभावद्योतनाय यथा घञ्-प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनाय आख्यातप्रत्ययविधिः । च आख्यातप्रत्ययार्थ. ओदनोत्पत्त्यनुकूल. । उक्तो भवितुर्वेदनस्य प्रयोजकव्यापारत्वात् णिजन्तेन भावनाशब्देनोच्यते इति । अन्ये भावनापक्षा अयुक्ताः । प्रयत्नो भावना इति चेन्न, ' रथो गच्छति ' इत्यत्र तदभावप्रसङ्गात् । स्पन्द इति चेन्न, मानसत्यागरूपे यजतौ अव्याप्तेः । उभयसाधारणं उदासीनत्वविच्छेदसामान्यं भावना इति चेन्न, शब्दभावनायामव्याप्तेः । नहि शब्दस्य विशेषचेतनस्य स्पन्द. प्रयत्नो वाऽस्ति । लिङ्लेट्लोट्तव्यप्रत्ययमात्रगता शब्दभावना । सर्वाख्यातगता अर्थभावना । तदुक्तं ' अभिधा भावना( भामा )माहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥ ' इति । किंच स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीना भावनात्वमाहु., किन्तु अर्थोत्पादानुकूल स्वरूपम् । तस्मादस्मदुक्तैव भावना । यथा ' पचति ' इत्यत्र ओदनफलोत्पत्त्यनुकूला, तथा ' यजति ' इत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला । तस्या च फलभावनाया प्रत्ययगम्याया एकपदोपात्तत्वेन प्रत्यासन्नत्वात् प्रकृत्यर्थः करणं न तु द्रव्यादि, तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात् । साध्यस्तोऽपि प्रकृत्यर्थ. स्वसाधननिष्पादित. सन् शक्नोति फलं साधयितुम् । द्रव्यादीना प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः । द्रव्यादिनिष्पादितेन धात्वर्थेन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्या येयमनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना, सेयं यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते सर्वधात्वर्थानुगामित्वात् । अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम् । अस्तु तर्हि धात्वर्थसामान्यमेव भावना इति चेत्, न,

प्रतिपाद्यत्वे विलक्षणरूपत्वात्। अन्यद्धि पाकस्य ओदनं प्रति आनुकूल्यम्, अन्यच्च ज्वलनस्य संयोगविभागौ प्रति, अन्यथा फलविभागानुपपत्तेः। भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्तता नाम, नैतावता प्रकृत्यर्थसामान्यं तत् भवति। तस्मात् विनियोग्यत्वात् सामान्यरूपाच्च यजादिधात्वर्थात् अन्यैव आख्यातप्रत्ययवाच्या भावना। तथा सति 'यजेत' इत्यत्र आख्यातस्य 'भावयेत्' इत्यर्थो भवति। तत्र 'किं भावयेत्, केन भावयेत्, कथं भावयेत्' इत्याकाङ्क्षायां 'स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्यन्वाधानप्रयाजादिभिः उपकारं संपाद्य भावयेत्' इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसंदर्भो भावनावाचिन आख्यातस्यैव शेषः। भाव्यकरणवती सेयं आर्थी भावना इत्युच्यते। सा खल्वपि शब्दभावनाया भाव्या, विधायको लिङादिः करणम्, अर्थवादसंपादिता स्तुतिः इतिकर्तव्यता। सेयं शब्दभावना लिङादिभिरेव गम्यते। आर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यते इत्युक्तम्। तस्याः आर्थभावनायाः स्वर्गस्य भाव्यत्वं कर्मयोगादवगम्यते। प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या। तथा च श्रूयते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' इति च। तत्र करणत्वं अपूर्वकल्पनामन्तरेण न संभवति इत्यभिधास्यते। वि. २।१।१ वर्णक २. * भावना पुंप्रयत्नापरपर्याया। सु. पृ. ७४४. * भावना प्रतीतमात्रैव साक्षान्मात् अपेक्षान्तरानधीनत्वात् प्रथमं तावत् साध्यांशमपेक्षते 'किं' इति।... न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तः अनुतिष्ठति। तत् यदि अस्या भावनाया अपुरुषार्थः साध्यः स्यात् ततः पुरुषेषु अप्रवर्तमानेषु प्रत्ययस्य प्रयोजकशक्तिः बाध्येत। तेन यद्यपि समानपदोपादानप्रत्यासत्तेः धात्वर्थः साध्यापूरणाय उपप्लवते तथापि अयोग्यत्वान्निराक्रियते। नहि प्रत्यासत्तिरेवैका संबन्धकारणं (किन्तु) योग्यतापि।......साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव अस्मात् सर्वे पुरुषाः प्रतिपद्यन्ते। ततश्च 'भावयेत्, किं' इत्यपेक्षितमात्रे विनैव तावत् शास्त्रेण एतावदवगतम्, पुरुषार्थः कश्चित् इति। तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते। तदपि न साध्यात्मना, किं तर्हि एतद्भावनाविषयत्वेन। ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्पदस्य संगतिः।... तदवधृतसाध्यांशा भावना 'केन भावयेत्' इत्येव करणमपेक्षते। तत्र च शास्त्राधीनप्रवृत्तित्वात् फलनिष्पादी आशीयमाने प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानात् विध्यविरोधाच्च अत्यन्तप्रत्यासत्त्युपस्थित-धात्वर्थातिक्रमकारणाभावात् सर्वफलभावनानां च केनचित् धात्वर्थविशेषेण विना अनुपपत्तेः यागेन इत्येव विज्ञायते।... तेन भावना अत्यन्तपरिपूर्णा सती सर्वकरणानां उपाधानानुगृहीतानां करणत्वानुपपत्तेः 'कथं भावयेत्' इति इतिकर्तव्यतामपेक्षते। सा च प्रत्यक्षादीनां अनुमानदर्शनसामर्थ्याभावात् अनन्यप्रमाणगम्या इति यथायोग्यमर्थं तदुपगम्य यथाकथंचित् उपस्थाप्यमाना वाक्यानुसारेण श्रुत्यनुपदेशेन चोदनासामान्यातिदेशेन वा प्रत्यक्षादृष्टोपकारद्वारेण अन्यथानुपपत्त्या कल्प्यते। तत परिपूर्णांशत्रयं योग्या इति विधीयते, तद्विधानाच्च अर्थापत्त्या यागादिविधानम्। वा. (तण्डुलः) पृ. २८३-२८९. * भावना। प्रयत्नस्य चेतनधर्मत्वेन चेतनं विना अनुपपत्तेः चेतनस्य प्रयत्ने स्वातन्त्र्येण कर्तृत्वैकान्तिकत्वात् प्रयत्नात्मकभावनाख्यायाः क्रियायाः कर्तृशून्यायाः कस्याश्चिदभावात् कर्तुर्भावनायामव्यभिचारियोगः। सु. पृ. १२९८, * भावना प्रयत्नाख्या कर्तारं विना न सिध्यति। पृ. १२९७, * भावना। भिन्नभाव्यकानुष्ठाने प्रयत्नात्मभावनाव्यक्तिवैलक्षण्यस्य स्वसंवेद्यत्वात् वैलक्षण्यानवभासेन सामान्यस्य ऐक्यं वाच्यम्, तत्तु दुर्घटमेव। पृ. ७०६, * भावना। यस्य च शुद्धभावनाप्रतीतिमात्रात् धात्वर्थान्तरानपेक्षत्वात् न विभज्यमानसाकाङ्क्षत्वम्, भावनाभेदे च भावयितव्यपूर्वभेदावश्यंभावात् न सैव एकार्थत्वं तदा एकवाक्योपादानाभावादपि धात्वर्थसमानस्य एकभावनावच्छेदकता न युक्ता। पृ. ७०९. * भावना यावत् किं-केन-कथं-भागैर्न पूर्यते तावत् विधिर्न प्रवर्तते। वा. ३।६।६।१७. * भावना व्यापारत्वेन यत्नत्वेन वा प्रत्ययवाच्यो धर्मः। स च नित्यं

स्यात्ये । यथा चैत्र सति भावनाया न प्रति मुख्यविशेष्यत्वं तथा अग्रे निरूपयिष्यामः ।

किञ्च, भट्टमते कालत्रातिरिक्ताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदज्ञानजन्य-शाब्द-बुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रथमान्तनामपदजन्य-आख्यातार्थविशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारणतेत्येव कार्यकारणभावः पर्यवसन्नः । न चासौ सम्भवति । 'न पचति चैत्रः, पचत्येव चैत्रः, पचत्यपि चैत्रः' इत्यादौ आख्यातार्थभावनायाः चैत्र एव अन्वयप्रसङ्गेन नञर्थे अभावे एवकारार्थे अयोगव्यावृत्त्या एकदेशभेदे अपिशब्दार्थभूते समुच्चये वा अन्वयानापत्तेः । एवं चैत्र सख्यान्वयेन 'भावनाविशेष्ये सख्याऽन्वयः' इति नियमस्यापि व्यभिचारापत्तेश्च । अत एव निपातासमभिव्याहृतत्वं नाख्यातेऽस्य विशेषणम्, सख्याया चैत्रे अन्वयानापत्तेः । न च उक्तकार्यकारणभावे तेन विशेषणेऽपि निपातसमभिव्याहृतस्थले सख्याभावनयोः पृथक् कार्यकारणभावमङ्गीकृत्य स्वस्वविशेष्ये ऽन्वयोपपत्तिः अनेककार्यकारणभावकल्पनाऽऽपत्तेः । अस्मन्मते तु एककार्यकारणभावेनैव वक्ष्यमाणरीत्या सर्वेषां भावनान्वयेन भावनाया मुख्यविशेष्यत्वम् उपपत्तिः ।

किञ्च, एवनिपातसमभिव्याहारेणापि नैकरूप्यम् । 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ निपातसमभिव्याहारेऽपि उभयोरपि सख्याभावनयोः चैत्रे अप्रतीतेः । न च निपातसमभिव्याहृतस्थले एव सख्याभावनयोः वैरूप्यं नान्यत्र इति नियमोऽपि सम्भवति, 'पचति न चैत्रः', 'चैत्रो न पचति' इत्यादौ उभयथाऽपि वैरूप्यात् । अतो भट्टमते कार्यकारणभावानन्त्यात् व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम् ।

अपि च 'ओदनं पचति' इत्यत्र प्रथमान्तपदाभाने कारणाभावादेव भावनाप्रकारकबोधानुपपत्तेः ज्ञानसामग्रीवशात् भावनाया मुख्यविशेष्यत्वे बाधकाभावः । न च अनुभवानुरोधेन भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्येव आख्यातपदज्ञानस्य कारणत्वं कल्पयित्वा तादृशबोधार्थं प्रथमान्तपदाध्याहार इति वाच्यम् । अनुभवस्य शपथनिर्भरत्वेन तत्कार्यकारणभावकल्पने गौरवात् । न च तथापि 'पण्डितश्चैत्रः' इत्यादौ आख्यातपदाभाने प्रथमान्तस्य मुख्यविशेष्यतापत्तिः, मुख्यप्रकारकबोधत्वावच्छिन्नं प्रत्येव मुख्यज्ञानस्य कारणत्वात्, वक्ष्यमाणरीत्या प्रथमाया अपि सङ्ख्यातिरिक्तार्थसद्भावाच्च । अनतिरिक्तत्वेऽपि प्रथमान्तनामपदोपस्थाप्यप्रकारकबोधत्वावच्छिन्नं प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्तेः । न च विनिगमनाविरहः 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' (भवन्तीपरः लट्परः) इति स्मृत्यनुमतत्वेन तस्य अदोषत्वात्, तादृशानुशासनज्ञानाभावे निराकाङ्क्षत्वस्य इष्टत्वाच्च ।

किञ्च भावनाप्रकारकबोधत्वावच्छिन्नं प्रति आख्यातपदज्ञानत्वेन कारणत्वे 'चैत्रेण सुप्यते गगनेन स्थीयते' इत्यादिभावाख्यातस्थले प्रथमान्तपदाध्याहारापत्तिः । अथ तत्र आख्यातार्थविशेष्यकबोधमेव अङ्गीकृत्य कारणतावच्छेदके भावभिन्नत्वं निवेश्यते तदा तदपि गौरवम् । अस्मन्मते तु सर्वत्र आख्यातार्थविशेष्यकत्वात् भावाख्यातस्थले च कर्तुरनभिधानेन प्रथमान्तस्य अप्रसक्तिः । किञ्च, यदि आख्यातार्थविशेषणीभूतप्रथमान्ते भावनान्वयो स्यात् तदा 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ पुनः भावनासंख्ययोः अन्वयः कथं वा शाब्दबोधः ? न तावत् चैत्रादौ, तस्य एवकारार्थभूतान्ययोगव्यवच्छेदैकदेशे भेदे प्रतियोगितासम्बन्धेन विशेषणत्वात् । नापि एवकारार्थभूतायां व्यावृत्तौ प्रतियोगिताकत्वसम्बन्धेन भावनायाः आश्रयतासम्बन्धेन च एवकारार्थभूते अस्मिन् सख्याया अन्वयः, तयोः प्रथमान्तपदोपस्थाप्यत्वाभावात् । न च अव्ययोपरि लुप्तो रूपेण 'दधि तिष्ठति' इतिवत् प्रथमान्तत्वाविशेषः । तथात्वेऽपि चैत्रे पाकभावनान्वयानुपपत्तेः । चैत्रादिषु बहुष्वपि 'चैत्र एव पचति' इति एकवचनप्रयोगाच्च । अत एव पचतिपदस्य व्युत्पत्तिवैचित्र्येण वाक्यद्वय अन्वयमङ्गीकृत्य 'पाकानुकूलकृतिमच्चैत्रभिन्नः पाकानुकूलकृत्यभावाश्रयः' इत्येवं एवकारार्थैकदेशविशेष्यकशाब्दबोध इत्यपास्तम्, तद्वदेव एकवचनस्य तथान्वयानुपपत्तेः । चैत्रस्य अन्यविशेषणतया तत्रापि अन्वयानुपपत्तेश्च । न च चैत्रपदस्य विशेषणतया

पूर्वकारिणो हि पुरुषा यावत् प्रशस्तोऽयं इति नाव बुध्यन्ते तावत् प्रवर्तन्ते । तत्र विधिविभक्ति अत्र नीदति ता प्राशस्त्यज्ञानं उत्पादयति । तत्र पुरुषार्थत्वमेव फलतो सर्वस्य स्वस्मैव अनुष्ठानं भवतीति प्रसिद्धत्वात् न वेदादुपलभ्यमानमपेक्ष्यते । साधनेतिकर्तव्यतयोस्तु अप्रवृत्तपुरुषनियोगात् शास्त्रमेव प्राशस्त्यप्रतिपादनाय आकाङ्क्ष्यते । वा १।२।१।७ पृ ११४ प १७–२७

* भावनापदस्य व्याकरणव्युत्पादनम् । मणि पृ ९०.

* भावनापदप्रवृत्तिनिमित्तं कर्मकरणेतिकर्तव्यता रूपांशत्रयसापेक्षत्वमेव शब्दार्थभावनोभयगतम् । मणि पृ ९१

* भावनाप्रधानाख्यातमिति मीमांसका । सु पृ १३७०

* भावनाप्रमाणम् । नच करोतिसामानाधिकरण्या तिरिक्तं आख्यातेषु अपि भावनाप्रमाणं विद्यते । वा ३।१।१।१ पृ ६८०

* भावनाभेदः अभ्यासात्, कर्मभेदश्च भावनाभेदात् 'समिधो यजति, तनूनपातं यजति' इत्यादौ । वि २।२।१, * भावनाभेदः शब्दभेदात्, कर्मभेदश्च भावनाभेदात्, 'यजेत, ददाति, जुहोति' इत्यादौ । २।२।१

* भावनावचनं 'यजेत' इति (शब्द) यस्य पर श्रुत तस्यैव श्रुत्या कारणत्वमाह । टुप् ४।४।१।१२

* भावनावाचि यजति, ददाति इत्याख्यातमेव अपूर्वं प्रतिपादयति । नि २।१।१ वर्णक २

* भावनावाचित्वमाख्यातस्य । सिद्धभव्यत्वानापन्न यजतः भावनाख्यो व्यापारो भावविषयेण यजन करोति इत्यभिधानादुच्यते । अपिद्धभावनागतव्यापारस्तु धातु-मानेनोच्यते इत्यादीत्युच्य प्रयोज्यनिष्ठप्रयोज्य व्यापारस्य भावनावाचित्वं आख्यातस्योक्तम् । सु पृ ८७१

* भावनाविधानार्थ यजतिचोदना । भा १।१।१।१।१'

* भावनाविधिप्रेक्षया सर्वत्र धात्वर्थकरणकविधि भवति । वा १।४।६।१९ पृ ३४२

* भावनाविवेक ।

संसर्गमोहितधियो विविक्तं धातुगोचरात् ।
भावात्मानं न पश्यन्ति ये तेभ्य स विविच्यते ॥

[ उम्बेक – पचतीत्यादिशब्देभ्यो धात्वर्थसंसृष्टैव भावना प्रतीयते न तद्विविक्ता । अतो स्फाटिकमिव स्फटिकं धातवसाध्य मयापानेभ्यो भ्रान्तेभ्य भावना विविक्ताध्यवसायित सयोगविभागात्मकाकादिधात्वर्थेभ्यो भावात्मस्वरूपेण साध्यता अनुभवद्वयत्वाद्विवेक प्रतिपाद्यते इति श्लोकार्थ । कतम्य च पाकादिभावनार्थेभ्यो भावनाविवेकप्रतिपादनम् । तदभावे 'यजेत स्वर्गकाम ' इत्यस्य वाक्यस्य 'यागेन भावयेत् स्वर्गम्' इ येनास्मिनर्थे प्रामाण्यं न स्यात् । ]

तथा ह्यहु —

सामानाधिकरण्यात्तदर्थमेवाभिधाऽनुमा ।
न तादर्थ्यानुमानाद्धा वृक्षता शिंशपाश्रुति ॥

[ उम्बेक – किं करोति? पचति इति सामानाधिकरण्यात्तत्समविशेषाभिधायकस्याख्यातस्येत्यनुमान प्रवर्तते न करोत्यर्थाभिधायीति । 'वृक्षः शिंशपा' इत्येवमादौ सामान्यविशेषवचनयो सामानाधिकरण्यदर्शनात् । न हि वृक्षत्वसामान्यवचन सन् शिंशपादिशब्दो वृक्ष शब्देन सह समानाधिकरण प्रयुज्यते, अपि तु तद्विशेषवचन इति श्लोकार्थ । ]

इह खलु गगनस्थविमानयो अभिधमानत्वात् अभवतो भवतश्च घटादेस्तयारतारम्भयोरस्य कर्तुं करोतिकर्मता । तथा च भवितुं करोत्यर्थस्य कर्ता प्रयोजक इति भवते प्रयोजकव्यापारे णिजुत्पत्तिमानं करोत्ययमनल्पम्भते । तेन या भावना, करोतिसमानाधिकरणाच्च पचत्यादेः इति तेषां तदर्थत्वानुमानम् ।

तदयुक्तम् । एकाधिकरणता हि तदर्थभेदाभिधान निमित्तं नैकार्थ्यमवगमयति । तादृशो सह्प्रयोगानुपपत्ते । न खलु वृक्षता शिंशपादिशब्दगोचरं अपि तु अभिधेयविशेषितया गम्यमाना । तद्विदैकाधिकरण्यं स्फुट विपर्ययसाधनम् ।

व्यापारः, करणव्यापारत्वाभ्युपगमात् । अन्यथा व्यापारसन्तानात् कारकभेदाभावप्रसङ्गात् इत्यलमतिप्रसङ्गेन ।

**कर्मणो भावभेदं यः फलावधितया वदेत् ।**
**तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत् ॥**

[ उम्बेकः— अपर मतम् । फलपर्यन्तं कर्म कर्तव्यतया चोद्यते ' यजेत स्वर्गकामः ' इत्येवमादिभिर्वाक्यैः । कर्मस्वरूप धात्वर्थः, फलपर्यन्तत्वं त्वाख्यातार्थः । सा च भावनेति । तदेतदपि निराकरणाय दर्शयति— कर्मण इति । एवमुपन्यस्य निराकरोति— तस्येति । अदृष्टफलेषु यागादिषु फलपर्यन्तत्वरूपस्याप्रतीयमानत्वादनुष्ठाननियमस्वरूपो नियोगोऽपि नाप्नुयादित्यर्थः । ]

धातुर्हि कर्मस्वरूपमात्रेणोपादत्ते आख्यातोपसदनात्तु भावनात्मनाऽवगम्यते । तथाहि, यावता कर्मक्षणोत्पादनिचयेनेष्टमर्थं साधयति तावत्यात्मना प्रयुज्यते । अवस्तेन तेन फलोत्पादनिचयेनावच्छिद्यमानः स स कर्मक्षणोत्पादनिचयस्तेन तेनाख्यातेन अभिधीयते । तदिदं फलावधिकं कर्म भावनात्मतयाऽवसीयते । नामाप्यमात्र फल भावनायामिति । फलोत्पादकायस्थाऽऽख्यातार्थः ।

तथा यतेन यथा किञ्चिद्भवतीति दर्शितम् । एवमवस्थाभेदेन भावनाकर्मणोर्भेदः । उक्तं च— पूर्वापरीभूतं भावमाख्यातमाचष्टे 'व्रजति पचति' इत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् । तत्र प्रतिक्षणमपवर्गिणः कर्मणः क्वाऽपुपक्रमापवर्गौ ? फलापेक्षया तु कल्प्येते इति यो वदेत्, तस्य प्रत्यक्षफलेषु कर्मसु काममारम्भविरामौ कल्प्येते, पुरस्तात्तत्र तत्पर्यन्तकर्मक्षणप्रचयपरिज्ञानात् । अदृष्टफलेष्वनिष्पन्नफलपर्यन्तपरिमाणभेदेषु कथं प्रवर्तेत ? न हि नियुक्तोऽप्यप्रसिद्धनियमविशेषः प्रवर्तितुमर्हति । प्रवृत्तौ वा पुरःफलादर्शनादकृतशास्त्रार्थमात्मानमवबुध्यमानो न विरन्तुमर्हति । शास्त्रात् फलोत्पत्तिं प्रतिपद्य विरंस्यति, इति चेत्, न । कृतशास्त्रार्थस्य फलोत्पत्तेः, फलोत्पत्त्या च कृतशास्त्रार्थत्वादितरेतराश्रयप्रसङ्गादित्यलमतिप्रसङ्गेन । प्रकृतमनुसरामः ।

[ उम्बेकः— प्रकृतमनुसरामः इत्यनयोर्भेदपक्षादन्यभेदपक्षेऽन्वयव्यतिरेकपक्षं दूषयितुं यतामहे इत्यर्थः । ]

**धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये ।**
**संबन्धो नावकल्प्येत द्वयोः साध्याभिधायिनोः ॥**

[ उम्बेकः— यदि प्रत्ययः क्रियान्तरमाचक्षीत ततो धातुप्रत्यययोर्वाच्यं क्रियाद्वयं प्रतीयेत । न क्रियमाणद्वयमिह क्रियाद्वयमुपलभामहे । अतो न प्रत्ययः क्रियावचन इति । ]

' येषा तूत्पत्तौ० ' ( ४।१।१४ ) इत्याख्यातवर्ती धात्वर्थः साध्यक्रियात्मोपेयते । यदि च प्रत्ययः क्रियान्तरमाचक्षीत क्रियाद्वयं प्रतीयेत ' ओदनं पचति, करोति पाकम् ' इति यथा । तस्माच्च धात्वर्थव्यतिरेकिण्याख्यातेषु क्रियाऽस्ति । साध्यस्य च साध्यान्तरेण सम्बन्धादर्शनात् तदभिधायिनोः प्रकृतिप्रत्यययोः समभिव्याहारानुपपत्तिः ।

[ उम्बेकः— ' येषा तूत्पत्तौ० ' इति भावार्थाधिकरणसूत्रे धात्वर्थस्य साध्यात्मनः क्रियात्वमुक्तमिति कुतः करणान्तराभावः । ततश्च क्रियान्तरप्रतीतिः स्यात् । ]

करणत्वात् धात्वर्थस्यानुपालम्भः इति चेत् ।

[ उम्बेकः— ननु च करणत्वाद्धात्वर्थस्य क्रियाकारकवचनयोरत्यन्त एव समभिव्याहारः । न च पुनर्विरोधः । तस्य भावनाकरणत्वप्रतिपादनपरत्वादित्यभिप्रायेण चोदयति— करणत्वादिति । ]

न, ' येषा तूत्पत्तौ ' इति विरोधात् ।

[ उम्बेकः— तत्र धात्वर्थस्य साध्यत्वप्रतिपादनपरत्वं मन्यमानः परिहारमाह— न येषामिति । ]

न हि तद्भावनाभिप्रायम् । नामपदार्थस्य धात्वर्थसम्बन्धे द्रव्यार्थता अपेक्ष्यते, संबन्धप्रतिपादनार्थत्वात् ।

[ उम्बेकः— नामपदार्थस्य व्रीह्यादेर्धात्वर्थसम्बन्धे या द्रव्यार्थता तदपेक्षितसाध्यसाधनत्वप्रतिपादनार्थत्वात्तस्य सूत्रस्य । ]

अपि च—

**न भावेनापि धात्वर्थे कारकैरिति समागमः ।**
**अक्रियात्वादन्यरोधाच्छास्त्रकृत्वात्करणस्य च ॥**

[ उम्बेकः— धात्वर्थभावनयोः कारकत्वेन कारकान्तरसेवेन च बाधादेः कारकान्तरस्य सम्बन्धो न सम्भवतीति । न चेतिकर्तव्यतात्मना कारकानां भावनानुप्रवेशः

'काष्ठैः पचति' इतिशब्दात् करणत्वनुद्देशेनाश्रयणात् कथं भावेनाग्रहणात् । अतः 'काष्ठैः पचति' इति समभिव्याहारे न स्यादिति शेषार्थः । ]

न तावद्द्वारत्वसंबन्धिता काष्ठानाम्, करणत्वस्य क्रियापेक्षित्वापन्नद्वारत्वमना वाक्यान्तरेण संगमायोगात् । नापि भावनापेक्षिता, तस्या वाक्यान्तरावच्छेदात् । नाप्यन्तरङ्गतया तदन्य, नाप्यन्तरस्य करणस्य । तदेव यत्र करणभाव, क्रियायां तस्या अनवरुद्धत्वाद्द्वारत्वेऽपि चानियामकमिति अकरणत्वात् 'काष्ठैः पचति' इति भेदव्यामाव । अर्थाक्षिप्तभावनाद्वारः संबन्ध इति चेत्, न, अन्वयधानेन सम्बन्धोपपत्तेः । न हि 'मृदा घटम्', 'काष्ठैः पचति' इति सम. सम्बन्धाभाव । एकत्र तैलाद्यव्यवधानमपेक्षणात् ।

[ उम्बेकः— अर्थाक्षिप्तभावनाद्वारकसम्बन्धाभ्युपगमे व्यवहितसम्बन्धाभ्युपगम प्राप्नोति, अपेक्षिताभूतक्रियाध्याहारपूर्वकत्वात्, मृदा घटमितिवत् । न चेह तथा, अभूतक्रियानपेक्षणात् । यथा 'घटम्' इत्युक्ते करोतिरूपभूता क्रियाऽपेक्ष्यते नैवमत्रेत्यर्थः । ]

विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।
कः प्रत्ययार्थो धात्वेकव्यापारे यदि कर्तृता ॥

[ उम्बेकः— उभयत्र प्रयोजकव्यापारवचनत्वात् प्रत्ययस्य धात्वोर्विक्लित्त्यर्थत्वादित्यर्थः । ]

अपि च, विक्लिद्यन्ति पचन्तीत्युभयत्र प्रयोजकव्यापारस्य प्रत्ययेनाभिधानात् धातुभ्यां च विक्लित्तेरिति नार्थभेदः स्यात् । नन्वस्ति तावत्कर्तृभेदेन व्यापारभेदः, तदभिधानाच्च दोषः । तथाहि, विक्लिद्यन्तीति तण्डुलाः कर्तारः, पचन्तीति देवदत्तादयः । पुनर्भेदात् कर्तृन्तरमन्यत्समाह, यदि साधननियोगादिकम्, तथ तण्डुलानां कर्तृत्वम्, देवदत्तस्य तत्र कर्तेति अविशेषप्रसङ्गः । अप्रयुक्ततया धातुना अभिधीयमानव्यापारत्वात् इदानीं प्रत्ययार्थः, कर्तृन्तरस्य भावनायां धातुनैवाभिधानात् । फलान्तरार्थीभवनव्यापारद्वारार्थो प्रत्ययो धातु शब्दः । फलार्थस्तु धात्वर्थकारक प्रत्ययवाच्यः । नेत्यामाम् ।

न हि धात्वर्थकरण. फलभेदप्रभावन. ॥

[ उम्बेकः— 'धात्वर्थे फलभेदे न व्यापारो दृश्यतेऽन्यः' इति पाठान्तरम् । ]

योऽपि व्यवहितफलेषु दृश्यते, सोऽपि हन्त्यादिधात्वर्थान्तर्गतत्वो न प्रत्ययार्थः । प्रयत्नान्तरजन्मा न प्राचीनधातुगोचरप्रभावनीय इति ।

[ उम्बेकः— अतो यथैव प्राकादेः पचत्यादिधात्वर्थस्य प्रयत्नान्तरजन्मनो न प्रत्ययार्थत्वं तथाऽपीत्यर्थः । ... 'न प्रायो धातुगोचरप्रभावनीयः' इति क्वचित्पाठः । तत्राप्ययमर्थः— यद्यपि व्यवहितफलेषु श्येनादिषु व्यापारान्तरं प्रत्ययवाच्यमस्ति तथापि न कर्तृव्यापारः पचत्यादिधातुगोचरप्रभावनीय इति । न हि द्वितीयः फलकर्मकोऽस्ति, यः प्रत्ययवाच्यः स्यात् । अतः स्वव्यापारमेव प्रत्ययवर्धकयम् । धातुगोचरः प्रभावनीयो यस्येति विग्रहः । पाकादिधात्वर्थकर्मक इति यावत् । ]

कर्मणा च करोत्यर्थो व्याप्तोऽस्तन्नयोगतः ।
तदभावः प्रत्ययार्थसाधनेऽपि विभक्तयः ॥

[ उम्बेकः— इतश्च न क्रियान्तरं प्रत्ययवाच्यमस्तीत्याह— कर्मणेति । नियमाभिधानात् क्रियायास्तदभावे नियमात् इत्यर्थः । यथोक्तम्— 'करोतिः क्रियमाणेन न कश्चित्कर्मणा विना' इति । यत्तु च 'यजेत स्वर्गकामः' इत्यादावस्त्येव स्वर्गादि कर्म । यत्तु तत्र कर्मबुद्धिर्न जायते, तत् द्वितीयाऽभावात् । तदभावस्तु भावनैककारकविषयत्वात् कारकविभक्तीनाम् । तथा च 'उपाध्यायौदनं काष्ठैस्तद्वचः पचेत्' इति भावार्थकारकेषु कारकविभक्तयो दृश्यन्ते, न भावनाकारकेषु स्वर्गयागादिषु इत्याह —प्रत्ययार्थेति । अस्यायमर्थः— प्रत्ययार्थभावनाकारकेऽपि विभक्तिभिर्भवितव्यम् । 'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इत्येवमादिविभक्तिविधाने विशेषानुपादानात् । न च स्वर्गे द्वितीया पश्यामः, अतः कर्म नास्तीत्यवगम्यते । ]

करोते गत्या सकर्मकप्रयोगनिर्देशे करोत्यर्थाभावं ब्रूम । यद्विधिनिर्देशेन धूमाभावम् । तथाहि, न जातु 'यजेत स्वर्गम्' 'दद्यात् स्वाम्यम्' 'भक्षीत सुराम्' इति दृश्यते प्रयोगः ।

[ उम्बेकः— सकर्मकत्वात् क्रियायाः क्रियमाणाभावे तदभावः, यथा व्यापकाभ्यभावे धूमाभाव इत्याह— करोतेरिति । ]

यदि मन्वीत संगतिसमर्थविभक्तिभेदाभावादेवम् । तथाहि, धात्वर्थसाधनादयाहिन्यः सुब्विभक्तयः, प्रत्ययार्थ-नियोगकर्मणि स्वर्गकामादौ तद्दर्शनात् ।

[ उम्बेकः— अस्यायमर्थः— प्रत्ययार्थभावनाकर्मणि स्वर्गादौ करणे विधिपर्यायनियोगकर्मणि च यागादौ द्वितीयातृतीये कर्मकरणविभक्ती न दृश्येते । नियोग-कर्मत्वं यागादेर्विषयत्वेन । प्रत्ययार्थनियोगकर्मणि स्वर्ग-कामादाविति व्यधिकरणे सप्तम्यौ । स्वर्गकामादौ शब्दे प्रत्ययार्थनियोगकर्मणि विषये कारकविभक्तिर्न दृश्यते इत्यर्थः । यद्वा सामानाधिकरण्यम् । सिद्धान्त्यादिना स्वर्गकामादिशब्दस्य फलत्वेनाभ्युपगम्यमानत्वात् । तत्राप्ययमर्थो भवति । स्वर्गादौ भाव्यतया विधेश्च कर्मणि कारकविभक्त्यदर्शनादिति । ] .

नव वाच्यम् । एवं सति दोषान्तरे सम्बन्धहेतोः षष्ठ्या अप्याहृतप्रसक्त्यात् ।

[ उम्बेकः— कार्यत्व इदमाभर्त न प्रामाणिकमिति । यदि स्वर्गस्य द्वितीयाऽभावात्कर्मणोऽनभिव्यक्तेः कर्मत्वं न विवक्षितं ततः 'कारकाणामविवक्षा शेषः' इति न्यायात् शेषलक्षणा षष्ठी स्यात् स्वर्गस्य यजेतेति स्वर्ग-भावनयोः सम्बन्धप्रतिपादिका । न च तामुपलभामहे । तेन न कथञ्चिदुद्भूतः कर्मसम्बन्ध इत्यर्थः । ]

अपिच प्रत्ययार्थभावनाकरणधात्वर्थनामधेयेभ्यो विश्व-जिदादिभ्यः करणविभक्तिरीक्षमाणेनेदावश्यतानुमदेति । अस्त्येव कर्मसम्बन्धः ' यजेत स्वर्गकामः ' इति चेत् ।

[ उम्बेकः— ननु ' स्वर्गकामः ' इत्यत्र पदे स्वर्गः श्रूयते । स तु पुरुषार्थत्वेन साध्यत्वयोग्यः, भावना च भाव्यापेक्षिणी, अतोऽस्त्येव कर्मसम्बन्धो द्वितीयामन्तरेण-पीति चोदयति— अस्त्येवेति । ]

न, पुरुषविशेषणत्वेन साक्षादसंबन्धात् । ' स्वर्गाय यजेत ' इति साक्षात्संगतिरिति चेत् । न, अकर्मरूपत्वात् कर्मरूपसंबन्धाभावस्य च भावनाभिधानाभावहेतुत्वात् । अकर्मता च चतुर्थीनिर्देशात् ।

[ उम्बेकः— ननु सामर्थ्यात्स्वर्गस्याप्यवगतनियोज्य-पुरुषप्रतिपत्तेरविवक्षितत्वादप्रतीतस्वर्गमात्रप्रतिपादनपरत्वं स्वर्गकामपदस्य तत्रश्च पुरुषान्तरयोगो नास्ति । एवं चायमर्थो भवति— स्वर्गाय यजेतेति, तदेतच्चोदयति— स्वर्गायेति । ]

स्वर्गाय याग इति च धात्वर्थेनापि संबन्धनात् ।

[ उम्बेकः— न चतुर्थीनिर्दिष्टस्य कर्मत्वं गम्यते । 'तुष्टये पचति' 'तृप्त्यै भुङ्क्ते' इत्यादौ सत्यपि तृप्त्यादेः चतुर्थीनिर्देशे ओदनादिकर्मिकैव क्रिया प्रतीयते न तृप्त्यादिकर्मिकेत्यर्थः । न च कर्मणि चतुर्थी स्मर्यते । यदि चतुर्थीनिर्देशात् कर्मसम्बन्धोऽभ्युपगम्येत ततस्तदविशेषात्तस्य प्रत्यपि स्वर्गादेः कर्मत्वसम्बन्ध-प्रसङ्ग इत्याह— स्वर्गायेति । तस्मात्कर्माभावात् क्रियान्तरा-भाव इति सिद्धम् । ]

तुल्यार्थत्वं भावयति भवतीति प्रसज्यते ।
कः प्रत्ययार्थो धात्वर्थव्यापारे खलु कर्तरि ॥

भावयति घट ( कुम्भकारः, भवति घटमित्यपि प्रसज्येत । तुल्यार्थत्वात् । तथाहि एकस्य कर्तुः ) कुम्भ-कारस्य व्यापारं भिधायते, अन्यनाख्यातप्रत्यय इति न भिद्यतेऽर्थः । प्रयोजकव्यापारे णिजर्थः कर्तृव्यापार श्चाख्यातार्थ इति नानार्थत्वं योऽपि मन्यते, यत्कथं तेनेह कर्तृप्रयोजकभेदः । यदि साधनाया भवतीत्याः निवर्तयिता न कर्ता स चैकः कुम्भकार एवेति तद्व्यापाराभिधाना तुल्यार्थत्वम् । घटः कर्ता, प्रयोजकः कुम्भकार इति चेत्, कथमनीप्सितः साधनप्रवृत्तिनिष्पन्दोऽर्थस्य कर्तृत्वं तावत् कुम्भस्यातिक्रम्य ? अथागुणतो धातुनाऽभिधीय-मानव्यापारत्वम् । कस्ताहीदानीमाख्यातार्थः ? धातुनाऽ-भिहितत्वात्तद्व्यापारस्य । न च व्यापारभेददर्शनम्, येन धातुप्रत्यययोर्विभागः स्यात् । करणत्वं च शब्दतोऽन्यतो वा धात्वर्थस्योभयत्राप्यविशिष्टमिति दुर्वार तुल्यार्थत्वम् । अतो न प्रत्ययो भावनावचन इति युक्तम् ।

ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते ॥

किञ्च—

कर्तृव्यापारदृष्टश्च पच्यादौ यदि भावना ।
धात्वर्थान्तररूपः स्यात् सोऽप्यधिश्रयणादिकः ॥

न, नियतदेशाधारप्रतीतेः । इह भावो नैवेति नियत प्रत्ययो न देशविशेषसंयोगाप्रत्यक्षतायामवकल्पते ।

[ उन्मेष –नियाकारणकसंयोगविभागलक्षणकार्यानुमाने न क्वचन देश प्राप्त पक्षीन्यनुमान स्यानानुमिति । न च यद्देशे क्रिया तद्देशे एव संयोगोऽनुमीयते इति वक्तव्यम् । कारकदेशत्वात् क्रियाया संयोगस्य च द्विष्ठत्वात् । न च नियतदेशवर्तिनी क्रिया नियतदेशमेव संयोगमनुमापयतीति वक्तुं शक्यम् । आकाशस्याप्यत्वे नियतदेशवृत्तिकारणाप्रतीते । न चायं नियमो यद्देशवृत्ति कारणं तद्देशवृत्त्यैव कार्यमुत्पद्यते इति । पादाभ्यङ्गेन चक्षुरमलत्वयोर्भिन्नदेशयोरपि कारणभावदर्शनात् । तस्मात् प्रत्ययश्च यथा संयोग इति सिद्धम् । ]

विषयिताख्योऽनिश्चयाश्रयनानिन्द्यनक्षत्र उपपन्नमिति चेत्, स एव तर्हि आकाशादेश इति तन्निर्देयोगविभागौ प्रत्ययो ।

अपि च प्रत्यक्षाप्रत्यक्षतयोरपि संयोगविभागयो सिद्धयो प्रत्यक्षत्वस्सना युक्ता, न त्वसिद्धस्य कर्मण । ताभ्यामेव तर्हि संयोगविभागाभ्या क्रियामनुमिमीमहे, कादाचित्कयोर्हेतुत्वानुपपत्ते । कादाचित्कत्वेन च आश्रयमात्रहेतुत्वयोगात् हेत्वन्तरापेक्षणात् ।

नैवत्वारम् । यत –

निमित्ते सर्वदा जन्म स्यात्संयोगविभागयो ।
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥

[ उन्मेष – यदि परिस्पन्द सर्वदाऽस्ति निमित्ति सर्वदा संयोगविभागौ न स्त । अथ सोऽपि संयोगविभागवदेव कादाचित्कत्वात्स्यापि हेतुरभ्युपगन्तव्य, स संयोगविभागानामेव भविष्यति, किं धर्म्यन्तरमत्रापरिस्पन्दप्रदेशेनेत्यर्थ । ]

तद्धि कर्म संयोगविभागाभ्या नित्यमनित्य वा अनुमीयते । नित्यत्वे हेतुसन्निधानात् हेत्वन्तरानपेक्षत्वाच्च सदा संयोगविभागोत्पादप्रसङ्ग । अनित्यत्वे तु तस्यापि हेतुमत्त्वात् तद्धेतुभिरेवादेव तत्सिद्धिरिति किमन्तर्गडुना कर्मणा ।

यत्तु मन्यते नियमात् तदुत्पत्ताच्च कर्मैव कारणं संयोगविभागयो, न प्रयत्नादि व्यभिचारात् व्यभिचारित्वात् । तथाहि, कर्मकार्यमन्तरेणापि संयोगविभाग संस्कारा. कर्मणि च सति नियोगतस्तत्सद्भाव, तत्कार्यानुमितस्य हेतोरसद्भावे सत्ताप्रमाणाभावात् ।

[ उन्मेष — यत्रैव परिस्पन्द तत्रैव पाण्यादौ संयोगविभागौ वेगाख्यश्च संस्कार प्रवर्तते इत्येकाश्रयत्वम् । सस्करग्रहणं दृष्टान्तार्थम् । संस्कारवत्संयोगविभागयो परिस्पन्दैकार्थसमवाय इत्यर्थ । कर्मणि च सतीत्यव्यभिचारित्व परिस्पन्दे दर्शयति । यदि परिस्पन्दोऽस्ति संयोगविभागौ च न जायेते ततो व्यभिचार स्यात्, न त्वेवदस्ति । संयोगविभागकार्यानुमेयस्य संयोगविभागाभावे सत्त्वसिद्धे कुतो व्यभिचार । ]

प्रयत्नस्त्वात्मस्थ, सत्यपि च प्रयत्ने बहुषु संयुक्तेषु किञ्चिदेव प्रयत्नाद्देशान्तरं प्राप्नोति ।

[ उन्मेष – बहुष्वपि हस्तादिषु आत्मसंयुक्तेषु प्रयत्नात् किञ्चिदेव देशान्तरं प्राप्नुवदुपलभ्यते । तत्र यदि प्रयत्नहेतू संयोगविभागौ स्याताम्, तत्र किमित्यात्मप्रयत्ने उत्पन्ने संयुक्तसमवायविशेषात् न सर्वेऽवयवा संयोगविभागौ प्रतिपद्यन्ते । कर्मजन्यत्वे तु नियतावयवत्वात् कर्मणो नियता एवावयवा संयोगविभागौ प्रतिपद्यन्ते इति । ]

स चक्रम –

प्रसिद्धस्यान्वयकृत्वानित्यत्वाद्धेतुता भवेत् ।
अकारणत्वमन्यस्य यदि कर्म तत कथम् ॥

बहुप्रकारके हि नियतत्वान्वयकृत्त्वाभ्या प्रसिद्धस्यैव वस्तु हेतुरिति व्यवस्थाप्यते, न तु अप्रसिद्धस्यापि कल्पना ।

[ उन्मेष — तत्र तावत् पूर्वार्धं विवृणोति – बहुसमवधाने इति । ]

तद्विपरीतस्य हेतुत्वमनुपपन्नमिति । तादृशमप्रसिद्धसद्भावमपि परिकल्प्यते इति यदि मत हन्त तर्हि कर्मणोऽपि तदकारणमापद्यते । अथ व्यधिकरणमपि सद्भावात् (केनचित्) कुतश्चित् प्रतिपाद्यमभिचारमपि तत्कर्मैव कारणम्, संयोगविभागाभ्या किमपराद्धं येन तत्र कारणं परित्यज्य अदृष्ट मृग्यते ।

[ उम्बेकः– इदानीमुत्तरार्धं विवृणोति– तद्विपरीतस्येति । अन्तरङ्गाव्यभिचारिविपरीतस्य व्यभिचारिणो बहिरङ्गस्य च प्रयत्नादेर्हेतुत्वमयुक्तमिति कृत्वा अन्तरङ्गमव्यभिचारि च कर्म कारणं संयोगविभागयोरप्रसिद्धमपि कल्पितमित्युच्यते । तदयुक्तम् । संयोगविभागवत्कर्मण्यपि प्रयत्नस्य बहिरङ्गत्वव्यभिचारित्वाविशेषादकारणत्वापत्तेः । अथ आत्माधिकरणमपि प्रयत्नादिकारणत्वं दृष्टत्वात् नियतपरकालभाविकर्मविषयं नियतावधारं स्पन्दमारभते इत्युच्यते, तत संयोगविभागयोरप्येवं प्रयत्नः कारणं स्यादित्यविशेषः ]

प्रायेण च कर्महेतवः संयोगविभागैकाधिकरणा इति यत्किञ्चिदेतत् ।

[ उम्बेकः– अपि च गुरुत्वादेः पतनादिकर्महेतोः संयोगविभागैकाधिकरण्यं नास्तीति न बहिरङ्गत्वं वक्तुं शक्यते इत्याह– प्रायेणेति । ]

हेतुमत्ता च कार्येण ततः प्रागनुमीयते ।
वर्तमानावभासः स्यान्न क्रियाधिगमस्ततः ॥

[ उम्बेकः– संयोगविभागाभ्यां कार्यभूताभ्यां कारणभूतः परिस्पन्दोऽनुमीयमानोऽतिक्रान्तोऽनुमीयते न वर्तमानः । न हि संयोगविभागोत्पादकाले वर्तमानः परिस्पन्दः संयोगविभागयोः कारणम् । क्रमयोगनियमात् न समानकालयोः कार्यकारणभाव इष्यते, किं तर्हि ? पौर्वापर्यव्यवस्थितयोः । तेन यद्यपि संयोगविभागकालं यावत् परिस्पन्दोऽधिगम्यते तथापि अनन्तरपूर्वकालस्य तस्य कारणं न तत्कालस्य । अतः 'चलति' इति वर्तमानपरिस्पन्दावभासो न युक्तः स्यात् ।

उक्तं च —

'उत्पद्यमानमात्रं च हेतुत्वेन वार्तते । पौर्वापर्यविनिर्मुक्तं कार्यकारणकं द्वयम् ॥' इति । ]

कार्योत्पादनप्रत्यनन्तरक्षणे हेतुमत्त्वं तदुपयोगि, न वर्तमानत्वम्, तस्य तदा सिद्धत्वात् । ( अतः कार्येणानुमीयमानं तत्कालभेदानुमीयते, न वर्तमानत्वम् ) । तथा च कार्यद्वारकजन्मा ततः क्रियागोचरः प्रत्ययो न वर्तमानावग्रहः स्यात् ।

अपि च—

संयोगान्तं वर्तमानं तत उन्नीयते कथम् ।
विभागतो मीयमानं स्थाणावप्येतदापतेत् ॥

[ उम्बेकः– विभागं संयोगं च उत्पाद्य कर्म विनश्यतीति वैशेषिकाः । तेन विभागोपक्रमं संयोगान्तं कर्म विभागपूर्वकसंयोगोत्तरकालं विनष्टमेवानुमीयते, न वर्तमानम् । चलतीति च वर्तमानप्रतिभासः, तस्मादनुमीयमानक्रियाकल्पनमेवेदं भ्रान्तम् अपि तु वर्तमानसंयोगालम्बनं प्रत्यक्षमेवेति न्याय्यम् ।

ननु च विभागादेव क्रियामनुमास्यामहे, तथा च वर्तमानप्रतिभासो न विरुध्यते संयोगात्प्रागेव तदा तस्य वर्तमानत्वादित्याशङ्क्याह— विभागत इति । ]

यदि विभागानुमेयं कर्मेत्युच्यते तथा सति स्थिते स्थाणावपि कर्मानुमानप्रसङ्गः । स्थाणुश्येनविभागस्य स्थाणावपि विद्यमानत्वात् । अथ देशविभागो लिङ्गम्, न च स्थाणोर्देशभूतेन श्येनेन विभागः, अतः कथं तत्र कर्मानुमानम्, इत्युच्यते तथा सति चलिता स्थिते देवदत्तादौ पृथिव्यादिदेशविभागस्य विद्यमानत्वात् कर्मानुमानप्रसङ्गः न चाविरुद्धो विभागो लिङ्गमिति वक्तव्यं विभागान्तरापेक्षायां कर्मविनाशाद्वर्तमानावभासासामञ्जस्यप्रसक्तेरित्यर्थः । ]

संयोगान्तं कर्म संयोगोत्पादज्ञानगोचरकालमनुमीयमानं न वर्तमानम्, संयोगविभागौ तु वर्तमानौ । ज्ञानस्यानुरूपश्च विषयः, न तु तद्विपरीतः । तस्माच्चलतीति प्रत्ययविषयता, न तु कर्मणः ।

अथ विभागानुमेयत्वात्पूर्वक्षणस्य आसंयोगोत्पादं व्यवस्थानात् वर्तमानमनुमीयते इति, तदयुक्तम् । स्थाणावपि प्रसङ्गात् । विभागस्य तुल्यत्वात् ।

तस्मात् गुणविशेष एव घनपाकादिः क्रिया, न तु तदतिरिक्तव्यवस्थानवती क्रियापदार्थः, यः प्रत्ययस्य धात्वर्थोऽभिधेयः स्यात् ।

[ उम्बेकः– यथा चलतीत्यत्र प्रत्ययः संयोगविभागालम्बनस्तथा पचत्यादिष्वपि विक्लित्त्यादयः संयोगविभागरूपगुणविशेषालम्बनाः न तद्व्यतिरिक्तक्रियाग्राहिण इत्याह— तस्मादिति । ]

न फलनिमित्तयोरन्यतरापत्तेः । निमित्तत्वे तु यावज्जीवश्रुत्युपसंहारे तदानर्थक्यम् । अनुपसंहारे त्वेतत् स्यात् ।

[ उम्वेकः— यदि स्वर्गस्य साध्यत्वं नाभ्युपगम्यते ततः फलनिमित्तयोर्मध्ये अन्यतरस्य निमित्तस्य आपत्तेः निमित्तप्रतिपादकं स्वर्गकामादिपदं स्यात् । स्वर्गेच्छा चेद्भवति यजेत जुहुयाच्चेति । निमित्तत्वे तु 'यावज्जीवमग्निहोत्रं जुहुयात्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादिसामान्यश्रुतिविशेषोपसंहारोऽवश्यमभ्युपगन्तव्यम् । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति जीवता स्वर्गकामेन सता होतव्यं यष्टव्यं चेति । एवं च सामान्यश्रुतेः कश्चिद्विरोधस्तस्यैव आनर्थक्यमेव स्यात् । कामश्रुतेरेवाधिकारार्थत्वात् । यदि च सामान्यश्रुत्युपसंहारोऽयं नाभ्युपगम्यते ततो विशेषश्रुतेरानर्थक्यं स्यात् । सामान्यश्रुतित एव स्वर्गकामस्यानुष्ठानोपपत्तेः । तदेतदाह— अनुपसंहारे इति । सामान्यश्रुत्यनुपसंहारे त्वेतस्याः विशेषश्रुतेः आनर्थक्यं स्यात् । स्वर्गकामस्य च तया सामान्यश्रुत्या ह्यनुष्ठानं चोदितमेव, किं पुनर्वचनेन स्वर्गकामो यजेत, स्वर्गकामो जुहुयादिति । ]

स्याचानर्थक्यं नित्येषु परिहारो न काम्येषु ।

[ उम्वेकः— एवं मीमांसकेन चोदिते सति पूर्वपक्षवाद्याह— स्याच्चेति । यद्यपि अग्निहोत्रदर्शपूर्णमासादीनि कर्माणि नित्यानि सन्ति पुनः कामसम्बन्धेन विधीयन्ते तेषां पुनःश्रुत्यानर्थक्यात् भवतु स्वर्गकामादिपदं फलप्रतिपादकम्, यानि पुनः केवलकामसम्बन्धेन चोद्यन्ते यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इत्येवमादीनि कर्माणि, तेषु पशुकामादिपदस्य निमित्तार्थत्वमविरुद्धम् । अथवा अग्निहोत्रादावपि स्वर्गकामादिपदस्य निमित्तार्थत्वेन, न फलार्थता । न हि भावनाऽभावे स्वर्गादिर्भाव्यत्वं लभते । यदि तु तथा सति सामान्यश्रुत्यानर्थक्यं भवति, भवतु । किं कुर्मः ? सर्वथा तादृशः शब्दार्थो नावगम्यते इति । ]

अपि चानर्थक्यं स्यादित्यनर्थो नावगन्तुं शक्यते इत्युक्तम् ।

[ उम्वेकः— पूर्वापरिहारोपेक्ष परिहारान्तरमाह— अपि चेति । ]

पुनरुपदेशाद्वा स्वर्गकामः पुनः प्रयोक्ष्यते इति नानर्थक्यम् ।

[ उम्वेकः— यच्चैतदानर्थक्यं अस्मिन् पक्षे चोदितं तदपि न भवति, पुनर्विधानेन द्विरनुष्ठानोपपत्तेः । तेन सामान्यश्रुतिवशात् स्वर्गकामोऽग्निहोत्रादि अनुतिष्ठति, 'स्वर्गकामो जुहुयात्' इति पुनरनुष्ठानं स्यात् । अस्वर्गकामस्य तु सकृदेव । तेन पुनरनुष्ठानविधानार्थत्वाद्वनन्याऽनर्थक्यच्छेदकस्यापि नानर्थक्यमित्याह— पुनरिति । ]

मुद्गनेत्यो भगवान् ददर्श खलु बादरिः— न द्रव्यगुणसंस्कारव्यतिरिक्तस्यास्ति शेषता । द्रव्यगुणयोः खलु योग्यता । अतः कारकविभक्तितो वा नियतो शेषभावो गम्यते । संस्कारोऽपि सम्मार्गादिः द्रव्यतो वस्तुतो वा कर्मसम्बन्धी तत्र अविवक्षितेन न उभयोरेव क्रिया यायात्, यागादिस्तु प्रत्यक्षकर्मतो देवताकर्मतो वा कथं स्वर्गेण सम्बध्येत ? भावनाकर्मणा तेन तदुन्नयति, सम्बध्येत, सा च नास्तीति गम्यमानो भगवान् बादरिः द्रव्यगुणसंस्कारेष्वेव शेषभावं मेने इति ।

[ उम्वेकः— द्रव्यगुणयोः व्रीहिरक्तगुणयोर्यागेन सम्बन्धयोः धात्वर्थसम्बन्धयोरविभागरूपक्रिययोः व्रीहिभिरारुण्येयेत्यादौ तृतीयाद्वितीयाभ्यां भूतभव्यसंनिकर्षवशात् याज्ञनिर्वर्तकत्वेन वा शेषभावो गम्यते । संस्कारस्यापि ग्रहसंमार्गात् 'ग्रहं संमार्ष्टि' इति द्वितीयाश्रुतेः संस्कारस्य च संस्कार्यनिष्ठत्वमिति । वस्तुतो वा ग्रहादिसम्बन्धोऽवगम्यते । तत्र प्रतिपन्नदोषत्व समार्गादिग्रहमुखेन प्रहरणान्विते ज्योतिष्टोमादिना गच्छेत् निर्वर्तनयोग्यत्वात् । तत्र प्रधानं क्रिया प्रति शेषभावः धात्वर्थ्यतो. संयोगविभागयोः क्रियाशब्दाभिधेयत्वेऽस्याः साध्यत्वात् । यागस्तु यजेतेत्येवमादिशब्दात्प्रतीयमानः सामान्यतोऽकर्मक एव प्रतीयते । देवतापूजात्मकत्वात् वा यागस्य पूज्यमानदेवताकर्मत्वं गम्यते । न कथंचित् कर्मभूतः स्वर्गसम्बन्धः । यदि तु भावना स्यात्तस्यद्वारेण यागस्य स्वर्गसंबन्धो भवेत् । सा चोक्तेन प्रकारेण नास्त्येवेति मन्यमानो भगवान् बादरिर्यागस्य न स्वर्गशेषत्वमिति मेने इति । ]

अत्रोच्यते—

अनेकार्थसमन्वाय्य तेनैकाधिकरण्यतः ।
करोतिना तिङन्तेषु भावाभेदोऽनुमीयते ॥

'घटं करोति' इति तावदनन्तोत्पादनादिश्रुतिविषया भावना करोतिरुच्यते । स च पचत्यादिसमानाधिकरणो ऽपि नायमर्थं वक्तुमर्हति अनेकार्थत्वे ऽनैकान्तिकत्वात् सतो ऽभिधेयनियमाभावात् अन्यतराभावप्रसङ्गात् । अस्मात् सामान्यानुसारेण च प्रयोगोपपत्तौ सामर्थ्यान्तरपरिकल्पना योगात् प्रतीतलाघवात् अप्रतीतकल्पनाच्च प्रयोगान्तरेऽपि प्रयोगान्तरनिवृत्त्यैव प्रत्ययात् किं करोतीति चोदना दनात् प्रत्यभिगमात् । एवं भावनाभिधानेन करोतिना समानाधिकरणतया आख्यातशब्दाना तद्विशेषाभिधानमिति अनुमीयते ।

[ उम्वेक — श्लोकार्थं विवृणोति– घटं करोतीति । अनेकार्थत्वे हि करोतेस्तदुच्चारणे सति अक्षादिशब्दव-देवार्थे सन्देह प्राप्नोति अनैकान्तिकत्वम् । इह च नैवं हारे नानार्थत्वेन । इदं चाक्षे निश्चितार्थनिरूपण प्रकरणादिसामर्थ्यनिरूपण । तस्मात् भावनार्थ एव करोतिरिति । ]

यद्यपि प्रत्ययो भावना विशेषणसमानान्वम्, पच तु प्रकृतिविशेषाभिन्नभावनाया उत्तप्रत्ययार्थप्रधानम्, प्रत्ययो ऽपि पौर्वापर्यनियमात् न पचत् स्वतन्त्र सामान्यमाने विषमादधाति, अपि तु प्रकृत्यर्थापेक्षया विशिष्टा स्वां विशेषमेव समर्पयति । सर्वत्र च तदविशेषे वर्तते । तेन सामान्यतोऽभेदस्या धात्वर्थोपधानेन समानस्तु विशेषाणामपि विशेषाभिधानानुमानमनिरुद्धम् ।

ननु प्रत्ययस्य सामान्यमात्रविषयत्वमपि तत्कल्पनीयम् सामान्याभिधायिनोरेकाधिकरण्यम् ।

[ उम्वेक – प्रत्ययो भावनासामान्यवचन , करोति रपि भावनासामान्यवचन एव, न च द्वयो सामान्य वचनयो सामानाधिकरण्यम् । ]

उच्यते —

भेदोपहितसामान्यवचनेऽप्यपृथक् श्रुति ।
को राजा याति ? पाञ्चाल्यात्र इत्यभिधीयते ॥

[ उम्वेक – एतदुक्तं भवति, यथा पाञ्चालराज इत्यत्र सन्निधानाभिरभिधानाद्वा पाञ्चालविशेषोपहिते राजार्थे गम्यमाने 'को राजा' इत्यनुपहितसामान्यवचनस्य शब्दस्य उपहितसामान्यविषयेणोच्चारितेन राजशब्देन सामानाधिकरण्यम्, तथात्रापीति न अन्विताभिधान चोद्यम्, नाप्यसमानाधिकरण्यम् । ]

प्रश्नवर्तिना हि सामान्यशब्देन व्यवच्छिन्नसामान्य विषयस्य श्रुतस्य परिहृतसामानाधिकरण्यप्रयोगः, को राजा याति ? पाञ्चालराज इति यथा । युक्त एव चोत्तरे सामान्यनिर्देश , अन्यथा प्रश्नगत तदपेक्षणीयं स्यात् । विशेषतस्तु भावनाया अभिधानशब्दभेदात् परोक्षत्वात् प्रमाणविशेषाश्रया । तस्मात् सिद्धसाधनं न विपर्ययसाधनं नाप्यदृष्टान्तता ।

[ उम्वेक — तस्मात् पाकादिशब्दोच्चारणे प्रत्यय सन्निधानादिभिर्विशिष्टे भावे गम्यमाने न करोतिशब्द साधितस्य साधनम्, येनानर्थकत्वात् सहप्रयोगानुपपत्ति स्यात् । नापि विपर्ययसाधनम् । सामानाधिकरण्यदर्शनात् । यथा, 'को राजा याति ? पाञ्चालराज ' इति । नाद्यष्टान्त तेऽस्य अवयव – न चायमदृष्टान्तोऽनियमानदृष्टत्वात् , अस्यैव दृष्टान्तस्य नियमानुगमात् । तेन सति दृष्टान्ते न विरुद्धो हेतुरिति । अथवा वृक्ष शिंशपा इत्यस्मात् स्थलेऽपि नादृष्टान्तता । यथैव तत्र सामान्यविशेषविषयत्वेन सामानाधिकरण्य तथैव 'किं करोति ? पचति ' इत्यत्र करोतिप्रत्यययो । ]

भावाभावे प्रयोगस्तु न क्वचिदपि निरीक्षित ।
अन्यत्र सोऽपि धात्वर्थोपधो दृश्यते यथा ॥

[ उम्वेक – आख्यातसमानाधिकरणस्य नामसमाना धिकरणस्यैव करोते भावनाभावे न प्रयोगो दृष्ट, येन धात्वर्थसामान्यवचन समवसीयेत । तथाहि, 'घटा ध्वनति ' इत्यत्र भावाभावेन भावाभाव उच्यते । स चायुक्त , स्वस्य धात्वर्थस्य अन्योत्पादकत्वसमानत्वेन भावान्वितत्वात् । अस्ति ह्यत्रापि मृदुतीव्रध्वनिनिष्पाद्य गुरु लघुत्वं वा । यदि तत्कल्पनावशात् गुरु लघु वा ध्वनतीत्येव सम्भावनमस्मात् भावेन नाभ्युपगम्यते तदेतत्तत्रो धात्वर्थमेव भाव्य कृत्वो ध्वनन करोतीति प्रयोगनिष्पत्तौ तस्मिन् शब्दो वा ध्वननम् । परिस्पन्दस्य

करोत्यर्थ इति । यदपि 'का क्रिया ? पाकः' इत्युदाहृत तत्रापि भावनाविशेषनिबन्धनं सामानाधिकरण्यम्, न श्रुतपाकनिबन्धनम्, येन धात्वर्थवचनता करोतेः स्यात् । तदेतदाह– लक्ष्यते तयेति । ]

'घण्टा ध्वनति' इति हि भाव्याभावेन भावनाभाव उच्यते । सर्वत्र धात्वर्थः किञ्चिदुत्पादयति ध्वननमपि शुष्कं दु.प्रशानं वाऽन्ततो धात्वर्थ एव भाव्यः ।

[ उम्बेकः–तत्र भाव्यासमानाधिकरणस्य करोतेः यथा भावनाभावे न प्रयोगस्तथा दर्शयति–घण्टेति । ]

न हि सर्वत्र धात्वर्थस्य करणतैव कर्मताऽपि तु क्वचित्स्वमानानिर्वृत्तिविवक्षायाम् ।

[ उम्बेकः– ननु धात्वर्थस्य करणत्वाभ्युपगमात् कथमिव कर्मत्वमुच्यते इत्याशङ्क्याह– नहीति । ]

यद्यपि करणं धात्वर्थस्तथापि व्यापारसाध्यत्वात् कर्मताऽपि । तेन यदा धात्वर्थमात्रनिर्वृत्तिर्विवक्षिता भवति नान्यस्य फलस्य तदा कर्मनिर्देशो न विरुध्यते । ]

'का क्रिया ? पाकः' इति चेहापि द्विविधत्वात् शब्दार्थस्य श्रौताभ्यमेदेन नाभावो भावनायाः शब्दतस्तु द्वितीयलक्षणायत्वात् पाकशब्दस्य ।

[ उम्बेकः— लक्ष्यते तयेति यदुक्तं तत् विवृणोति– का क्रियेति ।

यद्भावनाप्रतिपादकशब्दाभावेन भावनाभावे सति 'का क्रिया ? पाकः' इति सामानाधिकरण्यं करोतेरुदाहृत तदयुक्तम् । पाकशब्द एव हि भावनाप्रतिपादक. । न ह्यभिधेय एव शब्दार्थ इति व्यवस्था । किं तर्हि ? यतरः शब्दः स शब्दार्थ इति पचिना लक्षितभावनाविशेषनिबन्धनमपि ऐकाधिकरण्यमत्रेति न दोषः । ]

तिङन्तेऽपि तर्हि लक्ष्य एव भावोऽस्तु । नैतत्सारम्, यतः सर्वेन कः पाको बुद्धिभेदमपह्नुते न भावनापरामर्शमन्तरेण न भावमेवत् ।

[ उम्बेक.— यतः 'का पाकः' 'पचति' इत्यत्र बुद्धिभेदो न स्यात्, अस्ति चासौ । तथाहि पाक इत्यत्र सिद्धरूपो धात्वर्थो गम्यते, पचतीत्यत्र साध्यरूपः । तच्च साध्यत्वं भावनासंस्पर्शकृतम्, तत्संस्पर्शश्च यद्यपि सा प्रत्ययेनाभिधीयेत । ततोऽस्याभिधेयभावनानिबन्धनमैकाधिकरण्यम्, न पाकवत् गम्यमानापेक्षमित्यर्थः । ]

इद भवान् पृष्टो व्याचष्टाम् 'पाकः पचति, इत्यत्र धात्वर्थो भिद्यते न वा' इति । को हि स्फुटं प्रत्ययभेदमवजानीते ? तथाहि, तिङन्ते भाव्यः स गम्यते, न तथाभूतो घञन्ते, भावे तद्विधानात्, शुद्धस्य च धात्वर्थस्य तत्राभ्याख्यानात् । 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति । तर्हि भावस्य भावनासंस्पर्शकृतमिति तिङन्तानां सोऽर्थः । गम्यमानत्वे हि तिङन्तघञन्तयोर्धीर्न भिद्येत, अविशेषात् ।

न च साधनसाध्यसंबन्धाद्वेषावगमः, 'स्थीयते' इत्यत्राप्रसङ्गात् ।

[ उम्बेकः— यत्र साध्यत्वावगमः, हन्त तर्हि भावोत्पन्नप्रत्ययान्ते स्थीयते इत्येवमादौ शब्दे कारकसंबन्धाभावात् धात्वर्थस्य साध्यत्वावगमो न प्राप्नोति । अस्ति चासौ । देवदत्तेन स्थीयते इत्यत्र स्थितिः क्रियते इत्यर्थोऽवगम्यते । तेन भावनासंस्पर्शकृतमेव साध्यत्वं न कारकसंबन्धकृतमित्यर्थः । ]

किञ्च—

पाकं करोति पचतीत्याख्यातार्थो न दृश्यते ।
भेदेन शब्दतत्त्वज्ञैः पाकादौ न त्वयं क्रमः ॥

[ उम्बेकः– पचतीत्यस्य पाकं करोति, इतीममर्थं निदर्शयति, न पाकशब्दस्य । तेन तिङन्ते केनचिच्छब्दभागेन पाकोऽभिधीयते केनचित्करोत्यर्थ इति गम्यते । गम्यमाने भावे पाकादावपि तथा निदर्शनप्रसङ्ग इत्यर्थः । ]

पचति पाकं करोतीति तिङन्तपदार्थं भेदेन निदर्शयति न्यायप्रतिपद्य भेदम्, पाकादिषु तु न तथा भेदप्रतिपत्त्यभावादिति गम्यते ।

[ उम्बेक.— ननु तिङन्तेऽपि न पृथक्करोत्यर्थोऽभिधीयते, अभिधाने प्रमाणाभावात् । यत्तु निदर्शनं तदशब्दमेव भेदं परिकल्प्य, यथा कस्याभिनिर्वर्तनं करोतीति । न तावत् पाकादिनिर्वर्तनविषयोऽपरः करोत्यर्थोऽभिहितः । करोत्यर्थं एवाभिनिर्वर्तनम्, न च तत्रापि अपरः करोत्यर्थः सम्भवति योऽभिधीयते । ]

परिकल्प्य भेदं तथोपदर्शनं पाकस्याभिनिर्वर्तनं करोति यथेति चेत् ।

[ यत्तु धात्वर्थे साध्यत्वं तस्यावश्यमेव स्वाभाविकमित्यभिप्रायेण चोदयति– परिस्पन्देति । ]

न, पाकादावपि भेदप्रतिपादनप्रसङ्गात् ।

[ उम्वेकः— यथा भावशब्देन भेदं परिकल्प्य निदर्शयन्ति, या व्यवस्था यत्रिडन्ते निदर्शयन्ति– न पाकादाविति । ]

शब्दोपकल्पितस्तिङन्तेष्वपि भेद इति चेत् । अस्तु तावच्छब्दार्थभेदो वस्तुन्यपि उपपादयिष्यामः ।

[ उम्वेकः— तिङन्तस्य धात्वर्थरूपं भवनाऽङ्गीकृतम्, तत्तु तादृशमिष्यमाणमेव वक्ष्यामः । ]

नन्वेवं भावनाया अपि साध्यरूपाया भावनान्तरापेक्षत्वादपि तथैवानवस्था । यदि मतं व्यापारो हि स स्वरूपेण तत्रास्त्यसौ पराधीनोपजननम् । अतः स्वरूपापेक्षतासिद्धेः नान्यसम्पर्कमपेक्षेति । धात्वर्थोऽपि तर्हि तथाऽस्तु । तथाहि– वस्तुतः सोऽपि तथा अतथा वा भवनादावितरथाभावः स्वशब्देर्व्यापारसमोपादीयते ।

घनन्तादिष्वपि कारकसम्बन्धोपपत्तेः अन्यथा व्यापारे कारकसम्बन्धायोगाद्व्यापारान्तरान्वितः कारकत्वानुपपत्तेः । क्रियासम्बन्धप्रभावितत्वात् कारकभावस्य ।

बुद्धिभेदस्तु पाकादिषु प्रत्ययोपादानेन सिद्धभावेनानुभवात् । अतस्तिभवति चेत्यादौ न भावाभिभूतरूपप्रत्ययार्थकर्ये घटयेन व्यापारान्तरनिदर्शनेन निदर्शयति भावनाया इव । न च सिद्धसाध्ययोरेकशब्दस्य विरुद्ध भेदाभेदयोरिव गोत्वादिषु भिन्नप्रकृतिप्रत्ययोपादानत्वात् ।

साध्यमानरूपप्रतीतिनिदर्शनात्मा च धात्वर्थस्य तिङन्तेषु भावनाभिन्नो धात्वर्थस्य धर्मत्वप्रसङ्गो न करणं स्यात् ।

तस्माद्धात्वर्थ एव व्यापारात्मा धातुशब्दोपादानः फलभजनसमर्थो भावनाविषयश्चेति साम्प्रतम् ।

[ उम्वेकः— तस्मात् अल धात्वर्थातिरिक्तभावनया, धात्वर्थ एव व्यापारात्मा धातुनोपादीयमानः प्रत्ययाच्च फलभजनसमर्थतया गम्यमानः फलभजनसमर्थव्यापारवचनभावनाभिधानशब्दार्थ इत्याह– तस्मादिति । ]

तदेतदसमञ्जसम् । तथाहि—

दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।
प्रत्ययार्थेनाभिभव सिद्धे तद्भावनिश्चयः ॥

[ उम्वेकः— यदि धात्वर्थभावनयोरवान्तरो भेदो न स्यात् ततः शब्दोपकल्पित एवायं भेद इत्यभ्युपगम्येत, न त्वेतदस्ति, प्रयत्नपरिस्पन्दयोः धातुवाच्यसंयोगविभागातिरिक्तयोः प्रत्यक्षसिद्धत्वात् ।

यत्तु पाकादौ साध्यत्वं न गम्यते तत्र प्रत्ययार्थेन सिद्धत्वेनाभिभूतत्वादिति तत्राप्याह—प्रत्ययार्थेनेति । ]

दर्शयिष्यते हि व्यापारात्मनो धात्वर्थाद्भेदवत् क्रियाऽतो न शब्दसामर्थ्यविलसितमिति युक्तम् । असति हि वस्तुनि तथा नाम भवेदपि ।

सम्बन्धग्रहणापेक्षत्वाच्च शब्दस्य न तस्तुरूपकल्पने विभवः । निश्चिते तु धातुभिर्भाव्यतया भेदोपादानेऽभिमताभिधानं युक्तम् । न चेह तथा प्रमाणाभावात् । साधनसम्बन्धस्य गम्यमानभावनाविषयत्वात् ।

[ उम्वेकः— यदि धात्वर्थव्यतिरिक्ता भावना नाभ्युपगम्येत ततः सम्बन्धेऽगृहीते सति अगृहीतसम्बन्धः प्रत्ययः कथमिव भावनाबुद्धिं कुर्वाणेन शब्दोपकल्पितो भेद इत्युच्यते, इत्याह– सम्बन्धेति । विभवः सामर्थ्यमित्यर्थः ।

उत्तरार्धं विवृणोति— निश्चिते त्विति । साधनसम्बन्धस्येति । 'देवदत्तेन पाकः' इति धात्वर्थेन सम्बध्यमानाव्याह्रियमाणक्रियतेः शब्दवाच्यभावनाविषयत्वादित्यर्थः । ]

तथादर्शनात् षट्कृत्वा खण्ड इति ।

[ उम्वेकः— दृश्यते च गम्यमानभावनाविषयकारकसम्बन्ध इत्याह— तथेति । एतावत्युक्ते षट्कृत्वा खण्डः क्रियते इत्येतावदर्थं वाक्यं समाप्यते इति । ]

किञ्च—

विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।
ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ॥

[ उम्वेकः— इतश्च धात्वर्थव्यतिरिक्ता भावना अस्तीत्याह— किञ्चेति । यदि धात्वर्थव्यतिरिक्ता भावना नाभ्युपगम्यते तदा विक्लिद्यन्ति पचन्तीत्यनयोरपि शब्दयोरेकार्थत्वं प्राप्नोति । उभयोरपि विक्लित्त्यात्मकव्यापार-

विषयत्वात् । ननु पचतीतिप्रत्ययोपात्तदेवदत्तादिकर्तृकः पाकोऽभिधीयते, विक्लिद्यन्तीति च तण्डुलकर्तृकः, अतः कथमेकार्थ्यमित्याशङ्क्याह— ऋते व्यापारेति । तस्य कर्तृभेदे सति अर्थभेदो भवति । स एव धात्वर्थातिरिक्त-व्यापाराभ्युपगमं न युक्तः । ]

न तावदिहान्येषु धात्वर्थ एव व्यापारत्वेनोपादीयते विक्लिद्यन्ति पचन्तीति धात्वर्थाभेदात् प्रत्ययाभेदप्रसङ्गात् ।

कर्तृभेदार्थमिति चेत्, न, व्यापारभेदमन्तरेण तदनुपपत्तेः । तथाहि, आख्यातेन नियोक्तृत्वे कर्तृत्वे देवदत्तादय एव कर्तारो न तण्डुलाः । अगुणतया धातुनाभिधीयमानव्यापारत्वे तु तण्डुला एव कर्तारः । एतेन भिनत्ति निद्रन्ति छिनत्ति द्रावयति इत्यादयो व्याख्याताः । तस्मात् धात्वर्थातिरिक्तो व्यापार उपेयः यत्कृतोऽर्थभेदः कर्तृभेदश्च ।

[ उन्मेषः— भिनत्तीति प्रयोजकदेवदत्तादिकर्तृको व्यापारोऽभिधीयते । निद्रन्तीति तु प्रयोज्यकाष्ठादिकर्तृको धात्वर्थः । तथा छिनत्तीति देवदत्तादिकर्तृक एव, द्रावयतीति प्रयोज्यवृक्षादिकर्तृकः । तत्सर्वे चैषां शब्दानां धात्वर्थव्यतिरिक्तव्यापारानभ्युपगमे तुल्यार्थत्वं स्यात् । ]

अपर. कल्पः । स्यान्मतम्, कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारोऽभ्युपगम्यते । कर्तृस्थक्रियेषु कथमिति ।

[ उन्मेषः— अनेन शङ्कां दर्शयति । अयं चाशङ्कार्थः, कर्मसमवायिक्रियेषु विक्लिद्यन्ति पचन्तीत्येवमादिषूक्तेन प्रकारेण धात्वर्थातिरिक्तः कर्तृव्यापारो नोदु बाध्यते । तदनभ्युपगमेऽभिधीयमानव्यापारत्वे न कर्तृत्वे सति तण्डुला एव सर्वेनाभिधीयमानव्यापारत्वेन कर्तारः प्राप्नुयुः । न हि तण्डुलादिकर्मसमवायिना पाकेन प्रयोज्यव्यापारेणाभिधीयमानेनाभिधीयमानव्यापारा देवदत्तादयो भवन्ति तेन अवश्यं कर्मसमवायिक्रियेषु देवदत्तादीनामभिधीयमानव्यापारत्वसिद्ध्यर्थं प्रयोज्यव्यापारातिरिक्तो व्यापारोऽभ्युपगन्तुं शक्यः । कर्तृस्थक्रियेषु तु यजते यजन्तीत्येवमादिषु शब्देषु यागधात्वर्थस्य यजमानर्त्विक्परत्वादुभयोरपि अभिधीयमानव्यापारत्वेन कर्तृत्वोपपत्तेः । अन्यत्रापि व्यापारान्तरे भवति कर्तृभेदोऽर्थभेदश्चेत्यव्यापकमिदं कर्तृभेदकारणमिति । ]

उच्यते—

ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ।

'ऋत्विजो यजन्ति' 'यजते यजमानः' इत्यगुणतो धातुनाऽभिधीयमानव्यापारस्य कर्तृत्वात् फलविशेषस्य च कर्तृभिप्रेयस्य यजमानव्यापारत्वात् 'यजन्ति याजकाः' इत्यनुपपत्तिः । धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षायां तूपपद्यते । नन्वनभिधानेऽपि व्यापारभेदस्य स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदः कारणमेव स्वातिशय-विवक्षाभेदादुपपद्यते ।

[ उन्मेषः— यद्यपि धात्वर्थात् व्यापारान्तरं नाभिधीयते इति तथापि धात्वर्थे एव स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदो भवति । तस्मिन्नेव यजर्थे यदर्त्विजां स्वातन्त्र्यं विवक्ष्यते तदा 'यजन्ति याजकाः' इति प्रयुज्यते । यजमाने तु स्वातन्त्र्येण विवक्षिते ( यजते ) यजमान इति । विवक्षातो हि कारकाणि भवन्ति, यथा 'प्रदीपेन पश्यामि' इति व्यवस्थितमपि दीपं करणत्वेनोपदिशन्ति, दर्शनक्रियायां तस्यातिशयो विवक्षित इति । ]

किमिदं स्वातन्त्र्यम् ? साधनानां नियोक्तृत्वम् । काष्ठादीनि पचन्तीति कथम् ? नियोज्यान्तराभावात् नियोक्तृत्वविवक्षा प्रयोगे न स्यात् । तस्मात् प्राधान्येन प्रतिपाद्यमानव्यापारता स्वातन्त्र्यम् ।

[ उन्मेषः— यस्य व्यापारः प्राधान्येनाख्यातः प्रतीतिः तत् स्वतन्त्रम् । काष्ठादीनि पचन्तीति काष्ठादीनां व्यापारः प्राधान्येनाभिधीयते । तस्मात्तानि स्वतन्त्राणि । ]

तथा चोक्तम्— स्थालीस्थे प्रयत्ने कथ्यमाने स्थाली स्वतन्त्रेति ।

[ उन्मेषः— प्रयत्न इतीह स्थालीव्यापारः कथ्यते यया पच्यमानमोदनं बिभर्ति । स्थाल्या हि धार्यमाण ओदनो निर्वर्त्यते, नान्यथा । तदनेन वर्त्मना स्थाली ओदनपाके स्वतन्त्रेत्युच्यते । अथवा प्रयत्न इति पुरुषप्रयत्नोऽभिधीयते तस्मिन्नोदनपाकनापरत्वेऽपि अनुभाव्यत्वेन स्थालीस्थे विवक्ष्यमाण इत्यर्थः । न खलु विना स्थाल्या कश्चिदोदनं पाचयितुं प्रभवतीति । ]

हरणमेतत् । सर्वत्र व्यापारान्तरं निह्नुवानेन भवता यथा-स्माभिर्व्यापारान्तरमभ्युपादितं विविक्षन्ति पचतीत्यनेन यत्नैवाङ्गीकृतो व्यापारभेदः । अस्माभिश्च यजति पचतीत्यत्र व्यापारान्तरमापादितम् । तेन विना देवदत्तादीनां कर्तृत्वा-च कर्तृत्वानुपपत्तेः, न तु 'यजते यजमानः' 'पच्यन्ते तण्डुलाः स्वयमेव' इत्यत्र । यागपाकयोरभिन्न अभिहित-व्यापारत्वात् यजमानतण्डुलानाम् । लिङाभिधानस्येति । अत्र हेतुः तदनिरूपकत्वादिति । व्यापारान्तरनिरूपका-भावादित्यर्थः । अहच्छिदन्यनत्वादिति क्वचित्पाठः । अत्रा-प्ययमर्थः— धात्वर्थनिरूपकत्वात्, व्यापारान्तरनिरूप-कत्वादिति यावत् । अत्रैव कारणमाह— तथान्यथा-सिद्धेरिति । ]

किञ्च—

तदेव तस्य करणं न चैकमवकल्पते ।
भावनां संगिरन्तेऽतो धात्वर्थव्यतिरेकिणीम् ॥

[ उन्वेकः— न च भावनाया एव भावनायाः कर्मता करणत्वं च घटते । उभयोरपि क्रियात्वेन तुल्य-रूपत्वात् ।

धात्वर्थव्यतिरेकिणीमित्यनेन धात्वर्थभ्यो व्यतिरेको धात्वनभिधेयत्वं च भावनायाः प्रतिपादितं यदि धातूनो-च्येत ततो यागादिव्यतिरिक्ताऽपि सती धात्वर्थस्य धात्वर्थव्यतिरेकिणी स्यात् तेन प्रसिद्धयागादिधात्वर्थ-व्यतिरिक्तत्वमधातुवाच्यत्वं च प्रतिपादितम् । तदेव तस्य करणमित्यनेन च व्यतिरेके धात्वनभिधेयत्वे च कारण-मुक्तम् । यदि धात्वभिधेया स्यात् भावनाऽऽख्यातपदे तथा धातुपदेऽपि भावनया धात्वभिधेयत्वात् भावना भावनायाः करणं कर्म चेत्यभ्युपगतं स्यात्, न चैतद्युक्तम् । न हि तदेव कर्म करणं वा भवति । यद्यपि च सामान्य-विशेषयोर्भेदोऽस्ति, सामान्यस्य विशेषाणामवच्छेदकत्वात्तथापि भावनासामान्याभिप्रायेण तदेवेति व्याख्येयम् । ]

यजेताश्वमेधेन, इत्यत्र चातुर्मास्यैः, स्व यज यजति, इति नैकत्वे क्रियाकारकभावानुपपत्तिः । सामान्यविशेष भेदेऽपि न क्रियाकारकसम्बन्धमुपपन्नमिति क्रमः । सामान्यस्यागम्यत्वेनाक्रियात्मकत्वात् ।

विशेषणविशेष्यभावे कारकविभक्तेर्विरोधत्वम् ।

[ उन्वेकः— विशेषणेति । अयुक्तोऽयं पक्ष इति वाक्यं समापनीयम् । ]

नाप्येकदेशयोः क्रियाकारकभावः, उभयत्र समुदायस्य शब्दोपात्तत्वात् ।

[ उन्वेकः— उभयत्रेति । क्रियापदे कारकपदे च समस्तस्य यागस्य शब्देनोपात्तत्वादयं विभागः कर्तुं शक्यते इत्यर्थः । ]

नापि धातूपात्तायां भावनायां अन्तर्भूतसामान्यकर्म-करणिकायां विशेषकर्मकरणसम्बन्धो यथा सुवर्णयति माण-वकम्, उपश्लोकयति मालिन्या इति । 'स्वं यज यजु-र्भिर्देवैः' इत्यत्रापि धातुना भावनोपादानात् विशेष-भावनाऽभ्युपगमात् विशेषणविशेष्यभावानुपपत्तेः । अनुपादाने वा शिष्टव्यभिचारोऽसौ न तिङन्तेऽपि तानुपपादयितुमर्हति ।

[ उन्वेकः— सुवर्णं चन सुवर्णशब्देन श्लोकशब्देन च सामान्येनाभिहिते कर्मकरणे पश्चात्तदुक्ता क्रिया विशेष्यते इति विशेषणविशेष्यभावः । इह तु भावनैव धात्वर्थः, न कर्मकरणसामान्यम् । न चानुपात्ते विशेष्ये विशेषणं भवति । धातुसामानाधिकरण्येन स्वश्वमेधादि-शब्दानां धात्वर्थनामधेयत्वं वक्ष्यते । तदपि भावनैव धात्वर्थस्तदा तस्याः तन्नामधेयं स्यात्, न तु तत्करणस्य धातुनाऽभिहितस्य । तस्माद्यत्नबुद्ध्यभ्यतीत्यादिना गुरुव-मिति । ]

एतेनौदनादि पचतीत्यादयोऽपि व्याख्याताः ।

तस्मान्नैव कारकभावो नाम पदोपात्तधात्वर्थस्य विभक्तिभिर्यत्ने, तन्निरोधी लिङन्तेषु प्रत्ययोपादानः करोत्यर्थः प्रतिभाति बुद्धेः ।

[ उन्वेकः— कारकभाव इत्यत्रार्थेन व्यतिरेकीति च व्यतिरिक्तमुपसंहरति । 'स्वं यजे अश्वमेधेन' इत्यत्र यजाश्वमेधनामपदोपात्तस्य धात्वर्थस्य आख्यातप्रत्ययो-पात्तायां भावनायां द्वितीयातृतीयाभ्यां कर्मत्वं करणत्वं च व्यज्यते, आख्यानादेव धात्वर्थस्य धात्वन्तरगतिं कर्मत्वं च । अन्यथा भावनान्वयानुपपत्तेरनोऽभिधास्ते इत्याह । यत एव धात्वर्थस्य कारकत्वं व्यज्यते अत एव धात्वर्थनिरोधी भावो धात्वर्थन्तर्भावे तु धात्वर्थस्य

कारकस्याभिव्यक्तिर्न प्राप्नोति अकारकस्यापि भावस्य धातुनोपात्तत्वादिति । 'न चापि व्यभिचारस्य साक्षात् प्रामाण्यघातिता । क्वचिद् दृष्टा भ्रान्तिबोधे बाधधीरुपघातिका ॥'

नैव हि व्यभिचारस्य क्वचित्साक्षाद्व्याघातकत्वं दृष्टं येन शब्दस्य व्यभिचारित्वे गम्यमाने तेन प्रामाण्यं व्याहन्येत । ननु भ्रान्तिबोधे दृष्टं व्यभिचारस्य व्याघातकत्वम् । अत आह– भ्रान्तिबोधे बाधधीरुपघातिका । भ्रान्तिबोधेऽपि बाधधियो व्याघातकत्वं न व्यभिचारस्य ।

वार्तिककारस्तु लिङादिव्यापारं प्रेरणमाह– इह लिङादिशुत्यभ्यो नान्येभ्यो द्वे भावने अवगम्येते शब्दात्मिका चार्थात्मिका चेति । प्रयोजकव्यापारश्च भावना । उक्तं च भट्टपादैः— 'स्वाध्यायाध्ययनविधिना सर्वे विधायकाः स्वाध्यायाद्योपात्तभावना नियुञ्जते मानवेष्विति' इति । एतदनेन निर्दिशन् विधिनियुज्यमानवाक्यादिप्रयोजकव्यापारो भावनेति । ]

इष्टवान् यष्टैरित्यत्रापि द्रव्यप्रधानभावनाभ्युपगमात् लिङादिषु तथाप्रतीतेरवियोगः ।

[ उम्बेकः— ननु इष्टवान् यष्टैरित्यत्र कृत्यपि सत्यप्रत्ययप्रयोगे भावनाया अप्रतीतेर्न भावनायां यागस्य करणत्वम् । अतोऽत्र का गतिः, याऽन्यत्रापि भविष्यतीत्याशङ्क्याह– इष्टवान् यष्टैरिति ।

किं कृतवान् ? इष्टवानिति करोतिसमानाधिकरण्यात् द्रव्यप्रधानभावनाभिधानमिति भावनायामेव यागस्य करणत्वमित्यर्थः । तथा निष्क्रियो देवदत्तः ? पक्ता, पाचक इति करोतिसामानाधिकरण्यदर्शनात् अस्यत्रापि द्रव्यनिष्ठभावनाप्रतिपत्तिरिति भावः । ]

यत्तु भावनाविवक्षनेऽर्थात् कारकत्वहानिः, तत् अनिरूपितकारकतत्त्वस्य ।

[ उम्बेकः— यत्तु इति । तत् अनिरूपितकारकतत्त्वस्य वचनमित्यर्थः । ]

तथाहि—

करणं खलु सर्वत्र कर्तृव्यापारगोचरः ।
तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥

[ उम्बेकः— तिरोदधातीति । प्रधानं कर्तारं तिरोदधाति कर्तुं प्राधान्यादित्यर्थः । अथवा तिरोदधाति कर्तारमिति प्रतिज्ञायते । तत्र हेतुः प्रधानं तन्निबन्धनमिति । यस्मात्प्रधानं करणनिबन्धनं न साक्षात्कर्तृनिबन्धनं तेन कर्ता करणेन फलाद्व्यवधीयते । 'प्राधान्यं तन्निबन्धनात्' इति तु समीचीनः पाठः । ]

न खलु कर्तृव्यापारलक्षणाया भावनाया धात्वर्थस्य कर्मत्वप्रसङ्गः, अकरणत्वं वा परश्वादावपि तथाप्रसङ्गात् । तथाहि– छिदादिषु न साक्षाद् व्याप्रियते कर्ता, अपि तु परश्वादिकरणे । तद्व्यापारस्तु उद्यमननिपतनादिलक्षणः परशुगोचर एव ।

[ उम्बेकः– तथाहीति । वेगवता हि परशुना तीक्ष्णधारेण सम्बध्यमानं दारु छिद्यते । छेदने परशुरानन्तर्यात् साधकतमत्वेन करणं भवति । कर्तृव्यापारस्तु कुठारे वर्तते न दारुणि इति । ]

अत एव करणस्याव्यवहितव्यापारतया क्रियासिद्धौ साधकतमत्वम् । तद्व्यापारापेक्षप्रवृत्तितया च करणस्य कर्तुः स्वातन्त्र्यमपरानुपहतिरिशोऽपि ।

[ उम्बेकः– कर्तृव्यापारायत्ता हि करणस्य प्रवृत्तिः । यदि पुनरुद्यमननिपातने च परशुना दारु छिद्यते । तदेवं करणव्यवधानादरेणापि फलस्योपकुर्वतः स्वातन्त्र्यं भवति, कर्तृत्वं भवतीत्यर्थः । ]

अन्यथा करणमेव स्यात् ।

[ उम्बेकः– अन्यथेति । व्यवधाने वा प्रदिश्यते । तस्यायमर्थः– असति कर्तृव्यापारे परशोः करणत्वं न स्यादिति । ]

अपि च–

साधनानामभावः स्यात्कर्तृकर्मातिरेकिणाम् ।
साधनानां नियोगो हि कर्तृव्यापार इष्यते ॥

यदीतेरानीं कर्तृकर्मातिरिक्तसाधनान्तरापेक्षया साधनान्तरनियोगः कर्तृव्यापार इति निर्देशविषयतातिप्रसङ्गः सर्वत्र कर्मत्वापातात् ।

संयोगस्तेजसः संभवति । अन्त्यावयवसंयोगेऽपि च सर्वेन चलतीति प्रत्ययो न स्यात् । सवर्गिद्रव्यस्य च तेजः-सलिलादेर्घटवदकार्यस्यावयवसंघातमानरूपत्वाच्च तत्त्वथी विद्यते, येनैकदेशसंयोगेऽपि सर्वेन चलनप्रत्ययः स्यादित्यर्थः । ]

तस्मादस्ति धात्वर्थाच्छब्दाहितविशेषातिरिच्यमानात्मा क्रियापदार्थो भावनापर्यायः ।

[ उम्बेकः— तस्मादिति । धात्वर्थाच्चासौ शब्दाहितविशेषश्चेति विग्रहः । शब्दाहित इति व्यापाराहितः । गच्छत्यादिपदे प्रत्ययप्रतिपाद्यभावनाकृत इत्यर्थः । विशेष इति गुणविशेषः संयोगविभागात्मकः । ]

नन्वेवं भावनांशो धात्वर्थस्य निष्पत्तिस्ततश्च फलस्येति कथं तन्निष्पादो धात्वर्थस्तस्य करणम्, स्वर्गादि च अन्यसाध्यं कथं कर्म ? तस्मात् धात्वर्थ एव भावनाऽस्तु । स्वर्गे धात्वर्थे चान्तरा व्यापारान्तरानुपलम्भादित्युक्तम् ।

[ उम्बेकः— स्वर्गमिति । अस्यायमर्थः— यदि धात्वर्थकरणकात् व्यापारात् व्यापारान्तरं स्यात् ततस्तस्य स्वर्गादेः कर्मत्वं भवेत्, व्यापारान्तरनिष्पादितस्य धात्वर्थस्य करणत्वम्, न तु तदुपलभ्यत इत्युक्तम् । ]

उच्यतेऽत्रोत्तरमेतत् । तथाहि—

फलेन साक्षात्करणे कर्तृश्चेष्टाफलार्थिनः ।
करणत्वं प्रधानांशे तादूप्यं वा यतस्ततः ॥

[ उम्बेकः— तादूप्यमिति । तादूप्यं छेदनरूपत्वं परिस्पन्दस्य । ततः इति द्विधाभवनात् । यस्मात् द्विधाभवनावच्छिन्नः परिस्पन्दः छिनत्तीत्युच्यते तस्मात् तत्र परशोः करणत्वमिति । ]

न इमे अन्यकर्मकरणविलक्षणे फलधात्वर्थयोः कर्मकरणत्वे । दर्शितं हि 'परशुना छिनत्ति' इति न हि द्विधाभावे कर्तृव्यापृतिरपि तु करणे साधननियोगादिलक्षणत्वात् गतेः । तेन फले चैव व्यापारस्तदभिधानादनन्यप्रकारत्वाच्च । इमास्तु भेदः— धात्वर्थस्योत्पादनं नियोगः, परश्वादेस्तु सिद्धस्योद्यमनिपातनादिः । वृक्षादेश्च कर्मत्वं द्विधाभवने कर्तृत्वात् ।

तदर्थं परशुनिष्ठितं निपातोद्यमनादिलक्षणं द्विधाभवनं प्रति करणत्वम् ।

[ उम्बेकः— 'करणत्वं प्रधानांशे' इति यदुक्तं तद्विवृणोति— तदर्थमिति । तदर्थमिति तत्कारणकं वृक्षादिकर्मत्वकारणकमित्यर्थः । तदर्थमित्यत्र अर्थशब्दः कारणवाची । निपातोद्यमनादिलक्षणमिति । निपातोद्यमननिमित्तकमित्यर्थः । यद्वा तदर्थमिति वृक्षादिकर्मप्रयोजनं तच्छेदभूतं तद्द्विधाभवनं प्रति करणत्वमिति । ]

तथ परशोः करणत्वं छिनत्तौ प्रधानांशापेक्षम् । तादूप्यस्य तदधीनत्वात् । न शुद्धमननिपातनादिमात्रमथ तद्द्विधाभवनं छिनत्तीति निरूप्यते ।

[उम्बेकः— 'तादूप्य वा यतस्ततः' इति यदुक्तम्, तद्विवृणोति— तादूप्यस्येति । ]

तस्मादिहापि धात्वर्थस्योत्पादकोऽनुग्राहको वा कर्तृव्यापारः समुद्दिष्टफलभावनतया प्रतिलब्धभावनाव्यपदेशो धात्वर्थोपनिबद्धप्रधानांशतादूप्यफलकर्मको धात्वर्थकरणश्च इति न दोषः । न हि क्रियां भावयति परशुनेति परशु क्रियात्मकं चान्तरेण कर्तृव्यापारं एकोऽपरसाध्योऽपरसाधन उपलभ्यते । न च करणस्य विरुद्धम् । प्रधानांशनिष्पत्तेस्तदधीनत्वात् । तथेहापि फलभूते प्रधानक्रियापेक्षत्वात्कारकविभक्तिः विभागव्यपदेशश्च ।

[ उम्बेकः— एवं दृष्टान्तं व्याख्यायाधुना दार्ष्टान्तिकं योजयति— तस्मादिहेति । धात्वर्थोपनिबद्धप्रधानांशतादूप्य इति धात्वर्थकरणकः प्रधानांशः फलभवनं तादूप्यं भावनाकर्मत्वं यस्येति विग्रहः । प्रधानांशनिमित्तकमपि तादूप्यं प्रधानांश इत्यभेदेनोपचरितम् । यद्वा, प्रधानांशे तादूप्यं यस्येति गमकत्वात् व्यधिकरणेऽपि समासः । अथवा, धात्वर्थोपनिबद्धश्चासौ कर्तृव्यापारः प्रधानांशतादूप्यश्चेति विग्रहः । अनेन ग्रन्थेन 'तादूप्य वा यतस्ततः' इत्ययं पक्षो दर्शितः । एतदुक्तं भवति— यद्यप्येकः कर्तृव्यापारः, स च धात्वर्थगोचरः, तथापि तस्य धात्वर्थकरणत्वं स्वर्गादिफलकर्मकत्वं चाविरुद्धं क्रियात्मकत्वादिति ।

अमुमेवार्थं दृष्टान्तेन दर्शयति— नहीति । न हि परशुद्विधाभवनगोचरात् व्यतिरिक्तोऽपरसाध्यः अपरसाधनश्च व्यापार उपलभ्यते । अपरं साध्यं अपरं साधनं यस्येति

विग्रहः । परप्रयोजनस्य व्यापारस्य यत्सार्थं यत्र साधन तद्धनिनिर्मितमित्यर्थः । न च परप्रयोजनर एतस्मिन्नेव कर्तृव्यापारे परशो करणत्वं वृक्षादेश्च कर्मत्व विरुद्धमित्यर्थः । पुनरपि दार्ष्टान्तिके योजयति– तथेहापीति । न यागस्य फलंतमिन्यनुषङ्गः । ]

तथाहि —

प्रधानांशमुपादाय साधनान्येकवाक्यताम् ।
व्रजन्ति नान्यव्यापारो रूपतो ह्यन्यसाधनः ॥

[ उम्बेक — तथाहीति । उत्पाद्य ओदनं काष्ठैर्देवदत्तः पचतीत्येकस्मिन्नेव कर्तृव्यापारे फूत्करणनिर्वर्त्यकाष्ठादय' करणत्वादिना सम्बध्यन्ते । न च तत्र व्यापारभेद उपलभ्यते काष्ठगोचरः ओदनगोचरश्च । अपि त्वेक एव कर्तृव्यापारः । स तु रूपतः सम्भावन. फलोद्देशप्रवृत्तत्वात् काष्ठादिसाधनो न काष्ठादिकर्मक. । अन्यसाधन इति । अन्यत्साधनं निर्वर्तकं गुणरूपं यस्येति विग्रहः । एतेन ' न व्यापारो ह्यथनेऽन्यत ' इति यदुक्तं दूषणं तन्निरस्तम् । ]

तस्मादनुपालम्भो व्यापारान्तरानुपलम्भादिति ।

[ उम्बेकः– तस्मादिति । एवंच धात्वर्थभावनयोर्लक्षणभेदो दर्शितः– संयोगविभागात्मको धात्वर्थः, पचति पठतीत्येवमादिषु स्पन्दात्मकश्च भाव इति । ]

यत्तावदकर्तृकेषु यजते इत्यादिष्वसम्भव इति । तत्र केचित्—

भाव्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे ।
अचेतने प्रयोगस्य प्राचुर्याच्चोपचारधीः ॥

तथा यतेत यथा किञ्चिद्भवतीति फलभावनानुकूलप्रयत्न एवाख्यातार्थो दर्शितः । अचेतने त्वाख्यातप्रयोग, उपचारात् । प्रयोगप्राचुर्यात्तु नौपचारिक- प्रत्यय. ।

[ उम्बेक —' औपचारिक. प्रत्यय ' इत्यस्य अयमर्थः– औपचारिकोऽयं प्रयोग इत्येवंविध. प्रत्ययः प्रयोगप्राचुर्यान्न भवति । ]

इदं तु समाधान प्रसिद्धे सत्यवं स्यात् । न च प्रत्यये समाने हेत्वन्तरे चार्थने तत्प्रसिद्धिरस्ति । विपर्ययोपगमस्याप्यशक्यत्वात् ।

[उम्बेक –इद त्विति । सिद्धे औपचारिकत्वे तत्प्रतिपत्यमानोऽन्यथासिद्धः शक्यो दर्शयितुम् । न च देवदत्तो गच्छति वायुर्धावतीति समाने मुख्यप्रत्यये औपचारिकत्वप्रतिपादके प्रमाणान्तरे चासति तत्सिद्धिः । अस्तितामात्रेण चौपचारिकत्वाभ्युपगमे चेतने एवाख्यातप्रयोगः औपचारिकोऽन्यत्राचेतने मुख्य इति विपर्ययावगमस्याशक्यत्वात्प्रसङ्गादित्याह– विपर्ययेति । ]

उदासीनत्वविच्छेदसामान्यात्मा ततो मत. ।
करोत्यर्थो द्वये चेह तद्रूपप्रत्ययोद्भव ॥

[ उम्बेकः– उदासीनेति । औदासीन्यविच्छेदो करोत्यर्थः । स च प्रयत्ने परिस्पन्दे च गम्यते । तथाहि प्रयत्ने सत्यनुदासीनः सन् कुर्वन्नुपलभ्यते परिस्पन्दे च सति रथादिः । तेन प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपयो· आख्यातार्थत्वात् चेतनाचेतनयोः अर्थं यदाख्यातमित्यर्थ. । ]

औदासीन्यविच्छेदो हि करोत्यर्थ., उदासीने क्रियाज्ञानाभावात् । औदासीन्यप्रच्युतेश्च द्वैधम्, आत्मनि प्रयत्नादन्यत्र रथादौ परिस्पन्दात् । तथाहि, प्रयत्नवन्तमात्मान आत्मानमनुदासीन कुर्वाणं व्यापारवन्तमवैति, परिस्पन्दमानं चान्यम् । अत प्रयत्नपरिस्पन्दयोः औदासीन्यविच्छेदसामान्यात्मरूपयो. तदवभासधीविषयत्वेन विभागदर्शनाचेतनकर्तृकेषु तदभावः ।

[ उम्बेक – तस्मादस्ति पुरुषप्रवृत्तिकर्मिका विधिज्ञानकरणिका चेनादोषाद्तिविपप्रतास्यज्ञानेति कर्तव्यतोपेता लिङादिव्यापार. प्रेरणात्मिका शब्दभावना, अभिधानलक्षणोऽपि च देवदत्तादेरिव व्यापार. शब्दभावना । ]

तदुक्तम् ' न परिस्पन्द एवैक· क्रिया न: कणभोजिवत् । ' इति । अथापि परिस्पन्देन स. प्रयोजनम्, अस्त्येवासौ ।

मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नज. ।
सिद्धिरस्यादियंथा तस्मिन् साधनोपनिपातवः ॥

आत्ममनःसंयोगात् विज्ञान–संस्कारविशेषापेक्षात् तदविच्छिन्नमात्ममनःसमवेतात्प्रयत्नहेतुकं मनसि कर्म स्पन्द-

व्यापारस्य ज्वलनाभिघातजन्मनोऽवयवाश्रितस्य स्याल्पु दकाधिकरणतन्दुलप्रमणात्मनो वा प्रधानभूतस्याभिधानात् पचन्तीति देवदत्तव्यापाराभिधानात् अर्थभेदः कर्तृभेदश्च विधयनीति ■ प्रत्ययार्थपर्यनुयोगानवद्यः । अथ पुनः पचिना मुख्यार्थात् विक्लित्तेः परेण प्रत्ययेन तन्दुलव्यापार एव विवक्ष्यते, न देवदत्तव्यापारः । प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि प्रत्ययस्य स्वार्थे शक्तिभेदात् ।

**भार्या दारा जलान्याप एकार्थत्वेऽपि दृश्यते ।**
**प्रकृते रूपभेदेन प्रत्ययार्थो विशेष्यवान् ॥**

[ उन्वेक – भार्यादाराशब्दयोर्जलापशब्दयोश्च तुल्यार्थत्वेऽपि सति तत्र बहुवचनमेकं विधिप्रमयं अतिदधत् दृश्यते इत्यर्थः । एतदेव विवृणोति— ज्वलनीति । ]

ज्वलनीति प्रकृत्यर्थसमवायि तदेवार्थसमवायि च महुरा बहुत्वलनस्यार्थः । तथा भार्या इति । आपो दारा इति प्रकृत्यर्थाश्रयवत्समवायि तदाश्रयैकार्थसमवायि । प्रकृतीनां रूपभेदात् तत्पैतान्यत् प्रत्ययस्याभिधानात् । तथेहापि पचिपदे धात्वर्थैकार्थसमवायिनि व्यापारे धर्मं कर्तृविषय प्रत्यय आह । मिथ्याश्रय यात्व्यन । विक्लित्तिपरस्तु प्रकृत्यर्थैकार्थसमवायिनमित्यनवद्यम् ।

[ उन्वेक— प्रकृत्यर्थसमवायीति व्यक्तिपक्षाभिप्रायेण । मत्सरः शब्दः । स शब्दार्थः इत्येव बोध्यम् । 'तदेकार्थसमवायि वा' इत्याकृतिपक्षाभिप्रायेण । यथोक्तम्— 'व्यक्त्याकृत्योश्च प्रतीयते ह्यभिसक्षया' इति । येषा जल्प्येतन प्रत्यात्पदिकार्थ इति दर्शनं तेषा प्रकृत्यर्थाश्रयसमवायित्व तृष्यम् । यथा दाराकृतिप्रतिपादितार्थसमवायित्व बहुत्व जन्यतितु दारव्यक्तिषु च प्रयुज्यते तत्र स्वसम्बन्ध इत्याह— तदाश्रयैकार्थसमवायि चेति । जातिरूपप्रकृत्यर्थाश्रयव्यक्त्येकार्थसमवायीत्यर्थः । व्यक्तया सहैकार्थसमवायो हृद्य । यद्वा तदिति प्रकृत्यर्थव्यापीतुक्तिनिर्दिष्टा व्यक्तिः परामृश्यते बुद्धिस्थत्वात् । अथवा तदिति सर्वनामपदम् । स आश्रयः श्चासौ एकोऽर्थश्च आश्रयरूप इति विग्रहः । तस्मिन् समवायो यस्य तदाश्रयैकार्थसमवायि ।

'पचति' इत्यत्र मुख्यकर्तृविषयः प्रत्ययः देवदत्ताश्रयं धात्वर्थकार्यविकरण व्यापारमाह इत्याह— मिथ्याश्रय चेति ]

**अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।**
**दर्शनात्कर्मयोगस्य नाभावस्तदभावतः ॥**

[ उन्वेक — यत्पुनरिदमुक्तं कर्मणा च भवोत्पत्तौ व्याम इति । अध्यायवशेनापि दूषणमाह— अग्निमित्यादिना । ]

धात्वर्थस्य हि चयनस्येष्टवः स्वरु वा अन्यत्प्रधानात् कर्म न व्यापारान्तरविधीयमानं व्यभिचारयोगी । ।

[ उन्वेक — धात्वर्थस्येति । चयनस्य चीयमानं कर्म । इष्टकाश्च चीयन्ते, नाग्नि । तेनेष्टकाकर्मक चयन न्याग्निकर्मक वा । स्थलस्य चयनसाध्यत्वात् । ननु चेष्टकासयोगात्मन चयनस्य अनित्यत्वात् धर्मसम्बन्धो न घटते । नैष दोषः । चयन इह इष्टकाना उपर्युपरि स्थापन नाम पुरुषपरिस्पन्दोऽभिप्रेतः । स च क्रियात्मकत्वात् कर्मणा युज्यते एव अव्यवधानात् । ]

स तु भावनाकर्म । अनिराकार्यश्च न स्वरुयजनीऽपि तु दारवनयन । एव मुक्तम्— 'अत एव प्रसिद्धः' इति भाष्यकारेण । स यज्ञ यजनीति तु न भावनातोऽन्यत्र कर्मत्वमिति दर्शितम् । तथा महाभाष्ये कर्मद्वयसम्बन्धो विक्लित्तिर्भावनाभेदेनैव दर्शित । इह तावत् 'तन्दुलानोदनं पचति' इति । इयं पचिः तन्दुलान् विक्लेदयन् ओदनं निर्वर्तयति । पचति इत्यर्थः पचिरित्युक्तम् । द्वौ तावद्व्यापारौ कर्मान्वयोगनौ दर्शितौ । तयोरन्य निर्वर्तयतीति यथा प्रत्ययार्थान्यथा प्रतिपादितम् ।

**प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।**
**कर्तृव्यापारविषयो भातोरर्थो विधास्यते ॥**

स्वव्यापारे सर्वस्य नियोगात् कर्तृव्यापारविषयः प्रेरणादिप्रयोजकत्वं व्यापारो निजर्थः । धात्वर्थविषय कर्तृव्यापारस्तत्त्व इति न प्रातिभासयोस्तुल्यार्थत्वमिति ।

[ उन्वेक — स्वव्यापारे इति । भावयेत् घट कुम्भकार इति स्वव्यापारे कुम्भकारो नियुज्यते । तस्य च भवादि कर्तृव्यापारविषय घटकरण स्वव्यापार इति ■ एव णिचो विषय इति प्रयोजकव्यापारो णिजर्थः ।

[ उम्वेक — नेति । किं भावयेदिति प्रथमम पेक्ष्यते । स्वर्गश्च प्रीत्यात्मकत्वेन पुरुषार्थत्वात् तदपेक्षा पूरणसमर्थो भाव्यत्वेन सम्बध्यते इत्यर्थ । ]

साधनेषु चोपचारादि-च्छा ।

[ उम्वेक — साधनेष्विति । भाव्यमेव स्वरसात् काम्यते न करणादिसाधनं अपुरुषार्थत्वात् । ननु अर्थेना कृत्वेन साधनमपि काम्यते । बाढं काम्यते । भाव्यगतै वेच्छा साधनेषु उपचर्यते । न च स्वर्गेऽप्यन्यतोपचार पद्याम । तस्मात् स्वरसात् स्वर्ग एव काम्य इति तस्यैव भाव्यत्वम् । ]

ननु न भाव्यभेदप्रतिपत्तिप्रधाना कामश्रुतय अपि तु नियोज्यविशेषणप्रतिपादनपरा । अन्यथा कस्याय मुपदेश को नियुज्यते कस्येद कर्तव्यमित्यपरिज्ञानात् सापेक्ष अपरिसमाप्तप्रतिपत्तिकमेव शास्त्रं स्यात् । नैतत्सारम् । यत —

प्रतीयते नियोगोऽशक्तसमर्थस्य फलार्थिन ।
अन्यथा ह्यसमर्थाना दुर्वारोऽधिकृतिर्भवेत् ॥

[ उम्वेक – य स्वर्गादिफलार्थी नियोग तद्विषय च यागं कर्मप्रयोग शेषं कुर्वतुं च समर्थ स नियोज्य इत्यर्थसिद्धमेतत्, किमनु शब्देनेत्यर्थ । ]

योऽपि हि शब्दाद्नियोज्यविशेषावसाय मन्यते, सोऽपि नियोज्यविशेषप्रतिपत्तौ सामर्थ्यमुपैति । अन्यथा शब्दयदेन नाम्निकः फलाय। आधानादीनामप्यधिकारोऽधिकार स्यात् । तदपि चेच्छब्दे सामर्थ्यमुपाश्रीयते, नियोज्याव गमे तदप्येवास्तु । तस्माद्यो नियोगार्थ प्रतिपन्न तद्विषय चानुष्ठातु समर्थ फलार्थी च स नियोज्य, असमर्थस्यानर्थिनोऽशक्तोऽनभिसन्धितो यागे प्रवर्तना योगात् । किञ्च —

असत्यपरत्वे फलता पश्वादेर्नास्ति शब्दत ।
न सामर्थ्यादनुष्ठाने नियोगैकनिबन्धनम् ॥

[ उम्वेक – नियोगनिबन्धनमनुष्ठानम्, न फल निबन्धनमिति भवतो दर्शनम् । ]

यदि स्वर्गकामादिश्रुतो न फलभेदाभिधानपरा, न शब्दवती फलता पश्वादीना स्वर्गादीना च । नापि सामर्थ्यात् । अन्यथाऽनुष्ठानमयुक्तमिति चेत् ? न, तस्य नियोगमात्रायत्तत्वाभ्युपगमात् । एकवाक्यत्वमिति चेत् ? को विशेष ? अयदिच्छति अयत् करोतीति स्वर्गकामो यागं कुर्यादित्ययमेव विशेष । अत एव तर्हि न पुरुषविशेषपरा स्वर्गकामादिश्रुतय, फलपरास्तु सन्तु ।

अपि च—

नियोगपरतन्त्रस्य पुरुषस्यान्यदिच्छत ।
अन्यक्रिया विरुद्धेति न नियोगप्रधानता ॥

अयदिच्छति अयत् करोतीति विरुद्धमिति वदतो नियोगप्राधान्य हीयते, फलार्थितादैतुत्वात् नियोगस्य । अपि च नियोगसामर्थ्यात् अयदिच्छतामयाभिक्रिया पर तन्त्राणा दृष्टा । साध्यस्यैव विशेषणत्वमिति चेत् ? नियोगविषयस्य च कुत ?

क्रियान्तरसाध्यस्यापि विशेषणत्वात् । इच्छामात्रे प्रवृत्तिदर्शनाच्चायुक्तमेवैतत् ।

[ उम्वेक – नियोगविषयो याग, तेन सह स्वर्गस्य साध्यसाधनसंबन्ध कुत कस्मादित्याह – क्रिया न्तरेति । ]

नचैवं नैमित्तिकत्वात् अग्निहोत्रादीना नित्यत्व याथ । अयमपये दोषोऽस्तु, नियोज्यविशेषणपरात् स्वर्गपदात् फलप्रतिपत्ति । ननु च स्वर्गकामस्य याग कर्तव्योऽवगम्यते । कथं स तस्य कर्तव्यो यदि न त संपादयति । न, यद्वदाहवन इवेच्छतव निमित्तदपा दवतोऽपि कर्तव्यता स्यात् । ननु तत्संपादयति स्वर्गं यागे पुरुष प्रवर्तते । न तर्हि स्वर्गकाम । न, निमित्तादिप्रतयाभूतेऽपि प्रवर्तमानस्य स्वर्गकामत्वा विघातात् । इत्थमन्तरेण प्रवृत्तिरिति चेत् ? इहापि नियोगादिति न दोष ।

[ उम्वेक — इहापीति । नियोगेन हि यागे प्रवर्तते न तु फलकामनयेति । ]

स्यादेतत्, स्वर्गसिद्धाविच्छावशम नियोगनिष्पत्ति अन्यथा कृतयागोऽपि नियोज्य एव स्यात् न कृत नियोग । अतो नियोगार्थनिष्पत्तिसामर्थ्यात् स्वर्गादि सिद्धिप्रतीति । न, विषयसिद्धया नियोगार्थनिष्पत्ते स्वर्गादेश्च नियोज्यविशेषणत्वेनाविषयत्वात् । अन्यथा

गृहदाहादेरप्यनुपरमप्रसङ्गः । तस्मात् फलपराः स्वर्गकामादिश्रुतय इति मनोहरम् । इति आर्यमण्डनस्य कृतिः भावनाविवेकः अवसितः ।

* भावनाशब्दो हि निष्पत्त्यात्मिकां व्यापारस्वरूपप्रत्ययां लिङ्गसंख्यायोगिनीं ( भावना ) अभिधत्ते । न चासौ आख्याते तादृशी अभिधीयते, लिङ्गसंख्यारहितरूपेण गम्यमानत्वात् । वा. २।१।१।१ पृ. ३८३. * भावनाशब्दस्य प्रयोजकव्यापारवाचित्वात् त्रिवेणि प्रयोजकविद्यादिव्यापारत्वात् भावनात्वमस्ति । सु. पृ. ५५९.

* भावनासंबन्ध्यर्थप्रतिपादनेनैव पदादीनां अर्थवत्त्वं घटते । सु. पृ. २५

* भावयेत् कथमित्यपेक्षा भवति, न करणेन कथमिति सहभावननभाव्योऽश्च गम्यते । वा ३।६।१६। ४१ पृ. १०६९ * भावयेत् । किम् ? स्वर्गम् । केन ? यागेन करणेन दर्शपूर्णमासलक्षणेन । स्वर्गः प्रधानभूतः, यागः साधने उपादीयमानश्च, तस्मात् तेषामितरेतरयोगो विवक्षितः । टुप्. ११।१।१।१, * भावयेत् स्वर्गम् । केन ? यागेन । कथम् ? इति प्रकाराकाङ्क्षा भवति । ९।१।५।१७.

* भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत् पापं तस्य नाशकं दुःखात्मकं तपः, स्नातिसंस्कारः । वि. १।८।४.

* भाव्युपयोग्यसंस्कारार्थं अदृष्टार्थं सन्निपत्योपकारकं करणं प्रवृत्तिरूपं वैदिकं कर्म द्विविधं साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तोपकारकसंस्कारार्थं चेति । बाल पृ. ८३.

* भाव्युपयोगसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं करणं प्रवृत्तिरूपं वैदिकं कर्म द्विविधं द्रव्यसंस्कारकं देवतासंस्कारकं चेति । बाल. पृ. ८१.

* भाव्यं प्राग्सत् । यच भाव्यते तद् व्यक्तं असत् । सतो हि भावो नोपपद्यते । असच्चेत् कर्मणा भाव्यते, पुनः पुनरपि भावयिष्यते, कृषिवत । भा. ११।१।८।२४. * यद् भाव्यं तत् कर्तव्यतां प्रतिपद्यते । यच्चिग्रस तत् करणत्व प्रतिपत्तुं शक्नोति दानादि । टुप्. ६।१।१।१. * कश्चित् विक्रियमाणतया भाव्यः यथा 'व्रीहीनवहन्ति' इत्यत्र अवघातभावनायाः व्रीहयः । कश्चित् संस्कार्यत्वेन यथा व्रीहय एव प्रोक्षणभावनायाः । कश्चिदुत्पाद्यत्वेन यथा 'प्रणीताभिर्हवींषि संयौति' इत्यत्र संयवनभावनायाः पुरोडाशः । कश्चित् प्राप्यत्वेन यथा 'गां दोग्धि पयः' इत्यत्र गोदोहनभावनायाः पयः । टुप्. टिप्पणी च ६।१।१।१.

* भाव्यता । इच्छायोनित्वेन भावनायाः समीहितभाव्यनिरूप्यत्वावधारणात् भावनात्वरूपालोचनया पुरुषार्थस्य भाव्यता । सु. पृ. ५८२.

* भाव्यमानं धर्मानाकाङ्क्षति करणानुग्रहद्वारेण । टुप्. ९।१।२।१, * भाव्यमानेन करणेतिकर्तव्यते साकाङ्क्षिते । ९।१।१।१.

* भाषा । यद्यपि पाणिनिना वेदे इव भाषायामपि स्वरानुशासनस्य कृतत्वात् लोकेऽपि स्वरनियमोऽवगम्यमानः तथापि लोके स्वरनियमस्य शिष्टैरनादरेण सम्प्रत्यनुष्ठाने नसन्ति इत्यादियत् अप्रयोगादेव स्वरनियमो नावश्यक इत्याहुः । सोम. १।३।१० वर्णकं १.

* भाषाशब्दत्वं न शाक्यत्वम्, अनादित्वाभावात् । तन्त्रि. पृ. ७२.

☞ भाषास्वराधिकरणम् । कर्मों वपाविमन्त्रेषु ब्राह्मणः स्वरः एव प्रयोजनः, न भाषिकस्वरः ॥

**भाषास्वरोपदेशादैरयन्तभावचनप्रतिषेधः स्यात् ।** १२।३।८।२०॥

**भाष्यम्—** भाषिकेण स्वरेण केचित् मन्त्रा ब्राह्मणे उपदिष्टाः, मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः । यथा 'इमामगृभ्णन्' इत्यश्वमेधे । कः पुनर्भाषिकः स्वरः ? उच्यते, 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥' इति । तेषु मन्त्रेषु प्रावचनस्य स्वरस्य प्रतिषेधः स्यात् निवृत्तिः । कस्मात् ? स्वरान्तरोपदेशात् । ऐरवत् । यथा इरापदस्योपदेशात् कर्मकाले गिरापदस्य निवृत्तिः । कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो न मन्त्रस्य इति ? मन्त्रो नोपदेष्टव्यः, रूपादेव प्राप्नोति । स्वरस्त्वनुपदिष्टो न प्राप्नोति । तस्मात्तस्योपदेशः ।

टुप्— सामर्थ्येन मन्त्रो यच्छक्नोति अभिधातुम्, तत्र न विधीयते, प्राप्तत्वादेव । किन्तु भाषिकस्वरः तस्य ( मन्त्रस्य ) यः प्राप्तः, स विधीयते ब्राह्मणेन । अथवा ( विधीयमानोऽपि ) स्वरविशिष्ट एव मन्त्रो विधीयते ।

**मन्त्रोपदेशो वा, न भाषिकस्य, प्रायापत्ते-र्भाषिकश्रुतिः । २१ ॥**

भाष्यम्— मन्त्रस्य वाऽयमुपदेशो न स्वरस्येति । कथं गम्यते ? मन्त्रोपदेशपरोऽयं शब्दः । किमस्य वाक्यस्य ? ' इत्यनाभिघानीमादत्ते ' इत्याह । मन्त्रेण चासौ ( अभिधानी ) आदीयते, न भाषिकेण स्वरेण । मन्त्रोपादान प्रस्तावयति, नेतरस्य । कस्मात् तर्हि भाष्यते ? प्रायापत्तेर्भाषिकश्रुतिः । भाषास्वरो ब्राह्मणं प्रवृत्तः । तन्मध्ये यदि प्रवचनेन पठ्यते, भाषिकस्वर-संतानो विच्छिद्येत, तत्परिहारार्थं भाषिकेणोपदेशः । यथा गायना गीतवस्तुकानि यानि गीतेषु प्रविशन्ति, तान्यपि तेनैव गीतिस्वरेणैव उच्चारयन्ति, मा भूत् स्वरसंतानस्य विच्छेद इति । तस्मात् भाषिकस्योपदेश इति ।

टुप्—ये तावत् मन्त्राः लिङ्गेन विनियुज्यन्ते, ते यादृशा एव निर्ज्ञाताः, तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । ये पुनः लिङ्गेन अप्राप्ताः वचनेन विधीयन्ते, तेषां प्रमाणवादेन मन्त्रविधानेनैव कृतार्थं वाक्यम्, न भूयः स्वरमपि विधत्ते, वाक्यभेद-प्रसङ्गात् । न च अस्मात्-विवरणस्याय क्रमः, स्वरान्तरस्य त्वाम्नाये सिद्धस्य द्वितीयस्य अदृष्टार्थत्वप्रसङ्गात् ।

मन्त्रोपदेशो वा न भाषिकस्य० । २१ ॥

भाष्यम्— इत्यस्य ( सूत्रस्य ) अयमर्थः । ' इनामगृह्णन् ' इति न एतस्योपदेशः । किं तर्हि ? अनेन प्रोक्तेन स्वरेण असौ यथोक्तो गृह्यते । प्रवचनेन ( मन्त्रवर्णितेन ) च स्वरेण उच्यमानः । तस्मात् तद्विधान उपदेशः । यस्तु ब्राह्मणोत्पादितः मन्त्रः, तत्र स्वरस्य अभावात् न स्वरः । अतश्चास्य यथाप्राप्त प्रयोगः । ( एतत् यत्र अष्टमाधिकरणे भाष्ये व्याख्यातमिति नवमाधिकरणोद्देशेन निर्दिष्टेनैव पुनर्व्याख्यातम् । यद्यपि तस्य नवमाधिकरणेन न संबन्धः, किन्तु अष्टमेनैव इति अस्माभिः तस्मात् उद्धृत्य अष्टमे एवाधिकरणे निवेश्यते इति ज्ञेयम् ) ।

**विकारः कारणाग्रहणे । २२ ॥**

भाष्यम्— इषापदेन तु गिरापदस्य विकारो युक्तः, कारणाग्रहणात् । यथा भाषिकस्यानुपदेशो मन्त्रोपदेशेन कारणेनोक्तः, नैवमिषापदस्य अनुपदेशे किञ्चित् कारणं गृह्यते । तस्मात् तस्योपदेशः । स कर्मकाले विधानात् समाम्नायेन प्राप्तं गिरापदं बाधते । तस्मात्तत्र विकारः ।

शा— ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः, ब्राह्मणे च स्वरान्तरेण उक्ताः, ते किं स्वसमाम्नायसिद्धेन स्वरेण प्रयोक्तव्या, उत ब्राह्मण-स्वरेण इति संशये वाक्यनिरस्तात् ब्राह्मणस्वरस्य तेनैव प्रयोगः । ( सिद्धान्तमाह— ) नैवम् । ये तावत् लिङ्ग-विनियुक्ताः मन्त्राः, तेषां ब्राह्मणस्य गुणार्थत्वात्परि-सङ्ख्यार्थत्वात् न मन्त्रस्वरूपे तत्स्वरे वा व्यापारः । येऽपि वचनविनियोज्याः, तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते । स्वरान्तरेणादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्य अविच्छेदार्थम् । तस्मात् आम्नायेनैव स्वरेण कर्मण्यपि प्रयोगः ।

सोम— यद्यपि कर्मकाले अध्ययनधर्माणामनादरेऽपि इह ब्राह्मणस्वरेणैव मन्त्रोच्चारणस्य धर्मकार्यसिद्धेः प्रवृत्त-सिद्धत्वात् मन्त्राम्नानस्वरस्य अनादर इत्युदियतेः संगतिः । सूत्रार्थस्तु— भाषिकस्वरोपदेशोऽयं प्रवचनसिद्ध-स्वरस्य इषापदविधाने प्रवचनसिद्धगिरापदस्येव निवृत्तिः स्यादिति ।

वि— ' स्वरो मन्त्रे भाषिकः किं स्यात् प्रावच-निकोऽथवा । , ब्राह्मणोक्तेरादिमो, मोऽन्यस्वरानुवृत्तये-रतः ॥ '

भाट्ट— कर्मकाले प्रयोक्तव्यानां मन्त्राणां ' अवरान्यूङ्खसामसु तानस्वरेण प्रयोगः ' इत्युक्तम् । अन्येषु तु आम्नातस्वर एव । तत्र ये मन्त्राः समाम्नाये स्वरान्तरपाठपठिताः, ब्राह्मणे च स्वरान्तरेण प्रपठिताः, तत्र कतरः स्वरो ग्राह्यो उच्चारणे इति चिन्तायाम् । ब्राह्मणेन मन्त्राणां स्वरप्रकारेण विनियोगात् अविनि-युक्तान्यपरस्वरस्य अर्थनियोगो पराङ्मुखो च

उपयोगसंभवेन कर्मकालप्रयोज्यत्वे प्रमाणाभावात् ब्राह्मणस्वर एव प्रयोक्तव्यः । इति प्राप्ते, विनियोजकवचनस्य शाब्दमन्त्रस्वरूपमात्रविनियोजकत्वेन अशाब्दस्वरविनियोगपरत्वे प्रमाणाभावात्, ब्राह्मणस्वरस्य च पूर्ववाक्यप्रवृत्तस्वराविच्छेदार्थत्वेन अन्यथासिद्धतया स्वतो विनियोगान्तरकल्पनानुपपत्तेः, मन्त्रसमाम्नानसिद्धस्वरस्य च अनन्यथासिद्धतया स्वाध्यायविधिबलेन विनियोगान्तरकल्पनया क्रतुगामित्वयोग्यताऽवधारणात्, तस्यैव जपादौ पाठः ।

यत्तु पार्थसारथिना लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवादपरिसंख्याद्यर्थत्वेन पुनः श्रवणेऽपि मन्त्रविनियोगकल्पकत्वस्यैव अभावे सुतरां स्वरविनियोगान्यानुपपत्तेः न ब्राह्मणस्वरप्राप्तिरिति दूषणान्तरमुक्तम्, तत् लिङ्गविनियुक्तमन्त्राणां वचनिचोदनाचोदितत्वाभावे नघटते प्रमाणाभावात्, तत्र वचनिचोदनाचोदितत्वस्थले एव लिङ्गविनियोगः, तत्र ब्राह्मणे पुनःश्रवणवत्त्वात् स्यात्येयम् ।

' मण्डन—' मन्त्रोच्चारे भाषिको न स्वरः स्यात् । '
शंकर—' ब्राह्मणस्वरतो न ते । '

ह भाषास्वरोपदेशादेवत् प्रावचनप्रतिषेधः स्यात् । १२।३।८।१० ॥

भाषा नाम स्वराविभागतो पक्षः, तत्र उक्तः स्वरः भाषास्वरः, तेन भाषास्वरेण मन्त्राणां ब्राह्मणे उपदेशात् कर्मकाले मन्त्राणां प्रावचनस्य प्रवचनकालीनस्य अध्यापनाध्ययनकालीनस्य स्वरस्य प्रतिषेधः स्यात् । कर्मकाले मन्त्राः प्रावचनेन स्वरेण न प्रयोज्याः किन्तु भाषिकस्वरेण प्रयोज्याः । ऐवन् यथा इवपदस्य उपदेशात् कर्मकाले गिरापदस्य निवृत्तिः तद्वत् । इति पूर्वपक्षः ।

मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः । २१ ॥

ब्राह्मणे ' इन्द्रक्षामिधानीं आददे इत्यादि ' इत्यादौ मन्त्रोपदेशः मन्त्रस्योपदेशः न भाषिकस्य स्वरस्योपदेशः । भाषिकश्रुतिस्तु प्रायापत्तेः । भाषास्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये मन्त्रो यदि प्रावचनेन स्वरेण पठ्येत भाषिकस्वरसंतानस्य विच्छेदः स्यात्, तत्परिहारार्थं भाषिकेण उपदेशः । न मन्त्राणां भाषिकस्वरोपदेशः इति सिद्धान्तः । जपादिमन्त्रेष्वेतत् ।

विकारः कारणाग्रहणे । २२ ॥

यदुक्तं ऐवन् इति ( २० सूत्रे ) तदुच्यते । पूर्वगिरापदे इवपदरूपो विकारः । कारणाग्रहणात् यथा भाषिकस्वरस्य अनुपदेशो मन्त्रोपदेशेन कारणेन उक्तः नैव इवपदस्य अनुपदेशे किंचित् कारणं दृश्यते । तस्मात्तत्र विकारः । तस्मात् कर्मकाले जपादिमन्त्रेषु न भाषिकस्वरोपदेशः किन्तु ऐस्वर्यम् । इति सिद्धान्तः । के.

* भाषिकः स्वरः । ' छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ ' भा. १२।३।८।२०. * भाषिकः स्वरः तत्तच्छाखीयः ब्राह्मणस्वरः । वि. १२।३।८. * भाषिकः स्वरः क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां प्रयोक्तव्यः । १२।३।९।२३-२४. मीको. पृ. १४९७ ' क्रतौ ब्राह्मणोत्पन्नानाम्० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* भाष्यान्तरजनितभ्रान्त्यपनयार्थं तु पुनरारम्भः ( अश्वप्रतिग्रहेष्ट्यधिकरणस्य ) । वा ३।४।११।३१ पृ. ९६७.

* भाष्यकारेण तदन्यनिराकरणपरं यत्किञ्चिदुक्तं ( वाणमपि चमसश्च ब्रह्म एव ) तत् उपेक्षणीयम् । वा. ३।७।१८।३८.

* भाष्यकारान्तरम् । यत्तु अग्नेयाधिकरणे भाष्यकारान्तरेण अग्नेः पञ्चदशत्व- प्राकृतनैकृतत्व- नित्यानित्यत्व- उत्तरवेदिविकाराविकारत्व- विचारः कृतः, स उदाहरणान्तरेषु अधिकरणान्तरसिद्ध, इह व्यवहारोऽपि कारणमात्रत्वेन उपन्यस्त इत्युपेक्षितः । वा. २।३।१०। ११ । अत्र सुधा- पञ्चदशत्वविचारः पर्णमय्यधिकरणसिद्धः । प्राकृतत्ववैकृतत्वविचारस्तु अस्मिन्नेवोदाहरणे अभ्यन्तिमाद्यधिकरणसिद्धः । नित्यत्वानित्यत्वविचारस्तु गोदोहनोदाहरणे ' नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविनियोगात् ' ( ३।६।३।१० ) इति तृतीयाधिकरणसिद्धः । उत्तरवेदिविकाराविकारत्वविचारस्तु पञ्चमे द्वितीयेऽध्याये ' मध्यमायामुपसदि अग्निप्रणीयते, अहरु-

पद्गनरात्' इत्यत्र तत्रत्यभाष्यकृता कथमाप्तः । पू. ९४९ ॐ भाष्यकारान्तरैः वारुणेष्टिः प्रतिग्रहीतुरेवेष्टिः व्यवस्थापिता इति वार्तिकादिषु उक्तम् ( ३।४।११।३१ इत्यत्र ) । पराक्रमः ९।१.

* भिक्षा । यज्ञार्थं यद् भिक्षितं तत् ऋत्विक्परिक्रेषु अन्यस्य यज्ञार्थं भाशयितुम् । भा. १०।२।८।२७.

¶ भिक्षुपादप्रसरणन्यायः । यथा कश्चिद्भिक्षुः यथेष्टाच्छादनवास्तव्यादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्यानः पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात्तदितरच्च सर्वं क्रमेण ततः सम्पादयिष्यामीति धिया मत्वा भिक्षां स्वीकरोति, तथा गानेनापि हितैषिणी श्रुतिरद्वैततत्त्वे मुमुक्षोः प्रवेशमिच्छन्ती सहसा तं अशक्यं मन्याना पूर्वोक्तक्रमेण सत्कारमुखेन तद्बोधयतीति बोध्यम् । साहस्री. ४१.

* भिक्षुभिया स्थाल्यनधिश्रयणन्यायः । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते ( भामती. १।१।१ प्रस्. पृ. ७४ ) । सग्रहः.

▪ भिक्षुभिया स्थाल्यनधिश्रयणन्यायः । यथा भिक्षुकभयेन कोऽपि स्थाल्य(न)धिश्रयणं न करोति, तथा स्वतःप्रविचारेण तत्त्वज्ञानासम्भवेनोपदेशकाना च प्रतारकत्वशङ्कास्पदत्वात् प्रत्युत तेभ्योऽनर्थप्राप्तिशङ्कासम्भवेन तद्भयेन त्याज्य एव गुरोर्बाणी ब्रह्मविचार इति न समीचीनम् । किन्तु शास्त्रोक्तप्रकारेण सम्यक् परीक्ष्य साधुत्वासाधुत्वनिर्धारणम् अन्यथा तु यागाभावप्रसङ्गात् । संभावनाऽसाधुत्वप्रतारणभिया ब्रह्मविचारो न त्याज्य इति भावः । साहस्री. ३४७.

• 'भिक्षुको भिक्षुकान्तरात् भिक्षते' इति न्यायः । एकाहाग्नयो द्वादशाहेऽतिदिश्यन्ते उक्थ्यादिसोमा अपि तथा ज्योतिष्टोमेऽपि एकाहादेव अतिदिश्यन्ताम् । द्वादशाहादतिदेशे तु 'भिक्षुको भिक्षुकान्तरात् भिक्षते' इति न्याय आपतेत् । नि. ८।३।५.

• भिद्येत हि तथा वाक्यम्, यदि उभयत्र विधिः स्यात् तदा स्यात् । ( 'वाक्यभेदेन द्वयानन्तरामो यजेत' इत्यत्र ) । भा. १।४।५।८.

* 'भिन्ने' इतिवत् 'पुत्रे' इति निमित्तपरैव सप्तमी इति पूर्वपक्षः. ( 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यत्र ) । भाट्ट.४।३।१४. ¤ 'भिन्ने जुहोति' इति सप्तम्यन्तं निमित्तं भवति । टुप्.९।१।११. ¤ 'भिन्ने जुहोति' इति हि नैमित्तिकं कर्मोक्तम् । भा. ६।४।४।१६, * 'भिन्ने जुहोति' इति होमः एकदेशभेदेऽपि । कृत्स्नभिन्नं नाम चूर्णीकृतं अयोग्यं प्रयोजनाय । यत्र कृत्स्ने विगतेऽपि प्रयोजनसमर्थं तदेकदेशभिन्नम् । ६।४।४।१०, * 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति विहितो भेदनादिहोमः निमित्तावृत्तौ आवर्तनीयः, न तु सकृदेव कार्यः । दर्शपूर्णमासादौ पात्रादिभेदे आज्यादिस्कन्दनादौ चायं होमः । वि. ६।२।९. * 'भिन्ने जुहोति' 'स्कन्ने जुहोति' एवं भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वेन समुच्चयः, न तु विकल्पः, भेदनादिनिमित्तमुपजीव्य विहितत्वात् । १२।३।६.

• भिन्नकर्तृकत्वं प्रयोगार्थयोः । ३।८।११।२३.

* भिन्नकल्पयोः अपि यजमानपुरोहितयोः कुलायपशोऽधिकारः । ६।६।२।१२–१५.

* भिन्नकार्याणां गुणानां एकस्मिन् कर्मणि समुच्चयः । १२।३।३।९. मीको. पृ. १२५८ 'एकस्मिन् कर्मणि भिन्नकार्याणां०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

• भिन्नजातिषु पशुषु कुम्भ्यादीनां भेदेनानुष्ठानम् । ११।४।१०।४०–४१.

• भिन्नदेवताकेष्वपि शूलादीनां तन्त्रता । ११।४।९।३४–३५.

• भिन्नदेवताकपशुगणे वपाहोमस्य आवृत्तिः । ११।२।६।२६.

• भिन्नदेशकालानामप्यङ्गानां तन्त्रता वचनानुसारेण । भाम. ११।३।१.

• भिन्नप्रयोगवचनपरिगृहीतानां अपि पौर्वापर्यं चिन्त्यते । टुप्. ५।१।१७।३०–३४.

• भिन्नप्रवृत्तिनिमित्तानार्थ्यशब्दयोः सामानाधिकरण्यम् । मु. टृ. ४०९.

सू भीमभासहृदन्यायः । 'दाम ग्रन्थकृन्यायो न स्यात् तत्र कदाचन । भीमभासहृदन्यायः सर्वदा नेऽस्तु यत्र ॥ ' इत्यादि वासिष्ठे सप्रपञ्चमुपन्यस्तम् । तत्र आद्यस्य ( दामग्रन्थकृन्यायस्य ) उच्चैस्तरां दशामापन्नस्यापि अज्ञस्य अतिनीचदशाप्राप्तिः अचिरं कालेन भवतीति तत्त्वबोधोऽवश्यं सपाद्य इति विरक्तायां प्रवृत्तिः । दामव्यालकटाख्याः त्रयः असुरा, शम्बरेण स्वमायया निर्मिताः । ते च तत्प्रद्युम्नादिना मेरोर्विचूर्णीकरणे क्षमा अपि अज्ञानप्रभावात् कालेन मशकादियोनिं प्रापु इति प्रसिद्धं तत्र । द्वितीयस्य ( भीमभासहृदन्यायस्य ) तु तत्त्वविद् कदापि स्वपदात् पततीति निरक्षायां प्रवृत्तिः । यथा भीमभासदृढाख्याः त्रयोऽसुराः तेनैव शम्बरेण तथा निर्मिताः चिरं जीवन्मुक्तिसुखमनुभूय निर्वाणपदं प्राप्ता इति सक्षेप । भावदीपी. ४०५,४०६.

८ भीष्मस्य च सर्वाश्रमधर्माव्यतिरेकेणावस्थानम् । अपत्नीकस्य च ऋतुप्रयोगः धर्मव्यतिक्रमः । वा.१।३।६।७ पृ. २०३—०४ । भीष्मस्य अनाश्रमित्वं अपत्नीकस्य च 'स एव भीष्म कुरुवंशकेतुर्येनाहृताग्निरिवाती याजिभिश्च.' इति ऋतुप्रयोगश्चेति धर्मव्यतिक्रमद्वयम् । सु. पृ. १८५ । ( इति षड्न्यायमुक्तम्— ) भीष्मस्य पितृभक्तिवशात् त्रियमाणधर्मभ्रात्रार्थदारस्य व्यवहिताप्पत्यपत्नीमात्रुण्यस्य भ्रातृविद्धिः । ' भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ' इत्येवं विचित्रवीर्यक्षेत्रजपुनर्लभ– पितृणाः वैचित्रवीर्यपत्नीसाम्य आसीत् इति अर्थापत्त्या अनुक्तमपि गम्यते । 'यो वा पिण्ड पितृ पाणौ निशातेऽपि न दत्तवान् । शास्त्रार्थविज्ञमाङ्गीनो भवेनैवास्यसौ कथम् ॥ ' वा. १।३।३।७ पृ. २०८ । भीष्मेण शन्तनवे सत्यवतीं दातिशय याचता स्वयि महाजले गङ्गाभिन्नापुरे तिष्ठति एतस्याः पुत्राणां राज्यालाभात् नेमां ददामि इति तत्पित्रा प्रत्याख्यानेन 'राज्यं नाहं करिष्यामि' इति प्रतिज्ञाते, स्वत्पत्नीच्छयापि तत्सन्ततिभयात् नेतस्याः पौत्रैः राज्यभागिनी स्यात् इति तत्पित्रा पुनः प्रत्याख्यानेन ' अपत्यहेतोरपि च करोम्येनद्विनिश्चयम् । अद्यप्रभृति मे दास ब्रह्मचर्यं भविष्यति ॥ ' इति पितृभक्त्या ब्रह्मचर्यव्रतग्रहणात् नैमित्तिकेन च व्रतेन नित्यस्य ऋतुकालगमनस्य बाधात्, धर्मभागे अहं भार्यां परिणेष्यामि इति परिभाष्य परिणीतायाः अगमनेऽपि अदोष. । सु. पृ. १९२.

● भीष्मादेः धर्मानधिकारिण. यदुवंशकीर्तनालम्बनानि पूजाप्रतिष्ठादानानि पुराणादौ दर्शितानि । सु. पृ. ७५०.

■ भुजया शिरोवेष्टनेन नासिकास्पर्श इति न्यायः । यत्र आयास विना साक्षात् सिद्ध्यन्तमर्थं उपेक्ष्य आयासेन परम्परया स एवार्थः साध्यते, तत्र अयं न्यायः प्रवर्तत इति । भावदीपी. २५४.

सू ' भुवनस्य पते ' इत्याद्यो दशाहुतयो रथमुखे स्युः ॥

' भुवनस्य पते इति रथमुखे दशाहुतीर्जुहोति ' इति विधावेव शाखान्तरे ' पञ्चाहुतीः ' इति पठ्यते, तत्र शाखाभेदाद्विकल्पे प्राप्ते, ' भुवनस्य पते ' ' स नो भुवनस्य पते ' इत्यनयोर्द्वयोरेकरूपस्य देवपदस्य पर्यायीकृत्य पञ्चेति वाद । अथवा दशसु पञ्चानां अनुषङ्गवादः ' यद्द्वादशकपाले भवति ' इतिवत् । शाखान्तरीयशाख्युपसंहारेण एकवाक्यतोपपत्तौ वाक्यभेदविकल्पयो अन्याय्यत्वात् । संकर्ष. २।४।२८.

● 'भूः भुवः भुवरित्युभौ पतौ महायते स हि तस्य योनिः ' इति श्रुतौ उभौ इति पदेन गार्हपत्याहवनीययो. उपादानोपादेयत्वो. सहाधानाभावेन परामर्शायोगात् सम्पातसम्पतत्त्वस्य वक्तृ प्रतया ' ■ हि तस्य ' इत्यस्य साहित्यविशेषपरत्वेन ( साहित्यविशिष्टोभय० ) आहवनीययोनिकत्वश्रवणात् सम्पातसम्पतो: आहवनीयात् आधानं स्यात् इत्यादि: पूर्वपक्ष. 'स हि तस्य इत्येकवचनेन साहित्याविवक्षयापरत्वायोगेन स. गार्हपत्य. तस्य आहवनीयस्य योनिः इत्येन तदर्थकतया तयोर्नोक्त. प्राप्ति' इति सिद्धान्तः । संकर्ष. ३।२।३. ● ' भूः ( नाम याग. ) वैश्वदेवस्त्रिवृदेव सर्वं, तस्य विश्वरूपः स्थौरीयाः धेनुर्दक्षिणा ' । सा न दक्षिणा हस्त्यस्य भतुदक्षिणास्य निवर्तिका, न तु धेनन्न बाधम् । १०।३।१४।

दृष्टार्थत्वात् । न तु भव्यस्य भूतार्थता । भा. ६।१।१।१ पृ. १३४८, ० भूतस्य भव्यार्थता भविष्यति । एतद्धि कर्मणा प्रसिद्धं कार्यं यदाराद्रुपकारकम् । १०।४।२०।३८. ० भूतस्य स्वर्गपश्वादेः द्रव्यस्य, भव्यं कर्म प्रति गुणत्वेन अन्वयः बध्यते । सु. पृ. ४१५.

० भूतान्वाख्यानमात्रं यथाऽर्थिनैः 'सोऽरोदीत् यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्यादिवाक्यैः यत् प्रतिपाद्यते तत्र यद्यपि सत्फलमस्त्येव तथापि न तेन प्रयोजनम् । वा. १।२।१।२.

० भूतार्चकः । 'एवं य. सर्वभूतानि ब्राह्मणो नित्यमर्चति । स गच्छति परं स्थानं तेजोमूर्तिः पथर्जुना (पथा ऋजुना) ॥' मनु. २।९३। वा. टिप्पणी च ३।१।७।१३ पृ. ७०२.

० भूतार्थवादः । 'विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥' विरोधावधारितत्वयोः ज्ञानाभावे भूतार्थवादः । अत्र औपनिषदाः 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यादीनुदाहरन्ति । तदयुक्तम्, नतमे विग्रहादिपञ्चकनिरासात् । 'यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम् ॥' इति उपनिषदश्च उदाहरणम् । बाल. पृ. ८८–८९.

० भूताधानवत् । आधानं भूतं यथा आहिताग्निं उत्पादयति तथा भूतचयनमात्रं अग्निचितं उत्पादयति इति पूर्वपक्षे । भाट्ट. ५।३।१०.

० भूतेष्टकाः अग्निशेषः न तु चितिशेषः । तेन ताः सकृदुपधातव्याः न तु प्रतिचिति । भा. ५।३।६। १५–१६. ० 'भूतेष्टका उपदधाति' इति विहितानां इष्टकानां उपधानं प्राकृतैरेव मन्त्रैः । संकर्ष. २।४।२३. ० भूतेष्टकाः नाम इष्टकाः अग्निप्रकरणे समाम्नाताः । तासामपि अग्न्यर्थत्वात् अप्रकृतत्वात् अगृह्यमाणं भवत्संयोगः इति पूर्वः. वर्तव्याः । प्रकरणात् वाक्यस्य बलवत्त्वात् । भा. ३।६।१२।३५.

० भूतेष्टकोपधानं प्राकृतैरेव मन्त्रैः । संकर्ष. २।४।२३. मीको. पृ. ४५ 'अग्निचयने भूतेष्टकोपधानम् ' इत्यत्र द्रष्टव्यम् । ० भूतेष्टकोपधानं राजसूयमन्त्रैरेव शङ्कितपक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैर्मन्त्रैः कर्तव्यम् । संकर्ष. २।४।२४, मीको. पृ. ४५ 'अग्निचयने भूतेष्टकोपधानं राजसूयगतमन्त्रैरेव०' इत्यत्र द्रष्टव्यम् । ० भूतेष्टकोपधाने यदि भूपतये स्वाहेत्यादिराजसूयस्थमन्त्राणां विनियोगः स्यात् तदा स्वाहाकारमुन्मूल्य प्रयोगः इति पूर्वः पक्षः । यथाम्नानमेव प्रयोग. इति सिद्धान्तः । संकर्ष. २।४।२४.

० भूतेष्टका-चित्रिणी-वज्रिणी-इष्टकानां मध्यमचितौ उपधानम् । ५।३।७।१७–१९ । अथ लोकंपृणायाः प्राक् । ५।३।८।२०.

० भूतोपयोगसंस्कारार्थं अदृष्टार्थं सन्निपत्योपकारकं तदर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा, तुषनिर्वापः शिष्टाचारस्त्वविधिरासः । बाल. पृ. ८१, ० भूतोपयोगसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं तदर्थं प्रवृत्तिरूपं वैदिकं कर्म प्रतिपत्तिः इत्युच्यते । पृ. ८२.

० भूतत्वं वर्तमानध्वंसप्रतियोगित्वम् । मणि. पृ ११६.

० भूतभविष्यतो. भूते लक्षणा, भविष्यति नास्ति लक्षणा । टुप्. ४।१।११।२६.

० 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' (भाष्यवाक्य १।४।१४।१०)। न्यायकणिकाविवरण-(६।१।१)पर्वतसूत्रे भूतस्य स्वर्गपश्वादेः भव्यं कर्म प्रति गुणत्वेन अन्वयः गम्यते । सु. पृ. ८१५. ० भूतभव्यसमुच्चारणे हि भूतं भव्यार्थं भवति । भव्यस्य [redacted] भूतार्थत्वे अदृष्टार्थता कल्प्या स्यात् । न च दृष्टे सति अदृष्टकल्पना भवति । भा. ११।२।१६।६६

० भूतभव्यसमुच्चारणन्यायः । (६।१।१।१–३) अथ पशुकामपूर्वपक्षसूत्राणि । सु. पृ.१५४४. ० कतस्य यागसाधनसोमप्राप्त्यर्थत्वेन भूतभव्यसमुच्चारणन्यायेन विधायकत्वाद्यत्वेन च प्राधान्यम् । वा. ३।१।६।१२ पृ. ६९८, ० 'पशुमालभेत' इत्यत्र पशौ द्रव्यस्य नियमोजनकत्वात् तत्कृतत्वात् अविवक्षिते प्रतिनिर्देश्या द्वितीयया कारकसामान्य मात्रनिर्देशात् तद्विशेषाकाङ्क्षायां सत्यां भूतभव्यसमुच्चारणन्यायेन करणत्वेन गुणभाव. अवगमित. । ३।१।७।१५. ० सामान्यः

भूतभव्यसमुच्चारणन्यायेन अर्थवादानां चोदनार्थकार्ये हेतुत्वेनान्वयात् हेत्वभावेऽसत्यलक्षणमप्रामाण्यं चोदनानां निराकर्तुमिदमधिकरणं इत्याहुः। सोम. १।२।१. * भूतभव्यसमुच्चारणन्यायात् अनुवषट्कारयागे वस्तुसामर्थ्यात् सोमः अङ्गम्। सु. पृ. ११५४–५६, * भूतभव्यसमुच्चारणन्यायात् यजेन पात्रकर्मनिष्पादकस्य द्रव्यस्य अवसीयते। पृ. ६२२.

* 'भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते। सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥' इति सक्तुन्यायस्य स्वरूपम्। वा. ३।१।४।१२ पृ. ४११.

* भूतभाव्युपयोगोभयदेवतासंस्कारार्थं द्रव्यार्थं संनिपत्योपकारकं नरत्वं प्रवृत्तिरूपं वैदिकं कर्म यथा, पशुपुरोडाशयागः। इदं च आमयिकर्मभेदेषु वक्ष्यते। बाल पृ. ८२.

* भूतभाव्युपयोगोभयसंस्कारार्थं तु द्रव्यसंस्कारकं कर्म नास्त्येव। बाल पृ. ८२

* भूमा गौणीवृत्तिहेतुः। 'सृष्टीरुपदधाति' इत्यत्र 'एकयाऽस्तुवत' इत्यनुवाके (तैस. ४।३।१०) सृजधातुप्रयोगभूमा वर्तते। तेन सृष्टि–असृष्टि–समुदायः सृष्टिशब्देन लक्ष्यते। शा. १।४।१०.

■ भूमा। १।४।१२।२३–५॥

'सृष्टीरुपदधाति' इति श्रूयते। अग्निचयने उपनेमाः काश्चित् इष्टकाः सृष्टयो नाम। तदुपधानकरणमन्त्रेषु बहुषु 'प्रजा असृज्यन्त' 'भूतानि असृज्यन्त' इति सृजधातुः प्रयुक्तः। नैपुण्येषु सृजधातुर्नास्ति। तथापि सृजधातुघटितानां बहुत्वात् सर्वे मन्त्राः तदुपधेया इष्टकाश्च सृष्टिशब्देन उच्यन्ते। तेनात्र सृष्टि–असृष्टिसमुदायः सृष्टिशब्दवाच्यः। तादृशे समुदाये सृष्टिशब्दो गौणः। गुणश्चात्र भूमा नाम बाहुल्यम्। बहोर्भावः भूमा। अत्र सप्तदश मन्त्राः, तेषु प्रथम–चतुर्दश–षोडश सप्तदशेषु सृजधातुर्नास्ति, तत्र सृष्टिशब्दो गौणः। के.

■ भूमाऽधिकरणम्। सृष्टिन्याय॥

भूमा। १।४।१२।२३–५॥

भाष्यम्— 'सृष्टीरुपदधाति' इति श्रूयते। तत्र गुणविधिः अर्थवादः इति संदेहे, अपूर्वत्वात् विधिः। इति प्राप्ते, उच्यते। यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टकाः इत्यर्थः। तत्र नेष्टकानां विशेषः कश्चिदाधीयते, एवरूपाः सृष्टिमन्त्रका नैवरूपा इति। तत्र सर्वाः सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः। अन्येषां असंयुक्तानां मन्त्राणां आनर्थक्यं स्यात्। तस्मात् अनुवादः, मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्राणाम्। सृष्टीनां सृष्टिषु संकीर्तनं सर्वेषामर्थवादार्थम्। अपि च विधित्वे लक्षणा, 'एकयाऽस्तुवत' इत्यत्र वा असृष्टिवचनां लक्षयेत्। ननु अनुवादेऽपि लक्षणा। नानुवादपक्षे लक्षणाया दोषः। कथं तु असृष्टिषु सृष्टिषु च सृष्टिशब्द इति। भूम्ना। बहुवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पशो विलिङ्गा इति।

वा—भूमा। यदि 'सृष्टीरुपदधाति' इत्याख्यातप्रत्ययवशात् विधिराश्रीयते, तत्र न तावता धर्मविशेषेण वा कांश्चिदिष्टकाः सृष्टयो नाम अन्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधलिङ्गैर्मन्त्रैः उपधीयन्ते ता एव सृष्टयः, तत्रोपधानमानमुद्दिश्य मन्त्रेषु विनीयमानेषु सकलव्याप्ते प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोगमन्त्रानर्थक्यप्रसङ्गः। तस्मात् प्रकरणपाठादेव सर्वेषु मन्त्रेषु प्राप्तेषु एकदेशानुवादः सृष्टयभिधाननिमित्तार्थवादार्थः। अत्र चोदयन्ति। चयनचोदनयैव उपधानस्य प्राप्तत्वात्, लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्ते, संदेशानां स्वस्वार्थवादानुपपत्तिः, एकवाक्याधीनत्वात् अर्थवादत्वम्। तथा च प्रथनार्थवादे व्याख्यातम्। न चान्यो गुणः श्रूयते, यदर्थता कल्प्येत, तत्र परिसंख्यार्थतैव प्राप्नोति। ततश्च तदवस्थमानर्थक्यमिति वाच्यः पुनः श्रुतिप्रयोजनम्। तत्र केचिदाहुः। उपधानमेवात्र विधीयते, तस्माद्बाह्यप्रदर्शनार्थं न मन्त्रग्रहणम्। इत्थमिदं प्रशस्तम्, यदेवरूपैर्मन्त्रैः क्रियते इति। चयनेनार्थगृहीतमुपधानमिति चेत्, सहतत्स्थापनेनापि चयनोपपत्तेः। न नैव सहस्थानामेकोपधानं स्यात्, न, तस्येष्टकाः प्रति उपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः। अपि च,

'प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया।
आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते॥' तत आध्वर्युकर्तृकत्वं च लभ्यते। अर्थगृहीतायां तु अनियमः स्यात्। न चावश्यमुपधाने एव सर्वे मन्त्रा विनियुज्येरन्।

अविशिष्टसामर्थ्या हि केचिद् ग्रहणाद्यपि कुर्युः । अपिच, ' प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः । तदर्थमपि संबन्धः कार्यो मन्त्रोपधानयोः ॥ ' ये तु श्रौतानुवाक्यगण्डाधीनास्तेषां वाक्यादते संबन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवाद्त्वं प्रतिपाद्यते, अलिङ्गातल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रकथनात् । अतो नातीव सूष्टिनामविधानमाक्षेप्यम् । भाष्यकारेण तु विधौ लक्षणा परिहर्तुं अनुवादत्वमाश्रितम् । ' एकयाऽस्तुवत ' इति हि अनुवाकाद्यस्यैवानुष्टिरिङ्गत्वात् आत्मपरित्यागेनेतरलक्षणार्थता स्यात् , तत्कृतविधा च पुनरस्माऽपि प्रतिपादनीय इत्यतिगौरवम्, उपधानानुप्रवेशेन पुनरनुवादत्वाल्लघुता लक्षणा ।

शा— ' सृष्टीरुपदधाति ' इति सृष्टिशब्दो गुणविधिः, उत अर्थवाद इति संशयः । तत्र आख्यातसम्बन्धात् विध्यन्तरैकवाक्यत्वाभावात्, अर्थवत्त्वाच्च विधिः । सृष्टिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते । ( सृष्टिशब्दो हि ' तद्वानासामुपधानो मन्त्र इतीष्टकासु, लुक् च मतोः ' [ पा० ४।४।१२५ । मत्वन्तात् प्रथमासमर्थात्, आसामिति षष्ठ्यर्थे यत्-प्रत्यय स्यात्, यत् प्रथमासमर्थं उपधानः उपधानकरणभूतः मन्त्रश्चेत् स भवति । तत् यत् आसामिति निर्दिष्टम्, इष्टकाश्चेत् ताः भवन्ति । मतोश्च लुक् भवति इति सूत्रार्थः ] इति सूत्रेण सृष्टिमान् आसां इष्टकानां उपधान. उपधानार्थो मन्त्रः इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्-प्रत्यये च सति छान्दसत्वेन यत्प्रत्ययलोपात् निष्पन्न. [ सृष्टिशब्दः ] सृष्टिशब्दवत् मन्त्रोपधेयेष्टकावचनः । तत्र विशेष्यभूतानामिष्टकानां अन्यतः प्राप्तावपि विशेषणभूतमन्त्रविधि. संभवति इति भावः । पूर्वपक्षं निरस्य सिद्धान्तमाह-- ) नैतम् । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वात् न विधिर्मन्त्राणां संभवति, तथा सति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणपठितेषु सृष्टिविधानात् अन्ये परिसंख्यायेरन्, सा च त्रिदोषा परिसंख्यानानां च मन्त्रान्तराणां आनर्थक्यं स्यात् । तस्मात् उपधानमेवात्र विधेयम् । ' सृष्टीः ' इति तु लिङ्गप्राप्तमन्त्रानुवादमात्रम् ' यथासृष्टमेवावरुन्धे ' इत्यस्यार्थवादस्य उपपत्त्यर्थ इति भाष्याभिप्राय. । केचित्तु मन्त्रविधिमेव समर्थयन्ते । नहि ' एकयाऽस्तुवत ' इत्येवमादीनां उपधानैकान्तिकं लिङ्गमस्ति, येन प्राप्तिः स्यात् । ( उपधाने योगं विना ' यो वा इष्टकानां प्रतिष्ठां वेद, प्रत्येव तिष्ठति, तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेत्याह, एषा वा इष्टकानां प्रतिष्ठा ' इतिवाक्यविहितस्य तयादेवतयेतिमन्त्रैकलाभ्यभावस्यापि प्रसिद्धे., न तथैकयास्तुवतेत्यस्यापि उपधानैकान्तिकं लिङ्गमुपपादयितुं शक्यमिति भावः ) । साधारणलिङ्गत्वाद्धि इष्टकानां ग्रहणासादनादिष्वपि मन्त्राः प्राप्नुयुः, तत्रास्ति विधेरर्थ वाद. । तस्यामपि उपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि मन्त्रविधानमर्थवत् भविष्यति । वक्ष्यति हि ' मध्यमायां तु वचनाद् ब्राह्मणवत्यः ' इति ( ५।३।५।१९ ) । ' या वै का श्चन ब्राह्मणवतीरिष्टकामभिजानीयात्, तां मध्यमायां चितावुपदध्यात् ' इति वचनेन अभिपूर्वस्य ज्ञानातेः प्रत्यक्षार्थकत्वात् प्रत्यक्षब्राह्मणविहितानामिष्टकानां चयनगतपञ्चचितिपञ्चकमध्ये या मध्यमा तृतीया चिति. तस्या प्राप्तिः, इति तत्सिद्ध्यर्थं विधानमित्यर्थ ) न चास्मिन् मते सृष्टीनां विधानमप्यनुवादत्वम्, गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । क. पुनरत्र गुणः ? भूमा । सृष्टिसमुदाये हि भूमाऽस्ति । सृष्टयसृष्टिसमुदाये अपि ' एकयाऽस्तुवत ' इत्यनुवाके ( तैसं. ४।३।१० ) सृष्टिभूमाऽस्ति इत्यनेन साहश्येन सृष्टिशब्दः । १।४।१७.

सोम— पूर्ववैधर्म्येण प्रत्यवस्थानात् संगतिः ।

वि— ' सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गका. । विधेयास्ते गुणत्वेन वादो वा, तत्र गुणे विधिः ॥ आख्यातेनाभिसंबन्धाद्विध्यन्तरयोगत , लिङ्गप्रकरणाभ्यां मन्त्राणां विध्यसंभवात् ॥ तत्रानूद्यैकाऽस्थाने विद्ध्यात् स्तोष्यते यत । यथासृष्टेत्यनेनात्र सृष्टीरित्यर्थवादगीः ॥ एकयाऽस्तुवतेत्यादौ मन्त्रसंघे कतिचिद्धि । सृष्टिशब्दस्तथाप्युक्तिः सृष्टिशब्देन भूमतः ॥ ' १।४।१७.

भाट्ट—' सृष्टीरुपदधाति ' इत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम् । तत्र च उपधानमेव इष्टकासंस्कारार्थत्वेन विधीयते । यद्यपि

चेष्टकानां वचनाद्बलात्तथाऽनुषङ्गेण उपधाने प्राप्तेऽपि, तथापि तत् पूर्वेण प्रत्यक्षविधिना विधीयते। तत्फलं च प्रत्येकोपधानसिद्धिः, वचनसमानकर्तृकत्वसिद्धिश्च। अन्यथा समुदितोपधानमपि कदाचित् प्राप्नुयात्। आर्थिकत्वाच्च नयनभिन्नकर्तृकत्वमपि। अपि च तस्मिन् इष्टकासम्बन्धद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायात् अङ्गप्रधानयोरेककर्तृकत्वलाभः फलद्वयसिद्धिः। सृष्टिपदं तु लिङ्गप्रत्यक्षसृष्टयसृष्टिमन्त्रमात्रस्य गौणानुवाद इति भाष्यकारः। वार्तिककारस्तु– लोपधानमात्रविधिः। तथा सति 'प्राणभृत उपदधाति' इत्याद्यनेकोपधानविधिवैयर्थ्यापत्तेः। अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रनियमो वा उपधानभिन्नप्रकारकारार्थत्वेन विधीयते। तत्रोपधानविधिफलं तु पूर्ववत्। मन्त्रविधिफलं तूपधाने तन्नियमः। मन्त्रा हि इष्टकामात्रप्रकाशकत्वाद्ग्रहणादिष्वपि प्राप्नुवन्ति उपधाने नियमेन प्राप्नुवन्ति। अनन्तनियमः ग्रहणादिपरिसंख्यैव वा फलं गम्यमानचितिसम्बन्धः। 'यानि वाचनं ब्राह्मणवतीरिष्टका अभिजानीयात् ता मन्त्रमात्रेणोपदध्यात्' इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिनिराकरणस्य विधानात्। अन्यथा तत्तच्चित्यन्तरप्रकरणपाठरहितानां मन्त्राणां नयनमहाप्रकरणेन सर्वचितिषु अनियमापत्तेर्वा निवेशापत्तेः। अतो मध्यमचितिसम्बन्धार्थं मन्त्रविधिः। इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं च इष्टकावाचि-प्रत्यक्षब्राह्मणपठित-पदनिर्देश्यमन्त्रकरम्। सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम्। तत्र च विशेषणाश्रयस्य मन्त्रस्य विधेयत्वात् तत्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः। इतिकरणविनिर्मुक्तलोकपृणमन्त्रस्यापि मध्यमचितिमात्रसम्बन्धापत्ते इष्टकावाचीति पदविशेषणम्। अतश्च मन्त्रविशिष्टोपधानमत्र विधीयते। सृष्टिपदं परं गौण्या वृत्त्या असदादिमन्त्रपरं, सृष्टिमन्त्रपरम्, 'यत्सृष्टदोहका उपदधाति' इत्यर्थवादानुसारात्। तत्र चतुर्दश सृष्टिमन्त्राः (१,१४,१७ इति–) त्रयः असृष्टिमन्त्राः इति सृष्टिबहुत्व गुणो योगीकृतिनिमित्तम्।

मण्डन–– 'भूम्ना स्युः सृष्टयो मताः।' १६.

शंकर—— 'भूम्ना सृष्ट्यादियोग्यता।' १७.

* प्रत्यक्षब्राह्मणवत्त्वं इष्टकावाचिश्रुतशब्दविनिर्मुक्तमन्त्रोपधेयत्वं इत्युक्तमेव भूमाधिकरणे। भाट्ट. ५।३।७.

* भूमगुणयोगेन सृष्टयसृष्टिरूपे सृष्टिशब्दप्रयोगः 'सृष्टीरुपदधाति' इत्यत्र। वि. १।४।१७.

* भूममूलकगौण्या इत्यत्र गौणी साध्यते। बाल. पृ. १४३, * भूममूलकगौण्या लिङ्गसमवायमूलिका गौणी बाध्यते, पूर्वस्या बहूनां वाक्यानां नानार्थान्वयात् इतरस्या तदभावात्। पृ. १४३.

* भूमिः न देया। का पुनर्भूमिरत्राभिप्रेता? यदेतत् मृद्रूपं द्रव्यान्तरं पृथिवीगोलकं नाम। न क्षेत्रमात्रं मृत्तिका वा। भा. ६।७।२।३, * भूमिर्न देया विश्वजिति। ६।७।२।३.

* भूमिरथिकवत्। प्रकृतवाक्ये प्रयोगार्थे भूमिरथिकवत्। तथथा भूमिरथिकः भूमौ रथमालिख्य शिक्षां करोति, तथाऽभ्रे– प्राशुभावो भवितेति। भा. ७।२।१।१५, ९।२।२।१२

* भूयसा अस्य बाध्यते। प्रासङ्गिकोऽयम्। बाल पृ. १३२, वा ३।३।७।१४ पृ ८६०.

* 'भूयसा स्यात् सधर्मत्वम्' इति न्यायः। ('विप्रतिषिद्धधर्माणां समवाये०' १२।२।७।२२ इति सूत्रस्यार्थोऽयम्)। विग्रहः शब्दः सोमक्रयण इत्यत्र (प्रकृतिवत् प्राप्तेषु क्रयसाधनेषु) गोत्व– अजात्व– जात्योः विकल्पेन प्राप्तौ गोत्वस्य 'गोमिथुनेन क्रीणाति' 'एकहायन्या क्रीणाति' इति वाक्यद्वयविहितक्रयद्वयसाधनत्वात् 'भूयसा स्यात् सधर्मत्वम्' इति न्यायेन एकहायनीभूत– अजात्व– बाधकता। क्रयान्तराणां तु अनयैव वाचा प्रसङ्गसिद्धिः। कौ. ३।१।६।१२ पृ १६९. * बहवश्च प्रैषार्थाः एको निगदः, 'तेन भूयसा स्यात् सधर्मत्वम्' इत्यपि प्रैषार्थे अध्वर्युरिति परिशेषात् प्रैषे अधीत् इति पूर्वपक्षः। वा. ३।८। १२।२३.

* भूयोऽनुग्रहन्यायः। दहराकाशमतिप्रपञ्चनस्य तदन्तर्गतवस्तुप्रतिपत्त्यर्थत्वाभावात् उपासनार्थत्वानर्थभावेन तेषामनन्यथासिद्धानां भूयसामनुग्रहानुरोधेन तस्मिन्यदन्तः इत्यादेः दहराकाशस्य अन्वेष्टव्यतापरत्वं अत–

सीयते, न तद्रूपाक्षिप्तलोपसंहारमात्रानुरोधेन। पराक्रमः ५.१.२. ❀ भूयोऽनुग्रहन्यायः द्रव्यधर्मविषयः । सु. पृ. ८१२.

❀ भूयोऽनुग्रहन्यायः । बह्वनुग्रहन्यायः । प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयोऽनुरोधेन धर्माणामनुष्ठानम् ॥

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । १२।२।७।२२ ॥**

भाष्यम्— पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः । ततो ज्योतिर्गौरायुरिति त्र्यहः । परिशिष्टान्येकादशाहानि द्वादशाहप्रकृतीनि । तत्र धर्मविप्रतिषेधे सति एकादशानामह्नामग्निष्टुतश्च विचार्यते । किमेषु द्वादशाहिको धर्मः कर्तव्य उत अग्निष्टुत इति । ननु सिद्धमेतत्, चोदकनामधेययोर्नामधेयपरीक्षायामैकाहिको धर्मः कर्तव्य इत्युक्तम्, 'न वा कल्पविशेषात्' इति (७।४।३।१५)। तथा सिद्ध न्यायान्तरेण आक्षिप्यते । अथवा नाम्नामेव विप्रतिषिद्धा । विप्रतिषिद्धधर्माणामेतेषा अग्निष्टुतश्चैकादशानां चाह्नां समवाये एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां सधर्मत्वं स्यात् । तदीयो धर्मः कर्तव्यः । को हेतुः ? भूयस्त्वमेव । भूयःसु गुणसंपन्नेषु महत् फलं भवति । एकस्मिन्नल्पं फलम् । एवं हि लोके दृष्टान्तः । लोके, एकादशसु प्रदीपेषु तैलवर्ति संपन्नेष्वेकस्मिन् गृहे महान् प्रकाशो भवति, विपर्यये अल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्या अग्निष्टुति आग्नेयी, इतरेष्वह ऐन्द्री । तत्रैन्द्री कर्तव्या ।

दुप्— (अत्र भाष्यकारेण पञ्चदशरात्रमुदाहृतम् । तत्र अग्निष्टुत् प्रथममहः, ततो ज्योतिः, गौः, आयुः इति त्र्यहः, परिशिष्टानि एकादशाहानि द्वादशाहिकानि । तत्र अग्निष्टुति आग्नेयी सुब्रह्मण्या नामधेयात् प्राप्ता, द्वादशाहिकेषु ▮ चोदकेन ऐन्द्री, तत्र बलाबलं चिन्त्यते । अथवा ज्योतिर्गौरायुः इति त्र्यहे नाम्ना ऐन्द्री प्राप्ता अग्निष्टुति च नाम्नैव आग्नेयी । तत्र नाम्नामेव बलाबलं चिन्त्यते इति । इदं भाष्यकारोक्तमुदाहरणमाक्षिपति —) अस्मिन् सूत्रे पञ्चदशरात्रस्तावत् अनुदाहरणम् । (कथम् ?) या तावत् वसतीवरीपरिग्रहणोत्तरकाला सुब्रह्मण्या, सा अतिदिश्य क्रियते ('उत्तरा त्वार्त्विज्ये' [११।३।११।२४] इति ह्युक्तम्)। यथादेशं च (सा कर्तव्या) आग्नेयी अग्निष्टुति, अन्येषु ऐन्द्री । तत्र तावत् संशय एव नास्ति (भेदेन करणात्) अविरोधात् । या तु आतिथ्यान्ते उपसत्सु च (क्रियते), तस्या (तन्त्रेण क्रियमाणाया) विरोधः (समापद्यते) । तथापि देवतासंस्कारकत्वात् निगदस्य, यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेणोच्चारणम् । यथा निर्वापमन्त्रः संस्कारकत्वात् प्रतिनिर्वापं भिद्यते, एवमियमपि । तस्मात् इदं अपि सुब्रह्मण्ये आह्वानं तन्त्रे (इत्यनुदाहरणम्)। किं तर्हि अत्रोदाहरणम् ? यत्र पञ्च यागाः सह चोद्यन्ते फलं प्रति, तत्र च त्रयाणां पौर्णमासिको विध्यन्तः, द्वयोर्दार्शिकः, तत्र अभिमर्शनाज्यभागमन्त्रयोर्विरोधः (तदुदाहरणम् । तथाहि— अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः, दधि मधु घृतमापो धानाः प्राजापत्यं इति सप्त यागाः । तत्र आग्नेये पुरोडाशे धानासु च आग्नेयो विध्यन्तः । तेन आग्नेयस्य पौर्णमास्यमावास्ययोर्भावात् न विरोधः । इतरे तु पञ्च यागाश्चिन्त्यन्ते । तत्र ऐन्द्रे पुरोडाशे दधनि च दार्शिको विध्यन्तः, मधुघृतयोश्च तत्प्राकृत्याभिप्रायत्वात् पौर्णमासिकः, तत्र अभिमर्शनाज्यभागमन्त्रयोः विरोधः, चतुर्होतृपञ्चहोत्रोः अभिमर्शनमन्त्रयोः, वार्त्रघ्नयोः वृधन्वतोश्च आज्यभागमन्त्रयोर्विरोधः इत्यर्थः । सिद्धान्तमाह—) तत्र भूयसां धर्मानुग्रहः प्रयोगवचनानुग्रहाय ।

सोम—किं मुख्यधर्मस्यैव इतरत्र प्रवृत्तिः, उत भूयसां धर्मस्य इति प्रवृत्तिविशेषविचारात् संगतिः ।

वि—'या पञ्चदशरात्रस्य सुब्रह्मण्याऽऽग्न्यकालगा । आग्नेयी स्यात् किमैन्द्री वा, प्रथमाह्नानुगुण्यतः ॥ आग्नेयी प्रथमं चाह्नो विरोधानुदयाद् बलि ।, न बहुनुग्रहादैन्द्री मुख्यधर्मस्याप्रणीतितः ॥' 'त्यजेदेकं कुलस्यार्थे' इति न्यायादित्यर्थः । इदं भाष्यमनेनोक्तम् । वार्त्तिककृतोनाह— 'वसतीवरीग्रहणं वृधन्वत्यात्वाहुत । वार्त्रघ्न्याज्यभागार्थे, प्रथमत्वाद् दर्शान्त्ययोः ॥ दर्शधर्मातिदेशेन प्राप्त आद्यो, ऽन्तिमो यतः । पूर्वं सप्वाय इत्येषा बहूनां नन्विचिता ॥'

तथा च ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः । के.

■ भूयस्त्वेनोभयश्रुति । ३।३।२।१०॥

यजुर्वेदे ज्योतिष्टोमं समामनन्ति– 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तथा सामवेदेऽप्येवं समाम्नातम्– 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तदुभयं कृताया क्रियाबुद्धौ द्वितीयं गुणार्थं श्रवणं भवति । तत्र संदेहः किं याजुर्वेदिकं गुणार्थम्, उत विपरीतं इति । पूर्वमङ्गेष्वौत्पत्तिको वेदधर्मो विनियोगविधिवशेनापद्यते इति प्रतिपाद्य इदानीं प्रधानमेव यत्रोभयत्वेन श्रूयते, तत्र कतरस्य वेदस्य गतश्च उच्चैष्ट्वादिधर्मोऽनुष्ठातव्य इति संदेहे सति अविकरणवाक्यस्य समत्वाविशेषात् यत्रोत्पत्तिस्तद्वेदधर्मोऽनुष्ठातव्य इति स्थिते उत्पत्तिविधिरेव कुत्रेति विचार्यते । अत्राय पूर्वपक्षिणोऽभिधानः । न तावत् एकत्रोत्पन्नस्य अन्यत्र अङ्गसम्बन्धार्थं श्रवणम्, उभयत्रैवाङ्गश्रवणाविशेषात् । नापि फले विनियोगार्थम्, फलस्याप्युभयत्र श्रवणाविशेषात् । अतोऽध्येतृभेदेन विकल्पेनैवोत्पादकत्वम् । यत् एतस्य नाम वेदाध्ययनमभवत् इति स्वशाखा नाकमथमभ्यासाध्येतव्या । तेन यद्वेदगता शाखा येन प्रथममधीता स एव वेदस्तस्योत्पादक इति शाखान्तरगतेदमुभयोरपि व्यवस्थितो विकल्प एवेति । एवं प्राप्ते, अभिधीयते । अनेनैव न्यायभूयस्त्वश्रवणेन विशेषावगतिर्भवेत् स्यात् । यजुर्वेदे हि ज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्तव्यता भूयसी श्रूयते, न तथा वेदान्तरे । इतिकर्तव्यतायाः प्रकरणत्वात्प्रधानवेतिकर्तव्यता तत्रैव प्रकरणम् । यत्र च प्रकरणं तत्रैव कर्मस्वरूपाम्नानादुत्पत्तिः । इतरत्र च गुणार्थं श्रवणमिति । तदुक्तम्– 'गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम् । तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते ॥' इति (वा. पृ. ८१५)।

प्रयोजनम्– पश्चोक्तम् । सूत्रं तु उभयश्रुति यत्कर्म तस्याङ्गभूयस्त्वेनोत्पत्तिनिर्णय इति ।

तदस्य यथाभाष्यं सिद्धान्तहेतु वार्तिककारपादा नानुमन्यन्ते । यदि ह्यल्पितिकर्तव्यतोत्पत्त्यवगतौ लिङ्गं तदा तदल्पत्वभूयस्त्वयोः को विशेषः । न हि भूयस्त्वेनावधारितोऽल्पीयान् धूमोऽग्निं नानुमापयति । तदुक्तम्– 'यद्यस्य गमकत्वेन स्वशक्त्यैवधारितम् । तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते ॥' इति 'यादृशस्य हि धूमस्य गमकत्वावधारणा । स तादृग्बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥' इति । (वा. पृ ८१६) । अतो यथावार्तिकमेव सिद्धान्तहेतुर्वर्णनीयः । प्रतिकर्म विशेषस्वरूपविज्ञानमुत्पत्तिः । द्रव्यदेवतेन च कर्मविशेषनिरूपणं भवति । ज्योतिष्टोमस्य च द्रव्यदेवतं कृत्स्नेन यजुर्वेदे समाम्नायते । तेन तत्रैव कर्मोत्पद्यते । इतरत्र वेदे कर्मस्वरूपमात्रमनुकीर्त्य स्तोत्रशस्त्रमात्रविधानात् गुणार्थमेव श्रवणम् । ननु अनेकेऽपि गुणाः प्रतिवेदं विधीयन्ते । नैवं प्रतिवाक्यं कर्मानुवादेन न विधयः श्रूयन्ते । नाप्येकेन कर्मानुवादेन सर्वेषां विधानमवगम्यते । अतो न वाक्यैक्येन अनेकगुणविधानम् । नापि प्रकरणेनानूद्यमानस्य, प्रकरणाभावात् । कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षा प्रकरणम् । न चानुवादे कर्तव्यता संभवति । अतः प्रकरणेनाप्यङ्गसम्बन्धासम्भवात्कथं गुणार्थं श्रवणमिति । उच्यते, न हि स्वरूपेणानूद्यमानमितिकर्तव्यताकाङ्क्षापरिपन्थि । किं तर्हि ? विधानुद्देश्यत्वेनानूद्यमानत्वम् । इह तु यादृशं कर्मोत्पत्तिविधावगतं तेन रूपेणैतद्वेदान्तरे गुणस्यैव श्रवणमध्ययनविधिसाद्गुण्यं तदस्य प्रयोजनम् । स तु संनिधिसमाम्नातेतिकर्तव्यतासम्बन्धावगमार्थमेवेति निर्णीयते । अतो यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिः । वेदान्तरे गुणसम्बन्धार्थमेव श्रवणमिति सिद्धम् । प्रयोजनम्– पश्चोक्तम् । सूत्रं तु द्रव्यदेवतादिप्रकाशभूयस्त्वेन यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिरुभयवेदश्रवणेऽपीति स्थितम् । शौता.

* 'भूयस्त्वेनोभयश्रुति' इत्यनेन न्यायेन यत्र यागपरिचायकदेवतादिमता तत्रैव यागविधिः । कौ. २।२।४।१०.. * अंशग्राम्यशे॰ 'भूयस्त्वेनोभयश्रुति' इति न्यायेन औपानुवाक्यकाण्डे एव गुणविधिपाठुल्यात् प्रधानविधिरपि । संकर्ष. ३।३।१४. * यस्य कर्मण एकस्यां शाखायां भूयसामङ्गानां विधानम्, 'भूयस्त्वेनोभयश्रुति' इति न्यायेन प्रधानस्यापि तत्रैव विधानम् । शाखान्तरे तु स्वल्पाङ्गमात्रविधानम्, तत्र कर्मणि

तच्छाखाध्यायिनामेवाधिकारः स्यात् इत्याशङ्का । सोम. ६।१।७. * यदि तु उभयत्र ( वेदद्वये मन्त्रः ) विधास्यते तत्रोभयत्र 'भूयस्त्वेनोभयश्रुति' इत्यादि नास्ति तत्राभयत्र विकल्पो गृह्यते । वा. ३।३।१।७.

☒ भूयस्त्वात्तद्वाद इति न्यायः । यत्रेतरवस्तुसत्त्वेऽपि यस्य वस्तुनो बाहुल्यं तेनैव लोकप्रवादः इत्यर्थे अयं प्रवर्तते । स्पष्ट. । माहृसी. ७५९.

■ भूयोमन्त्राधिकरणम् । एककर्मणि भूयोमन्त्रसत्त्वे विकल्पेन मन्त्रस्य ग्रहणम् ॥

दर्शपूर्णमासयोः पुरोडाशपिण्डविभागे 'यथाभागं व्यावर्तेथाम्' 'भागो वा विभजतु' इत्यादयो बहवो मन्त्रा आम्नाताः । ते सर्वेऽपि समुच्चित्य विनियुज्यन्ते अङ्गानि, अन्यतमग्रहणे विनिगमनाविरहात् । एकस्य विनियोगे अन्येषामाकाङ्क्षाया अशान्तेः । अन्येषामङ्गिना एकस्मिन् अङ्गे समुच्चयवद्वैपरीत्यस्यापि न्यायतौल्येन सिद्धेरिति प्राप्ते प्रकाशनस्य पुनः करणासम्भवात् मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगेऽपि शान्ते 'वा चतुर्भिरादत्ते' इत्यादिलिङ्गाच्च विकल्पेन विनियोगः । संकर्ष. १।२।१.

* भूयोमन्त्राधिकरणे ( १।२।१ ) 'यथाभागं व्यावर्तेथाम्' इत्यादिमन्त्राणां विषय उक्तः । शाकर्ष. १।२।१६.

☒ भूलिङ्गशकुनिन्यायः । हिमाचलप्रान्तदेशे भूलिङ्गाख्यः पक्षी 'मा साहसं कुरु' इति पुनःपुनरुच्चैर्वदन् सिंहदंष्ट्रामध्ये मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयं च यथेष्टाचरणशीलो दाम्भिकस्यायम् एवेति भावः । उक्तं च महाभारते— 'न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा ॥' इति । साहसी. ३४०.

* भृगूणां पञ्चावत्तम् । वा. ३।३।७।१७.

* भृगुशुनकवसिष्ठानां सत्रे नाधिकारः । ६।६।८। २४–२६

* 'भृतत्वाच्च परिक्रयः' इत्यत्र 'दक्षिणाः सोमस्य' इति वचनात् प्रधानस्यानारभ्यत्वाऽपि दक्षिणया प्रसङ्गात् कार्यसिद्धेः न अङ्गभूतेष्टिपशुषु आतिदेशिकान्वाहार्यदक्षिणाप्राप्तिः इति वक्ष्यते । कौ २।१।५।१२ पृ. ८३–८४

■ भृतत्वाच्च परिक्रयः । १२।१।१६।३३ ॥

दर्शपूर्णमासयोः परिक्रयः परिक्रीयन्ते ऋत्विजो येन स परिक्रयः अन्वाहार्यः चोदकप्राप्तोऽपि सोमे ऐष्टिकेषु न कर्तव्यः । भृतत्वात् सोमार्थेन परिक्रयेण गवादिना भृता ऋत्विजः । अङ्गप्रधानार्थश्च सौमिकः परिक्रयः । तस्मादन्वाहार्यो न कर्तव्यः इति सिद्धान्तः । के.

* भृतिः कर्मकरेभ्य आनत्यर्थं यद्दीयते तत् । भा. १०।२।८।२७, * निमित्तप्रकारैः भृतिः भवति व्यापारतः फलतः वचनतः इति । व्यापारतस्तावत् न माषवीह्यादीनां द्वादशशतं भृतिः । कर्म कुर्वाणा हि कर्मकरा. पादिकमपि अहः लभन्ते । फलानुरूप्यं नैव ज्ञायते । वचनं तु भृतौ सत्यां परिमाणविशेषपरं भवति । यत्र हि पादिकमपि अह्नं लभते न सा दक्षिणा भवति । न हि वा तस्मिन् कर्मणि दक्ष करोति । स्नेहाद्वा अन्येन वा प्रकारेण कृत्स्नमपि अहः कर्म कुर्यात् । न व्रीहीणां द्वादशशतेन प्रोत्साहितः । आश्रितं अमर्यं यद् द्रव्यं सा भृतिः । ( 'तस्य द्वादशशतं दक्षिणा' इत्यत्र इदम् । आश्रितस्य उदरपूरणपर्याप्तम् ) । १०।३।११।६५ , * यो बहु कर्म करोति तस्मै बह्वी भृतिः दीयते । १०।३।१३।५४.

* भृतियाचनं ( यजनं ) ज्योतिष्टोमे धनवतोऽपि नित्यम् । ६।८।७।२६–२७. मीको. पृ.१८११ 'ज्योतिष्टोमे भृतियाच०' इत्यत्र द्रष्टव्यम् । * भृतियजनं यज्ञार्थं याञ्चया द्रव्यसंपादनम् । 'दीक्षितो भृतिं वन्वीत' इति वचनात् । वि. ६।७।८.

* भृतियजनादिवत् । यथा भृतियजनं नियतं कदाचित्कत्वस्य च क्रत्वर्थत्वं तथा प्रतिग्रहादिनियमस्य क्रत्वर्थत्वेन कदाचित्कत्वस्य क्रत्वर्थत्वम् । भाट्ट. ८।१।२ वर्णक ३.

* भृत्येन सह भर्त्रा परिक्रयार्थे यतितव्यम् । भा. १०।३।१३।५१.

अमान्त्यत्वात् । अध्वर्युणा क्रियमाणस्य हृदयाद्यवदाना होमस्य काले या होत्रा पठनीया याज्या, तस्याः प्रथमस्य अर्धर्चस्य अन्ते प्रतिप्रस्थाता वसां जुहोति, तदर्थं च ' घृतं घृतपावानः ' इत्यादिकं ' अन्तरिक्षाय स्वाहा ' इत्यन्तं मन्त्रं पठति । होतृयाज्यायाः प्रथमार्धर्चसमाप्तिः यदा स्यात् तदैव प्रतिप्रस्थातृमन्त्रसमाप्त्या भवितव्यम् । तदा च वसाहोमः । होतृयाज्यायाश्च उत्तरार्धर्चान्ते वषट्कारे अध्वर्युः हृदयाद्यवदानानि जुहोति । तथा च वसाहोमे होतृयाज्या करणभूता नास्ति । तदेतत् ' अयाज्यावाक्यत्वात्तानाम् ' इत्युक्तम् । अथ वसाहोमे करणं मन्त्रः प्रतिप्रस्थात्रा पठनीयः ' घृतं घृतपावानः ' इत्यादिरेव, तेन च स्वशाखया स्वस्य वसायाः याज्या, तया स्वयाज्यया प्रदानं यस्या ताः स्वयाज्याप्रदाना वसाः । तदेतत् स्वयाज्याप्रदानत्वादित्यनेनोक्तम् । वसा नाम मांसरसः । पशुगणे च भिन्ना एव वसाः । तासां च भेदज्ञानार्थं चिह्नकरणासंभवात् तद्धारणार्थानां कुम्भीनामपि भेदः स्यात् । इति पूर्वपक्षः ।

अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ॥ २७ ॥

सिद्धान्ती आह । अपि वा तन्त्रं कुम्भी स्यात् । प्रतिपत्तित्वात्, दोषभूतानां वसानां प्रतिपत्तिरियम् । ननु कुम्भ्यास्तन्त्रे वसा स्वयाज्यार्धर्चान्ते एव हुता न भवेयुः । उच्यते । स्वत्वस्य अश्रुतिभूतत्वात् । स्वत्वं श्रुतिभूतं भूत्वा विहितं न भवति । तस्मात् परस्य होमो न दोषाय नाभ्युदयाय । तस्मात् कुम्भी तन्त्रं स्यात् ।

सकृदिति चेत् ॥ २८ ॥

पूर्वपक्षी आह । नहि प्रथमे एव याज्यार्धर्चान्ते वर्तमाना वसाना सकृत् होमो भवतु । इति चेत् ।

न कालभेदात् ॥ २९ ॥

सिद्धान्ती आह । न वसानां सकृत् होमः । काल-भेदात् याज्यार्धर्चान्ताः भिन्नाः तत्र कालभेदः स्पष्टः । तस्मात् याज्यार्धर्चान्तानां कालभेदात् नसाहोमे भेदो न । ततश्च सर्वयाज्यार्धर्चान्तेषु होमः । के.

● भेदः द्वितीयाध्यायप्रतिपाद्यः । कर्मभेदकानि प्रमाणानि षट्, शब्दान्तरमभ्यासः संख्या संज्ञा गुणः प्रकरणान्तरं चेति । वाल पृ. ८. ● भेदो नैव वाक्यार्थत्वेन अभिप्रेतः, अस्माकं आकृतिपदार्थकत्वात् । वा. २।१।१४।४६. ● भेदो न कर्मणः उत्पत्तिवाक्ये द्रव्यविशेषानुक्तौ, यथा ' अग्निहोत्रं जुहोति ', ' दध्ना जुहोति ', ' पयसा जुहोति ' इत्यत्र । वि. २।२।१०. ● भेदो न भवति यागस्य द्रव्यभेदेऽपि । ६।३।१।११–१२. ● ' भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् । ' वा. २।१।१४।४६. ● भेदो यावत्तावदुक्तः तावत् दोषशेषिभावो नास्ति । ( अतः द्वितीयानन्तरं तृतीयोऽध्यायः ) । टुप्. ७।१।१।१. ● भेदः सत्ताशब्दान्तरयोः गुणकर्मणोश्च अभिधीयते ' स्वरूपाभिधानस्वात्सत्ता शब्दान्तरात् पृथक् । व्याप्त्यसमवायाच्च स्वरूपा भिन्ना गुणान्तरात् ॥ ' वा २।१।१।२६. ● भेदः समिदाद्यङ्गानां दर्शपूर्णमासयोः । २।२।२।२. ● अविशेषेणोपदिष्टमाने हि पूर्वकर्मणि येनापि प्रकारेण उत्तरस्य भेदः प्रतीयते, न तु प्रकरणान्तरं सदपि किंचिदुपाकरोति, तथा च ' एतं चातुर्मास्येष्टिनिर्वा ' ( २।३।१२।२५ ) इत्यत्र वक्ष्याम. । वा २।३।१२।२४ पृ. ६१५. ● भेदं विना प्रकृतिविकारभावायोग । सु. पृ. ४०९. ● भेदेन व्यपदेशः पृथक्त्वे सति भवति । भा १०।६।११।१४. ● भेदस्य अग्रहणं अविज्ञातत्वात् अज्ञानिनां व्यालादीनां च इष्टम् । अग्रहणे च भेदस्य नान्यतरं व्यपदेष्टुं शक्यते । बृहती. पृ. १८४. ● भेदे एकदेशस्यापि प्रमाश्रितं स्वन्वते वा । ६।८।८।१०–१६.

● भेदाग्रहणात् तद्बुद्धिः अतस्मिन्नपि भवति । बृहती. पृ. २०४.

● भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः । बृहती पृ. २०५.

● भेदाभेदौ आकृतिव्यक्त्योः । मीको. पृ ७८६ ' आकृतिवाद ' इति निर्दो आख्यायिकायां द्रष्टव्यम् । ● भेदाभेदौ । ' इव गौः ' इति पदयो भिन्नप्रवृत्तिनिमित्तयोः सामानाधिकरण्येन अनुपपत्त्यादुत्तानीयत्वेन भेदाभेदसिद्धिः । एवं अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोरपि भेदाभेदोऽनुसंधेयः । मणि. पृ २३

* भेदाभेदनिरासः । सम्प्रति भेदाभेदौ निराक्रियेते । केचित् जातिव्यक्तिगुणगुण्यवयवावयव्यादीनां भेदाभेदौ वर्णयन्ति । तथाहि, जातिव्यक्त्योर्भेदस्तावत्सर्वजनसिद्धः । अभेदोऽपि तयोः प्रतीयते । खण्डो गौरित्यत्र प्रतीतौ तावत् खण्डतादात्म्येन गोत्वं प्रतीयते, अन्यथा खण्डश्च गौश्चेति प्रतीतिः स्यात्, खण्डस्य गोत्वं इति वा । न कदाचिदपि तथा प्रतिपत्तिः । अतः खण्डतादात्म्येन गोत्वस्य प्रतीतत्वात् खण्ड एव गौरित्यभेदः प्रतीतः । तथा अनेन प्रतीतौ खण्ड एव गौः, न मुण्ड इति व्यवहारात्, खण्डतादात्म्येन प्रतिपन्नस्यैव मुण्डाद्भेदोऽप्यवसीयते । तथा मुण्डो गौरित्यत्र मुण्डतादात्म्येन प्रतिपन्नस्य सामान्यस्य न खण्ड इति व्यावृत्तिदर्शनात् भेदोऽप्यवसीयते । एतत् उक्तं भवति, यस्यां व्यक्तौ तादात्म्येन सामान्यस्य प्रतीतिः, तस्या व्यक्तौ तया प्रतीत्या तदभेदः एव प्रतीतः ।

अथाप्यामेन प्रतीतौ भेदस्य विषयीकर्तुमशक्यत्वम्, किन्तु व्यक्त्यन्तरात् भेदः प्रतीयते, अतो जातिव्यक्त्योः प्रत्यक्षेणैव भेदोऽभेदश्च प्रतीतः । न च भेदाभेदावेकत्र समावेशविरहात्, सदसत्त्ववदिति वाच्यम्, विरोधाभावात्, ययोरेकत्र प्रतीतिर्नास्ति तयोरेव विरुद्धत्वम्, यथा सदसतोः । तदुक्तम् 'प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।' इति । प्रतीतयोरपि विरोधेऽङ्गीक्रियमाणे एकस्यैव सामान्यस्य नानाभूतासु व्यक्तिषु वृत्त्यपरिसमाप्त्या वृत्तिर्नाङ्गीक्रियेत । यदि प्रतीतिबलादङ्गीक्रियते, तर्हि भेदाभेदयोरपि समानमिति तुल्यचर्चः । किञ्च, प्रथमव्यक्तिदर्शने तावदेव प्रतीयते, इदानीमनुवृत्ताकारस्य प्रतीतिरेवाङ्गीकृता सर्ववादिभिः । किञ्च अभेदप्रतीतिर्नास्तीति यो वदति, तस्य सर्वलोकविरोधः । धर्मिणामेव विस्तारिताक्षाणां पुरतः स्थितेषु वस्तुषु प्रथमं एकाकारेणैव प्रतीतिः । अतः सर्वेषु वस्तुषु सर्वेषां प्रथममभेदप्रतीतिरेव समुत्पद्यते पश्चात् भेदप्रतीतिः । अतोऽबाधितविषयप्रतीतिसिद्धौ भेदाभेदौ नापह्नोतव्यौ ।

किञ्च, अयं गौरिति सामानाधिकरण्येन प्रतीतिरस्तीति निर्विवादम् । तत्र अत्यन्तभिन्नयोर्गवाश्वयोः यथा सामानाधिकरण्यं न दृश्यते, तथाऽत्यन्ताभिन्नयोरात्मादिस्वरूपप्रतिपत्तौ न च दृश्यते । अतोऽत्यन्तभिन्नादत्यन्ताभिन्नाच्च व्यावृत्तं सामानाधिकरण्यं भेदाभेदौ कल्पयति । न च वाच्यम्, अत्यन्ताभिन्नयोरपि प्रकाशप्रकाशकतया प्रतीतत्वेन सामानाधिकरण्योपपत्तिः इति, प्रकाशप्रकाशकत्वस्यैव अत्यन्तभिन्नयोरत्यन्ताभिन्नयोश्च अदर्शनात् तदपि भेदाभेदमेव कल्पयति । न हि अत्यन्तभिन्नयोर्घटपुरुषयोः प्रकाश्यप्रकाशकत्वं सामानाधिकरण्यं वा दृश्यते । न च समवायनिबन्धनं सामानाधिकरण्यम्, समवायसम्बन्धस्यैव प्रमाणाभावेनानभ्युपगमात् । अतो येन पिण्डेन अभिन्नं सामान्यं प्रतीयते, तदपेक्षया भिन्नमेव पिण्डान्तरापेक्षया अभिन्नम् । यथा एक एव देवदत्तः पुरुषान्तरापेक्षया दीर्घः प्रतीयते, स एवान्यापेक्षया ह्रस्वो भवति, तथा भेदाभेदावपि एकप्रतीतिसम्बन्धित्वादपह्नवमर्हतः । तदुक्तम् 'सर्ववस्तुषु बुद्धिर्या व्यावृत्त्यनुगमात्मिका । जायते द्व्यात्मकत्वेन विना सा च न सिध्यति ॥'

अत्रोच्यते । ययोर्जातिव्यक्त्योर्भेदः प्रतीतः तयोरेवाभेदः प्रतीयते इति दुर्घटं वचः । तथाहि, अनुवृत्ताकारस्वभावा जातिः प्रतीता, व्यावृत्ताकारस्वभावा च व्यक्तिः । अतः आकारद्वयव्यतिरेकेण तयोरभेदकं नाम आकारान्तरं न पश्यामः । आकारान्तरभावेऽपि सोऽपि तृतीयः प्रकारः स्यात्, न तु जातिव्यक्तिस्वरूपं तयोरभेदावभासः सः । यथाऽयमनयोः संयोग इति प्रतीतौ संयोगिद्वयाकारव्यतिरेकेण संयोगाकारस्तृतीयः ।

ननु यथा संयोगिनोराकारः संयोगाकारः एवं जातिव्यक्त्योरभेद इति प्रतीतौ अभेदाकारे तात्पर्याकारो न स्यात् । अत्रोच्यते न वयं जातिव्यक्त्योरभेद इत्यभेदप्रतिपत्तिं अभ्युपगच्छामः किन्तु भिन्नाकारेण प्रतिपत्तिमेव, नहि जातिव्यक्ती एकाकारेण कदाचित् प्रतीयेते । अतो न तृतीयाकारप्रसङ्ग इति । तत्र, भिन्नाकारेण प्रतीतयोः कदाचिदेकाकारप्रतीतिरसिद्धैव । तथाप्युच्यते, स चायमेकाकारेण यदि तयोः सम्बन्धित्वेन प्रतीतः, तदा संयोगवत्तृतीयाकारः स्यादिति ... प्रतीतिर्नास्ति चेदेकाकारप्रतीतिरेव, तर्हि जातिव्यक्त्योः का वार्ता ? वस्त्वन्तरप्रतीतिरेव भातु, को दोषः ? अथ निरूप्यमाणवस्त्वन्तरस्यादर्शनात् तयोरेव आकार इत्यङ्गीक्रियेत,

• भेदनादिवत् । काम्यमानफलसाधनत्वेन हि तानि (काम्यानि) कर्माणि कामोत्पत्तौ सत्यां कर्तव्यानि भवन्ति इति कामनाया निमित्तत्वमुच्यते, न तु भेदनादिवत् निमित्ततया वाक्येनान्वयात् । रत्न. ५।३।१२। ३२.

• भेदनहोमः तु निमित्तानन्तरमेव क्रियते । टुप्. ४।३।१६।३९ वर्णकं २. • भेदनहोम. स्कन्दनहोमश्च न लौकिके । वि. ६।५।१५.

• भेदनहोमादीनां नैमित्तिकानामनुष्ठाने पाठक्रमो न नियामकः किन्तु यथानिमित्तमनुष्ठानम् । भाट्ट. ५।१।१२. • भेदनहोमादीनां नैमित्तिकानामनेकेषां प्रयोगवचनपरिगृहीतत्वात् समुच्चयः, न तु विकल्पः भेदनादिनिमित्तप्रयोजीय विहितत्वात् । वि.१२।३।६.

• भेदनहोमादिवत् । भेदनहोमो यथा क्रतु-निमित्त-उभयमनुक्त. तथा चयने वैश्वानरयाग । भाट्ट. ४।४।६.

⧗ भेर्याघातन्याय. । तत्रथा भेर्याघातो भेरी-माहत्य कश्चिद्दिव्यानिपदानि गच्छति, कश्चिन्नियत्, कश्चिदत्यतिरिक्तदेव प्रकृतेऽपि । साहस्री. ६०८.

⧗ भैरवविभ्रन्यायः । मञ्जून्यायवदेव अयम् । साहस्री. ३९९.

• भोगः सुखदुःखविषय. अवरोधानुभव उच्यते । शा. १।१।५ पृ. १२५.

• भोग्यस्य सामर्थ्यापि भोक्तृत्वागतौ भोगो न दृश्यते । [illegible] ३।८ पृ. ५६.

• भोजनं भ्रातृव्येण अनाचारो दाक्षिणात्यानाम् । वा. १।३।३।७ पृ. २०४. • भोजनम् । दक्षिणहस्तभोजनाचारमूलभूता श्रुति: 'अश्मर वद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽश्नाति' इति । वा. १।३।४।९ पृ. २३१, • भोजनम् । पात्रधारणपूर्वकभोजनाचारमूलभूता श्रुतिः 'सव्यवस्तानीमुपदधाति' इत्याद्या अधिकरणे । १।३।७।९ पृ २२१. • भोजनम् । प्राङ्मुखभोजनवाचारविशेष दिङ्मोहस्य ('देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इति वाक्योक्तस्य) । सु. पृ. ४, • भोक्ता निम्बाकोच्छिष्टादृशा-चस्य अनाचार उदीच्यानां दाक्षिणात्यानां च । वा. १।३।३।७ पृ. २०४ • भोजने उपयुक्तं कदलीपर्णं प्रशस्तमपि न पुनः शिष्टाः स्वीकुर्वन्ति । वि.१।३।१२, • भोजने 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति स्मार्तो नियमः । तत्रोपनीतस्यैवाधिकारो नानुपनीतस्य । ६।२।६. • भोजने प्राङ्मुखता नियम्यते । भा. ५।२।७।९.

• भोजनादौ मौनविधाने शाकवैशिकादि हस्तसंज्ञादिना न कार्यम् । सु. पृ. ३१८, • भोजनादौ लौकिके अपि वैदिकप्राङ्मुखत्वादिनियमो दृश्यते । पृ. ९२९.

• भोजनवत् । यथा चतुर्थे चतुर्थेऽहनि वैनस्तो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति । भा. १०।५।१४।५५.

• भोज्यं अननिकाठिन्यात् अविभ्रमत्वचर्वणा नपेक्ष चर्वयित्वैव यन्निगीर्यते तत् इति हेमाद्रिः । बाल. पृ. १६८.

• भ्रम अप्रमाणात्मक. । नार्थशून्यात्मकः । ऋजु. पृ. ५७. • भ्रम. । यस्य हि दर्शनस्य प्रमाणं नास्ति व्यामोह. स. । यथा शुक्तिकायां रजतविज्ञानम् । भा ३।८।१२।१८. • भ्रमे अलिङ्गे लिङ्गस्य साधारणरूपं पश्यन् अलिङ्गतामविविञ्चन् लिङ्गतामध्यस्य दृष्टा स्मरन् लिङ्गसमाहार प्रवर्तयति । ऋजु पृ २१. • भ्रमे दोष कारण इति नैयायिका । मणि. पृ १४.

• भ्रमज्ञानम् । ननु प्रत्यक्षमपि व्यभिचारि स्यात् । तत्रापि विनाऽप्यर्थेन ऐन्द्रियकं ज्ञानं दृश्यते शुक्तिकायां रजतमिदमिति । (उच्यते–) न खलु ऐन्द्रियकं ज्ञानं व्यभिचरति । एकं हि तत्र ज्ञानं इदं इति चाक्षुषम् । अपरमपि रजतमिदं इति रजतावलम्बि स्मरणज्ञानम् । तयोर्विवेकाग्रहणनिबन्धनो भ्रमोऽयम्, न पुन. ऐन्द्रियकं विज्ञानं व्यभिचरति । बाधकं च तत्र ज्ञानं विवेकग्रहणम् । प्रत्यक्षादिषु दोषवशात् इन्द्रियं न सम्यक् कार्यं करोति । तेन विवेकाग्रहणात् भ्रम. । बाधकज्ञानोत्पत्तौ सत्यां विवेके अवधारिते प्रतिपद्यविज्ञानं विवेकग्रहणनिबन्धनम् । भ्रान्तिज्ञानं न दृष्टिरूपां बाधका-

वस्थाभाविनिर्दोषेन्द्रियादिसामग्रीप्रभवं किन्तु दोषखण्डितशक्तिकज्ञानजननकारणचक्रोत्थम् । नैव कदाचित् विज्ञानं ( वेद्य प्रति ) व्यभिचरति येन अनिश्चयः स्यात् । बाधकज्ञानमपि नैयायिकव्यभिचारिता दर्शयति । किन्तु ग्रहणस्मरणयोः विवेकमवधारयति । ऋजु. पृ. १९–२०.

* भ्रमसंशयोत्तरमन्यत्र विरोधदर्शनस्य भ्रमाविनिरोधित्वेन हेतुत्वम् । मणि. पृ. ३०.

* भ्रमणस्यादिन्यायः । वाक्यत्व नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्य–क्रमवद्वर्णात्मक–पदसमूहे अन्त्यवर्णे वा विलक्षणावयवपदार्थसम्बन्धग्रन्थस्याकाङ्क्षाव्यवधानात् भ्रमणकादिन्यायेन कल्पयितु तद्भूताधिकरणे नाव्यवसितम् । पा. ३।३।१।१ पृ. ८०५.

ॐ भ्रमरन्याय. ॥

१ यथा भ्रमरो हि पुष्पाणां कण्टकादीरलक्षरा गन्धगुणमानमादत्ते, तद्वत् प्रकृतेऽपि । २२३.

२ यथा भ्रमरो हि प्रतिपुष्पं गन्धमादत्ते, निर्गन्धीभूत परित्यज्यान्यत्पुष्पमवलम्बते, तथा प्रकृतेऽपि । २२४.

३ यथा भ्रमरो हि स्वदंशेन कठिनकाष्ठमपि सच्छिद्रीकरोति, परन्तु स्वप्रीतिपात्रनोमलावयवसुकुमारकमलकुसुमान्तःपाती स्वजातिक्रिया त्यजति, तथा सन्मित्र सन्मित्र प्रति वर्तते । साहस्री. २२५.

ॐ भ्रष्टावसरन्याय । यथा केनचित् कश्चित् प्रति उक्तम्, ‘त्वया अमुकावसरेऽआगन्तव्यम्, तव अभीष्टसिद्धिर्भविष्यति, अन्यथा न’ । एवं प्रतिज्ञातावसरे स न आयातः, भ्रष्टावसरत्वात् तस्य अभीष्टसिद्धिः न जाता, तथा प्रकृतेऽपि । साहस्री. ३५.

* ‘भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥’ (मनु. ९।१८२ ‘सर्वास्तास्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्’ इति मुद्रिते मनौ पाठ. ) । इत्येवं भीष्मः कैवल्यशार्पलीसम्भः आसीदिति गम्यते । वा. १।३।३।७ पृ. २०८.

* भ्रातृजायाया. कनीयोऽर्जितायाः परिणयनं अनाचारः । वा. १।३।३।७ पृ. २०३–२०४.

* भ्रातृव्यवान् आध्वरकल्पया यजेत । भा. ११।१।४।१९ * ‘भ्रातृव्यवता अदाभ्यो ग्राह्यो ग्रुभूषताऽग्नुः’ । संकर्ष. ३।३।१५. * भ्रातृव्यवतः अभिजित्विरात्र. कर्तीये । वाल. पृ. ३४, * भ्रातृव्यवतः गौरविरात्र. कर्तीये । पृ. ३४.

* भ्रान्तः । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति व्यवस्यते कल्पयितुम् ( प्रत्यक्षेणोपलभ्यमान. इदकाव्यतिरिक्तः अवयवी ) । टुप्. ९।१।७।२७ टिप्पण्याम्.

* भ्राष्ट्राग्निना काम्येन अग्निचयनगतेन उख्यस्याग्नेर्बाधः । १२।४।७।१७–२५. मीको. पृ. २४ ‘अग्निचयनगतेन स्वल्पद्रव्यसाध्यकाम्यादृष्टेन०’ इत्यत्र द्रष्टव्यम् । * भ्राष्ट्राग्नेः काम्यस्याहवनीयत्वाभावादाहवनीयधर्मवत्ता नास्ति चयने । १२।४।८।२६–२७. मीको. पृ. २६ ‘अग्निचयनप्रकरणे श्रुतम्य०’ इत्यत्र द्रष्टव्यम् ।

* भ्राष्ट्रादिकाम्येऽग्नौ आधानादिसंस्काराणां लोपश्रवणे । १२।४।९।२८–२९.

* भ्रूणहा । ‘तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवति’ इति । भ्रूणहा पापकृत्तमः । यश्चोभयोर्लोकयोरुपकरोति, तस्य हन्ता भ्रूणहा । यज्ञहन्ता भ्रूणहा । स यजमानवधकारी । तस्मात् यज्ञ भ्रूणशब्देनाभिदधाति । स हि निर्मिति वा सर्वं भूतिं वा नयति । अतो भ्रूणहा यज्ञवधकारी । तथा ‘आत्रेयीं हत्वा भ्रूणहा भवति । आत्रेयीमापन्नगर्भामाहुः । अत्र कुक्षौ अस्या विद्यते इत्यात्रेयी’ ( पूर्वपक्षे इदम् ) । भा. ६।१।३।७.

च तत्र युक्त्यपेक्षा, एवं कामिनो जिज्ञासया अपि ज्ञानमात्रं प्रति प्रतिबन्धकत्वम्। इत्थेवं यत्र पृथक्प्रतिबन्धकत्वम्, तत्रास्य प्रवृत्तिरिति। माहत्स्री. ४९१.

* मण्डपस्य आग्नीध्रस्योपस्थानं प्रकृताभिरेव आग्नेयीभिः एवं हविर्धानाख्यस्य प्रकृताभिरेव वैष्णवीभिः, तथा सदोनामकस्य प्रकृताभिरेवैन्द्रीभिः, ज्योतिष्टोमे। (याज्ञिकास्तु एभिर्मन्त्रैः अभिमर्शनमाचरन्ति नोपस्थानम्। तत्र 'आग्नेय्यर्चाऽऽग्नीध्रमभिमृशेत्' इति तैत्तिरीयश्रुतिरेव प्रमाणं द्रष्टव्यं इति शम्भुभट्टः)। वि. ३।३।८.

* 'मण्डलेष्टकाः उपदधाति' इति चतुरस्राणामेवेष्टकानां नामान्तरं अग्निचयने। संकर्ष. २।१।२५. मीको. पृ. २४ 'अग्निचयने चतुरस्राण०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* मण्डूकेन विकर्षणं अग्निचयने 'मण्डूकेनाग्निं विकर्षति' इति विहितम्। तच्च अतीष्टके न कार्यं किन्तु सत्येव, अर्थ. एकत्वात्। वि. ५।१।८.
* मण्डूकस्य अदेवतात्वेऽपि अग्निचयने विनियुक्तत्वेन वास्तुनः हस्तेपस्य पूर्वपक्षाभिमतम्। सु. पृ. ६४०.

* मण्डूकतोलनन्यायः। यथा मण्डूकतोलने तुलास्था मण्डूकास्तुलातः उत्प्लुत्योत्प्लुत्य पतन्ति तथा प्रकृतेऽपीति बोध्यम्। साहस्री. १०.

* मण्डूकप्लुतिन्यायः। यथा मण्डूकाः उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वदन्यत्रापि। अयम् 'इको गुणवृद्धी।' पा० १।१।३ इति सूत्रमहाभाष्येऽभिहितः। माहत्स्री. ४३९.

* मण्डूकप्लुतिवत् क्वचिदनुवृत्तिः। (मण्डूको गच्छन् उत्प्लुत्य उत्प्लुत्य गच्छति मध्यभूभागान् न स्पृशति तद्वत्)। मणि. पृ. ७१.

* मण्डूकवसया अक्ताक्षाः वराहान् उपगानिम पदान्ति। वृहती. पृ. २०६। न मण्डूकवसाञ्जनं नेत्रसंस्कारः। किन्तु शक्तिप्रतिबन्धकमेव। अत एव वंशाकारस्य अप्रतीतिः, उपगाधारस्य स्मरणं इति स्मृतिप्रमोषे दर्शितम्। ऋजु. पृ. २०७.

* मण्डूकसूक्तस्य अग्नौ प्रयोगः, तत्र मण्डूकेन अग्निविकर्षणाम्नानात्। (अतः मण्डूकपदस्य अर्थवत्त्वम्)। वा. २।१।५।२२-२३.

* 'मत्वर्थो -वाक्यभेदाभ्यामेकवाक्यवशाद् भवेत्। इत्यर्थः पदोत्थया गम्यमानोऽतिदुर्बलः॥' (इदं पूर्वपक्षे, 'श्येनेनाभिचरन् यजेत' इत्यत्र। सिद्धान्ते तु- ) गुणवचनेभ्यश्च मत्वर्थलोपः स्मर्यते, न द्रव्यवचनेभ्यः। इत्यर्थस्तु धात्वन्तस्य पदस्य प्रयोगात् स्वयमेवोपजायते। मत्वर्थलक्षणा च स्वयं कल्पनीया, व्यक्तस्तु वस्त्वर्थः। वा. १।४।४।५.

* मत्वर्थीयः। 'मोऽस्यास्तीति च सम्बन्धे मत्वर्थीयः प्रवर्तते'। वा. ३।१।६।१२ पृ. ६७३, * षष्ठीसप्तम्या हि यादृक् सम्बन्धः स्वप्रधानः असत्त्वभूतश्च प्रत्याय्यते न तादृक् मत्वर्थीयेन। १।१।६।१२ पृ. ६७६.

* मत्वर्थलक्षणा गौण्या बाध्यते श्येनादौ, उपमानानर्थक्यात्। बाल. पृ. १८५, * मत्वर्थलक्षणा। विशिष्टविधिष्वपि यत्र 'सोमेन यजेत' इत्यादौ तृतीयान्तेन द्रव्यादिविधिः, तत्र सोमादिप्रातिपदिके सोमादिमान् यागो मत्वर्थः तल्लक्षणाऽपि। तथाहि, सोमादि हि करणत्वेन श्रूयते, करणं न कारकत्वात् क्रियैव सम्बध्यते आन्येन, क्रिया चात्र फलभावनैव प्रत्ययवाच्या, न च तस्या सोमादेः करणत्वं सम्भवति समानपदोपात्तधात्वर्थावरोधात् इति भावार्थाधिकरणे (२।१।१।१-४) स्थितम्, न च धात्वर्थेनैव सोमादेः सम्बन्धः सम्भवति तस्य धातुना प्रयत्नार्थं प्रति करणत्वेन उपादानात् क्रियारूपतया अनवस्थानात्, क्रियारूपत्वे वा भावार्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः। न च सत्यपि प्रत्ययवाच्याया फलभावनायाः धात्वर्थावरोधे व्यर्थाश्रितधात्वर्थभावनया सोमादेः सम्बन्ध इति वाच्यम्। तस्या इहाश्रुतत्वात्, अश्रुतया च तया शब्दान्तरस्यान्वययोगात्। फलभावना हि अत्र श्रुता, न धात्वर्थभावना। न चाध्याहृत्य धात्वर्थभावना तया सोमादेरन्वयः, सोमेन साध्यमानेन यागेन इष्टं भावयेत् इति निराकृति अध्याहारेण

नामधेयत्वानुपपत्तेः । तदनन्तरं यत्र मत्वर्थे करणं यागः तमेव तृतीयान्तेन सोमादिपदेन वर्तितव्यं नान्या गतिरस्ति । तत्र श्रवणं निरूढत्वेन सोमादिपदस्य सामानाधिकरण्यमात्रेण नामत्वासम्भवात् अर्थान्तरवाचिनः सोमादिपदस्य अर्थान्तरे यागे वृत्तिं मत्वर्थलक्षणया अङ्गीक्रियते इति ।

सेयं मत्वर्थलक्षणा विशिष्टविधावेव इति ग्रन्थतः प्रतिभाति । दध्यादधिकरणवार्तिके हि ( १।४।२।१–२ ) कर्मणि गुणविधिः, फले गुणविधिः, विशिष्टविधिरूपेण वा इति विकल्प्य त्रिष्वपि पक्षेषु पक्षपञ्च दोषा उक्ताः । तत्र तृतीयपक्षे एव मत्वर्थलक्षणादोष उक्तो नेतरयोः । शास्त्रदीपिकायामपि ' विशिष्टविधिपक्षे च भवेन्मत्वर्थलक्षणा ' इति । तेन ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यादिगुणफलसम्बन्धेषु यथा धात्वर्थाभिधानात् न मत्वर्थलक्षणा अभिमता, एवम् ' व्रीहिभिर्यजेत ' इति कर्मणि गुणविधावपि इति । केचिदेवमेव सिद्धान्तं वर्णयन्ति–ननु धात्वर्थस्य करणत्वानवगतिः मत्वर्थलक्षणाया बीजम् । तत्करणत्वं च न शब्दाभिहितमस्ति, किन्तु लाक्षणिकम् । भावनायाश्च करणाकाङ्क्षया तल्लक्षणा यदि स्यात् । करणाकाङ्क्षा च विधेयाया भावनायाः स्यात्, नानूद्यमानायाः । सोऽयं भावार्थाधिकरणन्यायः । तेन ' व्रीहिभिर्यजेत ' इत्यादौ भावनाऽनुवादात् न करणाकाङ्क्षाऽस्ति, इति न यागः धात्वर्थः करणत्वेनोच्यते, किन्तु कर्मत्वेनैव, भावार्थाधिकरणन्यायप्रवृत्तेः । धात्वर्थकर्मिकाया च भावनाया व्रीह्यादेः करणत्वेनैव अन्वयो घटते, इति न मत्वर्थलक्षणा इति । तदयुक्तम् । धात्वर्थस्य हि करणत्वं सिध्यति, तथापि भावार्थाधिकरणन्यायेन यागस्वरूपे व्रीहिविधिरनर्थकः, इति भावनायां गुणविधानं अनद्य धात्वर्थं करणत्वेन अनुवदितव्यो लक्षणया, इति गुणविधावपि सिद्धा मत्वर्थलक्षणा, तदुक्तं ' विधाने वाऽनुवादे वा यागः करणमिष्यते ' इति (वा. १।४।१।२ पृ. ३२८. पादयोः स्थाने च–पदयोः पाठान्तरम्) । विशिष्टविधावेव तु मत्वर्थलक्षणोक्तिः भावार्थाधिकरणन्यायेन अतिशुष्कत्वात् कृता इति ज्ञेयम् । इति मत्वर्थलक्षणा । पृ. ९६–९७.

* मत्वर्थलक्षणातः लक्षितलक्षणा दुर्बलतरा । सु. पृ. ४१२.

* मत्वर्थवादार्थः मीको. पृ. ६०९ ' अरुणान्याय ' इत्यत्र वार्तिके द्रष्टव्यः ।

* मतुप् अस्त्यर्थे स्मृतः । सु. पृ. ८९१.

* मतुपः अस्तित्वयोगविषयत्वम् । वा. ३।३।१।२ पृ. ९७६.

¶ मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः । अयं न्यायो यत्र अधिकार्थलाभे अल्पार्थे वृत्तिरिति विवक्षा तत्र प्रवर्तते । मत्तकाशिनी स्त्रीविशेषः । साहस्री- ४७७.

* मत्स्यान् न पयसा समश्नीयात् । यद्यपि सगुणा मत्स्या भवन्ति तथापि पयसा सह न समश्नन्ते लोके । भा. १०।७।१९।६६ .

¶ मत्स्यकण्टकन्यायः । यथा मत्स्यमांसार्थी तत्संबद्धान् कण्टकादीनपि तावत् गृह्णाति, त्यजति च तस्मिन् गृहीते, तथा नरामपत्यार्थलिप्सया तदुपाधी अपि गृह्येते, त्यज्येते च भागत्यागलक्षणया सति लक्ष्यार्थप्रदे । ' तस्यापत्यम् ' ( पा० ४।१।९२ ) इतिसूत्रमहाभाष्ये अयमुक्तः । तथाहि ' यथा कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति ' इति संक्षेपः । साहस्री २३९ .

* मथितः अग्निः आधाने गार्हपत्यार्थं परः । संकर्ष. ३।२।१. मीको. पृ ९२७ 'आधाने मथितोऽग्निः ' इत्यत्र द्रष्टव्यम् ।

* मथुरानिवासिब्राह्मणीनां सुरापानं अग्रतेऽपि दृश्यते, स अनाचारः । वा. १।३।३।७ पृ. २०४. अधिकं तु मीको. पृ. ३६९ ' अनाचाराः ' इति चिन्हे द्रष्टव्यम् ।

¶ मधु न दीक्षिता ब्रह्मचारित्वात् । १०।६।१२।३२ ॥

नवमाध्याये सत्रे आद्ग्रहात् ' सस्थिते पूर्वे पक्षे मध्वाशयेत् घृतं वा ' इति प्राप्तम् । परन्तु दीक्षिणः मधु न भक्षयेयुः, ब्रह्मचारित्वात् । सत्रिणो हि दीक्षिता,

दीक्षितत्वात् ब्रह्मचारिणः, ब्रह्मचारिणा च ' मधु मांसं च वर्जयेत् ' इति मधुनो निषेधात् । तस्मात् सत्रिणः मधु न प्राश्नीयुः इति पूर्वः पक्षः ।

**प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥**

गवामयने सत्रे द्वादशाहात् ' संस्थिते पृष्ठ्ये षडहे मध्वाश्येत् घृतं वा ' इति चोदकेन प्राप्तं मधु सत्रिभिः प्राश्येत । सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वेऽपि ब्रह्मचारिणा निषिद्धमपि मधु प्राशनीयमेव यज्ञार्थत्वात् क्रतुधर्मत्वात् । पुरुषार्थः प्रतिषेधः परवशं प्राशनम् । क्रतुसाद्‌गुण्यार्थं सत्रिभिरपि मधु प्राशनीयम् । इति सिद्धान्तः । वाशब्दः न प्राश्नीयुरितिपूर्वपक्षव्यावृत्त्यर्थः । के.

● मध्वशनं द्वादशाहगते पृष्ठ्यषडहे अवभिर्शसमीपे क्रियते । क्वचित् विकृतौ यत्र अवभृथादिः निवृत्तः पृष्ठ्यषडहः तत्र निवृत्तिसमीपे कार्यम् । मध्वशनस्य षडहाङ्गत्वात् अवभृथसामीप्यस्य च आकस्मिकत्वात् । वि. १०।६।९. ● मध्वशन षडहधर्मो गृहपतिव्रतं द्वादशाहे । भाट्ट. १०।६।१९. ● मध्वशनेन पृष्ठ्ये षडहे उपदिष्टेन अतिदिष्टस्य पयोव्रतादेः न बाधः, किन्तु समुच्चयः । १०।८।१।१–२. मीको. पृ. २३२७ ' नारिष्टहोमादीनां आतिदेशिकानां० ' इत्यत्र द्रष्टव्यम् ।

● मध्वशनादे. अनुष्ठानं गवामयने पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते एकदैव न तु प्रतिषडहान्ते । १०।६।१०। २९–३०. मीको. पृ. १५५४ ' गवामयनादौ पृष्ठ्यषडहावृत्तौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● मध्वशनादेरप्यावृत्तिः पृष्ठ्यषडहस्य कर्मान्तरत्वपक्षाभावेनावृत्तौ गवामयने । १०।६।११।३१.

● मध्वशनघृताशनयोः वैकल्पिकयोः गवामयने पृष्ठ्यषडहान्ते अनुष्ठानम् । १०।६।९।२७–२८. मीको. पृ. १५५२ ' गवामयने पृष्ठ्यषडहान्ते० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

मधूदके द्रवसामान्यात् पयोविकारः स्यात् । ८।१।१९।४०॥

चित्रायामिष्टौ ' दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यं भवति ' इति श्रूयते । तत्र मधुनि उदके च को विध्यन्त इति विचारः । तत्र पूर्वपक्षमाह । मधु च उदकं च ते मधूदके पयोविकारः स्यात् । पयसो विकारः । पयः प्रकृतिः । तस्मात् मधूदकयोः पयसो विध्यन्तः स्यात् । द्रवसामान्यात् । मधु उदकं च द्रवः, पयश्च द्रवः । इति द्रवत्वं सामान्यम् ।

**आज्यं वा वर्णसामान्यात् । ४१ ॥**

चित्रेष्टौ मधूदकयोः पयः प्रकृतिः इति पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । मधुनः उदकस्य च हविषः आज्यं प्रकृतिः स्यात् न पयः । वर्णसामान्यात् । मधूदकयोः आज्यस्य च वर्णः समानः न मधूदकयोः पयसश्च वर्णः समानः । तस्मात् आज्यं प्रकृतिः तस्य विकारः मधूदके । अतः आज्यविध्यन्तो मधुनि उदके च ।

**धर्मानुग्रहाच्च । ४२ ॥**

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः इति सिद्धान्ते हेत्वन्तरमाह । मधुनि उदके सुपवा आज्यधर्माणां उत्पवनादीनां अनुग्रहो भवति, पयोधर्माणां दोहनादीनां तु नानुग्रहः । तथा च मधूदकयोः आज्यधर्मानुग्रहात् आज्यविध्यन्त एवेति ।

**पूर्वस्य चाविशिष्टत्वात् । ४३ ॥**

चित्रेष्टौ मधूदकयोः हविर्विशेषयोः आज्यविध्यन्तो ग्राह्यः वर्णसामान्यात् इत्युक्तम् । पूर्वस्य च पूर्वपक्षोक्तस्य च द्रवत्वसामान्यस्य तु मधूदकयोः अविशिष्टत्वमेव । आज्यमपि अग्नियोगात् द्रव मधूदके च द्रवे इति तदपि सामान्यमत्र वर्तते एवेति न विशेषः । तस्मात् मधूदकयोः आज्यविध्यन्त एव स्यात् इति सिद्धान्तः । के.

● मधूदकयोः आज्यविकारत्वं अष्टमे ( ८।१।१९। ४० ) वक्ष्यते । सु. पृ. ८१२. ● मधूदकयोः चित्रेष्टिगतयोः आज्यधर्माणामतिदेशः । ८।१।१९।४०-४३. मीको पृ. २०८ ' अतिदेशः चित्रेष्टौ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● मधुभक्षणं क्रत्वर्थं सत्रिभिः कर्तव्यम् । १०।६। ३२।३२–३३. मीको. पृ. २२०२ ' द्वादशाहे सत्रात्मके सत्रिभिः० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* मधुभक्षणनिषेधः ब्रह्मचारिणा पुरुषार्थः । वि. १०।६।१२.

* मधुमिश्रेण दध्ना अग्निचयने अग्निं ( चितिसमुदायं ) प्रोक्षति । तच्च सकृदेव, न प्रतीष्टकम् । वि. ९।१।८.

* मधुयागः पशुकामेष्टौ सत्त्वामयतः उपांशुयाजस्य विकृतिः । वि. १२।२।७ वर्णक २.

* मधुकरन्यायः । मत्स्यपि विग्रहे हविषो देवतत्रभोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम् । शा. ९।१।४। प्रत्यक्षेणाग्नौ भस्मीभावावगमात्, मधुकरन्यायेन रसमात्रग्रहणे प्रमाणाभावाच्चेति भावः । सोम.

* मधुकरराजमधुमक्षिकान्यायः । यथा मधुकरराज मधुमक्षिका अनुवर्तन्ते, तथेन्द्रियाणि चित्तमिति योगशास्त्रे विस्तरः । साहस्री. ८७१.

* 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टो भवति द्विज.' अत्र प्रकृतिगतसंनिपत्योपकारकादृष्टार्थक्रियानिषेधः । बाल पृ. ९६.

* मधुपर्कार्थं अग्ने. सोमस्य च, अग्नीषोमीयः पशुः, औपवसथ्येऽहनि लौल्यात् पूर्वाह्णे क्रियते । वि. ४।२।११, ५।१।६.

* मधुमक्षिकान्यायः । सा हि रसगुणमेवादत्ते न कण्टकादि, तथा सज्जनः गुणमात्र गृह्णाति न दोषान् । संग्रह..

* मधुर. रस, स्निग्धः शीतो गुरु इति स्निग्धशीतत्वादीनां गुणान्तरविशेषत्वात् न रसेन सम्बन्धोऽस्ति इति रसलक्षितेन द्रव्येण सम्बध्यते । भा. ३।१।६।१२ पृ. १८४.

* मधुररसभावितानामाम्रबीजन्यायः । यथा मधुररसभावितानामाम्रबीजाना परिकर्षितया पथ्यामुक्ताना अङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्यनियम, तथा प्रकृतेऽपि । साहस्री-६९९.

* 'मध्यादवद्यति, पूर्वार्धादवद्यति' इत्यत्र समुदायेनानुसमय. । भा. ५।२।३।४–६. * मध्यात् पूर्वार्धात् इति द्विरवदान अवदानधर्म । वि ६।४।१.

* मध्यत कारिण ब्रह्मयजमानहोत्रुद्गातार. । मु. पृ. ११८३.

* मध्यदीपकन्यायः । 'मध्यमणिवत्' अस्य (न्यायस्य) प्रवृत्ति. । साहस्री. ६७१.

* मध्यमणिन्यायः । यथा नासिकाग्रलग्नमुक्ताफलयोर्मध्ये संयोजितो लोहितो मणिः मौक्तिके स्वप्रभया सुरक्तीवि प्रसिद्धम् । साहस्री. २४७.

* मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥

राजसूयप्रकरणे अभिषेचनीयमध्ये 'पष्ठौहीं दीव्यति' इति विदेवनादय. पठिताः । ते किं अभिषेचनीयस्याङ्गानि उत कृत्स्नराजसूयस्य इति विचारे पूर्वः पक्षः । यत् यस्य मध्यस्थ तत् तन्मध्ये तदङ्ग इति शेषम् । यत् विदेवनादि, यस्य अभिषेचनीययागस्य मध्यस्थं मध्ये पठितम्, तत् विदेवनादि तन्मध्ये अभिषेचनीयमध्ये अभिषेचनीयाङ्गं इति ।

सर्वासां वा समत्वाच्चोदनात. स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥

'पष्ठौहीं दीव्यति' इत्यादिविदेवनादीना अभिषेचनीययागमध्ये पाठात् अभिषेचनीयाङ्गत्व विदेवनादिचोदनाना इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षनिरासार्थं । विदेवनादिचोदनाना नाभिषेचनीयाङ्गत्व किन्तु सर्वासां इष्टिपशुसोमदर्विहोमचोदनाना विदेवनादिक अङ्गं स्यात् चोदनानां समत्वात् 'राजसूयेन स्वाराज्यकाम' इति फलचोदनाया. समत्वात् फलवत्त्वादिति यावत् । ननु अवान्तरप्रकरणेन अभिषेचनीयाङ्गत्व भवतु अत आह, नहि तस्य प्रकरणमिति तस्य अभिषेचनीयस्य प्रकरण नास्त्येव । तस्मान तदङ्गत्वम् । ननु तर्हि अभिषेचनीयमध्ये किमर्थं पाठ इति चेदुच्यते । देशार्थमुच्यते मध्ये इति । अभिषेचनीयस्य मध्ये विदेवनादिक देशार्थमुच्यते । देशार्थे कालार्थमित्यर्थः । विदेवनादीना सकलराजसूयाङ्गत्वेऽपि तेषामनुष्ठान अभिषेचनीये माहेन्द्रस्तोत्रकाले, तद्विधानार्थं अभिषेचनीयमध्ये पाठ । तस्मात् विदेवनादिकं सकलराजसूयाङ्गमेव । अनुष्ठान तु अभिषेचनीयगतमाहेन्द्रकाले माध्यन्दिने । के.

* 'मध्यमेन पलाशपर्णेन जुहोति' । संकर्ष. २।३।२. * मध्यमस्य इति यथा निरुपपद भवति

गृहमेधीये 'ओदनमुद्धरति' इत्यत्र। अन्यत्र सोपपदम् 'पञ्चाना मध्यमः', 'अष्टाना मध्यमः' इति। भा. ११।१।८।४६. ◉ मध्यमयोरेव पर्वणोः प्रणयननियम.। ७।३।१२८–२६. ◉ 'प्रयक्षनाद्याभोक्ताना (मन्थाना) मध्यमा चितिराश्रयः'। वा. ३।४।१२।२२ पृ. ३६४. ◉ मध्यमायामुपधायमिश्रीयते प्रकृत्युपकृत्वरात्। इति सकर्षे द्वितीयेऽध्याये (षड्विंशेऽधिकरणे) किं चितौ औत्तरवेदिका धर्माः कार्या न वा इति सदिह्य आन्युत्तरवेद्यो. समुच्चयाभावात् भिन्नकार्यत्वावगमेन अग्नेः उत्तरवेदिकार्यापत्त्यभावागतेः औत्तरवेदिकधर्मानतिदेश पूर्वपक्षयित्वा, सोत्तरवेदिस्तु 'अनु चित्या उत्तरवेद्यामग्निश्रीयते' इति वचनालोचनया समुच्चयावगमे अपि चयनानिष्पादितस्थलस्य 'अग्निं चिनुते' इति द्वितीयोक्तसंस्कार्यत्वे अस्य योग्यतया अग्निधारणार्थसंस्कारार्थत्वावगमेन 'उत्तरवेद्या अग्निं निदधाति' इत्यग्निधारणस्योत्तरवेदिकार्योपत्त्यवगमात्, कार्यैक्येऽपि च 'वेद्यां हवींषि आसादयति' इति वेदिर्हविषोरिव अग्न्युत्तरवेद्योरपि पाक्षिकप्राप्त्यभावेन नियमविध्यभावात् अन्योन्यनैरपेक्ष्यानवगतेः समुच्चयाविरोधात् उत्तरवेदिकार्यापत्त्या स्थलान्तरत्वाभावे तद्धर्मातिदेश सिद्धान्तयित्वा उत्तरवेद्या समुच्चीयमानेऽग्नौ चयने उत्तरवेदिकार्याभावे उत्तरवेदिधर्मा भवेयु इति पक्षा तन्त्यमाप्नुवन् औत्तरवेदिकधर्मप्राप्तिलक्षणस्य तदधिकारस्य अतद्विकारत्वपूर्वपक्षनिराकरणपूर्वकं उत्पादयिष्यमाणत्वात्। सिद्धस्य समुच्चयोक्त्या अतद्विकारत्वनिरासेन तद्विकारत्वस्य तत्र वक्ष्यमाणत्वात् तद्विकरणसिद्धः प्रावृत्तत्वैकत्वविचार.। सु. पृ. १४९.

◉ मध्यमचितौ त्रिवृष्यादीनां इष्टकानामुपधानं न पञ्चम्याम्। ५।३।७।१७–१९। तत्र लोकपृणाप्राक्। ५।३।८।२०

◉ मध्यमपुरुष' नहि पत्नीयजमन्त्रेण उपपद्यते इति वक्ष्याम (३।८।११।२३ इत्यत्र)। वा ३।१।४।१०.

◉ मध्यमपुरोडाशस्य यवमयस्य नियमश्रैयान्यायम्। भा. १०।७।१६।५१–५७.

◉ मनः (बौद्धमतेन)। न खलु मनो नाम चक्षुरादिवत् किञ्चिदिन्द्रियान्तरं बौद्धा आमहे, किन्तु पूर्वमेव विज्ञानं चाक्षुषज्ञानस्य उपादानमाचक्ष्महे। तदेव हि समविज्ञानत्वेन अनन्तरं चाव्यवहितत्वेन समनन्तरप्रत्यय इत्युच्यते। तत यदिन्द्रियजविज्ञानसमनन्तरप्रत्ययसहकारिणा तदिन्द्रियजविषयक्षणोपादानेन स्वक्षणान्तरेण इन्द्रियजविज्ञानसमानकालेन जनितं स्वजनकक्षणविषयं विशदाभं उपरतेन्द्रियव्यापारस्य ज्ञानम्, तत् मानसं प्रत्यक्षं (नाम)। न तत् इन्द्रियजं तद्व्यापारोपरमे भावात्। नान्तरविषयं इन्द्रियजविषयविज्ञानविषयक्षणजनितक्षणान्तरगोचरत्वात्। न च अन्धबधिराद्यभाव., तेषां इन्द्रियरहितत्वात् तज्जविज्ञानाभावेन उपादानविरहात्। न चाप्रत्यक्षं विशदाभासत्वात् इति। षयिपफा. पृ. ११०, ◉ मनसो विभुत्वनयः साङ्ख्यमते। भाणि. पृ ५४, ◉ मनसि इन्द्रिये 'सुखी इति प्रत्यक्षं इन्द्रियजन्यं प्रत्यक्षत्वात्' इत्यनुमानं प्रमाणम्। अन्ये तु सुखादीनां विशेषगुणत्वेन द्रव्यान्तरसंयोगासमवायिकारणकत्वे सिद्धे तादृशसंयोगाश्रयतया मनःसिद्धिरित्याहु॰। तन्न। शरीरसंयोगेन सिद्धसाधनात् अर्थान्तरत्वाच्च। तच्च अन्तरिन्द्रियम्, स्वातन्त्र्येण आत्मतद्योग्यगुण-तद्गतजातिमात्रग्राहकम्, बाह्यविषयेषु तस्य स्वातन्त्र्याभावात्। कुतो न स्वातन्त्र्यमिति चेत्। तस्य अणुपरिमाणस्य देहात् बहिर्गमनाभावेन सन्निकर्षासम्भवात्। युगपज्ज्ञानानुत्पत्तिश्च मनसोऽणुत्वे प्रमाणम्। येऽपि तस्य विभुत्वमाहुः, तेषामपि देहावच्छिन्नस्य इन्द्रियत्वात् अस्वातन्त्र्यापत्तिः। युगपज्ज्ञानोत्पत्तिर्दुष्टैव। पृ. १९–२०.

◉ मनोभेदस्य आत्मभेदाधीनत्वात् आत्मत्वसामान्योक्त्यैव मनस्त्वसामान्यसिद्धिः। ▮ पृ. ३४२.

◉ मनोराज्यविजृम्भणन्यायः। स्वचित्तपरिकल्पितमनोरथनिकाय इत्यर्थ.। 'मनोरथाना न समाप्तिरस्ति वर्षायुतेनापि वाऽब्दलक्षैः। पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तय. सन्ति मनोरथानाम्॥' इति। अयं च सर्वदर्शनसंग्रहे चार्वाकदर्शने, पाणिनिदर्शने च दर्शितः। तथाहि, चार्वाकैः 'नवाशीति फलानि सन्ति' इति

卐 मनुवत्कल्पः स्वार्षेयभिन्नब्राह्मणानाम् ॥

'आह्वयन्त एव ओपथिनामथिम्यो यः प्रवरं वृणीते' इति स्वार्षेयवरणं विनिन्द्य 'मनुवदित्येव ब्रूयात्' इति श्रुतम्। अयं च मनुवत्कल्पो राजन्यवैश्ययोः। तेषां ब्राह्मणर्षिसन्तानत्वाभावात्। इति प्राप्ते, स्वार्षेयवरणप्रतिषेधपूर्वकं मनुवत्कल्पविधानात् तस्य च प्रशंसापूर्वकत्वेन तस्याश्च 'ब्राह्मणेऽपि च पुरोहितस्यार्षेयेण धेद्येत्' इति वचनान्तरेण राजन्यवैश्ययोश्च सद्भावात् त्रैवर्णिकानां आर्षेयमनुवत्कल्पयोस्तुल्यवदिच्छया। वस्तुतस्तु निन्दार्थवादस्य विधिशेषत्वेन प्रतिषेधत्वकल्पनाक्षमतया कल्प्ये च वाक्यभेदापत्तेर्मनुवत्कल्पस्य च स्वार्षेयरूपातिरिक्तब्राह्मणेषु सावकाशत्वात् नोभो विकल्पितौ व्यवस्थितविकल्पः। पुरोहितस्य त्वार्षेय तु अस्त्येव गुणसूत्रम्। पक्षान्तरातिरिक्तपरत्वेन चातुर्वर्ण्यस्यैव ब्राह्मणातिरिक्तपरत्वेन मनुवत्कल्पस्य त्रयाणाम् नियमार्थम्। राजन्यवैश्ययोः पार्थक्येन विधिदर्शनात् तेषु मनुवत्कल्पस्य नियमाप्रवृत्तिरित्येव स्थापितम्। सम्पर्ष. ३।४।५.

* मनुवत्पक्षे तु वस्यामेघो (प्रवर) यस्यापि यत्र तस्यापि सन्देहोव्याण 'मनुवत्' इति। टुप्. ३।१।१९।४३.

* मनुष्या प्रायः. नित्तात स्वार्थं कुर्वन्ति। भा. ३।४।१।२. * मनुष्याः रसायनेन सिद्धाः दीर्घायुषो भवन्तीति केचित्। तन्न। रसायनं नायुर्हेतु किन्तु आरोग्यपुष्ट्यादिजनकम्। वि. ६।७।१३. * मनुष्या शमितारो वाक्यसंयोगात्। सर्वसू. २।२।१३। ... 'दैव्या. शमितार आरभध्वमुत मनुष्या.' इति मनुष्यसमभिव्याहारात् अनियमेन प्रकृतपुरुषमात्रस्य शमितृत्वम् इति पूर्वपक्षः प्रथमः।

ऋत्विजो वा सन्निधानात्। ३।१।१३। ... परिक्रयेण ऋत्विजां सर्वकर्मार्थत्वावधारणात् शमनकाले च तेषामेव सन्निधानात् शमितारः च एतस्मिन् वृत्तवचनायोगेन 'शमितार' इति बहुवचनस्य शमनार्थप्रज्ञापनादिकार्यापेक्षत्वात् पशुनयनादेश्च आर्त्विज्यत्वनियमात् शमनमपि आर्त्विज्यं इति पूर्वपक्षान्तरम्।

शमिता सर्वकर्मणामविशेषात्। ३।१।१३। ... ऋत्विजामन्यत्र व्यापृतत्वात् शमनान्तर्भूतानां सर्वकर्मधर्मायोगमाशङ्क्य —

अन्यतमो व्यापृतो त्वृत्विक् एव कश्चित्, त्रिष्वपि वा व्यापृतेषु अन्यः कश्चिदृत्विक् शमिता इति सिद्धान्तितम्। सु ३।७ पृ. २७. * क्षेत्राणामीशितारो मनुष्याः दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्येति। भा. ६।७।२।३. * मनुष्याणां परमायुः शत वर्षाणि कलियुगे, कृतादियुगान्तरेषु तु पुराणेतिहासस्मृत्यादिप्रामाण्यात् अनेकसहस्रसंवत्सरमपि आयुः। भाट्ट. ६।७।१२. * मनुष्याणां समर्थानामेव यागादिष्वधिकारः। वि ६।१।१. * न मनुष्याणामेतावत् (सहस्रसंवत्सर) आयुर्विद्यते। गन्धर्वादयस्तु पञ्चरात्रम् इति भवति स्मृतिः। भा. ६।७।१३।३१. * मनुष्येषु वास्तनविष्णुक्रमणाज्यावेक्षणेषु असमर्थ. दारादिषु नाधिक्रियते। टुप्. ६।१।२।

* मनुष्याधिकारं शास्त्र समधिगतम्। भा. ६।७।१३।१२. * मनुष्याधिकार एव विश्वसृजामयने सीवत्सरशब्दस्य दिवसपरत्वात्। ६।७।१३।११-४०.

* 'मनुष्यधर्म शब्दस्य तत्प्रधानत्वात्।' (३।४।१।११) इति किन्तु षष्ठीनिर्देशात् अभक्त इति मनुष्यसम्बन्धात् नादर्थ्यम्। इतरेषु पञ्चयेन। भा. ३।४।३।११.

* मनोता पुरोनुवाक्या च आवर्तेते कृष्णग्रीवयोः। काल्मेषात् सौम्येन स्थानापत्त्। भा. ११।४।२०।५४-५६.

卐 मनोतायां तु वचनादविकारः स्यात्। १०।४।२१।४३॥

अग्नीषोमीये पशौ 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतासूक्तम्। वायव्ये पशौ तत् चोदकेन प्राप्तम्। तद् यथादेवतं ऊहितव्यं इति प्राप्ते पूर्वपक्षे सिद्धान्तमाह। 'यद्यप्यन्यदेवत्य पशु आग्नेय्येव मनोता कार्या' इति वचनात् मनोतायां मनोताशब्दे अविकारः स्यात् यथादेवतमूहो न स्यात्। तुशब्द ऊहव्यावृत्त्यर्थः। के.

( त्रिधौ इव अर्थवादेऽपि मात्रत्यागस्थाने दोष एव । तस्मात् विकृत्यर्थमिदं वचनं इत्यनूहः । ऊहानूह- निराकस्य अप्यासमन्यमाह–) इतामसन्यः बाधसामा- न्येन ( न्यायप्राप्तस्य ) ऊहस्य ( वचनेन ) बाधः इति । ( इह चाधिकरणं आग्नेयः सवनीयः पशुः ज्योतिष्टोमे नास्तीति कृत्वा चिन्तितम् । ) ।

शा— अग्नीषोमीये पशौ मनोतामन्त्रः ' त्वं ह्यग्ने प्रथमो मनोता ' इति । तत्रैव वेद वचन ' यद्यप्यन्य- देवत्यः पशु , आग्नेय्येव मनोता कार्या ' इति । सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतं ऊहितव्यः, अथवा अविकारेण प्रयोक्तव्य इति संशयः । तदर्थं च ' यद्यप्यन्यदेवत्य ' इत्येतत् वचनं प्रत्यर्थम्, उत विकृत्यर्थमिति । तत्र पशौ अग्नीषोमदेवत्यत्वात् द्वैवत्यादिदेवत्या मनोता । तत्रात्राग्नेय्यां उद्धृष्यमाणा एकदेवतात्वेन प्राप्नोति । यद्यपि द्विदेवत्या, तथापि एकदेव- त्यैव मनोता तत्र कार्या, नोत्कृष्येति । … तस्मात् वायव्यादिषु यथादेवतं ऊहितव्या । इति प्राप्ते, सूत्रः । ' अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रका- शयन् । अन्तरेणैव वचनं प्रकृतावुपतिष्ठते ॥ ' न च विकृतिषु सामान्यसम्बन्धोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्यायाः उत्कर्षः स्यात् । तस्मात् नोत्कर्ष- प्राप्तिः, येन तन्निराकरणेन प्रकृतावेव वचनं कार्यं कुर्यात् । तस्मात् विकृतिषु यथादेवतं ऊहे प्राप्ते तन्निराकरणार्थं वचनमिति वायव्यादिषु अनूहः इति अग्निशब्दस्य अबाध ।

सोम— वायव्यादिवत् मनोताया अपि इहार्थत्वादूह- इत्युपस्थिते. संगतिः ।

वि— ' मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वा, ऽस्त्यसौ । आग्नेय्येवेति वचन प्रकृतौ सार्थकं यतः ॥, अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना । अनर्थकात् वच वाक्याद् विकृतावूहवारणम् ॥ ' तस्मात् ऊहो नास्ति ।

भाट्ट– अग्नीषोमदेवत्ये पशौ मनोतामन्त्रः समाम्नातः केवलाग्निशब्दकः । स किं विकृतौ ऊहितव्यो न वेति चिन्तायाम्, प्रकृतावग्नीषोमयोर्देवतात्वेऽपि देवताप्रथमा- भिधानप्रकाशकत्वेन मनोतापदाभिधेयस्य सामर्थ्यवत्त्वात् विकृतावपि तत्समानार्थमूहः । स च यत्रानेकदेवत्यः पशुस्तत्र स्पष्ट एव । यत्राप्येकदेवत्यः, यथा वायव्यादौ, तत्रापि स एव । तत्र प्रथमाभिधानमिति मत्स्येवोहः । माऽस्तु वा तत्र । अत एव प्रकृतौ मनोतामन्त्रो नाग्नी- षोमयोर्लाक्षणिकः प्रमाणाभावात् । यदि तु मनोताशब्दस्य ' मनोतायै हविषोऽवदीयमानस्य ' इति मन्त्रे चतुर्थ्यन्त- तया अवदीयमान – हवि संबन्धिदेवतावाचित्वावगमात् प्रकृतमन्त्रे चाग्निशब्दस्य ' त्वं ह्यग्ने प्रथमो मनोता ' इति मनोतापदसामानाधिकरण्येन देवतापरत्वावगतेः अन्य- थानुपपत्त्यनवगमेन प्रकृतदेवताग्नीषोमलक्षकत्वाभा- श्रीयते, तदा अग्नि( ग्नी )दमदेवत्ये पशौ ऊहाप्रसक्ता- वपि वायव्यादिपशौ निरूढसंबन्धाग्निमतेनाग्निपदनिवृत्तौ देवताप्रकाशनरूपकार्यानुरोधेन ' वायव्यमसि ' इत्येवं वायव्यादिपदोहे बाधकाभाव । न चैवमपि ' पूषति वा एतद्धोऽध्वर पदेनदूहति तस्मादयं मोदेत् ' इति मन्त्रोह- पर्युदासादूहानुपपत्ति., अनेकमन्त्रार्थवादे श्रूयमाणोहनिन्दया पर्युदासस्य पदोहविषयत्वेऽपि प्रकृते प्राकृताग्न्याये वृत्तिक्षेपेन सिद्धे पदोहानुपयोगेन श्रूयमाणोहरूपभागस्य बाधकाभावात् । अत एव मायकमस्यैवेह विचार्यता- दुर्ज्ञानवाताः ।

न च एवमपि ' यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या ' इति वाक्यमुदाहोपपत्तेरवैयर्थ्यमिति वाच्यम् । अस्य देवताप्रकरणत्वेन निरूढविषयत्वे उत्कर्षापत्तेः । मनोतामन्त्रस्याग्नेये पशौ उत्कर्षप्रसक्तौ तन्निवृत्त्यर्थत्वेन प्रकृतावेवोपपत्तेश्च । इति प्राप्ते, देवता- संनिधौ पठितस्य मनोतामन्त्रस्याग्नेयपशुत्वे , सामान्य- सम्बन्धबोधकप्रमाणाभावेन उत्कर्षानुपपत्तेः अस्य वचनस्य प्रकृतावुत्कर्षनिवृत्त्यर्थत्वायोगात् तत उत्कृष्टस्य वायव्यादि- पशावूहनिवृत्त्यर्थत्वावगतेर्न तत्र मनोतामन्त्रस्य बाधः । इह च ज्योतिष्टोमे सवनीयाभाव कृत्वा चिन्तया । यदा तु आग्नेय सवनीय. पशुर्ज्योतिष्टोमेऽस्ति तदा मनोता- मन्त्रस्य महाप्रकरणात् ज्योतिष्टोमसम्बन्धेऽवगते अवदीय- मानहविरादिसम्बन्धावगमाच्च तत्रानर्थक्यप्रसक्तौ आनर्थ- क्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसम्बन्ध- बोधकप्रमाणेन तत्रैव निवेशोपपत्ते अस्य वचनस्य प्रकृता-

येनोत्कर्षनिवृत्त्यर्थत्वेन सार्थकत्वम् । तदाऽस्य विकृतावूहनिवृत्त्यर्थत्वे प्रमाणाभावात् पाशुपादिपशौ प्रकृतावूह इष्ट एव ।

याज्ञिकास्तु नैवोहमाचरन्ति । तेषामयमभिप्रायः, प्रकृतौ नाग्न्यधिष्ठानकत्वसम्बन्धेनाग्नीषोमलक्षणा, व्याप्यवृत्तिसम्बन्धेन लक्षणोपपत्तौ अव्याप्यवृत्तिदारुसंबन्धेन तदयोगात्, अपि तु अग्न्यधिकरणकहविरुद्देश्यत्वसम्बन्धेन । अतश्च पाशुपादिपशौ तेनैव संबन्धेन लक्षणोपपत्तेर्नास्योहापत्तिरिति । यत्तुक्तम् देवतात्वे अग्न्यधिष्ठानकत्वस्याव्याप्यवृत्तित्वे प्रमाणाभावादित्येतदेवोहबाधे । २२.

मण्डन— ' मनोता न विकारभाक् । ' २४.

शंकर— ' मनोताऽप्यनूहत्वम् । ' १४.

● ' अग्नीषोमाभ्यामाज्यभागौ यजति ' इत्यत्र द्वयोरपि अग्नीषोमदेवताऽकस्मात् । मन्त्रा. पुनः मनोतान्यायेन उभय( देवता )प्रकाशकाः । भाट्ट. १०।२।८. ● मन्त्र वार्तिके मानमेव ( गम्भी. ) एका अनुवाक्या एका याज्या उभयत्रापि मनोतान्यायेन उभयत्र लक्षकत्वमनीहत्य वक्तव्यीया इत्युक्तम्, तत् अनुवाक्यायाज्यावाक्ययोः लक्षणायां प्रमाणाभावात् न उपेक्षितम् ( ' वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्याम् ' इत्यत्र इदम )। मी. २।२।३।३.

● मनोतामन्त्रस्तत्र प्राजापत्येषु पशुषु वाचपेये । भा. ५।२।६।१२. ● मनोतामन्त्रस्य गौणार्थे विनियोगः । भाट्ट ३।१।१. ● मनोतामन्त्रस्य ' त्वं ह्यग्ने मनोता ' इत्यस्य सौम्ययागविहितायां कृष्णग्रीवयोगावृत्ति । ११।४।२०।५७–५९. ' हविष्कृत. अध्रिगो. पुरोडाशयाज्यामनोतया अनुवृत्ति. ज्योतिष्टोमे ' इत्यत्र द्रष्टव्यम् ।

● मन्त्रः ' अग्नये जुष्टं निर्वपामि ' इति आम्नायते ; आम्नानसामर्थ्यात् तेनोपकर्तव्यं प्रकरणिन. । तत्र कथं नाम उपकरिष्यतीति विशेषाकाङ्क्षा जायते किं उच्चारणमात्रेण उपकरिष्यति उत प्रकाशनद्वारेणेति । अपूर्वदेवताप्रकाशनमावाद्दृष्टम् । शक्नोति च अयं तत् कर्तुम् । तस्मात् प्रकाशनद्वारेणैवोपकरोतीति । टुप्. ९।१।२।१ वर्णकं ५. ● मन्त्रः अभिदधत् कर्म तत्साधनं वा कर्मणि समवैति । भा. ९।८।३।४. ● मन्त्र. अभिधान मुक्त्वा अन्यत्र करणं न भवति । वा. ३।२।१।३. ● मन्त्र अभिवर्षणाङ्ग ' उन्दतीरेजो भते ' इति सतानेनाभिवर्षणे तत्रं ज्योतिष्टोमे । भा. ११।४।१७।५०, ● मन्त्र. अयोग्यप्रतिमन्त्रणे ज्योतिष्टोमे ' अवदं चक्षुः ० ' इति । यदा एककाल अनेकं अमेध्यं पश्यति तदा सकृदेव मन्त्र । ११।४।१७।५०, ● मन्त्रः अर्थाभिधानेन अङ्गी भवति । १२।३।१४।३०, ● मन्त्रः अर्थाभिधानसंयोगात् शक्नोति उपकर्तुम्, न गौणमर्थं शक्नोत्यभिधातुम् । ३।२।१।१ पृ. ७४९. ● मन्त्रः अवदानाङ्गं तन्त्रं दर्शपूर्णमासयो. । ११।४।१२।४५. ● मन्त्रः आग्नीध्रमण्डपोपस्थाने प्रकृत एव आग्नेयः । ३।२।८।२१–२४. ● मन्त्र. आज्यग्रहणाङ्ग तन्त्रं न दर्शपूर्णमासयोः । भा. ११।४।१४।४४–४५. ● मन्त्रः ' आयुर्दा अग्नेऽसि ' इत्यादिर्यजमानः दर्शपूर्णमासयोः । ३।८।६।१५–१६. ● मन्त्र उपभृतोऽभिमर्शने ' युनज्मि ते वायुमन्तरिक्षेण ते सह ' इति । भा १२।१।४।११. ● मन्त्र एक एव ' मन्द्राभिभूतिः ' इत्यादिः ' भक्षयामि ' अन्त भक्षानुवाके । ३।२।१०।२७. ● मन्त्र कण्डूयनाङ्गं तन्त्र ज्योतिष्टोमे ( कण्डूयनमन्त्रस्तु ' कृषिषु स्यामहृषे ' इति भाष्ये । ' कृषिं सुसस्यामुत्कृषे ' इति मैत्रायणीये । ' सुपिप्पला ओषधीस्कृधि ' इति विस्तरे । ' कृष्यै त्वा सुसस्यायै ' इति भाट्टदीपिकादौ । ' विषाणे विष्यैतं ' इति शम्भुभट्टयाम् । )। ११।४।१४।५१–५२. ● मन्त्र ' कदाचन स्तरीरसि० ' इति गार्हपत्योपस्थानाङ्ग श्रुतिप्राबल्यात् । वि. ३।३।७ ● मन्त्रः करणभूतः कर्तव्यस्य वस्तुन' अभिधानार्थः समधिगतः । भा. ११।४।१२।४१. ● मन्त्रः अग्निस्वरूपप्रकाशनार्थमुचार्यते उताग्निस्वरूपमविवक्षितम्, तस्मादित्थं मनोतायं इत्यतिदेशप्रकार एव नवमे चिन्त्यते । टुप्. ७।१।१।१. ● मन्त्र कश्चिद् वेदभाग यः विहितमर्थं प्रयोगकाले प्रकाशयति यथा ' बर्हिर्देवसदनं दामि ' इत्येवमादिः । भा. १।४।१।१. ● मन्त्र. कश्चिद्विधायकः यथा ' वसन्ताय कपिञ्जलानालभेत ' इति । वि. २।१।७. ● मन्त्र. जपरूपः ' वैश्वदेवीमनूच्य वाग्यता या ' इति । स्तुतिरूप. ' अग्निर्मूर्धा दिवः ' इति । आशीरूप. ' आयुर्दा अग्नेऽस्यायुर्मे

देहि ' इति । अभिधानार्थः 'एषोऽसि, रोपोऽसि ' इति । मा. १२।४।१।१, ● मन्त्रः स्रुवा अभिमन्त्रणे 'सुनज्मि वाचं सह दिवा सूर्येण ' इति । १२।१।४।२१, ● मन्त्रः 'भीन् परिधीन्० ' इति दर्शपूर्णमासयोः अपूर्वप्रयुक्तः न तु परिधिश्चितसत्याप्रयुक्तः । ९।१।५।११–१९.

● मन्त्रः त्रिविधः ऋक्, यजुः, साम इति । (१) विधायकः ऋङ्मन्त्र.– 'पूर्णाबादिन्वाधमानाय हन्यात् ' इति । (२) विधायको यजुर्मन्त्रः– 'वसन्ताय कपिञ्जलानालभते ' इति । (३) अभ्यन्तो मन्त्रः– 'मेधोऽसि ' । (४) दान्तः– 'इषे त्वा ' । (५) आशीर्मन्त्रः– 'आयुर्दा असि ' । (६) स्तुतिरूपः– 'अग्निर्मूर्धा ' । (७) संख्यामन्त्र.– 'एको मम एका च तस्य ' । (८) मन्त्रिमन्त्र.– 'कयी ते इन्द्र पिङ्गले दूलेखि ' । (९) परिदेवनमन्त्र.– 'अम्बेऽम्बिके० ' । (१०) प्रैषमन्त्रः– 'अग्नीदग्नीन् विहर ' । (११) अन्वेषणमन्त्र.– 'कोऽसि कतमोऽसि ' । (१२) प्रश्नमन्त्र – 'पृच्छामि त्वा परमन्तं० ' । (१३) आख्यानमन्त्रः– 'इयं वेदिः परो अन्तः ' । (१४) पुरस्तादनुषङ्गमन्त्र – 'या ते अग्नेऽयाशया ' । (१५) परस्तादनुषङ्गमन्त्र.– 'चित्पतिस्त्वा पुनातु ' । परस्तादनुषक्तः ऋङ्मन्त्र – 'अग्वन् सा त इन्द्र ' । (१६) प्रयोगरूप. नैरर्थक्यात् ऋङ्मन्त्र – 'अग्ने मृळ महा असि ' । (१७) प्रयोगरूप. नैरर्थक्यात् यजुर्मन्त्र.– 'इषे त्वोर्जे त्वा ' । (१८) प्रयोगरूपः चातु सर्थनात् ऋङ्मन्त्र.– 'अग्निमीळे पुरोहितम् ' । (१९) प्रयोगरूपः चातु सर्थनात् यजुर्मन्त्र– 'देवो वः सविता प्रार्पयतु ' । (२०) सामर्थ्यनात् मन्त्र.– 'देवस्य त्वा ' । (२१) अभिमन्त्र– 'ईश्वरश्चासि वन्याश्चासि ' । (२२) स्वाभाव्य – 'तत्त्वा यामि ब्रह्मणा ' । (२३) द्विविकरणमहुल.– 'इति वा इति मे मन. ' । (२४) इत्याहोपनिबद्ध – 'भग मजीत्याह ' । (२५) व्याख्यायिकारूप – 'तुभो ह सुग्युम् ' । (२६) हेतुविधिः– 'इन्द्रो वाममुदन्ति हि ' । (२७) निर्वचनार्थः– 'यत् प्रेषिता वरुणेन ' । (२८) निन्दामन्त्रः– 'मोघमन्न विन्दते ' । (२९) संशयार्थः– 'तिरश्चीनो विततो ' । (३०) परकृतिरूपः– 'चित्र इन्द्राजा राजका ' । (३१) पुराकल्परूपः– 'यज्ञेन यज्ञमयजन्त ' । (३२) हेतुविधिरूपः– 'द्वादशार न हि ' । (३३) यजमानगामिफलविधिः– 'ममाग्ने वर्चो० ' । (३४) ऋत्विग्गामिफलविधिः– 'अग्नाविष्णू मा वा ' । (३५) यजमानऋत्विगुभयगामिफलविधिः– 'सिमन मह वनौ सह ' । (३६) फलविधिरूपः– 'आयुर्दा अग्नेऽसि ' । (३७) गुणभूतदेवताविधिः– 'समिधः समिधो ' । (३८) प्रधानभूतदेवताविधिः– 'स्वाहाऽग्निं स्वाहा ' । (३९) देवताविधिरूप.– 'ऐभिरग्ने सरथं ' । (४०) गुणभूतद्रव्यविधि – 'मैत्र होतुश्चमसः ' । (४१) प्रधानभूतद्रव्यविधि – 'सोम स्याम वीहि ' । (४२) द्रव्यविधिरूप.– 'सुता सुतासः ' । (४३) कालविधिः– 'छागस्य वपायाः ' । (४४) जातिविधिरूप.– 'बर्हिर्देवसदनं दामि ' । (४५) गुणविधि – 'दर्भैः स्तृणीत हरितैः ' । (४६) गुणविधिरूपः 'पड्विंशतिरस्य ' । (४७) क्रियाविधि – 'अश्विनोस्त्वा बाहुभ्या ' । (४८) क्रियाविधिरूप– 'न वा नमन्ति ' । (४९) निषेधविधिः– 'अधीरा तनूर्भवति ' । (५०) निषेधविधिरूप.– 'यनिस्तमम्य मा ' । (५१) निमित्तविधिरूप.– 'यत् पशुर्मायु ' । (५२) वाक्यविधिरूप– 'श्येनमस्य वक्षः ' ।

पुनरपि ऋङ्मन्त्राणां चतुर्दशच्छन्दःप्रयुक्ताः १४ भेदा. । गायत्री – उष्णिक् – अनुष्टुप् – बृहती – पङ्क्तिः – त्रिष्टुप् – जगती – अतिजगती – शक्वरी – अतिशक्वरी – अष्टि. – अत्यष्टि. – धृतिः अतिधृतिः इति । गायत्री चतुर्विंशत्यक्षरा तत उत्तरोत्तर चतुरक्षराचतुरक्षरवृद्ध्या उष्णिगाद्या । तेन उष्णिहि २८ अक्षराणि, अनुष्टुभि ३२, बृहत्या ३६, पङ्क्तौ ४०, त्रिष्टुभि ४४, जगत्या ४८, अतिजगत्या ५२, शक्वर्यां ५६, अतिशक्वर्यां ६०, अष्ट्या ६४, अत्यष्ट्या ६८, धृत्या ७२, अतिधृत्या ७६ इत्य-क्षराणि । तथापि सर्वानुक्रमणीकृता गायत्र्यादीनामवान्तरभेदा उक्ताः । यथा–

गायत्र्याः भेदाः– गायत्री ८।८।८ (प्रथमादिपादेषु यावन्ति तावन्ति अक्षराणि ज्ञेयानि) । उदाहरणम्– 'अयं

देशाय' ( ऋग. १।२०।७ )। पदपङ्क्ति ५।५।५।६ उदा० 'श्राग्निरेद्रे अय' ( ऋग ४।१०।४ ) । किंवा ५।५।५।४।६ उदा० 'अंश तमध' (ऋग. ४।१०।१)। उष्णिग्गर्भा ६।७।११ उदा० 'मा मे अस्व्याना' ( ऋग. ८।२५।२२ ) । पादनिचृत् ७।७।७ उदा० 'स्वावत पुरूवसो' (ऋग्वे ८।४६।१ )। अतिनिचृत् ७।६।७ उदा० 'पुरूतम पुरूणा' ( ऋग्व ६।४५। २९ )। यवमध्या ७।१०।७ उदा० 'स सुन्वे यो वसूना' ( ऋग्वे. ९।१०८।१३ )। वर्धमाना ६।७।८ उदा० 'ईशाना वार्याणा' ( ऋग. १०।९।५ )। प्रतिष्ठा ८।७।६ उदा० 'आप पृणीन भेषज' ( ऋग. १०।९।७ ) । ह्रसीयसी ६।६।७ उदा० 'प्रेष्ठ प्रियाणा' (ऋग ८।१०३।१०) । विपरीता ह्रसीयसी ७।६।६ उदा० 'इन्द्र सहस्रदामा' (ऋग १।१७।०)।

अथ उष्णिक् तद्भेदाश्च । उष्णिक् ८।८।१२ उदा० 'प इन्द्र सोम पातम' ( ऋग ८।१२।१ ) । पुर उष्णिक् १२।८।८ उदा० 'युञ्जन्ति हरी इषिर' ( ऋग ८।९८।९ ) । ककुप् ८।१२।८ उदा० 'गर्भे सर्भे व पर्णो' ( ऋग. ५।५३।११ ) । ककुम्न्यङ्कुशिरा ११।१२।४ उदा० 'दधी रेकमत वे' ( ऋग. ८।४६।१५ ) । तनुशिरा ११।११।६ उदा० 'प्र या घोषे भृगवा' ( ऋग्व १।१२०।५ ) । पिपीलिकमध्या ११।६।११ उदा० 'हरी यस्य सुयुजा' (ऋग १०। १०५।२ ) । अनुष्टुब्गर्भा ५।८।८।८ उदा० 'पितु नु स्तोष' ( ऋग. १।१८७।१ )। उष्णिक् ७।७।७।७ उदा० 'मसीमहि त्वा वय' (ऋग्व. १०।२६।४ )।

अथ अनुष्टुप् तद्भेदाश्च । अनुष्टुप् ८।८।८।८ उदा० 'अग्न ओजिष्ठमा भर' ( ऋग ५।१०।१ ) । महापदपङ्क्ति ५।५।०।५।५।६ उदा० 'तत्र स्वादिष्ठा' । ( ऋग. ४।१०।५) । कृति १२।१२।८ उदा० 'मा कस्मै धातमभ्य' ( ऋग्वे १।१२०।८ ) । पिपीलिकमध्या १२।८।१२ उदा० 'पर्यू षु प्र धन्व वाजसा' ( ऋग्वे ९।११०।१ ) । काविराट् ९।१२।९ उदा० 'ता विद्वासा हवामहे' ( ऋग. १।१२०।३ )। नष्टरूपी ९।१०।१३ उदा० 'त्रि पृच्छामि पाकया' ( ऋग्वे. १।१२०।४ )। विराट् १०।१०।१० उदा० 'प्रेष्ठो अग्ने दीदिहि' ( ऋग्वे ७।१।३ )। त्रिपा ११।११।११ उदा० 'अग्नि नरो दीधितिभि' ( ऋग. ७।१।१ )।

अथ बृहती तद्भेदाश्च । बृहती ८।८।१२।८ उदा० 'मा चिदन्यत्' ( ऋग्वे. ८।१।१ ) । पुरस्ताद्बृहती १२।८।८।८ उदा० 'महो यस्पति' ( ऋग १०।२२। २ ) । न्यङ्कुसारिणी ८।१२।८।८ उदा० 'ईशान मिद् यो' ( ऋग १०।१३२।१ ) इयमेव उरोबृहती वा स्कन्धोग्रीवी वा । उपरिष्टाद्बृहती ८।८।८।१२ उदा० 'ये पातयन्ते अज्म' ( ऋग्वे ८।४६।१८ )। विष्टारबृहती ८।१०।१०।८ उदा० 'पुन आस्त महो' (ऋग. १।१२०।७) । ऊर्ध्वबृहती १२।१२।१२ उदा० 'अव यन्मि धव' ( ऋग ९।११०।१ )। पिपीलिकमध्या १३।८।१३ उदा० 'अभि नो वीरवमनो' ( ऋग ८।४३।१८ ) । विषमपदा ९।८।११।८ उदा० 'दनिन गुणनिव' ( ऋग्वे ८।४६।२० )। बृहती ९।९।९।९ उदा० 'व स्था वर पितो मचो' ( ऋग्वे. १।१८७।११ )।

अथ पङ्क्ति तद्भेदाश्च । पङ्क्ति. ८।८।८।८।८ उदा० 'दानास पृथु' ( ऋग ८।४६।२४ ) । विराट् १०।१०।१०।१० उदा० 'वि पिप्रोरहिमा' ( ऋग. ६।२०।७ ) । सतोबृहती १२।८।१२।८ उदा० 'आ य नर सुदानो' ( ऋग ५।५३।६ ) । विपरीता ८।१२।८।१२ उदा० 'य ऋज्व आनयत्' ( ऋग. ८।४६।३२) । प्रस्तारपङ्क्ति १२।१२।८।८ उदा० 'तम्या समुद्रा अधि' ( ऋग १।१६४।४२ )। आस्तारपङ्क्ति ८।८।१२।१२ उदा० 'आभि न स' ( ऋग. १०।२१।१ ) । सम्भारपङ्क्ति १२।८।८।१२ उदा० 'पाहि सद्र्या' ( ऋग ८।४६।२२ ) । विष्टारपङ्क्ति ८।१२।१२।८ उदा० 'अधीयाम निर्ऋतिर' ( ऋग्वे ५।५३।१४ ) ।

अथ त्रिष्टुप् तद्भेदाश्च । त्रिष्टुप् ११।११।११।११ उदा० 'कस्य नून कतमस्या' ( ऋग्वे. १।२४।१ ) । अभिसारिणी १०।१०।१२।१२ उदा० 'यो वाचा विवाचो' ( ऋग १०।२३।५ ) । विराट्स्थाना ९।९।

१०।११ उदा० 'सखा न इन्द्रो' (ऋग्. १।८९।६)। किंवा १०।९।११।१ उदा० 'शुभ्र नु ते शुष्मं' (ऋग्. २।१३।४)। किंवा १०।९।१०।११ उदा० 'शुधी हवमिन्द्र मा' (ऋग्. २।११।१)। विराड्रूपा ११।११।१२।८ उदा० 'श्रुतं मे मित्रावरुणा' (ऋग्. १।१२२।६)। विपरीता विराड्रूपा ८।१२।१२।११ उदा० 'पीळवो रस्म' (ऋग्. ५।१०।५)। ज्योतिष्मती १२।१२।१२।८ उदा० 'अग्निनेन्द्रेण वरुणेन' (ऋग्. ८।३५।१)। ज्योतिः १२।८।१२।१२ उदा० 'त्वामिदागात' (ऋग्. ८।२३।१२)। महाबृहती ८।८।८।८।१२ उदा० 'नकिरा नकीना' (ऋग्. १।१९।१३)। यवमध्या ८।८।१२।८।८ उदा० 'स मा तपन्त्यभितः' (ऋग् १।१०५।८)। पङ्क्त्युत्तरा १०।१०।८।८।८ उदा० 'एकैकामिम्या' (ऋग्. ५।८६।६)। किंवा विराट्पूर्वा नाम द्वयमेव।

अथ जगती तद्भेदाश्च। जगती १२।१२।१२।१२ उदा० 'प्र देवमच्छ' (ऋग्. १।६८।१)। महासतोबृहती १२।८।१२।८।८ उदा० 'आ व. पतो मनुनां' (ऋग्. ६।४८।६)। महापङ्क्तिः ८।८।७।६।१०।९ उदा० 'द्ववित्रा दाकुन्तिना' (ऋग्. २।१९१।११)। किंवा ८।८।८।८।८।८ उदा० 'तद्भाष तन्वते' (ऋग्. ८।४७।१६)।

अथ प्रगाथाः। बार्हतः प्रगाथः बृहती–सतोबृहत्यौ उदा० 'अयं ॥ मधुरुषमः' + 'त्रिवन्धुरेण त्रिवृता' (ऋग्. १।४७।१–२)। काकुभः ककुप्–सतोबृहत्यौ उदा० 'आ घा ये अग्निमिन्धते' + 'या सुदर्शं सख्ये' ... उदा० 'आ सखायः सबर्दुघां' + 'या सधीय मारुताय' (ऋग्. ६।४८।११–१२)। महाबार्हतः महाबृहती – महासतोबृहत्यौ उदा० 'बृहद्भिरग्ने अर्चि'+ 'विश्वासां गृहपतिः' (ऋग्. ६।४८।७–८)। विपरीतोत्तरः बृहती–विपरीते उदा० 'नहि ते शूर राधसः' + 'स कृन्धः भारवत्' (ऋग्. ८।४६।११–१२)। आनुष्टुभः अनुष्टुप् एका + गायत्र्यौ द्वे उदा० 'आ रथ रथ' + 'तुविशुष्म तुविक्रतो' + 'यस्य ते महिना महः' (ऋग्. ८।६८।१+२–३)।

अथ अतिजगती १२।१२।१२।८।८ उदा० 'प्र वो महे मतयो' (ऋग्. ५।८७।१)।

अथ शक्वरी ८।८।८।८।८।८।८ उदा० 'प्रो ष्वस्मै पुरोरथं' (ऋग्. १०।१३३।१)।

अथ अतिशक्वरी १६।१६।१२।८।८ उदा० 'त्वाक जान क्रतुना' (ऋग्. २।२२।३)।

अथ अष्टिः १६।१६।१६।८।८ उदा० 'त्रिकद्रुकेषु महिषो' (ऋग्. २।२२।१)।

अथ अत्यष्टिः १२।१२।८।८।८।१२।८ उदा० 'अग्निं होतारं मन्ये' (ऋग्. १।१२७।१)।

अथ धृतिः १२।१२।८।८।८।१२।८ उदा० 'अव० मंह इन्द्र' (ऋग्. १।१३३।६)।

अथ अतिधृतिः १२।१२।८।८।८।१२।८।८ उदा० 'स हि शर्धो न' (ऋग्. १।१२७।६)।

एते गायत्र्याद्याः सर्वे भेदा. प्रत्येक चतुर्विधाः १ एकेनाक्षरेण न्यूनाः निचृद्गायत्र्याद्या., २ एकेनाक्षरेण अधिकाः भुरिग्गायत्र्याद्या., ३ द्वाभ्यामक्षराभ्यां न्यूना. विराड्गायत्र्याद्याः, ४ द्वाभ्यामक्षराभ्यां अधिका. स्वराड्गायत्र्याद्या. इति।

| | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

अत्र दैवी गायत्री १ अक्षरा । दैवी उष्णिक् २ अक्षरा । दैवी जगती ७ अक्षरा । एवं आसुरी गायत्री १५ अक्षरा, आसुरी उष्णिक् १४ अक्षरा इ० । ब्राह्मी गायत्री ३६ अक्षरा, ब्राह्मी उष्णिक् ४२ अक्षरा, ब्राह्मी जगती ७२ अक्षरा इत्येवंरीत्या कोष्टकार्थो ज्ञेयः । एते सर्वे भेदाः यजुःष्वेव संभवन्ति न ऋक्षु । एकेनाक्षरेण न्यूनाधिकत्वे निचृद्भुरिजौ, द्वाभ्यामक्षराभ्यां न्यूनत्वाधिकत्वे विराट्स्वराजौ । एते चत्वारश्चान्त्ये भेदाः उक्तेषु यजुःषु संभवन्त्येव । बाल पृ. ५८–७०.

* मन्त्रः दर्भलवनाङ्गं 'बर्हिर्देवसदनं दामि' इति तन्त्रं न दर्शपूर्णमासयोः । भा. ११।४।१४।४४–४९, * मन्त्रः 'वैश्वस्य त्वा' इति निर्वपणस्य न तन्त्रं दर्शपूर्णमासयोः । ११।४।१४।४४, * मन्त्रः देवताप्रकाशकः 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिः अपूर्वप्रयुक्तः । ९।१।३।४–५. * मन्त्रः द्विविधः क्रियाप्रकाशकः फलप्रकाशकश्चेति । इडोपाह्वानमन्त्रः क्रियाप्रकाशकः । सूक्तवाकमन्त्रः फलप्रकाशकः । वि. ९।१।१७ * मन्त्रः 'धाम नामासि' इति आज्यग्रहणस्य न तन्त्रं दर्शपूर्णमासयोः । भा. ११।४।१४।४४, * मन्त्रः युवाभिमर्शने 'पुनज्मि ते पृथिवीं ज्योतिषा सह' इति । १२।१।४।११, * मन्त्रः नदीतरणार्थः 'देवीराप.०' इति । यदा अनेकस्रोतसं नदीं तरति तदा आदौ सकृदेव मन्त्रः, न तु प्रत्येकं स्रोतसि मन्त्रावृत्तिः, ज्योतिष्टोमे । ११।४।१७।५०, * मन्त्रः प्रकरणे समाम्नानात् प्रधानेनैकवाक्यतामुपैति । ३।७।१।१ पृ.७४९, * मन्त्रः फलप्रकाशकः दर्शपूर्णमासादौ 'आगन्म स्वः सं ज्योतिषाऽभूम' इत्यादिरपूर्वप्रयुक्तः न तु स्वर्गादिफलप्रयुक्तः । ९।१।३।४–५. * मन्त्रः बर्हिषः संनहनस्य हरणस्य च आम्नानादेशात् अग्नीषोमीयदेशे नयनकाले नावर्तनीयः । (संनहनहरणमन्त्राधिकरणम्) । १२।१।२१।४६–४७. * मन्त्रः । मन्यते, मनोर्वेवा 'गुधृवीर्यचिवचियमि०' (६१६) इत्यौणादिके ष्ट्रन्प्रत्यये कृते मन्त्रशब्दव्युत्पत्तिः । सु. पृ. ९९. * मन्त्रः मुख्ये एव विनियोक्तव्यः न गौणे । बर्हिर्न्यायः । ३।२।१।१–२. * मन्त्रः समर्थं प्राधान्येन अभिदधाति नाऽन्यं देवता । सु. पृ. ४५७.

* मन्त्रः यागहोमस्थले तदङ्गभूतदेवताप्रकाशनार्थ एव । भाट्ट. ४।१।७. * मन्त्रः लिङ्गविनियोज्यः, न फलकल्पनायै प्रभवति । वा. १।२।४।३५. * मन्त्रः 'वाजस्य मा०' इति अध्वर्युयजमानोभयप्रयोज्यः दर्शपूर्णमासयोः । भा. ३।८।२।८. * मन्त्रः वेदिप्रोक्षणस्य 'वेदिरसि बर्हिषे त्वा' इति निः प्रोक्षणे सकृत् प्रयोक्तव्यः । ११।४।१५।४९–५०. * मन्त्रः 'शुन्धध्वम्' इति सान्नाय्यपात्रप्रोक्षणाङ्गं सन्निधिक्रमात् दर्शपूर्णमासयोः । वि. ३।३।५. * मन्त्रः संस्कारकः । भा. ३।१।१।२, * मन्त्रः स्तरणाङ्गं 'ऊर्णाम्रदसं त्वा स्तृणामि' इति तन्त्रं न दर्शपूर्णमासयोः । ११।४।१४।४४–४९, * मन्त्रः स्नानार्थो ज्योतिष्टोमे 'स्नमसे जनसा अभि' इति । एकदा यतौ पुनः पुनः स्नाने न तस्यावृत्तिः । ११।४।१७।५०. * 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति बहुजनप्रसिद्धस्य शिक्षाकारपठितस्य मन्त्रपदस्य उद्धारेण पदान्तरप्रक्षेपः स्वपक्षानुरागमात्रेण व्याकरणमहाभाष्यकारेण कृतः, न वस्तुतः । (शिक्षया 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति श्लोकः, महाभाष्यकृता तु 'दुष्टः शब्दः स्वरतो वर्णतो वा' इति पठितम्) । सु. पृ. ७९१. * उपरवमन्त्रः प्रत्युपरवमावर्तते ज्योतिष्टोमे 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति । ११।४।१९।५५–५६. * 'चोदितार्थानुरोधेन मन्त्रः सर्वः प्रवर्तते ।' मन्त्रस्य पारार्थ्यात् न चोदनामतिक्रम्य स्वातन्त्र्येण प्रकाशनसामर्थ्यं अवकल्पते । वा. ३।२।१५।३७. * कपादिमन्त्राः अदृष्टार्थाः । भाट्ट ३।२।१. * दर्विमन्त्राः उपांशुयाजाङ्गं यथासंख्यक्रमात् दर्शपूर्णमासयोः । वि. ३।३।५. * 'नहि श्रुत्यनुमानात् प्राक् स्वयं मन्त्रो विधीयते ।' वा. ३।१।७।१४ पृ. ७११. * बर्हिःस्तरणमन्त्रः आतिथ्यायां उपसत्सु अग्नीषोमीये च अभ्यावर्तते देशपृथक्त्वात् । १२।१।२०।४५. * मनोतामन्त्रो वायव्यादिपशौ अविकृतः प्रयोक्तव्यः । भा. १०।४।११।२१. * 'यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृतः । स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥' (किन्तु

मन्त्रत्वं इष्यते एव ) । वा. २।१।९।३४, ● सर्वत्र क्रिया तत्साधन वा अभिदधन् मन्त्रः अङ्गभावं गच्छति । ३।२।५।१३ पृ. ७६२. ● मन्त्राः अकर्मकरणाः ( कर्मसु करणतया न सन्नद्धाः ) याजमानाः । वि. ३।८।७. ● मन्त्रा ( १ ) अर्थप्रकाशनार्थाः न ते उच्चारणमात्रादृष्टं कुर्वन्ति । ( २ ) मुख्यार्थाभिधायिनः न तु गौणार्थाः । ( ३ ) अपूर्वप्रयुक्ताः न तु अभ्यादिस्वरूपप्रयुक्ताः । (४) समवेतार्थाभिधायिनः न तु सविजन्त्विपदवत् असमवेतार्थाः । ( ५ ) अपरार्थाः न तु यजपतिशब्दवत् परार्थाः । ( ६ ) प्राकृतस्थानापन्नान्यद्रव्यदेवताकाः यथा विकृतौ । इति षड्विधाः । टुप्., तत्र ५।३।१।१. ● मन्त्राः अलौकिकशब्दाः । संकर्ष. २।८।२२. ● मन्त्राः अविज्ञातार्थाः यथा ‘अम्यक् सा त इन्द्र ऋष्टिरस्मे’ इति ‘ सृण्येव जर्भरी तुर्फरीतू ’ इति, ‘इन्द्रः सोमस्य काणुका’ इति च ( इदं पूर्वपक्षे ) । भा. १।२।४।३१–८ । सिद्धान्ते तु विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते । निगमनिरुक्तव्याकरणवशेन धातुतः अर्थः कल्पयितव्य । यथा ‘ सृण्येव जर्भरी ’ इत्येवमादीनि अश्विनोरभिधानानि द्विवचनान्तानि दृश्यन्ते । अनेन ‘ आश्विनोः कामप्रथा ’ इत्याश्विनं सूक्तमवगम्यते । भा. १।२।४।४१. ● मन्त्रा अभिधायकाः इति प्रसिद्धिः । वा. २।१।६।३१. ● मन्त्राः अप्रकाशिता वेदे कथ्यन्ते ‘ वा जनाः प्रतिनन्दन्ति ’ इत्येवमादय । भा १।३।१।१९. ● मन्त्राः ऋषिभिः न कृताः , किन्तु अनतरणकल्पेनोद्धृताः । था– न तु ॥ मन्त्रः तैरेव ( ऋषिभिरेव ) कृताः, तदानीं वा पुरुषान्तरेषु अस्तेन तेषामाविर्भूताः । किं तर्हि ? यथा अन्योऽपि कश्चित् प्रकृतार्थविवक्षया तदर्थं वाक्यं उपादित्समानः तदर्थरूपं ग्रन्थं श्लोकं वा अन्यदीयं स्मृत्वा स्वावसरस्थाने प्रयुङ्क्ते, तत्प्रत्ययेन च अन्ये तदर्थमवधारयन्ति, एवमिहापि वेदार्थविद्भिः तद्वासितान्तःकरणैः ऋष्यादिभिः आत्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्ताः । तद्वशेन चास्मदादीनां तदनुरूपा मनिलार्थप्रतिपत्तिर्भवति । प्रत्ययदृढत्वार्थमेव च आर्षस्मरणम् । वा. १।२।४।४१. ● मन्त्राः कर्मोपकारित्वात् कर्मशेषभूतार्थप्रकाशकत्वसंभवे प्रयोक्तव्याः, नान्यथा इति द्वितीयसूत्रव्याख्याधिकरणन्यायः । सु. पृ. ११०८. ● मन्त्राः किं विवक्षितवचना उत अविवक्षितवचनाः । किं अर्थप्रकाशनेन यागस्य उपकुर्वन्ति उत उच्चारणमात्रेण इति संदेहे विवक्षितवचना मन्त्राः । नियमोच्चारणं ॥ अदृष्टार्थमेव इति सिद्धान्तः । कर्माङ्गस्मारका मन्त्राः । मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः । भा. १।२।४।३१–४५. ● मन्त्राः क्रियास्वरूपप्रकाशनेन तदङ्गविप्रकाशनेन वा कर्मोपयोगिनः भवन्ति । वा. १।४।६।९ पृ. ३४०.

सू मन्त्राश्चाकर्मकरणास्तद्वत् । ३।८।६।१५ ॥

‘ आयुर्दा अग्नेऽस्यायुर्मे देहि ’ इत्यादयः मन्त्राः अकर्मकरणाः कर्मसु करणतया न सन्नद्धाः । आशीर्मन्त्रा एते । एतादृशा मन्त्राः आध्वर्यवसमाख्यानात् अध्वर्युणा पठनीया इति दशमसूत्रे पूर्वपक्षे प्राप्ते सिद्धान्त उच्यते, अकर्मकरणा मन्त्राः याजमाना यजमानेन प्रयोक्तव्याः । तत्करोति अर्थसंयोगात् इति पूर्वतनसूत्रात् अनुवृत्तं पदं हेतुत्वेन सम्बध्यते । ‘ आयुर्मे देहि ’ इति प्रार्थनया यजमानस्य अर्थेन फलेन संयोगः अवेक्षितः । तस्मात् अर्थसंयोगात् याजमानास्तादृशा मन्त्राः । तद्वत् ‘ य. कामयेत ’ इत्युक्तः कामो यथा याजमानः तद्वत् । एवं च अर्थसंयोगरूपसामर्थ्यात् समाख्याया बाधः इति भावः । अत्र सुधा— आशीर्मन्त्राणामपि फलप्रार्थनसामर्थ्यात्मकात् लिङ्गात् कामवत् याजमानत्वम्, इति ।

विप्रयोगे च दर्शनात् । १६ ॥

‘ आयुर्दा अग्नेऽस्यायुर्मे देहि ’ इत्यादयः आशीर्मन्त्रा याजमाना एव नाध्वर्यवाः इति पूर्वसूत्रेण उक्ते सिद्धान्ते हेत्वन्तरोपन्यासार्थं सूत्रमिदम् । विप्रयोगे यजमानस्य अग्निभिर्वियोगे प्राप्ते इत्यर्थः । अग्नयः स्वगृहे सन्ति, यजमानश्च प्रोषित. तथापि तस्य अग्न्युपस्थानं दृश्यते ‘ इहैव सन् तत्र सन्तं त्वाऽग्ने ’ इत्यादिना मन्त्रेण । न चैतदध्वर्योः संभवति । उपस्थानमन्त्रश्च आशीर्मन्त्र एव ‘ तिरो मा सन्तमायुर्मा प्रहासीत् ’ इति तृतीयचरणे प्रार्थितत्वात् । तस्मात् ‘ आयुर्दा अग्नेऽसि ’ इत्यादिरपि मन्त्रः याजमान एवेति सिद्धान्तः । के.

**मन्त्राश्चाकर्मकरणास्तद्वत् । ३।८।६।१५ ॥**

इह एवञ्जातीयका मन्त्रा उदाहरणम् ' आयुर्दा अग्नेऽस्यायुर्मे देहि, वर्चोदा अग्नेऽसि वर्चो मे देहि, चक्षुर्दा अग्नेऽसि चक्षुर्मे देहि ' इति । तेषु सन्देहः किमार्त्विज्याः उत याजमाना इति । इहापि अधिकाशङ्कानिरासार्थं पूर्वोक्तन्यायस्यातिदेशोऽतिदिश्यते ।

पूर्वपक्षस्तु भवतु फलस्य विधीयमानस्य नीचैस्त्वादेः प्रधानप्रयोगान्तर्गतत्वात् तस्य याजमानत्वेन मन्त्राणाम् अपि याजमानत्वम् । आयुर्दादिमन्त्राणां तद्विधायकत्वेन यथाप्राप्तफलानुवादकत्वम् । फलं च प्रकृते कर्मणि यथा यजमानस्य स्वर्गादिरूपं अस्ति, तथा ऋत्विजामपि दक्षिणारूपमस्त्येव । यजमानफलानुवादकत्वेन मन्त्रपदानां मुख्यत्वम् । स्वर्गस्य फलस्य आयुरादिपदैरनभिधानात् । यथा च लक्षणया तदनुवादकत्वम्, तथा ऋत्विक्फलानुवादकत्वमपि सम्भवत्येव । तेन समाख्यानुगतात्वर्थमर्त्विक्त्वानुरोधेन अध्वर्युणैव दक्षिणालाभलक्षणफलमायुरादिरूपेणोत्साहनार्थमाशास्यते । तस्मात् अध्वर्युणा एवंजातीयका मन्त्राः प्रयोक्तव्या इति । एवं प्राप्ते, अभिधीयते । भवेदेवं यद्यृत्विजां फलमपि सकाशादाशासनमर्हेत् । इह अमित, फलमेतदाशास्महे । यजमानस्य च फलं कर्मद्वारेणाशीर्वचनिना । ऋत्विक्फलं तु नाभितः प्रार्थनीयम् । यजमानादेव तस्य लभ्यमानत्वेन अभिसंबन्धाभावात् । किञ्च उत्साहजननार्थमाशासनम्, यजमानस्य आसन्नत्वादेव यथाचोदितानुष्ठानसाध्यम् । तत्र शास्यमानमुत्साहजननं यथाचोदितप्रयोगसम्पत्तिहेतुः भूत्वा विभवतीति तदेवाशासनीयम् । ऋत्विक्फलं तु यजमानव्यापारकरणादेव सिद्धमाशासनं(न) प्रयुङ्क्ते । अतो यजमानस्यैवाशासनयोग्यरूप लिङ्गेन ( आशासनयोग्यतारूपलिङ्गेन ) समाख्याया बाधितत्वात् यजमानेनैवाशीर्मन्त्राः प्रयोक्तव्या इति सिद्धम् ।

प्रयोजनम्— पूर्ववत् । सूत्रं तु— मन्त्राश्चाकर्मकरणा येऽमन्त्रैः कर्म च क्रियते, तेऽपि याजमाना स्युः तद्वत् गुणकामवदिति । वीना.

● मन्त्राश्च ब्राह्मणं च वेदः । भा २।१।८।३३.

**मन्त्राश्च सन्निपातित्वात् ।१२।१।९।१८॥**

वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः सन्निपातिनः यथा आज्यग्रहणे प्रोक्षणे अभिमर्शने इति ते भेदेन कर्तव्याः । सन्निपातित्वात् । सन्निपत्योपकारिण एते मन्त्राः उपस्थितं कर्म अभिदधति । तस्मात् अध्वर्युप्रतिप्रस्थातृभ्यां पृथक् प्रयोक्तव्याः इति सिद्धान्तः । के

● मन्त्राः । दर्शपूर्णमासयोः पुरोडाशविभागे ' यथाभागं व्यावर्तेथाम् ', ' भागो वा विभजतु ' इत्यादीनां मन्त्राणां समुच्चयः । इति प्राप्ते, कृतस्य प्रकाशनस्य पुनः करणासम्भवात् मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगे अपि शान्ते ' वा चतुर्भिरादत्ते ' इति लिङ्गाच्च विकल्पेन विनियोगः इति सिद्धान्तः । संकर्ष २।२।८. ● मन्त्रा द्विविधाः करणा क्रियमाणानुवादिनश्चेति । करणा ' करोति ' इत्येव प्रत्ययं कुर्वन्ति । क्रियमाणानुवादिनः एवं कर्तव्यमिति प्रत्ययं कुर्वन्ति । अध्वर्युस्तावत् करोमीत्येतेन प्रत्ययेनार्थः । क्रियमाणानुवादिनश्च अध्वर्युणा क्रियमाणमर्थमनुवदन्ति । सोऽनुवादोऽलमध्वर्योः स्मृतिं कर्तुम् । क्रियमाणानुवादिनो मन्त्राः स्मरणार्थाः । मन्त्राम्नानसामर्थ्यात् मन्त्रेण स्मृतिः कर्तव्या । स्मरणार्थस्य च मन्त्रस्य आम्नानसामर्थ्यात् स्मारितं कृतमदृष्टार्थं भवति । प्रकृतेषु च कर्मसु स्मृतिसंतानेनार्थः । भा. १२।३।१६।२७. ● मन्त्राः धर्मे प्रमाणम् । मणि. पृ १३. ● मन्त्राः प्रैषरूपा आध्वर्यवाः दर्शपूर्णमासयोः । ३।८।१५।२४–२५. ● मन्त्राः प्रोत्साहनार्था याजमानाः ' आयुर्दा अग्नेऽसि० ' इत्यादयः । भा ३।८।६।१५–१६ ● मन्त्राः मन्त्रसमाम्नायपठितस्वरेणैव एव कर्मणि प्रयोक्तव्याः, न तु ब्राह्मणभाविकेण स्वरेण । भाषास्वराधिकरणम् । १२।३।८।२०–२१. ● मन्त्राः ये परप्रत्यायनार्थास्ते निगदाः, तेषां च यजुष्ट्वमेव । वि २।१।१३. ● मन्त्राः ये ब्राह्मणोपदिष्टाः एव न मन्त्रसमाम्नाये पठिताः ते ब्राह्मणस्वरेण एव प्रयोक्तव्याः । १२।३।९।२३–२४. ● मन्त्राः ये लिङ्गेन अप्राप्ता वचनेन विधीयन्ते तेषामप्राप्तत्वादेव मन्त्रविधानेनैव कृतार्थं वाक्यं न भूयः स्वरमपि विधत्ते, वाक्यभेदभयात् । टुप्. १२।३।८।२१, ● मन्त्राः ये लिङ्गेन विनियुज्यन्ते ते

यादृशा एव निर्ज्ञाताः तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । १२।३।८।२१. ● मन्त्राः यच्छन्द– आमन्त्रण– उत्तमपुरुषानुपहृतविधि-शक्तयः धर्मसाधनत्वेन उच्यमानाः ' देवाश्च याभिर्यजन्ते ददति च ' इत्येवमादिभिः आख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं गमयन्ति । वा. ३।१।१।१ पृ. ६४९. ● मन्त्राः वेदैकदेशः । धर्मे प्रमाणम् । त्रि १।४।१. ● अभिधेये तावत् विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । तत्र यदि शब्दस्यार्थो गौणी वृत्ति-र्भवेत् ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत । यदि तु गौणमपि धत्वा प्रतीतः स्वार्थोऽभिधेयः ततः तदतिक्रम-कारणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रस्मरणस्वाध्यायाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतु-रस्ति इति न विनियोगः । वा. ३।२।१।२ पृ ७५०. ● ' कुत्वा दर्पादयो मन्त्रा ब्राह्मणाश्च चतुश्रुताः । न ते निर्मार्गता यान्ति विनियोग्याः पुनः पुनः ॥ ' सु. पृ. ११२१ ● नाभिधायकत्वं मन्त्रत्वे हेतुः । ■ तर्हि ? अभियुक्तप्रयोगः । येऽभियुक्तैः मन्त्रा इति नोच्यन्ते न ते मन्त्राः । भा. २।१।९।३४ । ' ह्याख्याने पठ्यमानेषु येषु मन्त्रपदं स्मृतम् । ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्मृतम् ॥' वा. ● दोषभूतमर्थं संस्कु-र्वन्तो मन्त्राः उपकुर्वन्ति नान्यथा । भा. ३।२।६।१७. ● मन्त्रं यूपपरिव्याणकरणभूतं ' परिवीरसि० ' इति होता पठेत् कौण्डपायिनामयने अग्नीषोमीये पशौ । वि. ३।८।११. ● मन्त्रान् कर्मसिद्धकान् अभिक्रमेव यजमानं वाचयेत् वाजपेये । ' आयुर्यज्ञेन कल्पताम्० ' इत्यादयो मन्त्राः कल्पताः । ३।८।८।१८. ● मन्त्रेण ' उपहृयस्व ' इत्यनेन अनुज्ञापनम्, ' उपहूत० ' इत्यनेन च प्रतिवचनं ज्योतिष्टोमे सोमभक्षे । भा ३।५।१६। ४२, ● मन्त्रेण एकेन कृते कर्मणि द्वितीयस्य प्रयोगो-ऽनर्थकः । १२।३।१३।२९. ● मन्त्रेण यत् देवतासं-कीर्तनं तत् दृष्टार्थम्, स्मरणस्यापेक्षितत्वात् । टुप्. ४।३।७।१९. ● मन्त्रेण स्मृतं क्रियमाणं अभ्युदयकारि भवति । वा. १।२।१।७ पृ. ११८. ● मन्त्रेण हिरण्य-गर्भेण नाययनगौ आधारे विहितेन प्राकृताङ्गान्तराणां न बाधः । भा १०।३।१।११–१२. ● न च यावत् कर्म-प्रभूतेऽर्थे विद्यते तत् सर्वं मन्त्रेण अभिधातव्यम् । न्यूनमधिकं वा असौ यदभिधातुं समर्थः तदभिधत्ते । वा. २।१।५।१५ पृ. ४३७. ● अभिमर्शनमन्त्राभ्यां अग्नमथानोभयहविरभिमर्शनं दर्शपूर्णमासयोः । भा. ३।७। ४।८, १०, ● चतुर्होतृपञ्चहोतृमन्त्राभ्यां अभिमर्शनस्य अपूर्वं प्रयोक्तव्यम्, न तु दर्शपूर्णमाससमुदाये, दर्शपूर्ण-मासयोः । ९।१।५।११–१९, ● मन्त्रैः एव मन्त्रार्थः स्मर्तव्यः । ' अनेनोपायेन स्मृतिः कर्तव्या इति नियमा-र्थमाम्नान महत्त्वात् ' ( तन्त्र अष्टाध्यायीम् ) । १।२।४।३७. ● मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवति इति नियमादृष्टसिद्धिरथवार्थत्वे । वा. २।१।६।११. ● मन्त्रैः प्रकृतैरग्नेयैः आग्नीध्रोपस्थानं ज्योतिष्टोमे । ३।२। ८।२२–२४ ● मन्त्रस्य अग्निहोत्रानोद्धरणादस्य नानु-ष्ठानं दर्शपूर्णमासार्थोद्धरणकाले । ९।४।८।३१. ■ मन्त्रस्य अपवादे प्रतिनिधिर्नास्ति । भा. ६।३।५।१८–१९. ● मन्त्रस्यापि अर्थवादत्वं उक्तं सूत्रभाष्यकाराभ्याम् । ' अर्थवादो वा तदर्थत्वात् ' ४।४।१।२४ इति सूत्रम् । ' एवं च मन्त्रार्थवादः अर्थवान् भविष्यति पुना पुनाद्याः परिवीत आगात्० ' इत्यादि च भाष्यम् । के. ● मन्त्रस्य अभिधानार्थस्य आम्नानसामर्थ्यात् अभिहितं अभ्यु-दयकरं भवति । भा. १२।३।१४।३०. ● मन्त्रस्य अभिधानपूर्वकर्मेव सामर्थ्यकल्पना तथापि न तद्विनि-योगस्याभिधानम् । किं तर्हि ? धर्मस्वरूपस्य । अन्येन च तेन प्रथमं तदभिधानशक्तिः कल्प्यते अन्या च तद्द्वारेण विनियोगशक्तिः । वा. ३।१।७।१४ पृ. ८२५. ● मन्त्रस्य अवहननकरणस्य सकृत् प्रयोगः ब्रीहिसमुदायार्थः दर्शपूर्णमासयोः । ११।४।१२।४५. ● मन्त्रस्य ऊहः अष्टविधः– ( १ ) प्रकृत्यूहः ( २ ) वचनोहः ( ३ ) लिङ्गोहः ( ४ ) प्रकृतिवचनोहः ( ५ ) लिङ्गवचनोहः ( ६ ) प्रकृतिलिङ्गोहः ( ७ ) प्रकृति– वचन– लिङ्ग– नित्योहः ( ८ ) अभ्यासलक्षणः ऊहः । ( विस्तरस्तु मीको. पृ १२३४ इत्यत्र द्रष्टव्यो बाल्यन्ते च द्रष्टव्यः ) । टुप्. ९।३।१।१. ● मन्त्रस्य करणता क्रियातत्साधनविप्रकाशनेनैव । पराक्रमः. ८८।१.

● मन्त्रस्य करणार्थस्य भवति असकृत् प्रयोगः, यथा 'कुरु कुरु भरवाणि' इति । भा. १२।३।१४।३०. ● मन्त्रस्य कर्मणि आहूयमानस्य वर्गे समानकर्तृकत्वनियमः । वा. ३।८।१३।२६. ● मन्त्रस्य कर्मसमवेतार्थप्रकाशनत्वं विना करणत्वायोगात् करणत्वश्रुतौ तदन्यथानुपपत्त्या मन्त्रार्थस्य कर्मसमवायकल्पना नान्यथा । सु. पृ. ७२८. ● मन्त्रस्य कर्मसमवेतार्थप्रकाशनसामर्थ्यं एकवाक्यतोपगमनसामर्थ्यं च शब्दधर्मः । बाल. पृ. ९. ● मन्त्रस्य तन्त्र न दर्शपूर्णमासयोः —निर्वापे प्रतिमुष्टि, लवने प्रतिलवनम्, वेदिस्तरणे प्रतिघातः, आज्यग्रहणेषु प्रतिग्रहणम् । भा. ११।८।१८।४४–४५. ● मन्त्रस्य तावत् अविधायकत्वात् लिङ्गवत् श्रुतितो दौर्बल्यं भवेत् (देवतानिधाने) । वा. २।२।१।२६ पृ. ५११. ● मन्त्रस्य तु सापेक्षगामी पदत्वे नैव कश्चिद् विशेषः । ३।२।१५।२७. ● मन्त्रस्य कर्मस्य च माहात्म्यस्य प्रायः वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथघोषादिना । भा १०।८।१।१–२ वर्णक १. ● मन्त्रस्य 'पत्नी सन्नह्य' इत्यस्य द्विपत्नीके निवृत्तिप्रसङ्गेऽपि नोहः । ९।३।७।२२. ● मन्त्रस्य प्रातिलोम्येऽपि नास्ति । भा ६।२।५।१८–१९. मीन्यो. पृ. २११. 'देवताऽभिधानकिंलक्षणा' इत्यत्र द्रष्टव्यम् । ● मन्त्रस्य प्रकरणान्तरस्थम अर्थं प्रकाशयितुं सामर्थ्ये नानारम्भवशात् नियोक्तुम्, अविधायकत्वात् । टुप्. १०।८।१०।२०. ● मन्त्रस्य प्रकरणान्तस्य बहूनां प्रयोगः ज्योतिष्टोमे दीक्षितस्य । ११।४।१८।५४. ● मन्त्रस्य ब्राह्मणानुपपत्तिरूप मन्त्रब्राह्मणयोर्विरोधे 'मन्त्रस्य ॥ ब्राह्मणोदितार्थप्रकाशनात् उत्तरतन्त्रवृत्तेः ।' ('विरोधिन्यर्थनिर्धारण मुख्य युक्तो हि योऽन्यथानिमित्तभाव ॥' इति शेषः । मा. पृ. ७५३) इति ऐन्द्रचधिकरणवार्तिके उक्तम् । सु. पृ १२४८. ● मन्त्रस्य यस्यैव यत्र वेदे विधानं स एव तेन स्वरेणोच्यते । यदि तु उभयत्र विधानं तत्र अन्यथा विकल्पो गृह्यते । वा. ३।३।१।७. ● मन्त्रस्य स्वरूपमपि नाम्नीति विचारे आस्तीति निर्णयः । मन्त्रेण अभिमृशत्यादिविहितं कर्मवत् । भा. २।१।७।३२. ● मन्त्रस्य यथार्थं प्रयोगकाले पदार्थस्योपस्थापनम् । मन्त्रेणोपस्थित पदार्थः कर्तव्य इति विज्ञायते । १२।३।१०।२५. ● मन्त्रस्य विप्रुषस्त्वाभावः । पराक्रमः. ४।३।२. ● मन्त्रस्य सकृद्वचनम् । 'अप्रतिनिपातिकर्मणा विशेषार्थत्वे कालैकत्वात् सकृद्वचनम् ।' सूत्रम् १२।४।११।५१ । यथा सुब्रह्मण्याह्वाने 'देवा ब्रह्माण.' इति औपगव्ये अहनि । भा. ११।४।११।५१. ● मन्त्रस्य स्मरणार्थस्य आविष्यात्हविः अग्नीषोमीयार्थं स्मरणकाले पृथक् आवृत्ति कर्तव्या ज्योतिष्टोमे । १२।१।१०।९ ● मन्त्रस्य स्मरणार्थस्य आम्नानसामर्थ्यात् स्मारितं कृत अदृष्टार्थाय भवति । यथा प्रेषितं हुतम् । मन्त्रविधानादेव स्मृतिर्भवति । तत्र विधिशब्दादपि सामर्थ्यात् भवति । मन्त्रादपि भवति । मन्त्रस्य आम्नानसामर्थ्यात् मन्त्रेण कर्तव्या । भा. १२।४।१५।३७. ● मन्त्रस्य हि एतत् प्रयोजनं यत् स्मारयति क्रिया वा । असति स्मरणे न क्रिया सर्वत्रैव । ६।१।५।१८. ● मन्त्रस्य हिरण्यगर्भस्य आघारवति आघारे विहितस्य उत्तराघारे निवेशः । १०।३।२।११–१७. ● अकर्मसमवेतार्थाभिधायिनामपि पदानां समवेतार्थपदैकवाक्येन स्वमुख्यार्थत्वोपपत्तेः सकलस्य मन्त्रस्य करणत्वसिद्धिः । सु पृ. ११०. ● अभिविहरणमन्त्रस्य 'उचितमन्वाह' इत्यनेन कालविधिर्योनियोगे । वि ३।२।४. ● अभिमर्शनमन्त्रस्य आग्नेयविकारेषु निवेशः । भा. ८।२।५।२४. ● अवघातमन्त्रस्यावृत्तिर्नानावीहियावपक्षे । ११।४।१३।४६. ● चयने लोकम्पृणाया आवृत्तौ तन्मन्त्रस्याप्यावृत्तिः । भा ११।४।१२।४२. ● न च विधिमन्त्रो पूर्वापरमाननियमोऽस्ति । अत मन्त्रस्य विप्रुषस्त्वाभावः । पराक्रमः. ४।१।२. ● पूर्णाहुतिमन्त्रस्य दर्शपूर्णमासयोरुत्कर्षः । माट्ट. ३।२।१०. ● प्रकाशनार्हानुपेक्षक्रिया विना प्रकाशकमन्त्रस्य यत्नवशागतः । सु. पृ. ४५७. ● बहुवचनान्तपादमन्त्रस्य प्रकृतावेव निवेशः । ९।३।५।१५–२०. ● मनोतामन्त्रस्य गौणार्थे विनियोगः । माट्ट. ३।२।१. ● राजमन्त्रस्य मुख्ये बर्हिष्येव विनियोगः । वि. ३।२।१. ● 'विधिमात्रविनियोगेन न मन्त्रस्यार्थनीयते ।

ततो दिपास्यति होत. नियोगात् स्थापयिष्यति ॥ ' ( इद पूर्वपक्षे) । या. २।१।६।३०. ● प्रतिकरणमन्त्रस्य 'वाचं विसृजति ' इत्यनेन वाग्विसर्गोऽतिदेशे । वि. ३।२।४. ● व्रीहिमन्त्रस्य विकारे न प्रतिनिधिप्रयोगेऽपि । ९।३।९। २४–२७. ● 'हविष्कृदेहि' इत्याह्वानमन्त्रस्याह्वाने विनियोगः । वि. ३।२।२. ● मन्त्रयोः फलदेवताप्रकाशकयोः पूर्वप्रयुक्तत्वम् । 'फलदेवतयोश्च प्रकरणम्' । ९।१।३।८–९. ● पाशमन्त्रयोरेकवचनान्तबहुवचनान्तयोर्द्विवचनान्तेनोहो द्विपशुकार्ये विकृतौ । 'पाशन्याय.' । ९।३।८।१०–१४. ● ' मन्त्राणामपि कर्मार्थे निर्दिष्टार्थप्रकाशनम् । तेन गौणमुख्यौ नाम्नायादेव भागौ ॥' या. ३।१।१।१ पृ. ६४९. ● मन्त्राणां अर्थप्रकाशनार्थत्वम् । 'मन्त्राधिकरणम्' । १।२।४।३१–४५. ● मन्त्राणां ध्यानेन आवृत्त्या संख्यापूर्तिः । संकर्ष. १।१।१८. ● मन्त्राणां 'इन्द्रपीतस्य ' इत्यादीनां अनूहेन सर्वभक्षणेषु विनियोगो ज्योतिष्टोमे । ३।२।१।२८–२९, ३९–४४. ● मन्त्राणां रूपात्मक प्रतिप्रकाशनात् अन्यत्रापि. सूपसृष्ट प्रापि आनुपूर्व्येषु परस्मानासेन दधिमग्निहोत्रे । १२।१।९।१८ ● मन्त्राणां प्रतिकृत्याभावात् प्रयोगस्य च प्रकृतरूपेण वर्तमानेन सङ्गापात् न वेदनिरूपणाभ्याहननम् । सु पृ. ११२, ■ मन्त्राणामेकत्वाद्येऽपि न कृत्स्नानुपाठार्थत्व., स्मार्थाभिधानद्वारा मन्त्राणां प्रयोगादिस्थापनत्वात् प्रतिमन्त्रं च प्रयोगार्थमेकम् प्रत्येकमेव स्वार्थाभिधानात्प्रयोगस्मारकत्वद्वारा क्रोनादिवागनादौ सति संप्रत्ययेन वचनेन साधनानां समुच्चयानुपपत्तेः समुच्चितसाधनत्वाभावेन साधनतया स्वार्थाक्रिया भावात् । पृ. ८१७, ● मन्त्राणां श्रौतत्वेन प्रथमावगतेन मुख्येनैवार्थेन सम्बन्धः । पृ. १०८४.

सू मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात् । १२।३। १०।२५॥

'इषे त्वेति छिनत्ति ' 'देवस्य त्वा सवितुः प्रसवे इत्यादत्ते ' इत्यादिवाक्योक्तानां मन्त्राणां करणार्थत्वात् करणस्मरणात् मन्त्रान्तेन मन्त्रस्य अन्त्येन अवयवेन कर्मादिसंनिपातः, कर्मणः य आरम्भोऽवयवः तस्य कर्मादिः, संनिपातः आदिमं कर्तव्यम् । 'इषे त्वा ' इति मन्त्रस्य यत् अन्तिमं 'त्वा ' इति पदं तत्रापि वा 'आ ' इति अन्तिमो वर्णः तदुच्चारणकाले शाखाया छेदनस्य प्रहारः कार्यः । एवं सर्वत्र । तस्मात् करणमन्त्रेषु मन्त्रान्ते कर्मारम्भः इति सिद्धान्तः । के.

● मन्त्राणां करणभूतानामन्ते कर्मारम्भः । १२।३। १०।२५. ● मन्त्राणां करणभूतानामेकार्थानां विकल्पः । १२।३।११।२९., ● मन्त्राणां कर्मोपयिकार्थाभिधानार्थत्वेन प्रकरणसाम्यार्थत्वोपपत्तेः नादृष्टकल्पना युक्ता । सु पृ.१०२. ● मन्त्राणां कर्मप्रकाशनार्थत्वम् । वा. ३।८।७।१७ .

सू मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ।१२।३।७।१८ ॥

मन्त्राणां कर्मसंयोगात् कर्मसु प्रयोज्यत्वात् ग्रहणकाले यस्तेषां धर्मः ' पर्वणि नाध्येयम् ' इत्यादिः, तेन स्वधर्मेण स्वेन धर्मेण विशिष्ट. कर्मकाले प्रयोगः स्यात् । धर्मस्य तन्निमित्तत्वात्, स. मन्त्रप्रयोगः निमित्त यस्य तादृशत्वात् । तस्मात् अनध्यायकाले कर्मसु मन्त्रा नोच्चार्याः । इति पूर्वः पक्ष. ।

विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य । १९ ॥

' पर्वणि नाध्येयम् ' इत्यादीनां धर्माणां विद्यां प्रति ग्रहणार्थाध्ययनकाले विधानात् प्रयोगस्य च कर्मार्थत्वात् मन्त्रप्रयोगस्य कर्मानुष्ठानार्थत्वात् सर्वकालं स्वाध्याये अनध्याये न मन्त्राणां प्रयोगः स्यात् । इति सिद्धान्तः । के.

● मन्त्राणां न अर्थवचन कार्यम्, न स्वरूपम् । स्वरूपे हि अदृष्टं कल्पयितायम् । अर्थवचनेन दृष्ट उपकारः । भा. ९।३।१।१. ● मन्त्राणां च स्वरूपे सामर्थ्यम्, नापूर्वीयस्वरूपे । टुप्. ९।१।३।४. ● मन्त्राणां जपस्तुत्यादीनामभिधानानां समुच्चयः, न विकल्पः । १२।४। १।१–२. ● मन्त्राणां निर्वापाभ्यादिसाधकत्वेन अनभिमतार्थगन्तृत्वस्वप्रामाण्याक्षमत्वेऽपि अविसंवादित्वलक्षणेन प्रामाण्य इति जीर्णाः । अनेकविधिकल्पनद्वारा द्रव्यसाधन–निर्वापादि विशेष्यकमन्त्रप्रकाशकप्रकाशकत्वादिस्वर्गकामप्रयोजकत्वेन उभयोपपत्ति. इति सोमेश्वरः ।

समुच्चये प्रमाण भवति । लिङ्गप्राप्तमपि गुणार्थं पुन श्रवण इत्युक्त मन्त्राधिकरणे ।

वि— 'प्रथमन्तो समुच्चेयो विकल्प्यो वा चतुष्ट्व वत् । आद्य उक्तिद्वयात्, मैन समुचितमुदीरणात् ॥'

भाट्ट— ये तु सत्या विनैव ब्राह्मणेन अनेके मन्त्रा प्रत्येक विनियुक्ता, तेषु वा लिङ्गविनियुक्तेष्वपि ब्राह्मणे यत्र अर्थवादार्थं प्रत्येक पुन श्रुति, तत्र ये ताव द्वचनविनियुक्ता, तेष्वदृष्टार्थत्वादेव प्रयाजादिवत् समुच्चय, अन्यथा तद्विनियोगवैयर्थ्यापत्ते । लिङ्गविनियुक्तेष्वपि 'उरु प्रथा उरु प्रथस्वेति पुरोडाश प्रथयति' 'उरु ते यज्ञपतिरिति पुरोडाश प्रथयति' इत्यादिषु यथा आर्थवादिक पुन श्रुतिप्रयोजन तथा समुच्चयोऽपीति मन्तव्यम्, दृष्टार्थेष्वपि वचनाद्विनियोगस्य 'इषे त्वेति शाखा छिनत्ति' इतिवत् तत्रापि प्रयोजनान्तरपर्यवसानोपपत्ते, न दृष्टार्थत्वमात्रेण समुच्चयनम् । अतश्च निरपेक्ष साधनत्वभ्रमात् विकल्प एव । एव लिङ्गविनियुक्तेष्वपि मन्त्रेषु न श्रुतेरभावादभ्यासाभावात् न मणिमन्त्रौषधन्यायेन समुच्चयस्यैकता । अत एव तत्र प्रथममेव अध्वर्युकर्तृ कर्त्रर्थे तत्तच्छाखासु विधीयते इत्युक्तम् ।

मण्डन— 'मन्त्रोऽनेको ब्राह्मणोक्तो विकल्प्य ।'

शबर— 'ब्राह्मणे विहितेष्वेवम् ।' विकल्प ।

● मन्त्राणा प्रत्येकार्थे विनियोग (३।२।२।१–२) इत्यस्य ऐन्द्र्याद्य अपवाद । वा ३।२।२।३. ● मन्त्राणा स्वप्रकरणेऽपि क्रियातत्समवेतार्थप्रकाशनेन नियामकता । सु पृ ४५७ ● मन्त्राणा यज्ञस्थानाम स्थाननिर्णय एकवाक्यत्वनिर्णयेन भवति । वि ३।१।१४ ● मन्त्राणा लिङ्ग नाम अर्थप्रत्यायनसामर्थ्यम् । तच्च मुख्ये गौणे च केनचित् प्रकारेण क्रियते । (गौणस्य अर्थस्य अशाब्दत्वे शाब्दार्थोत्तरानन्यथापत्ते गौणेऽप्यर्थे शब्दव्यापार अस्ति– इति सु ) । वा ३।२।१।१ ● मन्त्राणा विध्यन्वयेन प्रामाण्यम्, न साक्षात् । वि १।४।१ ● मन्त्राणा विदिष्टार्थस्मरण प्रयोजनम् । मणि. पृ ● मन्त्राणा श्रुतिलिङ्गादि–प्रमाणप्राप्त– कत्वङ्ग भावाना व्यापार विना स्वरूपेण अत्यङ्गत्वानुपपत्ते व्यापारकाङ्क्षाया उच्चारण अदृष्टार्थत्वादुपेक्ष्य अर्था-भिधानमेव शाब्दबोधरूप अनुष्ठेयार्थस्मरण अनुष्ठान-रूपदृष्टप्रयोजनार्थत्वात् व्यापारत्वेन अङ्गीक्रियते । तदेतत् 'अग्नये जुष्ट निर्वपामि' इत्यादिकरणमन्त्रेषु सूपपादम् । यत्र तु स्वरसतो नानुष्ठेयक्रियावगति, अथ च विनियुज्यते, 'इषे त्वोर्जे त्वेति शाखामाच्छिनत्ति' इत्यादिना तत्रापि 'छिनद्मि' इत्यध्याहारेण अनुष्ठेयक्रियाभिधान सभावनीयम् । क्रियमाणानुवादिषु 'ध्रुवा असि' इत्यादिषु पूर्णपरिधानादिक्रियाया दीर्घकालसाध्यत्वेन कदाचिन्मध्ये 'परिवीरसि' इति परिधानमनन्यसाधनविच्छेदे प्रसक्ते सति तत्स्मृति दार्ढ्यार्थं स्मारकापेक्षाया अनुष्ठेयस्मृतिदार्ढ्यहेतुत्वेन अर्थाभिधान अर्थवत् । कर्मण स्मारकानपेक्षाया मपि मन्त्राकाङ्क्षयैव तदाकाङ्क्षोत्थापनात् न दोष । के ● मन्त्राणा सख्यायुक्तवचनविहिताना समुच्चय, यथा अग्निचयने अभ्यादाने चतुर्णाम्, स्तनने द्वयो, मुदाहरणे षण्णाम् । १२।३।१४।३० मीको पृ ७१ 'अग्निचयने संख्यया विहितानाम्०' इत्यत्र द्रष्टव्यम् ।

● मन्त्राणा सनिपातित्वादेकार्थाना विकल्प स्यात् । १२।३।१३।२९॥

एकार्थाना एककार्याणा मन्त्राणा 'पूषा वा विभजतु' 'भगो वा विभजतु' 'अर्यमा वा विभजतु' इत्यादीना विकल्प स्यात् । सनिपातित्वात् समवेतत्वात् करणत्वात् । करणमन्त्राणा च कर्मादिसनिपात उक्त । न च विकल्पमन्तरेण सर्वेषामन्वै कर्मादिसनिपात कर्तु शक्य । तस्मात् एकार्थाना करणमन्त्राणा विकल्प इति सिद्धान्त । के

● 'मन्त्राणा सनिपातित्वादेकार्थाना विकल्प स्यात्' (१२।३।१३।२९) । विकल्पो एषा मन्त्राणाम् ('उरु प्रथस्व' इत्यादीना), न समुच्चय । द्रष्टव्य उक्तो न्याय 'मन्त्राणा०' इति । मा १२।३।१५। ३३ ● मन्त्राणा स्मारकत्वेऽपि प्रामाण्यम् । मणि पृ १२ ● मन्त्राणा होमाना क्रियमाणानुवादित्वात् समुच्चय, न एकार्थत्वे विकल्प । १२।३।१६।३६–३८ 'होममन्त्राणा समुच्चय' इत्यत्र अधिकरण द्रष्टव्यम् । ● 'अर्थाभिधानसयोगान्मन्त्रेषु शेषभाव स्यात्'। मुख्येन

च कृतार्थाना न गौणे श्रुतिकल्पना ॥' 'अशिना प्रयोगसामर्थ्यात्०' (२।१।६।२१) इत्यनेन न्यायेन अभिधेये तावद्विनियोगाय मन्त्रा श्रुतिं परिकल्पयन्ति । तत्र यदि जहत्स्वार्था गौणीवृत्तिर्भवेत् ततस्तुल्यवत् उभयत्रापि श्रुति कल्प्येत । यदि तु गौणमपि वदता पूर्वतर स्वार्थोऽभिधेय, तदा तद्विशेषप्रकरणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरण-स्वाध्यायाध्ययनविधिषु न पुन श्रुतिकल्पनहेतुरस्ति इति न विनियोग । शा. ३।२।१।२ पृ. ७४३–५०. • करणमन्त्राणां कर्मसमवेतानुष्ठास्यमानार्थ-स्मृतिफलकत्वम् । क्रियमाणानुवादिना अनुष्ठीयमानार्थस्मृतिफलकत्वम् । अनुमन्त्रणादीनां कृताकृतप्रत्यवेक्षणाय अनुष्ठितार्थ-स्मृतिफलकत्वम् । प्रोत्साहनार्थानाम् 'अगन्म स्व. स ज्योतिषाऽभूम' इत्यादीनां 'यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति' इति वाक्यावधारितकर्माङ्ग-भूतश्रद्धाजननार्थं अनुष्ठेयकर्मस्मृतिफलकत्वम् । स्तोत्र शस्त्रमन्त्राणां आराद्उपकारकत्वम् । मु पृ १०२, • 'चतुर्भिरभ्रिमादत्ते' इति तृतीयया मन्त्राणां करणत्वे अभिहिते स्वव्यापारं विना तद्योगात् उच्चारण-स्यातद्व्यापारत्वात् कर्मोपस्थ्यनुपयोगित्वाच्च स्वव्यापार कर्मोपस्थ्युपयोग्यभिधानव्यापारेण करणत्वावसायात् चतु-र्भिरभ्र्यादानं अभिदध्यादिति वाक्यार्थावगमे इष्टिकाण-विनियुक्तानां अर्थक्रियाकरणत्वेन कर्मगमाराभावत्वात् द्रव्य-देवतावत् क्रियोपस्थ्युपयोगित्वाभावात्. कारकत्वावसायात् करणव्यतिरिक्तकारकत्वानुपपत्ते करणत्वनिश्चये सति अभिधानार्थत्वसिद्धे स्तोत्रशस्त्रमन्त्राणां च लौकिकस्तुति-न्यायेन अभिधानार्थत्वावसायात् 'चा चतुर्भिरादत्ते' इत्यादिश्रुतिविनियोज्येषु अभ्र्यादानादिमन्त्रेषु तद्वत् आम्नानवैयर्थ्यप्रसङ्गापत्त्यापि अर्थप्राधान्य अभिहितम् । पृ. १०३. • दीक्षाहुतिमन्त्राणामभिचयनप्रकरणे श्रुतानां सौमिकदीक्षाहुतिमन्त्रैः समुच्चय । १०।३।४।२३–२९. • न तात्स्थ्येनैव मन्त्राणां ब्राह्मणे विनियोगोऽस्ति । या. २।१।१।४६. • प्रयाजानुमन्त्रणभाषाया याजमानत्वं न कथित् तस्य. दर्शपूर्णमासयो. । ५।१।३।१२. • प्रेष मन्त्राणामाध्वर्यवत्वम् । ३।८।१२।२४–२५. • मुख्य निषयविनियोजकश्रुतिकल्पना विना गौणविषयश्रुति-कल्पनायोगात् मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगते मुख्यविनियोगेन मन्त्राणां नैराकाङ्क्ष्यात् गौणे मन्त्र विनियोगकल्पना न युक्ता । मु पृ.१०८४. • इतरथापि उपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानात् उपाया-न्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया मन्त्राणां अर्थाभि धानं सिद्धम् । या १।२।४।२६. • मन्त्रे 'अगाम सुवः सुवरगन्म' इत्यत्र स्वर्गस्वरूप अपूर्वस्य मन्त्रस्य द्वार उत अपूर्वसन्निधिविशेष इति चिन्ता । द्वितीया कोटि. सिद्धान्त. । सोम. ९।१।१ वर्णक २. • मन्त्रे एकस्मिन् नितरामपि संभवति स्तुति अभिधानं कथं । यथा 'इदं विष्णुर्विचक्रमे' इति । यदि विष्णुरुच्यते तत्र स्तुतिः । अथ अन्यस्मै वृत्तान्त आख्यायते ततो ऽभिधानम् । अथ आत्मना अवधार्यते ततो जप । भा. १२।४।१।२, • मन्त्रे गौणे चरौ बर्हिं लवननिष्पके इतिपदस्थाने न्यपदस्य ऊह । ९।२।१।३. • मन्त्रे सौर्यादिविकृतौ अतिदिष्टे वैकृतद्रव्यदेवतावाचकपदोह । (मन्त्रोहन्याय) । ९।१।१।१–८. • मन्त्रे 'अग्नये त्वा०' इत्यस्मिन् नीवारचरावूह 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यत्र । भा. ९।३।१।१–८. • आहवनीयाग्न्याधानकरणमन्त्रे ध्रुव एव याजमान दर्शपूर्णमासयो. । (वर्चोन्याय) । ३।८।१२।२६–२८. • ऐन्द्राग्नैकादशकपालनिर्वापमन्त्रे ऐन्द्राग्नपदोह । भा ९।३।१।१–८, त्रिवेदिगतनिर्वापमन्त्रे तद्देवतापदोह । ९।३।२।१–८. • द्विवहुपत्नीके दर्शपूर्णमासप्रयोगे प्रेषमन्त्रे पत्नीशब्दस्य नोह, एव विकृतावपि । ९।३।६–७।२०–२१. • सर्वत्र हि मन्त्रे निर्दिश्य पद कर्म-समवेतमर्थं वदति, यथा 'अग्नये जुष्टं निर्वपामि' इति अग्निनिर्वपाभिपदे । शिष्टानि ■ असमवेतार्थाभिधायि-त्वात् अप्रयोगार्हाणि इत्ययमनेकवाक्यतान्ययानुपपत्त्या अनुमितसमवेतार्थाभिधानानि सन्ति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थंतया प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तदविरोधे सति सर्व-मप्यनुज्ञायते । चा. ३।२।१।१४ पृ. ८१२. ■ साग्रहणी-ष्टिनिर्वापमन्त्रे विश्वेदेवपदोह । भा ९।१।१।१–८.

* मन्त्रेषु अग्न्यादिस्वरूपं न विवक्षितम्, किन्तु अग्न्यादिनिरूपूर्वकाणतात्पर्यम्। सोम. १।१।१ वर्णक २.
* मन्त्रेष्वपि ब्राह्मणलिङ्गानि दृश्यन्ते। तेन अभियुक्तैः मन्त्रत्वेन अभिधानमेव मन्त्रलक्षणं तदितरवेदवाक्यत्वं च ब्राह्मणलक्षणं इत्येव स्वीकर्तव्यम्। न च हेत्वादीनामन्यतमं ब्राह्मणं इति ब्राह्मणलक्षणम्। मन्त्रेष्वपि हेत्वादिसद्भावात्। तथाहि– 'इन्द्रो यातुधानान्ति हि' अत्र हेतुः। 'उदानिषुर्महीरिति तस्मादुदकमुच्यते' अत्र निर्वचनम्। 'मोघमन्नं विन्दते अप्रचेताः' अत्र निन्दा। 'अग्निर्मूर्धा दिवः ककुत् पतिः' अत्र प्रशंसा। 'अधः स्विदासीदुपरि स्विदासीत्' अत्र संशयः। 'कपिञ्जलानालभेत' अत्र विधिः। 'सहस्रमयुता ददत्' अत्र परकृतिः। 'यज्ञेन यज्ञमयजन्त देवाः' अत्र पुराकल्पः। 'इन्द्रदा इत्यत्रथा इत्यपत्र. इति ब्राह्मणो गायेत्' अत्र ब्राह्मणोक्तमन्त्रे इतिकरणबाहुल्यम्। 'राजा चित्रं गवां भक्षीत्याह' 'यो वा रक्षाः शुचिरस्मीत्याह' अत्र 'इत्याह' इति वाक्योपबन्धः। नि.२।१।७.

⸸ मन्त्रेष्वथवाक्यशेषत्वं गुणोपदेशात् स्यात्। १०।८।१०।२०॥

'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति अनारभ्यवचनस्य दर्विहोमेषु श्रूयमाणम् 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति वाक्यशेषः यत् स्वाहाकारेण देवेभ्यः प्रदीयते, तत् 'पृथिव्यै स्वाहा' इत्यादौ इति पूर्वपक्षे सिद्धान्तयति। मन्त्रेषु 'पृथिव्यै स्वाहा' इत्यादिषु अनारभ्यवचनम्, न वाक्यशेषत्वम्। ब्राह्मणं विधायकम्, मन्त्रो न विधायकः, विधायकाविधायकयोश्च नैकवाक्यता स्यात्। अपि च 'पृथिव्यै स्वाहा' इत्यादौ गुणोपदेशात् देवतालक्षणगुणोपदेशात् देवताविधिपरत्वम् न तु स्वाहाकारविधिकल्पनया उपसंहारार्थत्वम्। तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्ति इति सिद्धान्तः।

अनाम्नाते च दर्शनात्। २१॥

कचिद्दर्विहोमे स्वाहाकारे अनाम्नातेऽपि स्वाहाकारस्य दर्शनात् सर्वेषु दर्विहोमेषु स्वाहाकारः कर्तव्यः। ज्योतिष्टोमे 'ध्रुवेण चाग्नीध्री आग्नेया इति औदुम्बर्यां निखाते जुहोति आऽन्वाद्यान्तस्रावयति भूमिगते स्वाहा करोति' इति अनाम्नाते स्वाहाकारस्य दर्शनम्। सिद्धान्तोऽयम्।

प्रतिषेधाच्च। २२॥

'न स्वाहेति वचनं करोति, मन्त्रं च नाह' इति कचित् दर्विहोमे स्वाहाकारस्य प्रतिषेधात्, प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् सर्वेषु दर्विहोमेषु स्वाहाकारो भवति इति सिद्धान्तः। के.

* मन्त्रेषु जपार्थेषु मन्त्रसमाम्नायसिद्धस्वरनियमः (भाषास्वराधिकरणम्)। १२।३।८।१०-१२.
* मन्त्रेषु प्राधान्याभिधानात् देवतात्वेन अग्न्यादयः प्रज्ञाताः। वा. २।४।६।९ पृ. ३४०. * मन्त्रेषु 'यथाभागं व्यावर्तेथाम्' इत्यादिषु पुरोडाशपिण्डौ एव सम्बोध्यौ न देवता। संकर्ष. १।३।१६. * मन्त्रेषु लिङ्गवचनसामर्थ्यं 'बर्हिर्देवसदनं दामि' इति विनियोगकारणमुक्तम्। भा. ३।३।४।११. * यत्तु मन्त्रेषु अध्येतृणां वेदशब्दप्रयोगो दृष्टः (वेदमधीमहे, वेदो वर्तते इति) सत्यम्, अन्यत्रापि लक्षणा, तथापि तु इत्येव (मन्त्रब्राह्मणयोर्वेदे लक्षणा) न्याय्यसी। वा. १।१।२।१.
* मन्त्राकरणपक्षः। अश्वमेधे अश्वविषये वल्गीवल्गापसारणार्थे वैदोपिकमन्त्राकरणपक्षे मयावा पशूनामर्थे, षडशीतिरेषा वल्गयः इति समाससंवचनम्। ९।४।२। १७-२१. मीको. पृ. ७४१ 'अश्वमेधे अग्निगुणे॰' इत्यत्र द्रष्टव्यम्।
* मन्त्राधिकरणम् (मौसलाहवनमन्त्राणां याजमानत्वम्)। ३।८।६।१५. मीको पृ. १०१२ 'आशीरधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

⸸ मन्त्राधिकरणम्। मन्त्रा अनुष्ठेयार्थस्मारकाः॥ तदर्थशास्त्रात्। १।२।४।३१-१॥

भाष्यम्— अथेदानीं किं विवक्षितवचना मन्त्राः उत अविवक्षितवचनाः। किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उत उच्चारणमात्रेण इति। यद्युच्चारणमात्रेण तदा न नियोगतः 'बर्हिर्देवसदनं दामि' इत्येष बर्हिर्लवने विनियुज्येत। अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवने

च । तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसमर्पणे सत्यपि प्रयोजनाभावान्न प्रतिपद्यन्ते । मन्त्राः पुनः कर्मानौपयिकार्थाभिधायित्वात् तेनांशेनानपेक्षिताः । स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते । स्वाध्यायाध्ययनचोदनाऽपि प्रयाजानन्तरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वात् न विप्रकृष्टमर्थाभिधानं याचयति । प्रयाजादिवाक्येष्वपि स्वातन्त्र्ये स्वरूपग्रहणमेव प्रसक्तमासीत्, तत्राधिकारार्थदानेन युक्तं न तिरः, तथा पिबितु । शब्दे च कार्यस्यासम्भवादर्थे कार्यं विधीयते । मन्त्राणां तु शब्द एव सम्भवति । अतश्च कर्मप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः, तद्व्यापारेणाप्यकारणादर्थाभिधानस्य । तस्माद्रूपमेवाङ्गम् । तथा च तदर्थशास्त्रादीन्युच्यन्ते । परिहारस्तु क्रमानुरोधेन विपर्यासात्युदाहरणानि अक्षमादानप्रभृति दात कानि । भाष्यकारस्तु यथातथोदाहृतैरपि कार्यसिद्धिं मत्वैवमुपन्यस्तवान् 'उरु प्रथा उरु प्रथस्व' इत्यादि । 'यथा साधुः' [illegible] । नीडीरोगानुपहतेन्द्रियस्य चक्षुरस्त्येनेति परैरुच्यते, परेण तु गीयमानमुपलभ्य न पश्यतीति ज्ञायते, तथा मन्त्ररूपमालोचयतः अर्थप्रकाशनशक्तिबुद्धिर्यद्यपि भवति तथापि परेण विनियोगं दृष्ट्वा स्वयं विनियोक्तृशक्तिर्नास्तीति गम्यते । तत्रश्चार्थान्तरत्वम् । अन्यथा स्वयमेव विनियुज्येत । 'नार्थवादार्थम्' इति लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यभिप्रायम् । न हि इति छेदः । विविनैक वाक्यतया अर्थवादाः स्तुत्यर्थाः कल्पिताः । प्रदेशान्तरस्थस्य तु मन्त्रस्याऽऽनुमानिकस्य वा विधेरात्मनः समीपेऽर्थवादमपश्यतः स्वस्य प्रयोजनाकाङ्क्षानिर्भरेण व्यवहितापेक्षत्वात् दूरस्थया स्तुत्या कार्यम् । तथा अभ्यादाने रूपादेः प्रकाशनात् मन्त्राणाम् 'स चतुर्भिरादत्ते' इत्यनर्थकं वचनम् । चतुर्णामपि श्रुतदेवमन्त्रगतामेव ब्रूयात् क्रियागतम् । न ह्यन्यगुणोऽन्यगामी भवति । न च निष्क्रियत्वात्कर्माङ्गत्वेनोपदेष्टुं शक्यते । तेनैव वाक्यं भवेत् 'ये एते चत्वारस्तैरभ्यादानं कुर्यात्' ते च प्रयोजनवचनाच्चत्वार इत्यानर्थक्यम् । विधानन्यायादेव च संख्यायाः समुच्चयश्चाद्याभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमानो न शक्यो वारयितुम् ।

असमर्थे पुनर्वचनमप्रयुक्तत्वात् अदृष्टस्य न चतुर्णां मार्गास्तत्वे प्रमाणमिति युक्तः समुच्चयः । उभयोरपि तावद्दर्शनयोरश्वगर्दभरशनयोरादानमर्थप्राप्तत्वान्न विधीयते । यदि मन्त्रोऽपि रूपात् प्राप्तोऽनर्थकं वचनम् । परिसंख्येति परैर्वर्जनार्थत्वाद्विषया बुद्धिरभिधीयते । साऽपि गर्दभरशनाया आदाने वा स्यान्मन्त्रे वा । उभयथा न निर्दोषा । विधिपरः शब्दः श्रुयते इति स्वार्थं जह्यात् । परस्य च वाक्यस्य गर्दभरशनां न इत्यस्यार्थे कल्पयेत । प्राप्तं च रूपादर्थाद्वा मन्त्रादानं वा बाधेत । अदृष्टार्थत्वे लघुन्यायेन यत्रैव गीयते तत्रैव वर्तिष्यते । यदि नाश्वाभिधानीमिति सम्बन्धः स्यात्ततः परिसंख्यैतापि, न त्वसावस्ति । अस्तकाशा क्रियापरिहारेणान्योन्यसम्बन्धाभावात् । तेन वाक्यमपि नियमेन सम्बध्नीयात् । एक च सा । प्रकरणापूर्वसंयोगश्चाविशिष्टस्तस्मात्र परिसंख्याप्रयोजनं कथयति । 'अतो न प्रमाणं यहि.' इत्यादि । तदा हि महाप्रयोगवचनेन सर्वे मन्त्राः कैवल्यप्रधानार्थाः तथापि बाहुल्यमेव पश्यतां नाहि. सम्ध्येरन् । पाठक्रमानुरोधात्तु तदाऽपि नैव व्युत्क्रमेण प्रयोगः कर्माण्यनादृत्य सहैव अनुगाक्रमेण या पठितास्तु धीयते ।

वाक्यनियमात् । ३१-२ ॥

भाष्यम्— नियतपदक्रमा हि मन्त्रा भवन्ति 'अग्निर्मूर्धा दिवः' इति, न विपर्ययेण । यद्यर्थप्रत्यायनार्था विपर्ययेणाप्यर्थं प्रतीयते इति नियमोऽनर्थकः स्यात् । अथोच्चारणविशेषार्थाः विपर्ययेऽन्यदुच्चारणमिति नियम आश्रीयते तेन यतरस्मिन् पक्षे नियमोऽर्थवान् स नून पक्ष इति । ननु अर्थवत्स्वपि नियमो दृश्यते, यथा इन्द्राग्नी इति । युक्तं तत्र तत् । विपर्ययेऽर्थप्रत्ययाभावात् ।

वा — 'अग्निर्मूर्धा' इति योऽर्थः प्रतीयते स मूर्धाऽग्निः इत्यनेनापीत्यनर्थको नियमः । यस्य त्वदृष्टार्थता तस्य क्रमान्तरे तदुच्चारणस्यादृष्टप्रमाणाभावात् क्रमान्तरं न युक्तमिति नियमार्थवत्ता । अथ नियमश्रवणादृष्टं कल्प्येत तत् उच्चारणादेरेवापद्यते तदधीनत्वाद्विषयप्रतीतेः । यत्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु

नियमो दृश्यते यथेन्द्राग्नी नीलोत्पलं शङ्खदुन्दुभिश्रेष्ठ निष्कौशाम्बिरिति, युक्तं तत्र नियमेऽपशब्दार्थावबोधप्रसङ्गात् । अजाद्यदन्तविशेषणत्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते । तेनाग्नीन्द्रौ इत्यसाधुत्वम्, पुरुषराज इत्यर्थान्यत्वम्, कौशाम्बिनिरित्यनर्थकत्वम् । यत्तु अग्नीद्रौ इति क्वचित् प्रयोग स च्छान्दसः, अर्थेऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम् । तुल्यकक्षायप्रतीतौ इन्द्राग्नीपदमेव व्यवस्थितम् । ननु इहापि क्रमान्यत्वादन्यत्र स्यात् । तदेवार्थपरत्वे सति तद्विनाशे तु किं निमित्तमिति न विद्मः । तेन मन्त्रप्रसिद्धौ 'वाक्यनियमात्' इत्यपि सूत्रम् (स्त्रीवेदे स्त्रीशब्दप्रयोग, ग्रामैकदेशे 'ग्राम आयातः' इति प्रयोगदर्शनात्) । अपत्र अन्यप्रकरणाधीतवाक्यनियमात् । न ह्यर्थाभिधाने अयस्कस्याऽऽसीस्य च विशेषः । अथवा मन्त्रपौरुषेयवाक्ययोः तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमोऽदृष्टार्थः । अथवा अनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात् । न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता ।

बुद्धशास्त्रात् । ३१-२ ॥

भाष्यम्— बुद्धे खल्वपि पाठार्थे तदभिधानसमर्थो मन्त्रो भवति 'अग्नीदग्नीन् विहर' इति । स बुद्ध किं बोधयेत् ? अथ नूच्चारणविशेषार्थो, बुद्धेऽपि उच्चारणविशेषोऽवकल्प्येतेति । ननु पुनर्वचनात् संस्कारविशेषो भविष्यति । एवमनन्यपक्षमेव आश्रितोऽसि । वचनमुच्चारणम् । तदि शक्यते कर्तुं नावश्यमाश्यकम् । तत्र वीतेऽप्यवश्यम् । यथा सोपानत्के पादे द्वितीयामुपानहमप्रवश्यवानोपादत्ते ।

वा— 'न दायिद्वान् विहितोऽस्ति' (३।८।८।१८) इत्यत्र तावदग्नीधाऽऽग्नीया पदाया प्रागेव कर्मऽनुमादवगन्तया । तत्र प्रैषं विप्रेषणन्यायेनार्थं ज्ञापयितुमशक्नुवन् अदृष्टार्थो भवति । अत्र स्मारको मन्त्र इत्युच्यते । तदपि नास्ति । ब्राह्मणज्ञानाम्यासपाटवनिमित्तसंस्कारादेव तत्सिद्धे । संस्कारस्य शक्तिहेतुरपि पूर्वपदार्थस्मृतिर्नाशयेव वा भविष्यति नार्थो मन्त्रे । तत्र यत् उच्यते संस्कारविशेषो भविष्यतीति, नासान्

दृष्टादृष्ट सम्भवति, अत पूर्वपक्षापत्ति । यदि हि प्रतीतोऽप्यर्थो नैव दृष्ट साधयति ततो यत्नदूरमपि गत्वाऽदृष्ट कल्पनीय तदुच्चारणादेव वरमिति ।

अविद्यमानवचनात् । ३१-४ ॥

भाष्यम्— यज्ञे साधनभूत प्रकाशयितव्य । न च तादृशोऽर्थोऽस्ति यादृश अभिदधाति, यथा 'चत्वारि शृङ्गा' (तैआ १०।१०।१७) इति । न हि चतुःशृङ्गत्रिपाद् द्विशिरस्क सप्तहस्त किञ्चिद् यज्ञसाधनमस्ति । तदर्थाभिधानार्थे किमभिदध्यात् । उच्चारणार्थे त्वदृष्ट कल्प्यते । तथा 'मा मा हिंसी' इत्यसत्यामपि हिंसाया निमभिदध्यात् ? ।

वा— न चतुःशृङ्गादि किञ्चिदस्मिँ तन्त्रयज्ञे वा प्रकृतौ विकृतौ वा विद्यते । यद्यपि च गुणवादेन किञ्चित् स्यात् तथापि तदनुष्ठानाभावात् तन्मृषा कार्यम् । न च ज्ञायते क्व प्रदेशे प्रयुज्यतामिति । तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सिद्ध पूर्व पक्ष । 'मा मा हिंसी' 'मा मा सन्ताप्तम्' इत्यादीनि वेदिहविर्धानादिविषयत्वात् 'अचेतनेऽर्थबन्धनात्' इत्यनयोरुदाहरणम् । इह त्वप्रसक्ताया हिंसाया प्रतिषेधानर्थक्यम् ।

अचेतनाऽर्थबन्धनात् । ३१-५ ॥

भाष्यम्— अचेतने अर्थे खल्वर्थं निबध्नाति 'ओषधे त्रायस्वैनम्' इति । अभिधानेनोपकुर्वन्त एवंजातीयका ओषधिं पशुत्राणाय प्रतिपादयेयु । न चाचेतना शक्या प्रतिपादयितुम् । उच्चारणार्थे तु नैष दोषो भवति । तस्मादुच्चारणार्था । 'शृणोत ग्रावाण' इति चोदाहरणम् ।

वा — 'ओषधे त्रायस्व', 'शृणोत ग्रावाण' इति च सम्बोधन कार्यनियोगाभिमुखकरणार्थम् । न चाचेतनस्याऽऽभिमुख्य संभवति । न च पशुत्राणे प्रातरनुवाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यते इत्यानर्थक्यमर्थविवक्षायाम् ।

अर्थविप्रतिषेधात् । ३१-६ ॥

भाष्यम्— अर्थविप्रतिषेधोऽपि भवति 'अदितिर्द्यौरदितिरन्तरिक्षम्' इति । यैव द्यौस्तदेवान्तरिक्षमिति

को जातुचिदवधारयेत्। अनवधारयंश्च किमभिधानेनोपकुर्यात्। उच्चारणमात्रे तु नैव विरोधो भवति। तस्मादुच्चारणार्था मन्त्राः। 'एको रुद्रो न द्वितीयोऽवतस्थे', 'असंख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्' इति चोदाहरणम्।

**या—** पुरुषमन्तरिक्षस्थं आदितेरेकानेकत्वं च रुद्रस्य विप्रतिषिद्धम्। न चैव विप्रतिषिद्धोऽर्थः धर्मोपयिकः। कथं वा अदितिर्देवता अन्तरिक्षं द्यौर्वा भवेत्। न च स्तुत्यर्थतयाऽपि वैरुद्ध्यं परिहर्तुं शक्यम्। स्तवने हि निषेधप्रभूता स्तुतयोऽर्थवन्त्यो भवन्ति। मन्त्रस्तुतिस्तु अप्रयोजकत्वान्नाऽऽदर्तव्या।

स्वाध्यायवदवचनात्। ३१—७॥

**भाष्यम्—** स्वाध्यायकाले पूर्णिका (मीमांसान्यनिर्देशोऽयम्) अपहन्ति करोति। माणवकोऽपहन्तिमन्त्रमधीते। नासौ तेन मन्त्रेण तदभिधानमनुभवति अक्षरानुपूर्व्याः अवधारणे एव यतते। येन न नाम प्रमोक्तं तदभ्यसितव्यम्। अतः उच्चारणमात्रादुच्चारणेन प्रयोजनमित्यवगच्छाम।

**या—** स्वाध्यायाध्ययनस्य कर्मार्थत्वात् यत्कर्मण्युपयोक्ष्यते तत् अभ्यसितव्यम्, तथा विद्वांसः सन्तो वृद्धाः शिष्यानक्षरावधारणे एव प्रवर्तयन्ति संनिहितेऽप्यर्थे, न तदवबोधने। तेनावगम्यते तेषामुच्चारणमेवाङ्गत्वेनाभिप्रेतमिति।

अविज्ञेयात्। ३१—८॥

**भाष्यम्—** अपि च केषाञ्चिन्मन्त्राणामशक्य एवार्थो वेदितुम्। यथा 'अम्यक् सा त इन्द्र ऋष्टिरस्मे' इति, 'सृण्येव जर्भरी तुर्फरीतू' इति, 'इन्द्रः सोमस्य काणुका' इति च। एते किं प्रत्याययेयुः। उच्चारणार्थे न दोषः। तस्मादुच्चारणार्था मन्त्रा इति।

**या—** केचित् पदार्था अनेनाविज्ञेयाः। केषाञ्चित्तु वाक्यार्थं एव न ज्ञायते। न च मन्त्रार्थः सत्तामात्रेणोपकरोति क्रियावैरस्यामर्षपर्यवसान इति यदेकमन्तेन वाक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते।

अनित्यसंयोगान्मन्त्रानर्थक्यम्। ३१—९॥

**भाष्यम्—** अनित्यसंयोगः खल्वपि भवेत् मन्त्रेष्वभिधानार्थेषु, यथा 'किं ते कृण्वन्ति कीकटेषु गावः' ('किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति धर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः॥' ऋग्. ३।५३।१४) इति। कीकटा नाम जनपदाः, नैचाशाखं नाम नगरम्, प्रमगन्दो राजेति। यद्यभिधानार्थाः, प्राक् प्रमगन्दात् नाय मन्त्रोऽनुभूतपूर्व इति गम्यते। तदेवैतैरर्थवादादिभिः कारणैर्मन्त्राणामविवक्षितवचनता।

**या—** अर्थप्रकाशनपरो यस्य योऽर्थः स एव तेन प्रकाशयितव्यः। केचित् च अनित्यैककर्माप्रभूतैरर्थैरर्थवन्तो मन्त्रा दृश्यन्ते यथा 'किं ते कृण्वन्ति कीकटेषु गावः' इति। अयं हि हठेनाप्येतेषां स्मरणेन विश्वामित्रस्याऽऽर्षं गम्यते। तेन किल कर्मार्थं धनं प्रार्थयमानेनेन्द्रोऽभिहितः। त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गाव स्तास्तव किं कुर्वन्ति। ते हि नास्तिकाः किं क्रतुना इति यज्ञो न किञ्चित्कर्म अनुतिष्ठन्ति। अतश्च ता नाऽऽशिरं (सोमश्रिणार्थं पयः) सोमसंस्कारार्थं दुह्रते, न घर्मं (घर्म.=तप्ते घृते पयोनिक्षेपेण निष्पन्दिते यत् सिद्ध तत्) तपन्ति न घर्मतपने पयोदानेन साधनीभवन्ति। तस्मात् प्रमगन्दस्य कीकटाधिपतेः यत् वेदः धनं तदस्माकं नैचाशाख नगरप्रभव। 'छन्दोभ्यस्मि दृश्यते' (पा. ३।१।८४ वा.) इति मकारः। अथवा अस्मान् प्रति तत् विभूति धाय पोषय चैत्ये· वयो मघवन् रन्धया साधयास्माकमिति। छान्दस दीर्घत्वम्। मन्त्रैवद्विधक्षितं तथा सति आदिमदर्थाभिधानात् वेदस्य कृतिमत्त्वेनाप्रामाण्यं प्रसज्यते। न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः। अतोऽर्थवदवद्यावत्नाऽऽस्याक्षरोच्चारण फलमदाश्रयणीयमिति।

अविशिष्टस्तु वाक्यार्थः। ३२॥

**भाष्यम्—** अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः। स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति। नेवम्। लोके तैरर्थैरनुद्देशः प्रत्यवहार.। इह देवतामिरव्यग्रामिर्बाह्यैश्चाचेतनैः संलापे न कश्चि-

भिधानीम्' इति । लिङ्गादर्शनाभावे शब्दात्तु विशेषे अश्वाभिधान्यामिति । सति च वाक्ये लिङ्गं विनियोजकम् । तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कुतः? एतेन मन्त्रेणाऽऽदानं कुर्यादिति यस्मिन् सति रशनामात्रे लिङ्गाद्याप्नोति । अश्वाभिधान्या तु प्रत्यक्षमेव वचनम् । अस्मिन् सति तदानुमानिकं नास्ति । तेन गर्दभरशनायां न प्राप्तिरेवेति ।

वा— यावद्धि मन्त्राम्नानमन्यसमन्प्रयोजनं प्रकरणे च व्यवहारार्थदानप्रवृत्तिसिद्धयर्थं कल्प्यते तावद्वैदिकं भवति । नैराकाङ्क्ष्योत्तरकाले तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात् ।

न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते (तृतीये अध्याये)। तदेतदाह 'सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्ति' इति । यदैव हि प्रकरणात् अनेन मन्त्रेण, रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनापहार्यते मन्त्रस्य । यद्यपि "नैव मन्त्र 'इत्यादत्ते' इति, कथं तर्हि 'इत्यश्वाभिधानीम्'" इति । तत्कारकत्वानध्यायपरत्वेनैव तत् सामान्याभिप्रायेण द्रष्टव्यम् । तस्मात् आदानमात्रे विधीयते । किं तर्हि? अश्वाभिधानीविशिष्टे । अथ वा कल्पः पश्चात्तनवाक्यानन्ध उपन्यस्यते । सर्वथा दर्शयतस्ततः नास्ति । यदि हि यदैव मन्त्रमन्त्रनादाप्नुयात्तदैव प्रत्यक्षवचनेनोच्यते ततो वयमुपालभ्येमहि । मन्त्रो गमकत्वविधिरेवाय भजत इति न शक्यं परिकल्पयेति । पक्षेनैवमभिधानाददोषः । सर्वेण हि परिकल्पनान्यादेनागवा विना न श्रुत्या परिकल्प्य नियमो वोच्यते । विधिरेव तैरजातीयकस्य फलेनैव व्यपदेशः । कस्तर्हि विधिनियमपरिसंख्यानां भेदः? उच्यते । 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते ॥' विधिरेव हि केनचिद्विशेषेणैव भिद्यते । तत्र योऽत्यन्तमप्राप्तो न च प्राप्स्यति प्रवचनादित्यवगम्यते तत्र नियोगः शुद्ध एव विधिः, यथा 'व्रीहीन्प्रोक्षति' इति । यत्र तु प्रवचनात्पाक्षिकी प्राप्तिः समाप्यते तत्राप्राप्तपक्षपूरणो विधिः प्रवर्तते स नियमशब्देनोच्यते

यथा 'व्रीहीनवहन्ति' इति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलम् । किं तर्हि? अप्राप्तांशपूरणम् । तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन्, पूरणे तु सति या तेषां निवृत्तिरसावर्थात्, न वाक्यात् । न च तद्द्वारेण नियमः । परिसंख्या हि तथा स्यात् । प्रत्याघ्नता वा अवहन्तिनियतता मुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः । तत्प्रवृत्तिद्वारा त्ववहन्तेः अनिश्चितपक्षीति नियमान्तर्गतैवार्थनिवृत्तिर्गम्यते । न च प्राप्ते सति विधिरयं प्रवृत्तो येनान्यनिवृत्त्यर्थता कल्प्येत । प्रागेव तु प्रवर्तमाने नार्थस्य प्रापकत्वनिरोधात्प्राप्तिः कृता, सा चार्थलभ्येति न तेन व्यपदिश्यते । यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति संभाव्यते तत्र या यत्रान्यस्य सा परिसंख्या यथा अग्नीषोमीये यथा च शूद्रभैक्षीये पञ्च पञ्च । अनापि च न प्राप्ते यत्नेषा प्रवर्तिते प्रापकस्य वाक्यस्यानुपलम्भात् । कथं तर्हि? यनेतद्वाक्यं नाभविष्यत्तत एवं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्यानुमानिकवाक्यपरिकल्पनात् पूर्वमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थं सिध्यति? तद्यदि गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैव कल्प्यते फलाभिधानत्वेन, यदि नामैवं वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिरप्रवदेकान्तेन सिध्येदश्वाभिधानाम्, तद्वदेव तु गर्दभरशनायामपि प्रसज्येत ।

यदा त्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषविनियोगसमर्थवाक्यानुमानं निषिद्धं तदा नैवाश्वाभिधानीनियमसिद्धिरिलापीनरूप परिसंख्यानम् ।

अर्थवादो वा ॥ ३५ ॥

भाष्यम्— 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यर्थवादार्थेन पुनः श्रुतिः 'यज्ञपतिमेव तत्प्रथयति' इति । ननु नायं मन्त्रस्य वाक्यशेषः, न च प्रथनस्य स्तुत्या प्रयोजनम् । सत्यम् । नायं मन्त्रस्य विधिर्न संस्तवः । प्रथनमेव तत्र स्तूयते । मन्त्रः पुनः रूपादेव प्राप्तः प्रथनं स्तोतुम् । तत्र प्रथनं प्रशस्तं यत्क्रियमाणमेवरूपेण मन्त्रेण क्रियते । कस्तत्र भवति गुणः? यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति । किमेतदेवास्य

कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तत्र सहचारिणी नियमुक्तिस्तत्र चञ्चमा सा तावत् लक्षणदेना स्मात्मेव । येऽप्यमी पुराण जर्त वृष्टिरूपेण निश्चिन्तः आप इव दीपमत्यानि धारयन्ति तत्र प्रियस्याक्षेऽप्यसाक्मेव । ■ एवमेवं साधारणधर्मः सन्मस्य न केनचिदेदि । 'एकया प्रतिधापिबत्' इतीन्द्रस्यैव स्तुतिः । ('एकया प्रतिधापिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥' ऋस. ८।७७।४) । एषेन प्रयत्नेनापिबत् साक यौगपद्येन, सरांसि पात्राणि सोमस्य पूर्णानि इन्द्र. काणुका कामयमानः कामुकशब्दस्य छान्दसो वर्णव्यत्ययः, आकारस्तु विभक्त्यादेशः, अथवा कान्तकानीदशाद्यः (कान्तकानि = प्रियाणि इति दुर्गः । कान्तं प्रियं क उदकं सोम रसात्मकं येषु तानि इति स्कं) निरुक्तोक्ता. काणुकाशब्दयिषया योजनीया । तदेव सर्वत्र येनचित्प्रकारेणाभियुक्तानामर्थोल्लेखोपपत्ते प्रसिद्धपदार्थाभावेऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम् ।

चक्षुश्चानिलसंयोग. । ४२ ॥

भाष्यम्— 'परं तु श्रुतिसामान्यमात्रम्' (१।१।८।३१) इत्युक्तेति ।

वा— परं तु श्रुतिसामान्यमात्रमिति । यजमानस्यामप्रार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्वदाऽस्ति । कीकटा नाम यत्रापि जनपदास्तत्रापि नित्याः । अथवा सर्वलोकस्था. कृपणा. कीकटा । प्रमगन्द. कुसीदवृत्ति, स हि प्रभूततरमात्मनिष्पन्नीयेन ददाति । नीचाशाखः पण्डः तदीयं धन नैचाशाखम् । तथ सर्वमयत्नाद्भूत मेता धर्मंयप्रयुक्तेत्यादस्मात्काहरेत्ति । शेष गतार्थम् ।

लिङ्गोपदेशाश्च तदर्थवत् । ४३ ॥

भाष्यम्— 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति विधानाद्विवक्षितार्थानामेव मन्त्राणा भवति लिङ्गोपदेशः । यदि तेऽप्रमर्थका ज्ञानवत्र्ने, आग्नेय्या नाग्निशब्दपनिधानात् ।

वा— आग्नेय्येत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा स उपदेश. स तदर्थहीना मन्त्रस्य नोत्पत्ति । देवतावचितो येन स्मर्यते न चार्थप्राधान्येन मन्त्रः प्रकाशयति स। तस्य देवता नाभिधानमात्रेण । एवदेवत्येऽपि मन्त्रे अनेकदेवतान्तरपदप्रयोगे सति तद्देवत्य व्यपदेशाभावात् । प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ।

ऊहः । ४४ ॥

भाष्यम्— ऊहदर्शनं च विवक्षितार्थानामेव भवति । विमृहदर्शनम् ? 'न पिता वर्धते न माता' इति । अन्ये वर्धन्ते इति गम्यते । प्रत्यक्षं कौमारयौवनस्थाविरैर्वर्धन्ते मातादयः । शब्दो न वर्धते इति ब्रूते । का पुन. शब्दस्य वृद्धि. । यद्द्विवचनबहुवचनप्रयोग ।

वा— ऊहदर्शन 'न माता वर्धते' इति । अर्थं च पुष्ट्यादिवृद्धेः अन्यत्रत्वाप्रतिषेधासम्भवात् 'आनर्थक्यात्तदङ्गेषु' (३।११।१८) इति शब्दे विधायते । तत्रापि स्त्रीत्वादिवृद्धयसम्भवादधिकार्थवाचित्वेन द्विवचनबहुवचनयोः प्रतिषेधः । स चार्थपरत्वे सर्वपशुविशेषणमात्रानुपादित्सया सम्भवत्यते । सा चान्यपदवृद्धिमज्ञानप्रतीतिरिव न । यद्यपि मातृप्रभृतीनां पर्यायत्वान्निभेदादेव च भेदसिद्धेरन्यत्र सर्वेषामनुवर्तते तथापि न्यायावगतासहमकीर्तनान्न्यायसिद्धेऽपूर्वतपञ्चकात् मन्त्रे विवक्षितार्थता विज्ञायते । अन्यथा तु तद्दृष्टमविवक्षैरेव भाष्येत । तथा 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इत्यूहप्राप्तिदर्शनम्, एवम् 'उस्राणा वपानाम्' इत्येवमादीना यथार्थमूहितानामेव आम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदत्यागे अन्यकल्पने च अदृष्टत्वं कल्प्येत ।

विधिशब्दाश्च । ४५ ॥

भाष्यम्— विधिशब्दाश्च विवक्षितार्थानेव मन्त्रानुपदन्ति 'शत हिमाः शत वर्षाणि जीव्यासमित्येतदेवाऽऽह' इति ।

वा— विधिरेव च ब्राह्मणगितमन्त्र पर्यायैरन्यान्याख्याननिर्वचनादिभिश्चार्थप्रकाशनपरत्वं दर्शयति । अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद्विवक्षितवचना मन्त्रा. इति सिद्धम् ।

अत्र— 'यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम् । मन्त्रायनाददृष्टं चेत्तदुच्चारणतो परम् ॥' अत्राभिधीयते— 'यस्य दृष्टं न लभ्येत स्यात् तस्या-

दृष्टकल्पना । अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत् ॥ स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदय । एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना ॥ तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता । उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥'

सोम— संगतिः— विधिरूपमभिधायकत्व-अर्थवादविचारानन्तर अवसरसंगत्या तदसमभिधायकमन्त्र विचार. ।

वि— 'मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतव. । यागेषु पुरोडाशप्रथनादेर्वा भासका ॥, ब्राह्मणेनापि तज्ज्ञानात् मन्त्रा पुण्यैकहेतव. ।, न तज्ज्ञानस्य दृष्टत्वात् दृष्ट परमदृष्टत. ॥'

गुरुमतेन— 'मन्त्रब्राह्मणयोर्नेह कश्चिदो विनियोजने ।, न मन्त्रलिङ्गसिद्धार्थमनुवचनीयमपद्यत ॥'

भाट्ट— मन्त्राणां धर्माधर्मयो. प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यम्, तस्य द्वितीये निराकरिष्यमाणत्वात् । नापि स्तावकत्वेन अर्थवादवत्, तेषां हि संनिहितेन विधिना एकवाक्यत्वात् तुच्छस्वसमर्पितप्राशस्त्यान्वित –भावनाविषयकशाब्दज्ञानजनकत्वम् । मन्त्राणां तु दूरस्थेन एकवाक्यत्वाभावात् न तद्विधया प्रामाण्यमपि । नापि प्राधान्येन स्वातन्त्र्येण वाक्यार्थं, पदार्थविधानोपस्थितत्वात् । नाप्यर्थप्रकाशकत्वेन प्रामाण्यम्, अनधिगतार्थबोधकत्वाभावेन तदसंभवात् । सामर्थ्यमात्रेणैव यागार्थप्रकाशनसमर्थत्वेऽपि न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमानर्थक्य, ध्यानानुसन्धानादिनापि स्मृतिसिद्धौ नियतमन्त्राम्नानवैयर्थ्यात् । प्रयोगसमवेतार्थस्मारकेषु स्मृतिरेव फलम् । अतोऽधिकारस्य प्रकरणादिना अवगतत्वात् भावनाया मन्त्राणां उच्चारणमात्र अदृष्टार्थं विधीयते । स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगार्थमाम्नानपरत्वमेव अध्ययन विधत्ते इति न कश्चिद्दोष । इति प्राप्ते, अभिधीयते । दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्ते. प्रयोगसमवेतार्थस्मृतिरेव सम्भवता मन्त्राणां प्रयोजनम् । असंभवता कामं मन्त्राणां अदृष्ट प्रयोजनम् । सम्भवति तु तत्रापि मन्त्राः अर्थप्रकाशनार्था, प्रकाशन परमदृष्टार्थमिति वक्तुम् । साक्षा तु कर्मकाराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थावगमनेऽप्यधारकम् । अनुष्ठानं त्वदृष्टार्थत्वमेवेत्यत्र विस्तरः । न त्वेतावता सर्वत्र अदृष्टार्थत्वम् । न च मन्त्राणां नियमेन पाठवैयर्थ्यम्, तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात् । तस्य चादृष्टफलत्वेऽपि न दोष. । न चैवं सामर्थ्यादेव तत्तत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां कश्चिद्विनियोगकरण व्यर्थमिति वाच्यम् । गुणपरिसंख्यार्थकत्वेन सार्थकत्वात् । तथाहि, अर्थमात्रे अन्वाधाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्यमाणानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन 'ता चतुर्भिरपभिमादत्ते' इति वचनेन मन्त्रचतुष्टयोभयनिविशिष्टानमात्रायां विहितायां एतद्वचनाभावेऽपि मन्त्राणां आश्वनस्य च प्राप्तिसंभवे एतद्वचनप्रवृत्तिफलविशाखया समुच्चयम्भवत्पुरुषस्यारूपगुणाप्राप्तिरिति निर्णीयते । तथा लिङ्गादेवाभिधानप्रभृत्यादानाधाने प्राप्यमाणस्य मन्त्रस्य तत. पूर्वप्रवृत्तेन 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यनेन वचनेन मन्त्रविशिष्टाश्वाभिधानत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपदोषपरिहारश्च फलम् । न च एवं परिसंख्यायां स्वार्थहानि. परार्थकल्पन प्राप्तबाध इति त्रैदोष्यम् । अश्वाभिधानीसम्बन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्य अर्थसिद्धत्वेन अकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च । अत एव यत्र प्रापकप्रमाणमनुच्चरमेव परिसंख्यावाक्यस्य प्रवृत्तिः यथा— 'पञ्च पञ्चनखा भक्ष्या.' इत्यादौ रागतः प्राप्त पञ्चनखभक्षणे पञ्चातिरिक्तपरिसंख्यावाक्यं तत्रैव तत् । यत्रापि च श्रौती परिसंख्या यथा 'नानृतं वदेत्' इत्यादौ तत्रापि न तत् । यदेवं मन्त्राणामर्थस्मारकत्वेऽपि न कश्चिद्विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्याभाव., वाक्यार्थस्य अनवगतस्याभिधानात् । वाक्यार्थज्ञानं मन्त्रवाक्यस्यैव न पदार्थविषया । यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्द प्रमाणमिति सर्वदर्शनमतं तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेत्यपि वक्तुं शक्यते । अतश्च मन्त्रविनियोगविधौ मन्त्राणां पदार्थे स्यात् तुच्छ प्रामाण्यमिति । यद्वा वा प्रामाण्याभावेऽपि

प्रयोजनवत्त्वलाभमात्रेण स्वाध्यायविध्युपपत्तेर्न कश्चिद्दोषः। प्रयोजनमर्थवादवदेव स्पष्टम्।

मण्डन— 'मन्त्रस्यार्थो विवक्षितः।'

शंकर— 'मन्त्राणां च प्रमाणता।'

* मन्त्राधिकरणम्। मन्त्राणां प्रयोजनविशेषः (मन्त्राधिकरणं वक्ष्यते)। [अर्थवादाधिकरणं तु] मन्त्राणामपि प्रयोजनवत्त्वात् प्रामाण्यमस्ति इत्येतावत् सिद्धम्। शा. १।२।१. * मन्त्राधिकरणे त्वर्थवाद-प्रयोजित- मन्त्रस्मारित- इन्द्रदेवतादियुक्तनामावच्छिन्न-धात्वर्थभावनात्मकधर्मप्रमितौ अर्थवादानां प्ररोचकत्वेव मन्त्राणामपि स्मारकतया प्रामाण्यं सिध्यति। सोम. १।२।१. * मन्त्राधिकरणे 'दाक्षस्वामिपदयोगः' (१।२।४।४२) इत्यत्र कल्यानां प्रयाह्निश्यतया नित्य-प्रभयसविधिविपयत्वं प्रपञ्चितम्। कु. १।३।७।१०. * मन्त्राधिकरणे ऋङ्मन्त्रेऽपि अनुषङ्ग उक्तः। 'अश्यक्ता ते' (ऋग्.१।१६९।३) इत्यस्यामृचि, उपरितन्यामृचि 'त्वं नु न इन्द्र तं रयिं दाः' इति श्रूयते तदेव अनुषङ्गेण प्रयुज्यं इति (ना. पृ. १५७)। बाल. पृ. ६०. * मन्त्राधिकरणे चेतनप्रतिपाद्येषु मन्त्रेषु तत्तत्सुत्याना देवतानाम्, अचेतनप्रतिपादनेषु तदभिमानिदेवतानां शब्दबोध., न तु प्रयोक्तृ. इति अयोध्याम। कु. २।१।१५।४३. * मन्त्राधिकरणे तु अर्थप्रकाशनरूपादृष्टार्थत्वेन मन्त्राणां स्मारकतया प्रामाण्यं सिध्यति इति न्युत्पाद्यम्। सोम. १।२।१ * मन्त्राधिकरणे प्रथनमन्त्रस्याऽऽध्वर्यवत्वेऽपि प्रथनस्य आध्वर्यवत्वसिद्धयर्थं प्रथने विधिरहीहत। रमायनं. पृ. १४६. * मन्त्राधिकरणे मन्त्राणां अभिधानार्थत्वमुक्तम्। सु. पृ. ६८८, उच्चारणमात्रप्रयोजनत्वं च निरस्तम्। पृ. ९८९. * अनुष्ठेयार्थप्रकाशनसामर्थ्यं मन्त्राधिकरणे स्थितम्। कु. ३।२।१।१, * अर्थाभिधानलक्षणद्वार-संयोगात् मन्त्रेषु क्रतुशेषत्वं मन्त्राधिकरणे व्यवस्थापितम्। ३।२।१।१. * 'चत्वारि शृङ्गा' इत्यस्य तु विषुवति होतुराज्ये प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः। २।३।८।२४ पृ. २७०. * 'देवान् यामिर्यन्वते ददाति च' इत्यादिमन्त्राणां मच्छन्दादिना विधिशक्तिप्रतिक्षेपात् विधायकत्वं नास्ति इति विधिमन्त्राधिकरणे (२।१।६) उक्तम्। सोम. १।२।१. * नियमविधिप्रकारश्च सर्वोऽपि कौस्तुभे मन्त्राधिकरणे प्रदर्शितः। भाट्ट. ४।२।९. * मनोताख्याग्निशब्दे देवतावाचिमनोतापदसामानाधिकरण्येन लक्षणाङ्गीकरणं इत्युक्तं मन्त्राधिकरणे। कौ. ३।२।६।२१, * मन्त्रेष्वपि हि अभ्युदयकारित्वं तन्नियमविधेरेव प्रमेयम्, न मन्त्राणाम्। अत एव मन्त्राणां पदार्थविषयैव प्रामाण्यं इत्युक्तं मन्त्राधिकरणे। २।३।६।१२, * यथा न नास्य वाक्यस्य ('यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या') वाक्यप्रादिष्टो ऊहनिवर्तकत्वं तस्य प्रकृतौ अन्यायनिगदत्वेन अप्रसक्तत्वात् किन्तु उत्कर्षनिवर्तकत्वमेव, तथा मन्त्राधिकरणे एव प्रपञ्चितम्। ३।३।७।१४ पृ. ४५९. * शस्त्रैः प्रयोक्तृगतशाब्दबोधप्रधानत्वे, पूर्वपूर्वस्याः ऋचः अर्थावबोधे व्यापृतचित्तस्य प्रयोक्तुः, उत्तरोत्तरस्याः ऋचः सातत्यानुपपत्तिः इत्यादि मन्त्राधिकरणे अयोध्याम। कु. २।१।५।१०. * शस्त्रार्थानुवादकत्वे अपि अनभिगतसमुदायाभिधायकत्वेन प्रामाण्योपपत्तिः मन्त्राधिकरणे उक्ता। कौ. २।२।३।१३, * समील्नादिविधिष्वपि न गृह्यप्रयत्नत्वादिविवक्षा, किन्तु शास्त्रदृष्टक्रोतादृष्टभूत-गुणाभिधानजन्यज्ञानत्वसपूर्वसाधनत्व-विवक्षेत्युक्तं मन्त्राधिकरणे। ३।१।४।८. * 'चतुर्भिरभ्रिमादत्ते' इत्यत्र प्रचयशिष्टत्वज्ञानानुवाद एवाय चतुर्भिः इति शब्दः मन्त्राधिकरणोक्तगुणविधित्वाभावेन पूर्वः पक्षः। सोम. १२।३।१४. * चैव पदाध्याहारोपपत्तावपि ('स यज्ञपतिराशिषा' इत्यत्र) अध्याहृतस्य पदस्य ध्यानेनापि स्मरणोपपत्तेः, नावश्यमुच्चारणोपपत्तिः। मन्त्राधिकरणोक्तन्यायेन पठितमन्त्रेष्विव अध्याहृतमन्त्रेष्वपि प्रयोगसमवेतार्थप्रकाशकेषु उच्चारणोपपत्तेः। कौ. २।१।१८।९०. * यदपि च कृत्स्नवाक्यस्य ('सप्तीरूपद्धाति' इत्यस्य) अर्थवादत्वे संनिहितविध्यन्तराभावेन अर्थवादत्वमेव न निर्वहतीति, तदपि आपातत.। 'अर्थवादो वा' इति मन्त्राधिकरणगुणसूत्रीत्या प्राकरणिकविधिविहितस्तुतिमन्त्राणामपि भिन्नदेशानामेव कृत्स्नवाक्यस्य स्तावकत्वोपपत्तेः।

कु १।८।१७।१९ पृ ११६ * मन्त्रगतानां पदानां **मन्त्राधिकरणन्यायेन** प्रयोगकाले अर्थाभिधायकत्वेन विनियोगः। **कौ** २।१।७।२२, * 'तद्धितद्विजाति-गुणाश्रया०' (१।४।१२।२३) इत्यत्रत्यैकसूत्रत्वेऽपि **मन्त्राधिकरणपूर्वपक्षसूत्रयन्** ('तदर्थशास्त्रात्-मन्त्रा-नर्थक्यम्' १।२।४।११ इति सूत्रवत्) प्रत्येकं प्रथमान्त-सूत्रोपन्यासो व्याकरणोक्तार्थे न विरुध्यते। १।८।१३। २३ * **मन्त्राधिकरणभाष्ये** लिङ्गविनियोज्यमन्त्रप्रका-श्यस्य यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वं निराकृतम्। **पराक्रम**. ४८।१, * अर्थवादानामनर्थपरत्वाभावे 'विधिशब्दाश्च' इति मन्त्राधिकरणस्थगुणसूत्र-विरोधः। **कु**. १।२।२।१८.

* **मन्त्रानुसारेण** आकाङ्क्षाभावे पदार्थस्य सङ्कोच अयुक्त। मन्त्रो हि अनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेष। न च शेषानुसारेण शेषिसङ्कोचो युक्त। **पराक्रम**. ४३।१, * मन्त्रानुसारेण निराकाङ्क्षस्य विधेः सङ्कोच इन्द्रपीताधिकरणे निराकृतः। ४३।१, * मन्त्रानुसारेण विधेः पर्यवसाननियमः। ४३।२

* **मन्त्रान्तेन** कर्मादिसंनिपात। **भा** १२।४।१९। ५१. * मन्त्रान्तेन कर्मादिसंनिपातः आधारे दर्शपूर्ण-मासयोः। १२।३।१२।२८. **मीको** पृ ८५८ 'आधारे मन्त्रान्तेन०' इत्यत्र अधिकरणं द्रष्टव्यम्। * मन्त्रान्तेन कर्मादिसंनिपातो वसोर्धारायामग्निचयने। १२।३।११।२६-२७. **मीको**. पृ ४७ 'अग्निचयने वसोर्धारायाम्०' इत्यत्र अधिकरणं द्रष्टव्यम्। * **मन्त्रान्ते कर्मप्रारम्भ** करणमन्त्रेषु। १२।३।१०।२७. **मीको** पृ १३६४ 'करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भ' इत्यत्र अधिकरणं द्रष्टव्यम्।

* **मन्त्रापचारे** नान्यो मन्त्रः प्रतिनिधीयते। न शब्दस्य प्रतिनिधि। **भा**. ६।३।०।१९८.

* **मन्त्राभिधेयत्वावगति** प्रसिद्धक्रियान्वयस्य (पुरुषस्य) प्रथमं भाति, तथापि प्रसिद्धक्रियान्वयाभि-धानसामर्थ्याभावात् मन्त्रस्य प्रसिद्धक्रियान्वयपदार्थाभि-धायित्वाप्रतिपत्तौ श्रुतवाक्यार्थानुपपत्त्या मन्त्राभिधेयस्य क्रियान्वयकल्पनारूपो विपर्यय पश्चाद्भवति। **सु** पृ ११०५.

* **मन्त्राभेदे** सत्यपि पाठभेदात् विषयान्यत्वम्। पाठभेदेन हि प्रयोजनं कल्पयितव्यम्। **वा**. ३।८।७।१७.

* **मन्त्रार्थः** यत्नेन एव तत्र मन्त्रावृत्तिरर्थविवक्षा। **भा** ११।४।१२।०२, * **मन्त्रार्थं** अनुरुध्यैव चोदक न मन्त्राक्षराणि। अर्थपराणि हि तानि न स्वरूप-प्रधानानि। ९।१।२।६. * **मन्त्रार्थम्** यथाविनियोग मन्त्रविदो वर्णयन्ति। **बृहती** २।१।७।१४ पृ ५७०, * **मन्त्रार्थस्य** यत्र नानात्वं तत्र मन्त्रस्य आवृत्तिर्भवति, यथा अग्नौ लोष्ट्रन्यायः। **भा**. ११।४।१२।४२

* **मन्त्रार्थाधिगमोपायाः**। अर्थ-प्रकरण-सूक्त-देवता-आर्ष-निगम-निरुक्त-व्याकरणज्ञानानि अधि-गमोपायाः। **वा**. १।२।४।४१। अत्र **सुधा**- अर्थ-सामर्थ्यं पदान्तरसामानाधिकरण्यादियोग्यता। प्रकरण प्रक्रम। सूक्त देवताज्ञानं अन्यकल्पितायामपि देवता-ज्ञानहेतुरेव अर्थज्ञानोपाय। आर्षज्ञानस्य 'अहं मनु-रभवं सूर्यश्च' इत्यादौ अस्मदर्थज्ञानहेतुत्वेन अर्थज्ञानो-पायत्वम्। पृ १११.

* **मन्त्रार्थप्रतिपत्तिः** मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतु-र्वेति विचार। मन्त्रभागस्य कृत्स्नस्य विवक्षितार्थत्व सिद्धं मन्त्राधिकरणे (१।२।४।३१-४५)।

अत्रेदं प्रतिभाति। अस्मिन्नधिकरणे 'तदर्थशास्त्रात्' इत्यादिपञ्चदशसूत्रैः मन्त्राः अर्थप्रकाशकाः इत्येतावत् अवगतम्। मन्त्रार्थप्रतिपत्तिः मन्त्रप्रयोक्तुर्वा मन्त्रश्रोतुर्वा इत्येतत् सूत्रकारैः स्पष्टं न निर्धारितम्। तत्र अनुष्ठानहेतुभूतानुष्ठेयस्मरणार्थं करणमन्त्राणां यदन्तो भाष्यवार्तिकादिकृतः मन्त्रप्रयोक्तुरेव मन्त्रजन्यं शाब्द-बोधं मन्यन्ते। तत्तु वयं न मृष्यामहे किन्तु श्रोतृ-रेव मन्यामहे, शब्दोच्चारणस्य परं प्रत्येव शाब्दबोधजन-कत्वस्वाभाव्यात्। नहि स्वस्मिन्नेव शाब्दबोधाय वाक्य-प्रयोग अर्थवान् भवति। वक्तुः तदर्थावबोधस्य शब्द-प्रयोगात् पूर्वं अवश्यं भावित्वात्। नहि अबुद्धेऽर्थे वाक्यरचना युज्यते। सूत्रकारेऽपि 'अविशिष्टस्तु वाक्यार्थः' (१।२।४।३२) इति लौकिकस्य वैदिकस्य च

अज्ञाते चार्थे वाक्यरचनायोगात् प्रयोक्तुः अर्थज्ञान नान्तरीयकमस्ति । न तु तत्प्रयोक्तृतात्पर्यविषयीभूतम्, परप्रत्यायनेच्छयैव वाक्यप्रयोगात् । मन्त्राणां तु अपौरुषेयत्वेन नित्यसिद्धतया तत्प्रयोक्तुरर्थज्ञानं नावश्यकम् । तथा च अव्युत्पन्नस्यापि मन्त्रप्रयोगो न विरुध्यते । नहि वक्तुरर्थज्ञानमपि श्रोतुर्वाक्यार्थबोधे प्रयोजकम् । अव्युत्पन्नपुरुष– शुकसारिकाद्युदीरित – कालिदासादिरचितपद्यसंदर्भेभ्यो व्युत्पन्नानां शाब्दबोधदर्शनात् । 'देवदत्त घटमानय' इत्यत्र सम्बोधने प्रथमा । सम्बोधनं अभिमुखीकृत्य ज्ञापनम् । ज्ञानं श्रोतरि, ज्ञापनं प्रयोक्तरि । ततश्च अभिमुखीभूतदेवदत्तनिष्ठं यत् घटानयनज्ञानं तदनुकूलः प्रयोक्तृगतव्यापारो वाक्यार्थः । एवं सम्बोधनं च प्रयोक्त्रा तद्विशेष्या श्रोतृणा प्रयोक्तुश्च सम्बोध्यमानोऽपि न सर्वेषां कार्यकारी । सम्बोध्यगतं घटानयनज्ञानमेव कार्यकारि, अन्यथा 'देवदत्त' इत्यस्य वैयर्थ्यात् । एवमत्रापि ।

न च छान्दोग्यब्राह्मणे 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा' इत्युपक्रम्य 'तस्मादेतानि मन्त्रेमन्त्रे विद्यात्' इति विधानात् प्रयोक्तुरपि अर्थज्ञानमावश्यकं इति वाच्यम् । नहि अत्र देवताज्ञानं वाक्यार्थज्ञानरूपं विधेयम्, व्युत्पन्नस्य मन्त्रोच्चारणादेव तत्सिद्धेः । ऋषिच्छन्दोविषये तदसम्भवाच्च । किन्तु अस्य मन्त्रस्य अग्निर्देवता, इन्द्रो देवता इत्येवं व्युत्पन्नाव्युत्पन्नसाधारण्येन देवतापरिज्ञानमात्रं ऋषिच्छन्दोज्ञानवत् विवक्षितम् । तच्च कात्यायनादिप्रणीतसर्वानुक्रमणिकादिग्रन्थतः मन्त्रार्थज्ञानाभावेऽपि सुलभमेव । प्रयोक्तुः मन्त्रार्थज्ञानस्य आवश्यकत्वे देवताज्ञानविधिवैयर्थ्यादपि न प्रयोक्तुः तदावश्यकं इति प्रतीमः ।

अत एव च उपनीयमानस्य बटोः उपनीतमात्रस्य च मन्त्रविषयः संगच्छते । नहि तस्य मन्त्रार्थज्ञानं कथमपि सम्भाव्यते । अस्य मन्त्रस्य इयं देवता इति एतावन्मात्रं तु कथञ्चिदपि प्रदर्शितुं शक्यते । आद्रियन्ते च शिष्टाः । यथा 'गायत्र्याः विश्वामित्र ऋषिः, गायत्री छन्दः, सविता देवता' इत्यादि ।

अत एव च सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कल्पसूत्रेषु क्वापि मन्त्रार्थस्मरणं अङ्गतया नोपनिबद्धम् । न च तेषु ऋषिच्छन्दोज्ञानस्यापि अनुपबन्धात् अङ्गत्वं न स्यात् इति वाच्यम् । इष्टापत्तेः । नहि कर्मकाले प्रतिमन्त्रं ऋष्यादिज्ञानं [illegible] विवक्षितम् । शास्त्रीयात्तु कर्मसामान्येन अशक्यमानात्तु तदसम्भवात् । किन्तु बहिर्भूतं यागनिष्ठपुरुषयोग्यताविधायकं तत् ।

किञ्च सङ्कर्षकाण्डे चतुर्थस्य तृतीये 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट् करिष्यन्' इति वाक्यमुदाहृत्य इतिहासपुराणमन्त्रार्थवादप्रत्यायितदेवतारूपध्यानं अत्र विवक्षितं इति पूर्वपक्षयित्वा आग्नेय ऐन्द्र इत्यादौ देवताप्रतिपादकस्य अग्न्यादिशब्दस्य श्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावात्, शब्दे कार्यान्वयित्वे सत्येव अर्थे कार्यविज्ञानात्, इह च शब्दे ध्यानसम्भवात् देवताशब्दस्यैव ध्यानं इति सिद्धान्तितम् (संकर्ष. ४।३।७)। तन्न्यायेन 'मन्त्रेमन्त्रे विद्यात्' इत्यत्रापि देवताशब्दध्यानस्यैव विवक्षितत्वात् मन्त्रजन्यवाक्यार्थज्ञानरूपं तत् इति दूरापास्तम् । न च मन्त्रजन्यशाब्दबोधस्य देवतास्मरणस्य अनुष्ठेयक्रियानुपयोगात् करणमन्त्रत्वव्यवहारोच्छेदः, 'इति शाखामाच्छिनत्ति' इत्यादौ इतिकरणावगतकरणत्वविरोधः, 'चतुर्भिरभ्रिमादत्ते' इत्यादौ तृतीयाविरोधश्च इति वाच्यम् । प्रयोक्तुः अर्थज्ञानाभ्युपगमेऽपि तुल्यत्वात् । 'इषे त्वा' इति मन्त्रो हि साकाङ्क्षः 'शाखां छिनद्मि' इत्यध्याहारेण शाखाच्छेदनप्रकाशकः । तदध्याहारश्च 'इति शाखामाच्छिनत्ति' इति विनियोजकवाक्यबलात् । एवं च आदौ विनियोजकवाक्यत एव शाखाच्छेदने अवगते पुनः मन्त्रात् तत्स्मरणस्य अदृष्टार्थत्वापत्त्या अस्थैर्यम् । एवं च मन्त्रजन्यार्थस्मरणस्य अनुष्ठेयक्रियास्वरूपनिष्पत्तौ अनुपयोगात् कथं तद्द्वारा मन्त्राणां करणत्वसम्भवः । तस्मात् अतिशयविशेषकत्वेन छेदनानुकूलो मन्त्राणां साधनतया तृतीयाश्रुत्यादेरविरोध उपपाद्यः । अन्यथा 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इत्यादौ तृतीयायाः का गतिः । 'व्यृद्धं वा एतद्यज्ञस्य यद्यजुष्केण क्रियते । इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै'

'यमृत्वा एव यक्षयः कर्त्तव्य यजुः मन्त्रस्य समृद्धये' इत्यादिवाक्यशेषा अपि अत्रानुकूलाः। न च मन्त्रजन्यशाब्दबोधस्य प्रयोगानुगतत्वाभावे दृष्टोपकाराभावात् क्रतोरुच्छेद इति वाच्यम्। नहि क्रतौ शाब्दबोधस्य दृष्टार्थतयापि प्रयोजकत्वम्, शाब्दबोधसामान्ये तस्य व्याघातात्। किन्तु प्राकृतस्य वैकृतार्थाभिधानाक्षमत्वमावः तत्र बीजम्। तथाच 'अग्नये त्वा जुष्टं प्रोक्षामि' इति प्राकृतस्य अग्निदेवत्यव्रीहिप्रोक्षणप्रकाशकस्य अग्निं प्रति व्रीहिप्रोक्षणप्रकाशने समर्थस्य सौर्यां सूर्यदेवत्यव्रीहिप्रोक्षणाभिधाने अशक्त्या अग्निपदस्य स्थाने सूर्यपदं प्रक्षेप्यम्। 'न माता वर्धते न पिता' 'तस्मादन्नं नोहेत्' इत्याद्युदाहरणैः अयंत्र लिङ्गं भवति।

अनुमन्त्रणादिमन्त्रा अपि तदनुकूलदेवतया एव शाब्दबोधजनकाः, न तु प्रयोक्तुः। 'प्रस्थिता गा अनुमन्त्रयते' 'अभिप्राय मन्त्रं जपति' 'स्पयमभिमन्त्रयते, अभिमृश्य मन्त्रं पठति, अभिमुखेन अभिप्राय वा जपति' इति कल्पभाष्यकाराः। 'मन्त्रमुच्चारयन्नेव मन्त्रार्थमेव स्मरेत्। दीर्घिणं कल्पना सूत्रं' इति स्मृत्यन्तरस्य (अनुमन्त्रणलक्षणस्य) प्रामाणिकत्वेऽपि स्मरेत् इत्यनेन वाक्यार्थविषया मन्त्रार्थज्ञानं न विवक्षितम्। किन्तु मन्त्रार्थस्मरणकारकमेव निबद्धितम्। तत्र विनियोगानन्तरम् अनुष्ठानस्यापि सुलभम्। अत एव मन्त्रेणाकरणत्वकर्मणोः समानकालकरणबोधकस्य 'उच्चारयन्नेव' इति शतृः प्रयुक्तिः। 'इति गार्हपत्यमुपतिष्ठते' इत्यस्य च इति मन्त्रेण गार्हपत्यमुपेत्य उपतिष्ठन् प्रत्यवतिष्ठते इत्यर्थः।

'तदनुकूलाविधारश्चैव:, क: मेघाश्च सुनं बोधयिष्यति' इत्यादिवाक्यशेषश्च इह लिङ्गम्। 'उपस्थितिस्तु बोधः स्यात्' इत्यत्र च व्यवस्थात् धर्मि ज्ञानमुच्यते। वस्तुतस्तु सर्वार्थं प्राप्य अवस्थान उपतिष्ठतेरर्थः। मन्त्रेण गार्हपत्यमुपेत्य तिष्ठतीत्यर्थः। अतस्तत्रापि मन्त्रार्थज्ञानं न प्रयोगनिबद्धितम्।

तथा च कर्मकाले कल्पसूत्रादिभिः विनियोगमात्रं ज्ञानस्य अर्थज्ञानरहितस्यापि मन्त्रप्रयोगः सिद्धः। मन्त्रार्थज्ञानपूर्वकं अनुष्ठाने तु अभ्युदयः। 'योऽर्थज्ञ इत् सकलं भद्रमश्नुते' इति श्रवणात्। 'स्थाणुरयं भारहारः

किलाभूत्, अधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिनिन्दा तु नहि निन्दान्यायेन ज्ञानप्रशंसार्था इति निरुक्ते यास्काचार्यैः स्पष्टमेवाभिहितम्। एतेन 'मन्त्रार्थज्ञो जपन् जुह्वत् तथैवाध्यापयन् द्विजः। स्वर्गं लोकमवाप्नोति नरकं तु विपर्यये॥' इत्याद्यपि व्याख्यातम्। कु. पृ. ४६-५०.

* मन्त्राविधायकत्वाधिकरणम् । २।१।६।३०-३१। इदमेव विधिमन्त्राधिकरणम्।

* मन्त्राम्नानक्रमः (मन्त्रपाठक्रमः.) अनुष्ठानक्रमनियामकः। तदभावे तु विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्य पदार्थक्रमनियामकत्वम्। भाट्ट. ५।१।४.

* मन्त्रोक्तं 'भद्रम्' इति फलं अध्वर्युयजमानोभयगामि ज्योतिष्टोमे उपरवेषु। वि. ३।८।१६, * वैमृधक्रमकरणमन्त्रोक्तं ('अग्नाविष्णू मा वामवक्रमिषं०' इत्यादिमन्त्रोक्तम्) फलं आध्वर्यवं दर्शपूर्णमासयोराघारहोमे। ३।८।१९.

* मन्त्रोच्चारणं अर्थप्रत्यायनार्थमेव मते। भा. १।२।४।३२. * मन्त्रोच्चारणं प्रतिप्रस्थाता अध्वर्यो पृथक् कार्यं चातुर्मास्यगतवरुणप्रघासेषु दक्षिणविहारे। १२।१।५।१८. * मन्त्रोच्चारणस्य यागप्रयोगे प्रयोजनं दृष्टमेव अर्थस्मरणरूपम्–मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः इति। नियमस्य तु अदृष्टं प्रयोजनम्। भा. १।२।४।३१-४५.

* 'मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्य' इति योऽसौ न्यायः उक्तः तेनैव न्यायेन अदृष्टोऽपि मन्त्रोपदेश एव न भागिनोपदेशः। (इदं पूर्वपक्षे)। भा. १२।३।५।२३। ('मन्त्रोपदेशो वा न भागित्वात्' इति १२।३।८।२१ पूर्वसूत्रम्, स एवात्र न्यायः। वै.) * 'मन्त्रोपदेशोऽयं तद्रूपत्वाच्छब्दस्य'। मन्त्रसमाम्नाये वैसर्जनपठितानां मन्त्राणामेव प्रत्यगात्मन्ये 'इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते' इत्यादौ उपदेशः मन्त्ररूपत्वात् तदृचस्य शब्दस्य इति न्यायशरीरार्थः। तेन न्यायेन मन्त्रसमाम्नाये अदृष्टोऽपि ब्राह्मणप्रयोक्तो मन्त्र. मन्त्रोपदेश एव नासौ वैकल्पिकाभ्यासरूपः इति तदनुसारार्थः। वै.

बहूनिति, सर्वे इमे मन्त्रा एकरूपे भवेयुः । उभयमपि मा प्रकृतौ भूदिति नियमः क्रियते । यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात् । यदि बहून्, एते ते वायव इति ब्रूयात् । तस्मादेतदप्यविकृतमिति ।

शा— मन्त्राणामिदानीमूहश्चिन्त्यते ( प्राक्प्रस्तुतावशिष्टो मन्त्रोह एवेदानीं चिन्त्यते इत्यर्थः ) । 'अग्नये जुष्टं निर्वपामि' इति 'व्रीहीणां मेध सुमनस्यमानः' इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु च ऊहितव्यौ, उत नेति संशये 'प्रकृतौ यादृशो मन्त्रस्तेनोद्देशेन हि तादृशः । प्राप्यते विकृतौ, तस्मादोहस्तत्राव-कल्पते ॥' इति प्राप्ते, अभिधीयते । 'प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम् । तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥' तस्मादूहः ।

सोम— प्रथमपादे मन्त्रोहमध्ये एव अवान्तर-प्रसक्तिलोमेन साम्नोहोऽनूह्यत्वकल्प्या प्रोवोढाद् साम्नोह-विचारं तत्सङ्गतसंस्कारोहविचारं च परिसमाप्य इदानीं स मन्त्रोहः प्रस्तूयते इत्यानन्तर्यम् । प्रथमपादे प्रायेण प्रकरणोहो विचारितः । अत्र पादे ( तृतीये ) तु प्रायेण मन्त्रोहविषयते, प्रकरणोहश्च अल्पशः । सूत्रार्थस्तु—प्रकृतौ यथा स्वशक्तिमत्तदयुक्तनतया मन्त्रा उक्तास्तथा तद्-गुणैरेव मन्त्रैः अर्थानामभिधानं कृतं तद्विकारत्वात् उत्तर-त्रापि तत्रो विकृतावपि तथैव स्वशक्तियुक्तैरेव अभि-धानं कर्तव्यं इति प्रकृतं पद सम्बन्धेन निराकृतं । नैत देवम् । अर्थं प्रकारान्तरत् नैकृतेऽर्थे यथाऽऽम्नातमन्त्र प्रकाशनासम्भवात् इति ।

वि—'अग्निरीषादयो नोह्या ऊह्या वा, नहि चोद-नात् ।, विकृत्या देवहविर्भेदेऽहरादूह्यते स्व ॥' ('इन्द्राय मध्यरूपे नैयाग्नेयकादशकपालम्' इत्यादौ नीवारविषये ऊहो द्रष्टव्यः ) ।

भाट्ट— 'अग्नेरहं देवयज्यया' 'व्रीहीणां मेध' इत्यादिमन्त्रेषु समवेतार्थत्वादियुक्तितत्वेन अग्निनीयादि-पदानां सौर्यनीवारादिषु तदन्त्रस्वरूपविनिश्चितान्यथाभावा भावः ऊहः सिद्ध एव प्रोक्षणादिवत् । तद्दोने पदान्तर-प्रक्षेपणात्मको भाक्तः ऊहः परमार्थविरोधोऽपि व्याक्षिप्य समाधीयते । प्रकृतौ हि अग्निनीयादिपदेन अग्निनीयादीनां लक्षणयैव अपूर्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्य-नीवारादीनामपि तेनैव रूपेण प्रकाशनोपपत्तेः न पदान्तर प्रक्षेपो युक्तः । अत एव 'पाशान्' इति बहुवचनान्तस्य मन्त्रस्य प्रकृताविव एकपाशिकायां विकृतावपि लक्षणयैव एकत्वप्रकाशकत्वात् नोहः । नहि अग्निनीयादिपद शक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपरम्, अपि तु लक्षणयैव 'शक्त्यादन्येन रूपेण अर्थे भवति लक्षणा' इति न्यायात् । विशेषतश्च शब्दस्यैव देवतात्वात्, तस्य चाभिधेयेन लक्षणयैव प्रतीतेः सूर्यस्यापि तथैव प्रतीतिसिद्धौ नोहसिद्धिः । इति प्राप्ते, यद्यपि अपूर्वसाधनत्वस्य प्रकृतौ उद्देश्यताऽवच्छेदकत्वे अग्निनीयादिपदेन सर्वापि जन्यबोधाय अपूर्वसाधनीभूतद्रव्यदेवतादि सम्भवति इत्यर्थोऽवगम्यते । अत एव शक्तिजन्यबोधोऽपि व्रीहि त्वाग्नित्वादिप्रकारक एव, न तु अपूर्वसाधनत्वप्रकारक । लिङ्गस्यप्रभृतिधारयैव तदवच्छिन्नस्य उद्देश्यत्वेऽपि मन्त्रान्तर्गतव्रीह्यग्न्यादिपदे लक्षणाया प्रमाणाभावात् । अत एव तद्वत्सोवेनापि प्रोक्षणजन्यादृष्टवत् विशेष्ये एव द्रव्यदेवतादौ संस्कारो जन्यते, न तु उद्देश्यताऽवच्छे-दकेऽपि अपूर्वसाधनत्वे । अतश्च उपकारापूर्वभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतौ अतिदेशे तद्द्वव्यभावेन प्राप्यमाणस्य अग्न्यादिपदस्य सौर्यादौ नाभावात् द्वारसिद्ध्यर्थं पदान्तरप्रक्षेपो युक्त एव । अत एव अग्निनीयादिपदानां अवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ नियतकार्यजन-कत्वेन विधानेऽपि तत्कार्याभावे एव तत्कार्यस्य तेन कर्तुं मशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोप । तत्र तु एतावान् विशेषः, कार्याभावे लोप एव, अशक्यत्वे तु तज्जनकोपायान्तरानुष्ठानमिति ।

यत्तु मूले प्रकृतावेव नावधातस्य तत्त्वेन विवक्षा, अपि तु अपूर्वसाधनताविशेषोपायत्वेन, इतरथा आहा-र्यत्वापत्तेः । अतश्च अग्न्यादिपदस्य स्वरूपेण अविवक्षि-तत्वात् युक्त एव पदान्तरप्रक्षेप इति, तन्न, तथात्वे प्रकृतावेव व्रीहिपर्यायाणां विद्लनादेश्च अनुष्ठाने वैगुण्या नापत्तेः, येनैव रूपेण मुख्यकार्यं प्रति जनकता, तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वौचित्याच्च । यत्तु अग्नि-पदेन शब्दरूपदेवताप्रकाशनार्थं लक्षणावदसम्भव इति,

अत्र ब्रूमः । रुतामपि लक्षणया येन मन्त्रकथनाचक-त्वसंबन्धेन प्रवृत्तो शब्दलक्षणा, न तेनैव सम्बन्धेन विवृतो इति द्वारभेदात् युक्तः पदान्तरप्रक्षेपः । वस्तु-तस्तु, शब्दस्य देवतात्वेऽपि अपूर्वीयदेवतारूपशब्द-वाच्यत्वसंबन्धेन शब्दस्यापि अपूर्वसम्बन्धात् प्रकाश्य-त्वोपपत्तेः न मन्त्रान्तर्गताग्न्यादिशब्दे शब्दलक्षणा, इति युक्तो व्रीहिपदे इव पदान्तरप्रक्षेपः । अत एव तत्रैव तत्राहौ ' पूलनि वा एतत्तोऽश्वर यदेम-मूहति, तस्मादर्थं नोहेत् ' इति ऊहाद्योहवर्जुदाहोऽपि संगच्छते । अत एव सरस्वतीप्रकाशनार्थे लक्षणाप्रका-शनार्थकत्वानतरोह. एव कार्यो वैदिकत्वसामान्यात्, शब्द-स्वभावे लौकिकत्वाभावोह. । तथा ' अन्वेनं माता मन्य-ताम् ' इत्यादिमिभुवैवे मातादिशब्दोहप्रतिषेधोऽपि ' न माता वर्धते, न पिता ' इत्यादिवत् अन्यनोहदृष्टम् । यत्रापि च नाय प्रतिषेधविधिः न्यायप्राप्तत्वात् इत्युक्त मन्त्राधिकरणकौस्तुभे, तथापि नित्यानुवादः एवाय अन्य नोहविन्नम् । न च ऊहस्य न्यायसिद्धत्वे निवृत्तिविधेये ' विश्वेषां देवानामुखायां वपायां मेदसोऽनुब्रूहि ' ' छागस्य वपाया मेदसोऽनुब्रूहि ' इत्यादिमन्त्रपाठवैयर्थ्यम्, तस्य मन्त्रप्रेषप्रायश्चित्तमात्रिकस्मस्य मन्त्रादिसिद्धदर्शनत्वात् ।

मण्डन— ' निर्वापमन्ते मुमूहन स्यात् । '

शंकर— ' मीमांसादिमन्त्र ऊहः स्यात् । '

● मन्त्रकल्प्यः प्रतिषेधो द्विविध, मन्त्रगतस्यैव नञ्ग्रुपावर्तमानापदेशस्य निषेधरूपकल्पनात् निषेधयुक्त-वाक्यान्तरकल्पनाच्च । बाल. पृ. ३०, ● मन्त्रकल्प्य. विधि. द्विविध., मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् विधियुक्तवाक्यान्तरकल्पनाच्च । पृ. १९.

● मन्त्रकाण्ड-विधिकाण्डयोः उपांशुग्रह. प्रथमः, अन्तर्यामग्रहो द्वितीय, ऐन्द्रवायवस्तृतीय., मैत्रावरुण-श्चतुर्थः । ग्रहग्रहेषु ऐन्द्रवायव. प्रथम. । वि. १०।५।१७.

● मन्त्रक्रमेणैव अनुष्ठानम्, तदभावे तु विधिरपि स्मारक इति तत्रैव क्रमस्य प्रामाण्यम् । तेनाग्नेयधर्माः प्रथम तत. अग्नीषोमीयस्य दर्शपूर्णमासयो. । मा. ५।१। ५।१६. ● मन्त्रक्रमेण ब्राह्मणक्रमो बाध्यते, यथोक्त

' मन्त्रस्तु विरोधे स्यात्. ' इति ( ५।१।९।१६ ) । अप्रातमाध. । बाल. पृ.१४३.

● मन्त्रगतं आख्यात न विधायकम् । २।१।६। ३०—३१. ' विधिमन्त्राधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● मन्त्रगतं लिङ्ग प्रावृत्त्य द्योतकम्, चोदना-गतं प्रापकम् । मा. ८।१।१६।२१. ● मन्त्रगतः वक्ते दधाति इति आख्यातः विधायको न वेति विचारे न विधायक., किन्तु अभिधानवाचकः । ( विधिमन्त्राधिकर-णम् ) । २।१।६।३०—३१. ● मन्त्रगताः अपि विधा-यका. कचित् इत्यत्र ' वसन्ताय कपिञ्जलानालभते ' इत्यादयः । बा. २।१।६।३०. ● मन्त्रगतस्यैव नञ्-ग्रुपावर्तमानापदेशस्य निषेधत्वकल्पनात् मन्त्रकल्प्यः प्रतिषेध. । बाल पृ. ३०. ● मन्त्रगतानां आदाग-मतानां चाख्यातशब्दानां येषां विधिशक्तिरपगच्छति तेषामभिधायकत्वम् । बा. २।१।६।३१.

● मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् मन्त्रकल्प्यः विधि यथा ' वसन्ताय कपिञ्जलानालभते ' इति । बाल. पृ. १९.

● मन्त्रजन्यार्थस्मरणं कर्मणोऽङ्गम् । वि. १।२।३। १०.

● मन्त्रजपः असिपक्षे मृगाधिकारपक्षे लुप्यते । ( शूद्राचिन्ता ) । वि १०।४।१८.

● मन्त्रजातम् । यायानुवाक्याशंसिप्रोपकारि-मन्त्रव्यतिरिक्तस्य आरादुपकारिणः स्तोमादेः प्रकृतस्य मन्त्रजातस्य निष्कृष्यवचनात्सल्यत्वेन ज्योतिष्टोमाद्धस्ताव-सायात् सवनीयाग्रहान्तगतत् स्तोत्रायपि प्रति आधारत्व-प्राप्ततो सवनानाय, न तु प्रधानता इति सवनीयादितुल्यता वक्तुं शक्या । सु पृ. ११८०.

● मन्त्रतः कर्तृत्वस्य विशेषग्रहणं सवनीयपशौ मैत्रावरुणकर्तृकम् ' अभिमन्य होत्राग्मष्टुणीताय सुवासुजौ यजमान. ' इति अग्नीषोमीयवत् अनतिदिष्टात् सूक्तवाक-प्रैषात् तत्रापि सवनीयपुरोडाशानां मैत्रावरुणवर्तिनाना प्राप्तसिद्धो । बाल. पृ १४८. ● ' मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः ' ( ५।१।५।१६ ) इत्यस्मिन्नधिकरणे मन्त्रस्य कर्मकाल-

प्रयोज्यत्वात् रूपेणाभिधानेनैव कर्मप्रयोगे अनुष्ठाने सामर्थ्यात् स्मारकत्वावगते. स्मृतिकारित्वेन चानुष्ठानस्य स्मृतिक्रमेण क्रमस्य न्याय्यत्वात् मन्त्रब्राह्मणपाठयोः विरोधे मन्त्रपाठक्रमानुरोधेन पश्चाद्विहितस्यापि आग्नेयस्य प्रागनुष्ठानं इत्युक्ते, ननु ब्राह्मणपाठस्यापि तदेव दृष्टमनुष्ठेयस्मरणं प्रयोजनं इत्याशङ्क्य 'उत्पत्तिदेशः सः' इति सूत्रावयवेन कर्मोत्पत्तिप्रकाशको ब्राह्मणपाठः इति कल्प्यते। 'उत्पत्तिदेशः सः' इति यत् सूत्रं तत् कल्पते तत् विरोधे सति न तु अविरोधेऽपि। सु. पृ. ६६७.

सू मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः। ५।१।५।१६॥

दर्शपूर्णमासयोः अग्नीषोमीययागः पूर्वमाम्नातः आग्नेययागः पश्चादाम्नातः। होतृकाण्डे आग्नेययाज्यानुवाक्ये पूर्वमाम्नाते, अग्नीषोमीययाज्यानुवाक्ये पश्चादाम्नाते, एवं आध्वर्यवकाण्डे याजमानकाण्डे च। एवं सति ब्राह्मणपाठो वा बलीयान् मन्त्रपाठो वा इति विचारे अनियम इति पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तमाह। ब्राह्मणपाठमन्त्रपाठयोर्विरोधे मन्त्रतः मन्त्रपाठानुसारेण अनुष्ठानं स्यात्। मन्त्रपाठो बलीयान्। प्रयोगरूपसामर्थ्यात् प्रयोगे रूपस्य मन्त्रस्वरूपस्य सामर्थ्यात् समवायात्। मन्त्रो हि प्रयोगे समवैति। ब्राह्मणं तु विधाय कृतार्थं सत् प्रयोगे न समवैति। तस्मात् स ब्राह्मणपाठः उत्पत्तिदेशः प्रयोगोत्पत्तेः देशः प्रदेशो भवति। अनुष्ठाने मन्त्रः संनिकृष्टः ब्राह्मणं तु विप्रकृष्टम्। तस्मात् मन्त्रपाठो ब्राह्मणपाठात् बलीयान्। तथा च मन्त्रानुसारेण आग्नेयः पूर्वं पश्चादग्नीषोमीयः इति सिद्धान्तः। के.

● "विधानं तदप्यर्थं ब्राह्मणं स्मारयिष्यति। 'मन्त्रतस्तु विरोधे स्यात्' इत्यनेतद्वदिष्यते॥" वा. २।१।६।३२ पृ ४३२.

● मन्त्रत्वं ऊहप्रवरनामधेयानामस्ति वा नास्तीति विचारे नास्तीति निर्णयः। २।१।९।३४. ● मन्त्रत्वं नास्ति ऊहादीनाम्, अध्येतृस्मरणाभावात्। वा. २।४।१।१. ● नियतक्रमकपदसमूहात्मकवाक्यविशेषस्य मन्त्रत्वम्। सु. पृ. ९९. ● मन्त्रत्वेन ख्यात- विशेषाणां विधिवत्तिल्लिखेमीयते इति न नियम। वा. २।१।६।३० पृ. ४३१.

● मन्त्रनियमार्थवचा। यस्य (मते) तु अदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात् क्रमान्यत्वं न युक्तं इति नियमार्थवचा। वा. १।२।४। ३१-२.

● मन्त्रपदानां एतदेव दृष्टं प्रयोजनं यत् समवेतमर्थं प्रकाशयन्ति इति। भा. ९।१।११।३६.

● मन्त्रपाठो ब्राह्मणपाठात् प्रबलः, यथा आग्नेयाग्नीषोमयोः क्रमे। ५।१।९।१६. ● मन्त्रपाठात् मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठो बलवान्। संकर्ष. ४।२।६.

● मन्त्रपाठानन्तरमेव पदार्थानुष्ठानम्। १२।३। १०।२५.

● मन्त्रपौरुषेयवाक्ययोः तुल्ये अर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमः अदृष्टार्थः। अथवा अनैकध्यानादिस्मरणोपायप्रसक्तौ वाक्यनियमात्। (अदृष्टार्थता इदं पूर्वपक्षे)। वा. १।२।४।३१–३.

● मन्त्रप्रकाश्यः देवतारूपः अर्थः। सु. पृ ६४१. ● लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यजतिप्रयतस्य पुरोडाशप्रथनस्यकार्यं विराकृतं मन्त्राधिकरणभाष्ये। परास्मः. ४८।१.

● मन्त्रप्रकाश्यत्वम्। 'येषां पृथगनुष्ठानमर्थाद्वितं प्रतीयते। तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिना भवेत्॥' वा. ३।२।१०।२७.

● मन्त्रप्रकाश्यफलम्। करणमन्त्रप्रकाश्यफलस्य याजमानत्वम्। ३।८।१३।२६–२८.

● मन्त्रप्रतिपाद्यस्य प्रजापत्यादेरेव देवतात्वम्। 'प्रजापते न त्वदेतान्यन्य इति जुहुयात्' इत्यादौ। संकर्ष. २।४।२.

● मन्त्रप्रयोगः कर्मकालीनोऽनध्यायादावपि। १२। ३।७।१८–१९. मीको. पृ. ३६४. 'अनध्यायादावपि कर्मकालीनमन्त्रप्रयोग.' इत्यत्र अधिकरणं द्रष्टव्यम्। ● अर्थाभिधानार्थश्च मन्त्रप्रयोगः। भा. ८।३।६।१६.

● मन्त्रप्रयोगकाले शक्तिज्ञानापेक्षायामपि विनियोगकाले अनपेक्षणम्। सु पृ. १२११.

* मन्त्रप्रामाण्यम् । मन्त्राणां पदार्थत्वेन प्रामाण्यं वाक्यार्थे पदार्थानां प्रामाण्याभ्युपगमात् इति पार्थसारथिमिश्राः शास्त्रदीपिकायामाहुः । तस्यार्थः तर्कपादे 'उत्पत्तौ वाऽवचनाः स्युः' इति सूत्रे ( १।१।७।२४ ) आचार्यैः 'अनाभिधीयते, यत्राप्यस्ति मूलान्तरं न नः ; पदार्थानां तु मूलत्वमिष्टं तद्भावनावतः ॥' इति वाक्यार्थप्रतीतौ पदार्थानां करणत्वमुक्तम् । दर्शपूर्णमासादिप्रयोगविधिषु श्रुतिलिङ्गादिविनियोज्या मन्त्राः पदार्थत्वेन प्रविष्टाः वाक्यैकवाक्यतया इति मन्त्रविशिष्टाः दर्शपूर्णमासादिभावनाः विदधतो महावाक्यस्य दर्शपूर्णमासादिप्रयोगविधेः महावाक्यार्थे पदार्थभूता मन्त्राः प्रमाणभावं लभन्ते इति । गुरुचरणास्तु एवं सति व्रीह्यादिवत् पदार्थविधयैव एषां प्रामाण्यं स्यात्, न शब्दविधया इति दूषयित्वा स्मृतिवत् याथार्थ्यलक्षणमेव एषां प्रामाण्यमित्याहुः । भट्टसोमेश्वरस्तु अनधिगतार्थगन्तृत्वमित्याह । 'प्रयाजादिस्मृतिनिष्ठत्वं मन्त्राणां यदुच्यतेऽत्र यत् । देवताकल्पनं चैव मानं तत्रापि नेष्यते ॥ मन्त्रवर्णाश्च यत्रोक्तं पूर्वपक्षे नदिष्यते । ये देवीत्यादियाजिनामन्त्राणां मानमानता ॥ करणानां तथा (नामा-) भिधाने प्यनुसाधनस्य यत् । स्वामिगत्य क्रियार्थस्य पर्यवसानं च यत्पते ॥ मन्त्रकमानुरोधाच प्रयोगक्रमतामत्यम् । आगमस्य निश्चयो यश्च पदानूहश्च मन्त्रगः ॥ तदर्थपरतायां स्यात् सर्वं नैवान्यथा भवेत् । सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ॥ कर्मकाले तु पाठो मन्त्रपौऽर्थपरत्वत । इषे त्वादिषु चोपार्थं छिन्दमीत्यादिपूर्तये ॥ अग्नाविष्णूदित्यग्नेश्च स्थाने यज्ञादिनाम च । सिद्धान्ते मन्त्रलोपश्च प्रामाण्याभाव इष्यते ॥ यथाम्नातप्रयोगस्तु येनाङ्गोऽर्थविचारणे । यदि त्वर्थपरत्वेऽपि नैतावत् स्यात् प्रयोजनम् ॥ ततो धर्मप्रमाणत्वं मन्त्राणां नैव सिध्यति । स्वनादिस्वरूपस्य प्रकाशत्वे हि धर्मता ॥ समीहिताङ्गताभावान्न कथंचित् प्रतीयते ॥ अपूर्वसाधनत्वेन यत्राप्येतत् प्रकाश्यते । विधिप्राप्तानुवादत्वाच्च तथापि प्रमाणता ॥ अपूर्वसाधनत्वात्तु स्वनादौ समीहिते । आत्मनोऽङ्गत्वलोपेन मन्त्रः प्रामाण्यमश्नुते ॥ अश्रुतद्रव्ययागादिकल्पनाच्च प्रमाणता । ( स्फुटेनार्थपरत्वे स्यादिति सर्वममूमुचन् ॥ ) ' इति । ( न्यायसुधास्थ इमे श्लोकाः पृ. ९७-९८ ) ।

तदत्रापि गुरुचरणोक्ते याथार्थ्यलक्षणे प्रामाण्ये सोमेश्वरोक्ते च सर्वमन्त्रसाधारणे मन्त्रार्थानुसन्धानविषये प्रामाण्ये जपमन्त्रेषु अव्याप्तिरूपो दोषोऽस्त्येव । अविवक्षितार्थस्योच्चारणमात्र एव हि जपः । तदुक्तं द्वादशे ( १२।४।१ अधिकरणारम्भे शास्त्रदीपिकायां ) 'यत्र सन्तमपि अर्थं अविवक्षित्वा उच्चारणमात्रं अदृष्टार्थं क्रियते यथा वैष्णवीमृचमनूच्येति स जपः' इति ( शास्त्रदीपिकायां तु 'यत्र सन्तमपि अर्थप्रत्ययं अविवक्षित्वा उच्चारणमात्रं अदृष्टाय क्रियते 'वैष्णवीमनूच्य वाग् यन्तव्या' इत्यादौ स जपः' इति अक्षरपरिपाटी ) । 'सन्तमपि' इति अपिशब्दात् क्वचिदर्थाभावोऽपि प्रतीयते । ततश्च असतः कुतो याथार्थ्यं कुतो वा अनुसन्धानम् इति केचित् । तत्र । जपमन्त्राणामपि 'सर्वा ऋच सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे पारिप्लवे शंसति' इति गुणगुणिसम्बन्धकीर्तनात्मके कर्मणि विनियोगात् गुणगुणिसम्बन्धरूपेऽर्थे तात्पर्यमस्त्येव । तेन तेषां मन्त्रार्थानुसन्धानविषये प्रामाण्यं समञ्जसमेव । याथार्थ्यं तु तत्रापि अव्याहतमेव ।

ननु तत्रापि लक्षणया याथार्थ्यं वाच्यमेव । अत एव अर्थवादाधिकरणे 'धूम एवाग्नेर्दिवा ददृशे' इत्यादिषु अयथार्थेषु 'गुणवादस्तु' इत्युपक्रम्य 'दूरभूयस्त्वात्' इत्यादिसूत्रैः उपचारादेव याथार्थ्यमुक्तम्, इति चेत्, न । तेषूदाहरणेषु स्वभावेनैव तदुक्तम्, न तु अयं नियमः । अयथाऽपि गुणेन अयतोऽपि गुणिनः स्तुतिसद्भावात् । अत एव अर्थवादाधिकरणे यत्र 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यत्र सद्भूतविषयत्वेन भाष्योक्ता व्याख्या 'एव तु ( किन्तु ) स्तुतित्वमेव दीयते' इति दूषयित्वा अर्थवादादिसूत्रैः सृष्टिप्रत्ययप्रतीतिमात्रेण अयतोऽपि प्रजापतेः अयथाऽपि गुणेन स्तुतिरङ्गीकृता ( वार्तिके ), तस्मात् जपमन्त्रेषु याथार्थ्यं अव्याहतमेव, मन्त्रार्थानुसन्धानविषयं तु प्रामाण्यं समञ्जसं इति तदेव युक्तं इति सिद्धम् ।

नतु एवमपि साममन्त्राणां कथं शब्दविधया प्रामाण्यं इति चेत् । उच्यते । तेषामशब्दत्वयामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वात् शाब्दप्रमाजनकत्वाभ्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावात् । सा च इयमपि अङ्गकेषु प्रजापतेर्हृदयादिषु विधा न सम्भवति । अनस्मात्यपि व्याप्नोति इति ईदृश पदार्थविधया प्रामाण्यमित्यभिरुक्तम् । वाल. पृ. ७०–७२

● मन्त्रब्राह्मणयोः । ‘ गौणत्वं यत्र नाम स्यात् क्वचिद् ब्राह्मणमन्त्रयोः । तदनुवादरूपत्वात् मन्त्राणां गौणतेष्यते ॥’ क्वचदर्थमपि ( यत्र ) ब्राह्मणस्य मन्त्रस्य वा गौणत्वम्, तत्र ब्राह्मणस्य अप्रत्यक्षप्राप्तविधित्वात् प्रथमप्रवृत्तेश्च अनन्यपरत्वात्के अर्थे गौणत्वमयुक्तम् । ‘ मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परत्वन्नइत्ये । विरोधिन स्वार्थमतीव मुख्य मुख्ये हि गौणार्थेऽभिनिवेशभावः ॥ ’ वा. १।२।३।२ पृ ७५३. ● मन्त्रब्राह्मणयोः संख्योत्तरत्वेन चपलब्राह्मण् उपलक्ष्य, पूर्वेण अभिधेयः , इति प्राप्ते, ‘ एकाहमिव प्रमाणत्वाद्वस्यं समस्येत् ’ इत्यस्मादुक्तयोः एकाहमिवप्रमाणरूपसमासनिपातात् उपपादिते प्रायश्चित्तः । संकर्ष. २।१।२७. ● मन्त्रब्राह्मणयोर्विरोधे अन्यतरस्य यत्र गौणता आश्रयणीया आपद्यते तत्र मन्त्राणां गौणता युक्ता मन्त्रस्य लिङ्गरूपत्वात् ब्राह्मणस्य च श्रुतिरूपत्वात् । ‘ मैत्रावरुणः प्रेष्यति चानु चाह ’ इति ब्राह्मणस्य तु वाक्यस्यपरत्वेन ‘ प्रशास्तर ’ इतिमन्त्रलिङ्गेन बाधोऽभ्युपगत. । सु. पृ १०१०

● मन्त्रब्राह्मणात्मका वेदाः । वा. ३।४।१।१ पृ. ८०१.

● मन्त्रमूयस्त्वन्यायः (संकर्ष. ११२१४) । इष्टा स्वन्तेऽपि मन्त्रभूयस्त्वन्यायेन एकार्थत्वात् विकल्पप्रमाणः । (इदं पूर्वपक्षे) । संकर्ष. २।१।२६, ● पशौ अनूयाजेषु एकादशप्रैषाः मैत्रावरुणकर्तृकाः । अध्वर्युः ‘देवान् यज’ इति प्रथमानूयाजे एव ब्रूयात् ब्रूयात् । प्रशास्ता तु प्रथमानूयाजमारभ्य प्रैषानन्वनुब्रूयात् । अन्ये मन्त्रमूयस्त्वन्यायेन विकल्पेरन् इति पूर्वपक्षः । २।३।८.

● मन्त्रभेदाभेदपूर्वकत्व अदृष्टप्रयोजनभेदाभेदयोः । सु पृ. ७०५.

● मन्त्ररूपं त्रिविधम् चेति द्विविधं अवान्तरवाक्यम । वाल. पृ. ९.

■ मन्त्रलक्षणम् ॥

तच्चोदकेषु मन्त्राख्या । २।१।७।३२॥

भाष्यम्— मन्त्रगतो मन्त्रशब्दो विधायको नेति परीक्षितम् । कोऽयं मन्त्रो नामेति ? उच्यते । अथाते मन्त्रे लक्षणे भाष्यस्य, कथं विचारित इति । इदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम् । कथलक्षणो मन्त्र इति । तच्चोदकेषु मन्त्राख्या । अभिधानस्य चोदकेषु एवंजातीयकेषु अभियुक्ता उपदिशन्ति मन्त्रानधीमहे, मन्त्रानध्यापयाम', मन्त्रा वर्तन्ते इति ।

प्रायिकमिदं लक्षणम् । अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते, यथा ‘वसन्ताय कपिञ्जलानालभते’ इति । न शक्यं पृथग्लक्षणेन तत्र तत्र कथयितुमिति लक्षणमुक्तम् । ‘ ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ ’ उदाहरणम्, ‘ मेनोऽसि ’ इत्येवमादयोऽध्यन्ताः । ‘ इषे त्वा ’ इत्येवमादयस्त्वन्ताः । ‘आयुर्दा अग्ने’ इत्याशी । ‘ अग्निर्मूर्धा ’ इति स्तुतिः । सङ्ख्या ‘ एको मम ’ इति । प्रलपितम् ‘ अक्षी ते इन्द्र पिङ्गले कुलेरिव ’ इति । परिदेवनम् ‘ अम्बे अम्बिके ’ इति । प्रैषः ‘अग्नीदग्नीन्’ इति । अन्वेषणम् ‘ कोऽसि कतमोऽसि ’ इति । पृच्छम् ‘ पृच्छामि त्वा ’ इति । आख्यानम् ‘ इयं वेदिः ’ इति । अनुषङ्ग. ‘ अच्छिद्रेण पवित्रेण ’ इति । प्रयोगे शैक्ष्यं चानु स्वर्यं च । सामर्थ्यमभिधानम् । तद्वेदवृच्छिकारोदाहरणापदेशेनाऽऽख्यातम् । एतदपि प्रायिकमेव । अनभिधाया अपि च मन्त्रा भवन्ति ‘ देवस्य त्वा सवितुः ’ इति । त्यागस्याथ ‘ तस्या यामि ’ इति । आशीर्वादमपि ‘ सोऽकामयत प्रजाः सृजेय ’ इति । स्तुतिरपि ‘ वायुर्वै क्षेपिष्ठा देवता ’ इति । प्रलाप. ‘ न चैतद्विद्मो यदि ब्राह्मणा वा स्मो ऽब्राह्मणाः स्मो वा ’ इति । परिदेवनम् ‘ ये मामयुञ्जत ते मां प्रत्यमुञ्चन्त ’ इति । प्रैष. ‘ अनुतः सोममाहर ’ इति ।

* **मन्त्रलिङ्गानि** उत्तमामन्त्रणासिअन्तत्वान्तरूपादीनि। उत्तमपुरुषः 'अग्नये जुष्टं निर्वपामि' इति। आमन्त्रणम् 'अग्ने यशस्विन् यशसे समर्पय' इति। असि-अन्तम् 'ऊर्ग् चासि यस्वी चासि' इति। त्वान्तम् 'इषे त्वा' 'ऊर्जे त्वा'। आदिशब्देन आशीः ('आयुष्मानास्ते सुप्रजास्त्वायास्ते' इति)। देवताप्रतिपादनम् ('अग्निर्नः पातु कृत्तिकाः' इति)। वि. १।४।१. * मन्त्रलिङ्गेन ब्राह्मणवाक्यस्य न बाधः। कौ. ३।३।७।१४ पृ ३५९.

* **मन्त्रलिङ्गाधिकरणम्**। मीको. पृ. ३१०१ 'मन्त्राधिकरणम्' इत्यत्र द्रष्टव्यम्।

* **मन्त्रलिङ्गानुसारेण** नियताङ्गस्य विधेः सङ्कोचः निराकृतः इन्द्रपीताधिकरणे। पराक्रमः. ४।१।१.

* **मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठः** मन्त्रपाठात् बलवान्। संकर्ष ४।२।६.

* **मन्त्रवर्णः** चतुर्थ्या बाध्यते देवताविधौ। यथा 'अग्नये च प्रजापतये च सायं जुहोति' इति चतुर्थ्या मैत्रस्य अग्नेर्देवतात्वप्रतिपादकः 'अग्निर्ज्योतिः' इति मन्त्रवर्णः। बाल. पृ. १४४, * मन्त्रवर्णः तद्धितेन बाध्यते देवताविधौ। यथा 'पात्नीवतं गृह्णाति' इति तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वे बोधयता 'अग्नाऽ३ पत्नीवन्' इति आध्वर्यवमन्त्रवर्णः। पृ. १४८, * मन्त्रवर्णेन देवताविधिः अपूर्वविधिः। पृ. २२, * मन्त्रवर्णेन द्वितीया बाध्यते। यथा उपांशुयाजे अग्नीषोमीययाज्यामन्त्रवर्णेन 'तावग्नीषोमाववथ्यैतं नौ' इति द्वितीया। पृ. १४८. * 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते। देवतासङ्गतिस्तत्र दुर्बलं तु परं परम्॥' वा. २।२।१।२३. * मन्त्रवर्णात् उपांशुयाजस्य देवतावत्त्वात् यागचोदनत्वम्। टुप्. ८।१।३।५. * न च मन्त्रवर्णस्य ('छागस्य वपाया मेदसोऽनुब्रूहि' इत्यस्य) अत्यन्ताविहितच्छागप्रापणसामर्थ्यं पशुचोदनाविहितस्य तु छागत्वमनपगमात्सुपपद्यते। वा. ३।१।६। १८ पृ. ५१६.

* **मन्त्रयाचिना** 'धुरिस्थितिष्टते' इति प्रयत्नस्य। ७।३।१४।३५-३६.

* **मन्त्रविकल्पः** यथा, उपांशुयागादौ वैष्णवादियाज्यानुवाक्यानाम्। बाल. पृ. १६३.

* **मन्त्रसमाम्नाये** मन्त्राः त्रैस्वर्येण पठिताः। कर्मप्रयोगे न तादृशा एव प्रयोक्तव्याः न ब्राह्मणगतभाषिकस्वरेण। (भाषास्वराधिकरणम्)। १२।३।८।२०-२२.

* **मन्थः** महापितृयज्ञे 'अभिवान्यायै मन्थे दुग्धम्' इति। तस्य श्रपणादुत्तर पेषणं प्राप्नोति। तत्र धर्मा न भवन्ति इति पूर्वपक्षः। भवन्तीति सिद्धान्तः। (दुग्धमिश्राः सक्तवो मन्थाः। धानापिष्टानि सक्तवः। भर्जिता यवा धानाः। टुप्टिप्पणी.)। टुप्. १०।२।११।३४.

* **मन्थी ग्रहः** ज्योतिष्टोमे प्रातःसवने गृह्यते। वि. ३।३।१.

* '**मन्थ्यग्रान्** गृह्णीयात् अभिचर्यमाणस्य' ज्योतिष्टोमे। भा. १०।५।१९।५७.

* **मन्थिग्रहस्य** आदितः प्रतिकर्षः कामप्रयोगे। भा. १०।५।१९।६७-६९, न च अन्तर्यामात्पूर्वं ऐन्द्रवायवात् प्राक्। १०।५।२०।७०-७२, ग्रहणस्य प्रतिकर्षे सादनस्यापि प्रतिकर्षः। १०।५।२१।७३-७४, प्रदानस्य तु न प्रतिकर्षः। १०।५।२२।७५-७६.

* **मन्दधियामपि** नोपदेशः क्रियमाणः फलवान् भवति। अपि च कनिदपेक्ष्य सर्वे मन्दधियः। भा. १०।४।२४।४९.

* **मन्दविषन्यायः**। इमा शङ्का (शाक्यादिग्रन्थानां प्रामाण्याशङ्का) मन्दविषन्यायेन निराकरोति 'विरोधे त्वनपेक्षं स्यात्' इति। कु. १।३।३।८ पृ. ५५. * मन्दविषन्यायः। यत्र भुक्तवहानर्थंशादिफलेष्वपि शास्त्रस्य महाविषयत्वाभावार्थं स्वर्गफलकल्पना, तत्र वर्चस्वादिक आयुरादिवत् आनुषङ्गिकं तत्र किं बाध्यतामिति इति शङ्का मन्दविषन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम् ('काम्ये कर्मणि०' इति)। भाट्ट. ४।३।७.

* **मन्दसद्दशप्रतिनिधे** मुख्यस्य च समानविधित्वम्। ३।६।१५।४०.

* 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' इति न्यायः। आभ्यर्थः—सुहृदां मित्राणां

ये अभ्युपेतार्थकृत्याः अङ्गीकृतपरकार्यकरणदृढप्रतिज्ञाः सत्पुरुषास्ते न मन्दायन्ते नाऽऽलस्यं कुर्वन्ति इति। साहस्री. १७६.

● मन्द्रः स्वरः प्रायणीयायाम्, स च प्रायणीयाप्रयुक्त एव न परमपूर्वप्रयुक्तः ज्योतिष्टोमे। भा. ९।१।२।२-३ वर्णक २. ● 'मन्द्रं प्रातःसवने' ज्योतिष्टोमे। सु. पृ. ११८१. ● 'मन्द्र प्रायणीयायाम्' ज्योतिष्टोमे। वा. ३।३।२।९ पृ. ८१७. ● 'मन्द्राऽभिभूतिः केतुर्यज्ञानाम्' इत्यारभ्य 'भक्षयामि' इत्यन्तो भाग एको मन्त्रः, स च भक्षणे विनियुज्यते इति सिद्धान्तः। पूर्वपक्षस्तु 'मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु' इति तृप्तिप्रकाशकः पृथक्, 'वसुमद्गणस्य सोम देव ... उपहूतस्योपहूतो भक्षयामि' इति भक्षणप्रकाशकः पृथक् वर्तन्यः इति। ३।२।१०।२७. मीको. पृ. १५९८ 'गुणाभिधानाधिकरणम्' इत्यत्र द्रष्टव्यम्। ● 'मन्द्रया आज्यभागान्तम्' दर्शपूर्णमासयोः। वा. १।३।२।९ पृ. ८११.

● मन्द्रादिः भक्षयाम्यन्तः तृप्तिविशिष्टभक्षप्रकाशनार्थः एकको मन्त्रः। गुणाभिधानाधिकरणम्। ३।२।१०।२७.

● मन्द्रतरः स्वरः आतिथ्यायाम्, स चाऽऽतिथ्याप्रयुक्तो न परमापूर्वप्रयुक्तः ज्योतिष्टोमे। भा. ९।१।२।२-३ वर्णक २. ● 'मन्द्रतरमातिथ्यायाम्' ज्योतिष्टोमे। वा. ३।३।२।९ पृ. ८१९.

● मन्द्रत्वादिधर्मस्य 'मातृवत्सि भवन् मन्द्रं जनयसि स्वरम्' इत्यक्षरशिक्षया स्वरनिष्ठत्वमुक्तम्। तेन न वर्णनिष्ठोऽसौ धर्मः। मणि. पृ. १६९

● मन्यतेः उत्तमपुरुषैकवचनस्य प्रहासे शक्तिः। अतादृशत्वेन जानतः तादृशत्वरूपण प्रहासः। प्रहासादिकं व्यञ्जनागम्यं इति आलंकारिकाः। मणि. पृ. ११६.

● मयूरनृत्यम्। तदेतन्मयूरनृत्यमापद्यते। तद्यथा, मयूरस्य नृत्यतः अन्यदपानियते अन्यत् संनियते। भा. ७।४।२।१०.

● मरणं अनियतकालम्। भा. ११।३।१४।३६.

❋ मरणाद्दूरं व्याधिरिति न्यायः। साहस्री. १४२.

● मरणस्य निःशेषस्मृतिबीजसंस्कारनाशकत्वं जन्मान्तरीयस्य कस्यचिदर्थस्य अस्मरणात् अवसीयते। बालमात्रस्य तु स्तन्यपाने प्रवृत्तिः आदृष्टिकी, प्रथमकीटभोगप्रवृत्तिवत्। सु. पृ. १२९. ● मरणे कस्यचित् स्वामिनः सत्रे प्रतिनिधिर्नाद्यः। ६।३।८।२२। परन्तु तस्य कर्मकरत्वमेव, न फलस्वामित्वम्। ६।३।९।२१-२५। अथापि तस्य अनुष्ठाने स्वामिधर्मत्वं भवत्येव। भा. ६।३।१०।२६. ● सायंहोमोत्तरं यजमानस्य मरणे कथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तस्यसमाप्तिनिमित्तदोषपरिहारार्थम्। वा. २।२।५।१६.

● मरणोत्तरं यजमानस्य सर्वस्वारस्य समापनम्। १०।२।२३।५८-५९.

● मरणकामस्य सर्वस्वारो नाम क्रतुः 'मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति। यजमानमरणोत्तरं च यज्ञशेषः ऋत्विग्भिः समापनीयः। 'ब्राह्मणाः समापयत मे यज्ञम्' इति हि यजमानप्रैषः। वि. १०।२।२३.

● मरणकामना दीर्घरोगग्रस्तस्य प्रत्याख्यातभिषक्क्रियस्य समनति। संकर्ष. ४।३।५.

● मरुत्वतीयाद्यो ग्रहाः माध्यंदिने सवने। वि. ३।६।९.

❋ मर्कटमदिरापानादिन्यायः। साहस्री. १४०.

● मलापकर्षणार्थं स्नानम्। ना. ३।४।५।१४.

● 'मलवद्वाससा न संवदेत, नास्या अन्नमद्यात्' इति निषेधः क्रत्वर्थः पुरुषार्थो वा इति संशये केवलपुरुषार्थ इति सिद्धान्तः। दर्शपूर्णमासयोः। (संवादाधिकरणम्)। ३।४।७।१८-१९.

● मलवद्वासःसंवादः। 'यस्य व्रत्येऽहनि पत्नी अनालम्भुका स्यात् तामपरुध्य यजेत' इत्यत्रपेप्रवचनात् दर्शपूर्णमासयोः उदक्यासंवादाप्रसक्तेः 'न मलवद्वाससा संवदेत' इति प्रतिषेधः प्रकरणादुत्कृष्यते। सु. पृ. १२२.

• मलवद्वासःसंवादनिषेधाधिकरणम् । ( रज-स्वलया संवादस्य निषेधः पुरुषार्थः ) । ३।४।७।१८-१९. 'प्रयाजाधिकरणम्' इति विन्दौ द्रष्टव्यम् ।

• 'मलिनः स्नायात्' इतिवत् । नायमेकान्तो यद् प्रथमान्तं गुणभूतम्, प्रधानमपि भवति क्रियाया यथा 'मलिनः स्नायात्' इति । टुप्. ६।२।६।१२.

※ मलिनदर्पणन्यायः । 'संसर्गजा दोषगुणा भवन्ति' इति न्यायेन समानार्थोऽयं तत्रैव द्रष्टव्यः । साहस्री. १००.

※ मल्लग्रामन्यायः । यथा अन्येष्वपि जनेषु सत्सु मल्लानां बहुत्वात् मल्लग्राम इत्युच्यते, तथा प्रकृतेऽपि । साहस्री. २६.

• मसूरादिनिषेधः श्राद्धे, अयं जातिनिषेध. पुरुषार्थः । यथा हि भोजनाश्रित माषमुद्गस्य विधीयते न भोजनम्, एवं अनशने भक्षणाश्रित मसूरादि निषिध्यते, न भक्षणम् । श्राद्ध. पृ. ३१.

• मस्तु दध्नस्य भवन् । मा. ६।१।७।११.

※ महान्महत्त्वेव करोति विक्रममिति न्यायः । अयं महान् जनो महत्सु जनेष्वेव पराक्रमं करोति, न दुर्बलेष्विति भावविवक्षायामनगति । साहस्री. ७९४.

• महेन्द्रस्य याज्यानुवाक्याद्वयम् 'महाँ इन्द्रो य ओजसा ०', 'भुवस्त्वमिन्द्र ब्रह्मणा महान् ०' इति । सु. पृ ६५५.

• महेन्द्राधिकरणम् । २।१।५।१३-२९. 'स्तुतशस्त्राधिकरणम्' इति विन्दौ द्रष्टव्यम् ।

• महर्षयः शापानुग्रहसमर्था भूयन्ते । वा. १।२।३।७ पृ. २०८.

• महाकुलीनाः विशिष्टेन प्रयत्नेन परिरक्षन्त्यात्मानम् । वा. १।२।१।२ पृ. १०९.

• 'महादिवाकीर्त्यं पृष्ठं भवति' इति 'विभ्राड् बृहत् पिबतु' इति ऋगन्तानुगतस्य महादिवाकीर्त्यस्य साम्नः निवृत्ति पृष्ठसाधनत्वेन विधानम् । सु. पृ. ८९२.

• महादिवाकीर्त्यानि नव सामानि अर्ककाणि । श्राद्ध पृ. ३२.

※ महादोषत्यागोऽल्पदोषाङ्गीकारो यथा लोकप्रसिद्धिरिति न्याय. । साहस्री. ५६२.

• महापङ्क्तिः जगती । पादेषु अक्षराणि ८।८।७।६।१०।९ । उदा० 'इयत्तिका शकुन्तिका०' ( ऋग्. १।१९१।११ ), किंवा ८।८।८।८।८।८ । उदा० 'उदगाद् तदपसे०' ( ऋग्. ८।४७।१६ ) । के.

• महापदपङ्क्तिः अनुष्टुप् । पादेषु अक्षराणि ५।५।५।५।५।६ । उदा० 'स्व स्वादिष्ठा०' ( ऋग्. ४।१०।५ ) । के.

• महापापकारिणः ( ब्रह्महत्या व्यतिरिक्त ) अपरिहरणे अनाचारः उदीच्यानां दाक्षिणात्यानां च । वा. १।३।३।७ पृ. २०४.

• महापितृयज्ञे 'अयं उपमन्थति' इत्यनेनोक्तस्य धान्यभोमागस्य स्तुतये 'यत् पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम्' इत्यनुवादः । वि. ३।४।७. • महापितृयज्ञे 'उपरि हि देवेभ्यो धारयति' इत्यत्र अनुवादो विधिर्वेति संशयः । विधि सिद्धान्तः । वा. ३।४।१।१ प-सूत्राम - ६ • महापितृयज्ञे चोदकप्राप्ते वरणे 'नार्षेयं वृणीते न होतारम्' । अत्र चोदकप्राप्तवचनान्या वरणस्य विकल्प. इति पूर्वपक्ष. । चोदकप्राप्तस्य वरणे एकवाक्यत्वेन वरणव्यतिरिक्तमन्त्रयान अनुष्ठेयं इति पर्युदासस्तता इति सिद्धान्त । वि. १०।८।१.

※ महापितृयज्ञे तिसृणां ऋचां द्वे एव पुरोनुवाक्ये, तृतीया याज्या ॥

महापितृयज्ञे तिस्र ऋचः याज्यानुवाक्यात्वेनाम्नाताः । तासु द्वयोरंशो. समुच्चित्य याज्यात्वम् 'द्वे वै देवानां याज्यानुवाक्ये' इति प्रकृत्य 'परे हि देवेभ्य पितर' इति श्रुत्या देवापेक्षयाऽधिकत्वकथनात् । आधिक्यं च प्रदानमन्त्रस्य एव, 'तद्वेषा तृतीयेनया वै प्रददाति' इति श्रुत्या विवरणात् । अनुवाक्यायाज्यात्वेन क्रमप्राप्तयोर्द्वयोविनियोगे तृतीयाया अवशिष्टाया सन्निहितत्वेन याज्यात्वे मन्त्रोक्तलिङ्गेन समुच्चित्य विनियोगस्य न्याय्यत्वात् । इति प्राप्ते, ( द्वे ?) पुरोनुवाक्यात्वेनैव द्वे विनियोज्ये, विश्वस्योभयसाधारणत्वात् । 'प्रथमया द्वितीयया गमयति

प्रैव तृतीयया यच्छति ' इति स्पष्टमेव कौषीतके विनियोगाच्च । संकर्ष. ४।४।५.

**⌖ महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः ॥**

अग्नीषोमयोर्देवतावत् उभयोः पुरोनुवाक्यावाक्यस्य समस्तत्वात् अन्ते अधीयमानः प्रणवो द्वितीयवाक्यान्ते एव स्यात् । इति प्राप्ते, ' पुरोऽनुवाक्ये ' इति द्विवचनेन प्रत्येकमर्थतत्वावधारणात् प्रतिपुरोऽनुवाक्यं प्रणवो निधेयः । एतेन ' ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौति ' इति श्रुतिरुपपन्नवे । संकर्ष. ४।४।६.

**⌖ महापितृयज्ञे धानासु अवघातस्य न बाधः ॥**

**अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् । १०।२।१४।७५ ॥**

भाष्यम्— अस्ति महापितृयज्ञः ' सोमाय पितृमते पड्कपालम्, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ' इति । धाना इत्यत्र सन्देहः, किं धानासु हन्तिः कर्तव्यः, उत नेति । किं प्राप्तम् ? न कर्तव्य इति । कुतः ? विघातात् । क्रियमाणे हन्तौ धानात्वं विहन्येत, सक्तवो हि भवेयुः । तस्मान्न कर्तव्य इति । एवं प्राप्ते, ब्रूमः । तण्डुलविघातकमभिप्राय गुणाय कर्तव्यं अवहननादिति । आह । अवहननं विघातकम्, हन्तिस्तु धानात्वं विहन्तीति । अत्रोच्यते । यथा न विघातकं भवति तथा करिष्यते । विपर्यसिष्यते, तथा न विहनिष्यते । विपर्यासे रूपमात्रं न पुन भवति, पदार्थस्तु ■ निवर्तते । तदुक्तम् ' गुणलोपे च मुख्यस्य भवति ' इति ( १०।२।२।५६ ) । तस्मात् पूर्वं हन्तिं कृत्वा पाक. कार्यः । तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते इति ।

टुप्— धाना इत्यनुदाहरणम् । द्विधाऽप्यनुपपन्नत्वात् । कथमनुपपत्तिः ? चोदकेनापि विपर्यास एव प्राप्यते । पूर्वमवघातः, ततः श्रपणम् । अथ श्रपणादुत्तरमवघातः प्राप्यते, तथापि तथैवानुष्ठेय । तत्र ' अर्थेन च विपर्यासे ' इत्ययुक्तम् । अथोभयत्रावघातः प्राप्नोति, तथापि अर्थविपर्यासो न युक्तः ( तथैवानुष्ठानात् ) । अथेदमुच्यते निष्पन्नाया यागचोदनाया चोदकः इति । धानासु चेह निष्पन्नासु चोदना, ततश्चोदकः अवघातं श्रपणं च प्रापयति । एवमेव अवघाते प्राप्ते अर्थेन विपर्यासे इत्युक्तम् ( पश्चात् प्राप्तस्य पूर्वमनुष्ठानात् ), तदपि अनुपपन्नम् । यदि निष्पन्नरूप द्रव्य गृह्यते शालिवालीवत्, तथा अवघातादीनामपि छेदनादीनामिव ( स्यात् ) तत्राऽपि ( क्रम– ) विपर्यासाशङ्कैव नास्ति ( हन्तिस्वरूपस्यैव लुप्तत्वात् ) । अथ नैव निष्पन्नाना ग्रहणम्, तथापि यथाप्राप्तमेवानुष्ठानम्, न विपर्यासः ( तस्मादनुदाहरणं धानाः ) ।

किं तर्हि उदाहरणम् ? तदेव ( महापितृयज्ञे ' अभिवान्यायै ( मृतवत्साया. ) दुग्धे मन्थम् ' इति ) मन्थस्य श्रपणादुत्तरकाल पेषण प्राप्नोति अर्थेन । तत्र ( पेषणे सक्तवः किं प्राकृताः पेषण– )धर्मा भवन्ति, न भवन्ति इति । ( तदर्थं च किं प्राकृतमिदम्, उतान्यत् लौकिकमिति । तत्र ) पूर्वपक्षे पेषणान्तरमिदम् । अन्यतः ( देवो ) अपर्यस्तमेव ( इदं ) पेषणम् । सिद्धान्ते तु तदेव पेषणम्, प्राकृतकार्यत्वात् । समानमन्यत् ( न ■ कार्यान्तरम् ) । अतः अर्थकृतेऽपि विपर्यासे ( तादर्थ्यात् तत्कार्यत्वात् पेषणस्य तत्त्वमेव स्यात्, नान्यत्त्वम् । इति धर्माः– ) भवन्त्येव । ( उदाहरणान्तरमाह– ) कृष्णलेषु पाकधर्माः ( प्राकृताः ) भवन्ति, न भवन्ति इति ( भवन्तः ) । यदि अपूर्वोऽयं पाक. ( ' घृते श्रपयति ' इति ) तत. ( पाकधर्मा. ) न भवन्ति । अथ प्राकृतस्य प्रतिप्रसवः, ततो भवन्ति । ( तत्र प्रतिप्रसव विधौ वाक्यभेदात् पाकान्तरविधि· इति पूर्वपक्षः । सिद्धान्तमाह– ) तत्र प्रतिप्रसवोऽयम् । कथम् ? चोदकेन प्राप्ता ( पाक– ) धर्माः अर्थलोपान्निवृत्ता., श्रपणविधानात् प्रतिप्रसूयन्ते । ननु प्रतिप्रसवे श्रपणमात्रमेव विधातव्यम्, न घृतम् । घृते हि विधीयमाने वाक्य भिद्येत ( प्राप्तस्य प्रतिप्रसवो गुणस्य विधीयते इति ) । यदि ( तु ) अपूर्वं विधान तथा सति विशिष्टविधानात् अदोषः, अमात स्यात् । उच्यते । प्राप्तत्वात् अस्मिन् वाक्ये ( ' घृते श्रपयति ' इत्यत्र ) घृतं न विधीयते, ( किन्तु ) श्रपणमात्रमेव ( विधीयते ) । कुतः प्राप्तिर्घृतस्य ? उत्पत्ति-

वाक्ये घृतमेव आधारत्वेन श्रूयते, ( 'प्राजापत्यं घृते चरुम्' इति- ) सप्तमीविभक्तिसंयोगात् चरुशब्दसामर्थ्याच्च । यथा आदित्ये ( अदितिदेवताके चरौ ) पयः अधिकरणम्, तथेहाप्युत्पत्तिवाक्ये ( सप्तमीत्वात् अधिकरणं घृतम् । तत्र श्रपणावस्थायामेव-अर्थश्रपणोत्तरम्-चरुशब्दसामर्थ्यात् ) तस्मात् गुणवाक्ये घृतमनुवादः ( 'तस्मात् पाकान्तरं नैतच्छ्रूर्मनिश्चितोगवः । प्रतिपत्तिमात्रं तु रुधनाद्विहितं परम् ॥' ) ।

शा— महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इति । ( प्राभाकरोक्तं भाष्यसमर्थनप्रकारमाह- ) ये त्वाहुः 'न क्रमो नाम कश्चित् गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथक् बाधं व्यवस्थापयाम । पदार्था एव हि विततः प्रतीयन्ते । तेन केवलस्य क्रमस्य बाधासंभवात् तद्वाचे पदार्थोऽपि बाध्येत, तच्चावघातो न कर्तव्य इत्येतच्चिन्ता करणार्थं इदमधिकरणम् । यत्तु 'विपर्यासो नास्ति' इति तत्राप्याहुः- धानासु श्रपणं कृत्वा अवघातः, प्रकृतौ च विपरीतम्, इत्यस्ति विपर्यास इति । यदि विपर्यासः, कथं तर्हि अवघातानुष्ठानम्, नहि क्रमस्य पृथक् बाधः संभवति । सत्यम्, न तु अत्र परमार्थतः क्रमबाधः । प्रकृतौ हि अश्रुतेष्वेव व्रीहिषु अवघातः कृतः, अत्रापि अश्रुतास्वेव धानासु अवघातः, इति नास्ति क्रमविपर्यासः । प्रकृतौ अवघातात् परं श्रपणम्, इह तु विपरीतमित्येतावता विपर्यासवाचो युक्तिः । ननु धानावस्थायां हन्ति क्रियमाणो विघातं ( धानात्वस्य ) कुर्यात् । यथा न विघातो भवति, तथा कुर्महे, सकृदेव अनभ्यस्तमवहननं क्रियते, न च भविष्यति विघात इति । ( इदं प्राभाकरव्याख्यानं दूषयति ) तदयुक्तम् । संभवति हि पृथक् क्रमस्य बाधः । ते एव हि पदार्था अन्येनान्येन च क्रमेणानुष्ठीयन्ते, तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते । यत्तु 'श्रपणं कृत्वा अवघातः' इति, तत् 'पूर्वं हन्ति कृत्वा पश्चात् पाकः कार्यः' इति भाष्यविरुद्धम् । यदपि श्रपणोत्तरकालेऽपि अवघाते विपर्यासो नास्ति, श्रुते द्रव्ये अवघातकरणात् इति, तदपि असारम् । प्रकृतौ हि द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च । तत्र धाना देवतासंबन्धात् पुरोडाशकार्ये वर्तन्ते, न व्रीहिकार्ये । प्रकृतौ च व्रीहिविषयः अवघातः, न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेव अवघातः, न धानावस्थायाम् । तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव । धानासु चावघातकरणे धानात्वं विहन्येत । यत्तु सकृदेव अवहनिष्याम इति, तथा सति अप्राकृतकार्यमदृष्टार्थमवहननं स्यात् । प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात् । तस्मात् नैतदधिकरणं युक्तम् ।

सोम— पर्यूहणादिवैपरीत्यप्रतिपादनात् संगतिः ।

सूत्रार्थस्तु— अर्थात् क्रमविपर्यासे हन्तेर्धानार्थत्वात् तत्र अविहत धानात्वमेव स्यात् इति भाष्यकारपक्षे । वार्तिककारपक्षे तु तत्र पेषणस्य प्राकृतत्वेन स्यात् हन्तिर्यत्नात् इति ।

वि— 'नावघातोऽवघातो वा धानानाम्, नाविनष्ये । , न तत्र क्रमबाधेऽवोऽवघातो नात्र नाश्यते ॥' तस्मात् क्रमबाधेन अवघातः कार्यः । इति भाष्यमते । वार्तिकमते तु- 'पेषणं नूतनं मन्ये प्राकृतं वा, क्रमान्वयात् । नूतनम्, प्राकृत धर्मास्तत्रावश्यं स्मरणात् ॥'

भाट्ट— 'पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इत्यादिना विहिते धानाद्रव्यके यागे धानावस्थाया भर्जनोत्तरमवघातः कर्तव्यो न वेति भाष्यकारेण विचारितं । तस्यायमभिप्रायः, चोदकेन प्राकृत पूर्वमेव यवावस्थाया अवघातविधानात् भर्जनोत्तरं तदप्राप्तेः, तदुत्तरमवघातकरणे च धानात्वस्य नाशापत्तेः न भर्जनोत्तरमवघातः कार्यः । इति प्राप्ते, लोके पूर्वं किंचिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते दृष्टे एव धानात्वसिद्धेः प्रयोजनानुरोधेन प्राकृतस्य बाधे सत्यपि 'गुणलोपे च मुख्यस्य' इति न्यायेन ( १०।२।२७।६४ ) भर्जनोत्तरमपि प्राकृतः सधर्मकोऽवघातः कर्तव्य एव । न च धानात्वव्याघात, दृढतरमुसलप्रहाराकरणेन तदनापत्तेः । प्रकृतौ हि हविःसंपादकत्वेनुत्पत्स्यमानो यथा हविः संपद्यते तथा कार्यं । अत

एव तदनुरोधेन भर्जनात् पूर्वमपि यत्किञ्चिद्वैतुष्य-संपत्त्यर्थमवघात. सधर्मक. कार्य एव, अन्यथा लोकप्रसिद्धधानात्वानिष्पत्तेः । अत एव आवृत्तिरपि तदनुरोधेन न दुष्यति । तत्र पूर्वोऽवघातः पाकार्थ., उत्तरस्तु धानात्वसिद्ध्यर्थः इति न कश्चित् विशेष. । एतन्निर्भ भाष्याभिप्रायमजानता. पार्थसारथेः तदुपपाय प्रयास उपेक्षणीय एव । वार्तिककारस्य तु न व्रियाव-मवहतानामेव धानात्वम्, पूर्वमेव सम्यग्वितुषीकृतानां यवानां भर्जने कृते धानात्वमापद्यते. । अतो यथाप्रकृत्ये-वावघातस्य भर्जनात् पूर्वमेवानुष्ठानोपपत्तेः नात्र धाना उदाहरणमपि तु मन्थ. । स च दुग्धमिश्रा. सक्तवः । प्रकृते च अभिवान्या मृतवत्सा गौः, तस्या दुग्ध विवक्षितम् । नन भर्जितयवानां पिष्टे एव सक्तु-त्वप्रसिद्धेर्भर्जनोत्तरमेव पेषण प्राकृतक्रमबाधेऽपि हवि-रुपयुक्तं पेषणस्य गुणलोपाधिकरणन्यायेनैव भर्जनोत्तर करणोपपत्तेः । न च क्रमान्यत्वे पदार्थानामन्यत्वम्, प्रधानक्रमेऽपि तादृशक्रमभिन्नता व्याघात । न च प्रकृतौ पेषणस्य पाकार्थत्वम्, येनेह भर्जनोत्तर पाका-भावात् पेषणाभावः शङ्क्येत । क्वापि पुरोडाशपाक प्रति तस्योपकारकत्वे पाकपेषणयोर्द्वयोरपि द्वितीयया द्रव्य-संस्कारार्थत्वात् । अतश्च यथैव प्रकृतौ हविःरूपत्वार्थमेव पेषण पाकात् पूर्वमनुष्ठितम्, तथैवेह सक्तुरूपत्वार्थं पाकोत्तरमनुष्ठानेऽपि न कश्चिद्विरोध. । अत एव प्रकृतौ पेषणपाकयो. पाठोऽप्यनुवाद एव । अतो वस्तुतो नात्र क्रमबाधोऽपि । तेनात्र भर्जनोत्तरमेव पेषणम् । अव-घातस्तु भाष्यवार्तिककारमतयोः पूर्वोक्तरीत्या मन्थेऽपि भर्जनपूर्वोत्तर पूर्वमेव वा कार्यः । धानापिष्टत्वेन सक्तुत्वात् । परिवापे तु न निर्वापप्रोक्षणादि, नावघात· न वा पेषणमित्युक्तमेव ।

मण्डन—' धानार्थमवहन्यते । '

शंकर—' पेषणं धर्मान्तरमत्र । ' वार्तिकमतेनेदम् ।

● महापितृयज्ञे ' नापेय शृणीते ' इति पर्युदासः । भा. १०।८।२।११–४. ● महापितृयज्ञे, पात्रनिर्णेजनपाघो-भागरूपार्थेन परिमिते वत्सरहिताया धेन्वा दुग्धे पिष्टं प्रक्षिप्य मन्थः क्रियते । वि. ३।४।७. ● महापितृयज्ञे मन्थे पेषणस्य न बाध. । १०।२।३४।७५. मीको. पृ. ३१२९ ' महापितृयज्ञे धानासु० ' इत्यत्र द्रष्टव्यम् । ● महापितृयज्ञे मन्थे भर्जनादुत्तरत्र सधर्मक पेषणादि कर्तव्यम् । टुप्. १०।२।३४।७४. ● महापितृयज्ञे ' ये पुरोदञ्चो दर्भा. ' इत्यत्र विधिरनुवादो वेति संशयः, अनुवाद इति सिद्धान्त. । वा. ३।४।१। पद्सूत्र्याम् ४–६. ● महापितृयज्ञे येयजामहस्य पर्युदासः । १०।८।२।१–४. मीको पृ. २४७४ ' पर्युदासन्याय. ' इत्यत्र अधिकरण द्रष्टव्यम् । ● महापितृयज्ञे वैदिक्या एव इतिकर्तव्यतया अतिदेश. । भा. ७।४।२।१–१२.

● महाप्रकरणं प्रकृतः विकृतेश्च । बाल पृ. ९. ● महाप्रकरणं प्रत्यक्ष परिकल्पितावान्तरप्रकरणात् प्रबलम् । तेन अभिषेचनीयप्रकरणात् राजसूयप्रकरणस्य प्राबल्यात् ' अक्षैर्दीव्यति ' इत्यादीना राजसूयाङ्गत्वमेव । वि. ४।०।२. ● महाप्रकरण ( विनियोजक प्रमाण ) प्रधानस्य । बाल पृ. ९. ●महाप्रकरणात् अवान्तरप्रकरणं प्रबलं तेन अभिक्रमणादेः न दर्शपूर्णमासाङ्गत्वम्, किन्तु प्रयाजाङ्गत्वम् । कौ. ३।३।७।१४ पृ. २६३. ● महा-प्रकरणात् अवान्तरप्रकरणस्य बलीयस्त्व अभिक्रमाधि-करणे ( ३।१।१० ) वक्ष्यते । सु. पृ. ९३१. ● महा प्रकरणात् बलीयांसि विनियोजकानि योग्यत्वं अवान्तर-प्रकरण एकवाक्यत्वं चेति । वा. ३।१।२४।२५.

● महाप्रयोगविधिः पुरुषार्थ. यथा ' समे दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेत ' इति । बाल. पृ १३.

● महाबृहती त्रिष्टुप् । पादेषु अक्षराणि ८।८।८।८।१२। उदा० ' नवाना नवतीनाम् ' (ऋस. ११९१। १३ ) । के.

● महाब्राह्मणः इत्यादौ महच्छब्दस्य गुणवत्त्व-गुणवाचित्व अवगम्यते । सु. पृ ६४८.

● महाभारतनिर्वचनाख्याने द्वैपायनेन उक्तम् ' महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्वपापै. प्रमुच्यते ॥ ' वा. १।३।५।१० पृ. २२८.

● महाभाष्यकारः उपवर्षः । ' व्याकरणे द्विवी याशा. तृतीयार्थवाचित्वानभिधानात्, ... परीष्टि.

निरन्तर भवति, तदभिप्रायं न शक्नोति निवेशयम्। यत्र निरन्तर्यापि शक्नोति भक्षितुम्, न तत्रिवर्तयति। यदि निरन्तरदर्शनेनिषेधक उपोदक प्राप्त स्येत। ननु कौपीन प्रच्छादने परिधत्ते इति भवति, नायमर्थके। उच्यते। नैतदेवम्। उत्तरियसस्योऽपि कार्ये परिधत्त इति भवति, तद्यथा कम्बल परिधत्ते, चैलम परिधत्ते इति। सर्वतो धत्ते परिधत्ते इत्यवयवप्रसिद्ध्या भवति। तस्मादहतस्य वाससो न निवृत्ति, समुच्चय इति।

समुच्चय च दर्शयति। १५॥

भाष्यम्— समुच्चय च वास शब्देन अहतवचनत्वेन दर्शयति 'वासांसि नाराशी चोपानहौ विमुञ्चति' इति। इत्याविधाणया नामापि विदलयति, ततोऽन्यद्युं परिधत्ते इति। तस्मादपि पदयाम अनिवृत्ति, समुच्चय इति।

लोम— तार्प्यमिति क्षुमा वास। तूपाख्यस्य निवेशस्य ('तूपाख्य' इति मुद्रिते दृश्यते। तत्र सुद्रणेन। तथा च शास्त्रदीपिकायां विवरणादिषु च 'तार्प्यं यजमान परिधत्ते' इति पाठ सोऽपि अशुद्ध एव। भाट्टदीपिकादीनाया शम्भुभट्टेन 'आर्प्यमिति पत्नीय पकार' इति स्पष्टमेव उक्तत्वात्।) निवार इयेके (इति) भट्टभास्कर। अहत तस्य इतमतुपयुक्त अहत वासम्। एककार्यत्वादेव सगति।

वि— 'तार्प्यादहतवासस्य बाधक स्यात्र वा, ऽग्रिम। गुह्याच्छादनकार्येभ्या, दयोग्यत्वात् समुच्चय॥'

भाट्ट— स्वतने महाव्रते 'तार्प्यं यजमान परिधत्ते दर्भमय पत्नी' इति श्रुतम्। तत्र तार्प्यं घृताक्त-कम्बल इति माधव। अत्रापि परिधानोद्देशेन तार्प्यादि विधौ परमार्थपरिधानेऽपि उदय्ये यजमानोद्देशेन तद्विधौ शयनादावपि तदापत्तेरवश्य तार्प्यादिविशिष्ट परिधानमेव यजमानाद्युद्देशेन विधीयते, तच्च प्राकृतमेवा तिदेशत प्राप्तौ पूर्वं विधीयते, कर्मान्तमेव चैलस्य चैतन्। तस्य च प्राकृतकार्यापन्नत्वेनैव विधानात् प्राकृतस्य अहतस्य निवृत्ति। न च प्राकृताहतस्य कौपीनपद-वाच्यगायत्र्यादिच्छादने विनियुक्तत्वात् तत्र च तार्प्या दीनामयोग्यत्वात् योग्यतयैवोपरिधारणे एव तद्विनेश-

प्रतीते अभिन्नकार्यत्वेन नाहतनिवृत्तिरिति वाच्यम्, कौपीनाच्छादने एव परिदधानिप्रयोगेणोपरि धारणे तार्प्यादिविधाने लक्षणापत्ते। तार्प्यादिना कौपीनाच्छादन-स्यापि कर्तुं शक्यत्वाच्च। वस्तुतस्तु— अन्याच्छादनेऽपि 'परिस्तृणीत परिधत्त वेदिम्' इत्यादौ परिदधातिपदप्रयोगात् यद्यपि न कौपीनाच्छादने एव तद्विधानम्, तथापि प्रकृतावपि 'अहत वास परिधत्ते' इत्यनेन कौपीनाच्छादन इव आचारप्राप्तोपरिभागा च्छादनेऽप्यहतविधानादिकृतावपि तार्प्यादिरूपमनैव विधानादुभयत्रैवाहतनिवृत्ति। इति प्राप्ते, कौपीनाच्छादने गृह्यस्य कन्दाद्यसमर्थत्वेन तार्प्यादीनामयोग्यत्वात् उपरि धारणे एव तार्प्यादिविधिप्रतीतेर्न कौपीनाच्छादने अहत-निवृत्ति। अत एव न्यायेन आचारप्राप्तोपरिधारण एव प्राकृताहतनिवृत्तिप्रसक्तौ 'वासांसि विमुञ्चति' इति प्रतिपत्तिविशेषविधायके वाक्ये वासोबहुत्वानुवादलिङ्गेन समुच्चयप्रतीतेर्न तत्राप्यहतनिवृत्ति। एव च यद्यपि तार्प्यं कौपीनाच्छादनेऽपि कथञ्चिद्योग्यम्, तथापि वासो बहुत्वानुवादबलेनैव तस्याहतेन समुच्चय। दर्भमयस्य तु कथमप्ययोग्यत्वादुपरिधारण एव विधिप्रतीतेर्वासोबहुत्वानुरोधेन तत्रापि समुच्चय। अत एव यत्र न वासोबहुत्वानुवाद यथा विश्वजिति 'अजमृजुद्धेय चत्वारिच परिधत्ते' इति श्रुते तन्ने कम्पा वल्कलस्य कौपीनाच्छादने-ऽयोग्यत्वात् तत्राहतस्यातिदेशप्राप्तस्यानिवृत्तावपि उपरि धारणे तन्निवृत्तिरेव। विशिष्य चेद् द्वादशे वक्ष्यते।

मण्डन— 'समुच्चयो ताप्यया स्यात्।'

शङ्कर— 'बाध्य न वासस्तार्प्येण।'

* महाव्रते 'दिक्षु दुन्दुभयो वदन्ति' इति दुन्दुभि-गानम्, तत्सजातीय च काण्डवीणागानम्। वि १०।८।६.

* महाव्रते पत्नय उपगायन्ति, पिच्छोलाभि, काण्डवीणाभिः, आपाटलिकाभि। भा १०।४।१८

* महाव्रते शुक्रग्रहेण ऐन्द्रवायवादिग्रहाणां समुच्चय। १०।६।२३–५ मीसो पृ १६४८ 'ग्रह-समुच्चयन्याय' इत्यत्र अधिकरण द्रष्टव्यम्।

* महाव्रते स्तोत्रान्तरसाधनीभूतं श्लोकादि सामभिः प्राकृतसाम्नां समुच्चयः ॥

सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत । १०।४।८।१६ ॥

भाष्यम्-- महाव्रते श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवते, अनुश्लोकेन पश्चात्सदसः, क्रौञ्चेन चात्वालमवेक्षमाणाः' इति । सन्ति तु प्राकृतानि सामानीह चोदकेन प्राप्तानि । तत्र संशयः किं प्राकृतानां साम्नां निवृत्तिः, उतानिवृत्तिः समुच्चय इति । किं प्राप्तम् ? उच्यते इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्यन्ते इति । यथा 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, क्रुञ्चाङ्गिरसीये भवतः, आमहीयवं भवति, क्रौञ्चानि भवन्ति इति श्रुतेषु चोदकप्राप्तानि निवर्त्यन्ते, एवमिहापि द्रष्टव्यम् । एवं प्राप्ते, ब्रूमः । सामसु 'श्लोकेन पुरस्तात्स्तुवते' इत्येवमादिश्रूयमाणेषु प्राकृतानामविकारः प्रतीयेत । कुतः ? अर्थान्तरश्रुतेः । अर्थान्तरेण हि सम्बन्धः श्रूयते 'पुरस्तात्सदसः स्तुवते' इत्येवमादि । यच्च पदं केनचित् पदेन सम्बध्यते विशेषणार्थेन, न तत् पदान्तरेण सह सम्बन्धमर्हति संहृष्टबुद्धि तम् । यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति भार्याविशेषणत्वेनोच्चार्यमाणो राज्ञ इति शब्दो न पुनः पुरुषशब्देन सम्बध्यते इति । एवं 'पुरस्तात्सदसः स्तुवते' इत्यनेन सम्बध्यमानो न पुनः 'श्लोकेन स्तुवते' इति सम्बन्धमर्हति । यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेत्यनूद्यते, तत उपपन्नैकवाक्यमिति । यदा तु पुनर्देशसत्ता विहिता, तदा परिपूर्णं वाक्यम्, श्लोकेन चेत्येतदपि विधातव्यम्, तदा पुनर्विधिसम्बन्धो द्रष्टव्यमानेत च । द्रव्यमननुच्चारयितव्यम्, न चोच्चारितं । तस्मादनुच्चारितो वा कल्पयितव्यः, उच्चारणं [illegible] कल्पयितव्यम् । कल्पनायां च शब्दो बाध्येत । तस्मान्नैवम् । कथं तर्हि ? देशसामविशिष्टा स्तुतिः श्रुत्या विधीयते । न चैवं केनचित् संबन्धः विहिते, परिपूर्णे वाक्ये, पुनरपरं वाक्यं कल्पयितव्यं भवति । उभयविशेषणविशिष्टा हि स्तुतिः श्रुत्या यदा विहिता, तदा परिपूर्णं वाक्यम्, न तदा पुनरपरं कस्यचित् संबन्धः कल्पयितव्यो भवति, यदर्थं किंचित् विरुध्यमानेन । तस्मात् स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्यते, समुच्चय इति ।

अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् । १७ ॥

भाष्यम्-- अथ यदुपवर्णितम्, यथा 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः' इत्येवमादिभिरिव प्राकृतानां निवृत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमत्र यत् प्राकृतं निवर्त्यते । अत्र ह्यर्थान्तरं न श्रूयते प्राकृतस्यैव शेषः श्रूयते । तस्मात्तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति । इह तु अर्थान्तरश्रवणात् वाक्यभेदप्रसङ्गात् अनिवृत्तिरित्युक्तम् ।

सोम-- पूर्वेण एकवाक्यत्वात् सङ्गतिः । सूत्रे-- अर्थान्तरश्रुतेः प्राकृतस्तुत्यपेक्षया स्तुत्यन्तरसंयोगश्रुतेः अप्रत्यक्षाम्नानादपि इत्यर्थः ।

वि-- 'वाध्य श्लोकादिनाऽऽज्यादि न वा, ऽऽद्य स्तुतिभिन्नत्व ।, देशसाम्नोर्विधौ भेदे ( भेदात् ) वैषिक्याच्च समुच्चयः ॥' ९

भाट्ट -- तत्र 'श्लोकेन पुरस्तात् सदसः स्तुवीत' इत्यादिना प्राकृतस्तोत्रानुवादेन श्लोकाद्यवाम्नानविधे देशाद्यनुवादेन तस्याऽपि विधेयत्वानुपपत्ते, वाक्यभेदापादकगुणादेव कर्मान्तरत्वप्रतीतेः, तस्य च उपहोमन्यायेन ( ५।१।९ ) अदृष्टार्थत्वात् समुच्चयः स्तोत्रान्तरैः । न च प्राकृतस्तोत्राण्येव अतिदेशतः पूर्वप्रवृत्तङ्गीकारेण गुणद्वय विशिष्टानि विधीयन्ताम् तेन प्राकृतसाम्नः प्राकृतदेशस्य च निवृत्तिरिति वाच्यम् । स्तौतिधातोः पूर्वविहिताविहित साधारणस्तोत्रमात्रवाचित्वेनातिदेशतः पूर्वं प्राकृतस्तोत्राणामेव विशिष्योपस्थापकाभावेन विधिवशात् कर्मान्तरप्रतीतेः । वृद्धमेधीये 'आज्यभागौ यजति' इत्यत्र तु आज्यभागपदस्यैव पूर्वकर्मणो विशिष्योपस्थापकमिति विशेषः । ९

मण्डन-- 'श्लोकस्तोत्रं न बाधकम् ।' १०

शंकर-- 'प्राकृती नैतदस्तुते ।' प्राकृती स्तुतिः न बाध्या । १०

* महाव्रतगतं धर्मं संवत्सरसत्त्रे दर्शयति 'पञ्चसञ्चरन्ति' इति । भा ८।११।१८

● महाव्रतप्रयोगप्रतिपादकं आश्वलायननिर्मितं कल्पसूत्र अरण्येऽधीयाना बह्वृचाः कर्तृविस्मरणात् वेदत्वेन व्यवहरन्ति । वि. १।२।१ वर्णकं २.

● महासतोबृहती जगती । पादेषु अक्षराणि १२।८।१२।८।८ । उदा० 'आ यः पप्रौ भानुना' । (ऋग्. ६।४८।६)। पि.

● महिममहाभ्यां ऐन्द्रवायवाग्रिमग्रहाणां समुच्चयः अश्वमेधे । १०।४।२।३–५. मीको. पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम् ।

● महिषी प्रसरोन्मुखी महिषो मत्तानुग इति न्यायः । यत्र केचित् महामूर्खा मृतम्लेच्छाधमजातिस्थानानि स्वस्तुष्टेस्थानि स्वामिसमर्पितप्रदानि च मत्वा म्लेच्छाधमजातिनीचयोनिप्राप्त्या अस्तित्तु दिवे-ष्योऽपि स्वामीह याचन्ते, तथास्य प्रगतिरिति । उक्तं च गुसाईकविना रावणमारीचसंवादप्रसंगे । तथाहि, तं मारीचं प्राप्य मौरुक दधानः प्रायुदाजहार 'सीतामीहे रामंत्र मे वणे सहायो भवार्थकार । कुचा शेरे दरं देह की मीयाँ कहे तुम चले शिकार ॥' इति । साहसी-८१.

● महिष्याः गृहे आदित्यचरुः राजसूये । आ. ११।२।३।१३.

● मांसं श्यामदोषात् मन्त्रार्थे उपात्तीयते । भा. १२।२।१।७.

● 'मांसं तु सवनीयानां चोदनाविशेषात् ।' ३।८।२२।४३ ॥ इत्यत्र पुरोडाशानादरेण सवनीयमाने मांसविधि वदन्ते शाक्यानामयने । सु. पृ. ८३७. ● 'मांस तु सवनीयानाम्' इति सिद्धान्ततः पुरोडाशमात्रेण अर्थमुच्यमान तात्पर्यमस्तम् । वा २।१।८। १२ पृ. ४१८.

● मांसं [illegible] सवनीयानां चोदनाविशेषात् । ३।८।२२।४३ ॥

शाक्यानामयनं (शाक्त्यानामयन इत्यपि पाठः) नाम षट्त्रिंशत्संवत्सरं सत्रम् । 'तत्र सत्त्विनो धर्मस्त्विदेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति' इति श्रुतम् । इह तरसपदं नाम मांसपदं किं सर्वेषामेव पुरोडाशानां सवनीयपुरोडाशानामेव वेति विचारे सर्वेषामेवेति उत्सूत्रं पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तरसशब्देन यत् मांस उक्तं तत् सवनीयानामेव पुरोडाशानाम् । कुत. ? चोदनाविशेषात् । 'तरसाः पुरोडाशाः सवनीयाः' इति तरससवनीयसम्बन्धो विधीयते । पुरोडाशाः इति तु अनुवादः । तस्मात् धानाकरम्भपरिवापपयस्यापुरोडाशरूपाणां पञ्चानामपि सवनीयपुरोडाशशब्दितानां द्रव्याणां स्थाने मांस ग्राह्यं सवनीयेष्विति विशेषचोदनात् इति सिद्धान्तः ।

भक्तिरसंनिधावन्याय्येति चेत् । ४४ ॥

शाक्यानामयने नामसत्रे 'तरसाः पुरोडाशाः सवनीया भवन्ति' इति तरसशब्दितमांसमयत्न पुरोडाशानामुक्तम् । तत्र धानादिपञ्चकमारभमाणा सवनीयानामेव पुरोडाशानां न तु यावतां पुरोडाशानां इति सिद्धान्ते पूर्वसूत्रेण उक्ते पूर्वपक्षी ब्रूते । सिद्धान्तिना पुरोडाशशब्दः धानाकरम्भपरिवापपयस्यासु गौणः स्वीक्रियते । ततो वर चरमश्रुतः सवनीयशब्द एव सवनीयासवनीयसमुदायवाचित्वेन स्वीकर्तुम् । तथाहि— असंनिधौ, संनिधिः अभेदः असंनिधिः अत्यन्तभेदः, असंनिधौ धानादीनां पुरोडाशात् अत्यन्तभेदे सति पुरोडाशशब्दस्य धानादिषु भक्तिः गौणता लाक्षणिकता वा अन्याय्या । ततश्च पुरोडाशशब्दस्य लक्षणा न स्वीकार्या मुख्येऽर्थे संभवति । अत्र सिद्धान्ती ब्रूते, इति चेत् पूर्वपक्षी ब्रूयात् इति ।

स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् । ४५ ॥

पुरोडाशशब्देन धानादीनामपि ग्रहणे पुरोडाशशब्दस्य लक्षणा स्यात् । सा चान्याय्या मुख्येऽर्थे संभवति । इति पूर्वपक्षिणा पूर्वसूत्रे शङ्कितम् । तत्र उत्तरार्थं सिद्धान्तसूत्रम् । स्यात् पुरोडाशशब्दस्यैव धानादिषु लाक्षणिकत्वं न्याय्यम् । न तु सवनीयासवनीयसमुदाये लाक्षणिकस्य सवनीयशब्दस्य न्याय्यम् । "प्रकृतिलिङ्गत्वात् । प्रकृतौ अग्निष्टोमे पुरोडाशशब्दस्य धानादिषु सवनीयहविःपञ्चके लिङ्गत्वात् लक्षणापेक्षत्वात् भक्तिः स्यात् । पुरोडाशशब्दस्य मुख्यस्यापि गौणत्वमुचितम् । पुरोडाशस्य सवनीयशब्देन अन्वयस्यानुपपत्तेः धानादिषु पुरोडाश-

मयता स्यात्। न अवयवे पुरोडाशानां च मांसमयता विधातुं सवनीयशब्देन च पुरोडाशान् विशेषयितुम्। भिद्येत हि तथा वाक्यम्। तस्मात्सर्वपुरोडाशानां मांसमयता। इति प्राप्ते, उच्यते। मांसं तु सवनीयानां स्यात्। तरसाः सवनीया भवन्तीति तरससवनीयसम्बन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनुवादे। कुत एतत्? सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेष्ववकल्पते। तस्मात्पुरोडाशशब्दोऽनुवाद इति। तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति।

या-- पुरोडाशशब्दस्य धानादिष्वसमर्थत्वात्सर्वपुरोडाशविषयत्वम्, सत्यपि सवनीयत्वे विशेषणासामर्थ्यात्। इति प्राप्ते, अभिधीयते। सवनीयशब्दस्याप्रमाद-पाठात्पुरोडाशशब्दं लिङ्गसमवायाद्गौणं कृत्वा धानादीनामपि ग्रहणमिति।

भक्तिरसंनिधावन्याय्येति चेत्। ४३ ॥

भाष्यम्-- इति चेत् पश्यसि, सवनीयेषु पुरोडाशशब्दोऽनुवादो भविष्यतीति। धानादिषु पुरोडाशशब्दो न वर्तते। भक्तिमात्राद्धा गुणत्वे संभवति।

वा--- अत्यन्तभिन्नत्वात् धानादिष्वनुवादो न युक्तो यदि वा सवनीयशब्दस्याप्यनुवादेन भवितव्यमिति।

स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत्। ४४ ॥

भाष्यम्--- प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः संनिहितेषु प्रयुक्तः। इहापि भाक्त एव प्रयोक्ष्यते। अत्रापि हि सवनीयशब्देन ते संनिहिताः। प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिर्विकृतावपि तथैव। यथा छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति, यथा उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति प्रकृति-लिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते। एवमिहापि सवनीयानां मांसमयतेति।

वा-- 'पुरोडाशानलंकुरु' इति प्रकृतौ धानादिषु दृष्टत्वा ह्यत, न तु सवनीयशब्दस्यासवनीयेषु प्रवृत्ति-। रादित्याच्च गम्यते तेन लक्षणितु नेतरेण। न ह्यसव-नीयस्य पुरोडाशस्य धानादिभिः सह संबन्धोऽस्ति। तस्मात् धानादीनां स्थाने तरसा इति सिद्धम्। 'इति कथितवदवाक्यभवेकैस्त्वगतसर्वविरोधशाधमार्गः। श्रुतिकृतवदनिश्चयैः प्रमाणैः स्थित इह कर्मसु शेष-शेषिभावः ॥'

शा-- 'ननूद्देश्यः पुरोडाशः सवनीयेन गम्यते। विशेष्टुं तेन सर्वार्थं तरसं सवनीयवत् ॥' इति प्राप्ते, अभिधीयते। 'पुरोडाशं समुद्दिश्य तरस चोद्यते यदि। ततः स्यात्सर्वगामित्वमुद्देश्यस्या-विशेषणात् ॥ उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते। पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥ पुरोडाशपदे सद्भिः जघन्यं लक्षणां व्रजेत्। प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥ सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत्। दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥ अन्यनावाच तेनैव युक्ता तरससंगतिः। तद्रूपवेतः पुरोडाश इति तेन न सगतिः ॥'

सोम--सूत्रार्थस्तु-- श्रौततरसशब्दव्याख्यानं मांस-मिति तद्धानादीनां सवनीयानामेव, न तु सवनीयासवनीय-पुरोडाशानाम्, संनिहितान्यतरूपविशेषलाभात् इति।

वि-- 'सवनीये पुरोडाशास्तरसा इति मांसता। सर्वेन सवनीये वा सर्वेन सवनीयवत् ॥ तरसा सवनीयाः स्युरिति तत्संनिधिः श्रुतः। पुरोडाशस्य मांसत्वं तेनै-वातो निराक्रते ॥'

भाट्ट-- षट्त्रिंशदाब्दिके शाक्तानामयनाख्ये सत्रे 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति श्रुतं मांसं 'भवन्ति' इति विधिभावनायाम्याससम्बन्धात् पुरोडाशस्य तदुद्देशेनैव विधीयते। निर्देशेव हि भवनार्थे भावनाभ्यसाकाङ्क्षत्वम्। अतस्तत्प्रत्याससत्त्वेन तदुचि-तम्, न सवनीयानाम्। यदा तु 'पुरोडाशाः सवनीयाः' इति भवदेवादिकृत. पाठस्तदा प्राथमिकत्वाद्विधेयतरसस्या सम्बन्धाच्च पुरोडाशमार्गसेनोद्देश्यत्वं स्यादेव। न च पुरोडाशस्य सवनीयपदेन विशेषणम्, विशिष्टोद्देशापत्तेः। अतः सर्वपुरोडाशकार्ये तारसं विधीयते। सवनीयपदं तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा। अत पुरोडाशमात्रस्थाने तरसम्, न धानादिस्थाने। इति प्राप्ते,

• मातुलसुतापरिणयः केचुचित् दक्षिणदेशेषु क्रियते, स प्रमाणम्। इति चेत्, न, स्मृतिबाधितत्वात्। 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' इति स्मृतेः। सदाचाराच्च स्मृतिः प्रबला। वि. १।३।९ वर्णक २.

• मातुलसुतापरिणयनम् 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' इतिस्मृतिनिषिद्धम्। अत्र मातुलसुतायाः पुत्रिकाकरणादौ गान्धर्वादिविवाहादौ वा यत्र मातृगोत्रनिवृत्तिः नास्ति, तद्विषयो मातुलसुतापरिणयननिषेधः, न तु यत्र गोत्रनिवृत्तिः तद्विषयोऽपि इति चन्द्रिकादौ (स्मृतिचन्द्रिका) प्रपञ्चितम्। सोम. १।३।९ पृ. ३४.

• माता च परमं दैवतम्, सा च पुत्रेषु इत्येतद्रूपनिरूप्यमाणो (मातृशब्द) जननीवचनः अवगम्यते। माता छगः स्त्रिया इत्येभिरप्यनुगम्यमानो धान्यस्य मातृवाचक। भा. १०।१।७।१८. • 'माता भस्त्रा पितुः पुत्रः' (महाभारतम् १।९५।३०) इति स्मृत्या दर्शने जनयितुश्च नाऽऽधारमात्रत्वोपपत्तिः, तेन वर्णसङ्करः। पा. १।२।१।१३ पृ. ११८ ('येन जातः स एव सः' इति द्वितीयचरण। सुधा)। • मातुरेव क्षेत्रिणो वा यदि पुत्रः स्यात् ततस्तयोः प्रसिद्धजातित्वात् नैव (पुत्रजातेः) दुर्ज्ञानता भवेत्। पा. १।२।१।१३.

• मातृगणयागः नैमित्तिकः। नि. (गुरुमते) १।४।२

• मातृगोत्रा कुमारी न परिणेया। वि. १।३।९ वर्णक २.

• मातापितृगुर्वादिशुश्रूषा धर्मः। वि ५।१।४.

■ मात्स्यन्यायः। प्रबलमत्स्या निर्बलग्रासात् नाश्यन्तीति न्यायार्थः। अत्र च वासिष्ठे प्रह्लादोपाख्याने तदसमाधि प्रभुरोक्तः 'एतावताऽपि कालेन नष्टस्तद मण्डलम्। बभूवायजकं वीक्ष्य मात्स्यन्यायकदर्थितम्॥' (योगवासिष्ठम् ५।३७।७) इति। मादस्ती. २३०.

• माथुरवत्। यथा मथुरामभिप्रस्थितो माथुर इति, मथुराया आगत्य मथुराया निर्गतश्च (उच्यते)। यस्य तु अतोऽन्यतमः सम्बन्धो नास्ति न स माथुरः। तथा आग्नीनैतुराना दाक्षिणात्यादिकया आख्यया व्यवस्था। भा. १।३।७।२१। अत्र वार्तिकम्- यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तम्, तत् 'तद्गच्छति पथिदूतयोः' (पा. ४।३।८५) इति वा दूतविषयं वर्णयितव्यम्, अप्रत्ययिनोक्तत्वाद् वा उपेक्षितव्यम्, सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात्।

• माध्यंदिनं सवनम्। 'पष्टित्रिष्टुभो माध्यंदिनं सवनम्' इत्यत्र अनेकवाक्यात्मोपदेशेन मानतामपानविधिः। मणि पृ. १११. • माध्यंदिनः पवमानः। 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा' इति ज्योतिष्टोमे त्रीणि छन्दांसि। भा १०।५।२।७. • माध्यंदिनः पवमानः त्रिच्छन्दस्कः। गायत्री बृहती त्रिष्टुभ इति छन्दसाम्। वि १०।५।१, • माध्यंदिनः पवमानः नाम स्तोत्रं अग्निष्टोमे माध्यंदिने सवने प्रथमम्, चत्वारि च पृष्ठस्तोत्राणि इति पञ्च स्तोत्राणि माध्यंदिने सवने। ८।३।९ • माध्यंदिने पवमाने गानं आद्ये तृचे न तु तृचान्तरासु स्तोत्रियासु, एकत्रिके नतौ। १०।५।१०-१. मीको. पृ. ४५४ 'गान्ध्यगोपाधिकरणम्' इत्यत्र द्रष्टव्यम्। • माध्यंदिने पशुपुरोडाशेन चरन्ति सवनीयस्य पशोः। भा. ११।२।३।१४, • माध्यंदिने सवने एकादशकपालः सवनीयपुरोडाशः। १०।५।२६।८८. • माध्यंदिने सवने ग्रहाः पञ्च 'पञ्च माध्यंदिने गृह्णाति' इति वचनात्। सोम. ३।२।६. • माध्यंदिने सवने चत्वारि पृष्ठस्तोत्राणि सप्तदशस्तोमकानि ज्योतिष्टोमे। नि १।४।२. • 'माध्यंदिने सवने दक्षिणा नीयन्ते' ज्योतिष्टोमे। भा. १०।६।१८।६९, • माध्यंदिने सवने पौतुदारवेणाग्न्यङ्गते अञ्जनाभ्यञ्जने नाम कर्म। १०।८।६।१०, • माध्यंदिने सवने ब्रह्मसामकाले प्राजापत्यानामालम्भः श्रूयते 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' इति। ४।१।१८।२३, • माध्यंदिने सवने सकला दक्षिणा सम्भृताः ज्योतिष्टोमे। १०।६।१८।६९. • 'आग्नावैष्णवमेकादशकपालं (निर्वपेत्), माध्यंदिने सारस्वतं चरुम्, बार्हस्पत्यं चरुम्' आगन्तुकन्यायाम्। ११।२।८।१९,

● सावनीयस्य ' माध्यंदिने निरूप्यते ' इति वचनात् माध्यंदिनसवनस्येव अङ्गानि भवन्ति। ११।४।१।१६.

● माध्यंदिनार्भवपवमानयो आगन्तुना साम्ना गायत्र्यादिषेव ( गायत्रीबृहत्यनुष्टुप्सु ) निवेश. न तु अन्ते, त्रिष्टुब्लोमवृत्सु भवतु। ५।३।५।१३–१४. मीको. पृ. २१० ' अतिरात्रे काम्यस्तोम० ' इत्यत्र द्रष्टव्यम्।

● माध्यंदिनार्भवपवमानयोरेव साम्नामावापोद्वापौ त्रिष्टुब्जगतीषु । १०।८।१३।२१–२२. ' त्रिष्टुब्जगतीलोमवृत्सु माध्यंदिनार्भव० ' इत्यत्र द्रष्टव्यम्।

● माध्यंदिनार्भवपवमानयो० साम्नामागम इति वचने ( १०।५।६–७।१९–२६ ) । भा. ५।३।७।२३.

● माध्यंदिनतृतीयसवनगतानां पशुपुरोडाशानां पशुतन्त्रमध्ये प्रचरणात् प्रसक्तिक्रमेण न तु तन्निरूपणम्। भाष्यकारमतेऽपि पशुकर्मणोपूर्वमानिक्रमभिप्रायेण पशुमध्य पातित्वात् पुरोडाशानां तन्त्रिक्रमेण । त्रि १२।२।१२.

● माध्यंदिनपवमानस्य आगन्तुकः ( अतिरात्रे ) ' उद्या ते जातमन्धसः ' इति गायत्र एव एकविंशस्तोमपूरणार्थं आगन्तुना साम्नामावापः न तु त्रिष्टुब्जगतीछन्दसयो. । त्रि. ५।३।८, ● माध्यंदिनपवमाने त्रीणि सूक्तानि आम्नातानि । १४।३.

● माध्यंदिनसवनीयाः तृतीयसवनीयाश्च पुरोडाशा अश्वस्य पक्षे. प्रातःसवनीयाना वा तन्त्रमध्ये पतिता । भा. १२।२।१२।३८.

● माध्यंदिनीयायाः सावनीयाया. कदाचित्-उत्कर्षेऽपि सावनप्रिक्षोमस्य नोत्कर्षः । सावनीयान्याय. । ५।२।१७।३०–३४.

● माध्यंदिना अर्थाभावादेव ज्ञानमपि नास्तीति वदन्ति, तदपि हेतुनिरासादेव निरस्तम् । बाल पृ ६.

● माध्वी सुरा ब्राह्मणस्यैव निषिद्धा न क्षत्रियवैश्ययो । या १।३।१।७ पृ. २०९–२१०.

● मानं उपस्थहस्य च कालस्य कर्तव्यं ज्योतिष्टोमे । १०।६।१०।३३ मीको पृ. १८३१ ' ज्योतिष्टोमे सोमस्य० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

▣ मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य । १०।६।२३।५९ ॥

अहर्गणे सोमस्य मानं प्रति मानार्थं परिमाणं कर्तुं वासः उत्पादयेत् मानकाले । प्रकृतौ ज्योतिष्टोमे तेन मानवासेनैव उपावहरणस्य दर्शनात् उपावहरणार्थं अहर्गणेऽपि पृथग्वासो नोत्पाद्यम् । उत्पादनेऽपि वा मानकाले एवोत्पाद्यम् । इति पूर्वः पक्षः ।

हरणे वा श्रुतसंयोगादर्थाद्धि प्रकृतौ तेन । ८० ॥

शाबर० पूर्वपक्षव्यावृत्त्यर्थं । अहर्गणे प्रत्यहं सोमोपावहरणार्थं वासः मानकाले नोत्पादयेत् किन्तु हरणकाले उपावहरणकाले उत्पादयेत् । श्रुतिसंयोगात् श्रुत्या संयोगाभावात् श्रुत्यनुक्तत्वात् । नहि श्रूयते मानकाले उत्पादयेत् इति । ननु प्रकृतौ मानवाससैव उपावहरणदर्शनात् मानकाले एव हरणार्थं उत्पादनीयं इति चेत्तत्राह । श्रुतसंयोगात् श्रुत्यनुक्तत्वात् । नहि श्रूयते मानवाससैव उपावहरणं कर्तव्यमिति । किन्तु प्रकृतौ सह एकत्वात् अर्थात् । नहि मानवासः उपावहरणकाले अन्यत् स्यादिति अर्थात् तेनैव क्रियते । अहर्गणे तु मानवासस विधानाभावेऽपि सोमधारणे स्यात् तेन प्रत्यहं उपावहरणासंभवात् प्रत्यहं उपावहरणकाले पृथक् वासः उत्पादनीय इति सिद्धान्त. । के.

● मान सोमधर्म । भा ३।६।१३।३६.

▣ मानाधीना मेयसिद्धिरिति ( प्रमाणाधीना प्रमेयसिद्धिरिति वा ) न्यायः । साहस्री. ४११.

● ' मानाधीना मेयसिद्धि. ' इति न्यायेन प्रमाणनिरूपणस्य धर्मस्वरूपनिरूपणं प्रति हेतुत्वम् । कौ १।१।१।१,

● न चैव कल्पनागौरवमिति वाच्ये निर्णायकाभाव । श्रौतस्मार्तं तत्प्रमाणगतस्य मानाधीनत्वेन 'मानाधीना० ' इति न्यायेन प्रमेयस्य प्रमाणोपजीवकत्वात् अप्रमाणविरोधिभिन्नेन तत्त्वावगमे, निर्णयाभावात् । पूर्वपक्षे । १।३।३।८.

● मानोपावहरणादीनां सोममात्रधर्मता । ३।६।१३।३६.

● मानवीनां कचा एकादशानामेव सामिधेनीत्वे दाक्षायणस्य गणनस्य सोमपौष्टिके । १०।६।११।४१–४६. ' सोमपौष्टे सामिधेनीत्वे० ' इत्यत्र द्रष्टव्यम् ।

* मानवीषु पञ्चदशानामेव सामिधेनीत्वम् । वि. १०।६।१९.

■ मानसं अहः । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' । द्वादशाहे 'दशमेऽहनि मानसाय प्रसर्पन्ति' । भा. १०।६।१३।३९–४०.

※ मानसमहरन्तरं स्यात् भेदव्यपदेशात् । १०।६।१३।३४॥

द्वादशाहे 'अनया त्वा पात्रेण समुद्रस्त्वा प्रजापतये जुष्टं गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति' इति श्रूयते । इदं मानसं कर्म मानसो ग्रहः द्वादशाहात् अहरन्तरं भिन्नं अहः स्यात् । 'वाग् वै द्वादशाहो मनो मानसम्' इति ब्राह्मणात् मानसस्य भेदेन व्यपदेशात् । किञ्च 'वाग्वै द्वादशाहः' इति वाचा द्वादशाहः संस्तुतः, 'मनो मानसम्' इति च मनसा मानसं संस्तुतम् । वाङ्मनसयोश्च भेदः प्रसिद्धः, तेन द्वादशाहमानसयोरपि भेदो गम्यते । तस्मात् द्वादशाहात् मानसं भिन्नमहः इति पूर्वः पक्षः ।

तेन च संस्तवात् । ३५ ॥

तेन च मानसेन द्वादशाहस्य संस्तवात् द्वादशाहात् मानसं अहरन्तरं इति गम्यते । 'रिप्राणि ह वै द्वादशाहस्य गतश्रीणि छन्दांसि, तानि मानसेनैव आप्याययन्ति' । द्वादशाहस्य यानि गतश्रीणि छन्दांसि तानि मानसेन आप्याययन्ति इति ब्रुवन् द्वादशाहात् मानसं भिन्नं दर्शयति । नहि स्वेनैव स्वः संस्तूयते । स्तुत्यस्तावकयोर्भेदाधीनत्वात् । तस्मात् द्वादशाहात् मानसं अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

अहरन्तात् परेण चोदना । ३६ ॥

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरम् । कुतः ? अहरन्तात् । अह्नः अन्तः पत्नीसंयाजाः । 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति पत्नीसंयाजान्तात् अहरन्तात् परेण परस्तात् मानसस्य चोदना भवति । तस्मात् मानसं द्वादशाहात् अहरन्तरम् । द्वादशाहिकत्वेन गुणत्वे तु पत्नीसंयाजेभ्यः प्राक् स्यात् । परस्तात्तु अतो विहितः । तस्मात् अहरन्तरं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

षष्ठे संख्या सहस्रवत् । ३७ ॥

प्राजापत्यो मानसो ग्रहः द्वादशाहाङ्गमपि सन् द्वादशाहात् अहरन्तरं इति पूर्वपक्षिणा उक्ते सिद्धान्तिनः शङ्का । ननु एवं त्रयोदशसु अहःसु द्वादशाह इति संज्ञा नोपपद्येतेति । अत्रोच्यते । षष्ठे त्रयोदशाहत्वपक्षेऽपि संख्या संख्याविशेषभाव इत्युपपद्यते । द्वादशाहसंज्ञा कर्मगणनामधेयत्वात् उपपद्यते । सहस्रवत् । यथा अतिरात्रः सहस्रमहानि 'अतिरात्रेण सहस्रसाय्येन यजेत' इति सहस्राधिकेऽपि सहस्रशब्दो दृष्टः तद्वत् । तस्मात् मानसं द्वादशाहात् अहरन्तरं इति पूर्वः पक्षः ।

अहरङ्गं वांऽशुवच्चोदनाऽभावात् । ३८ ॥

मानसो ग्रहः द्वादशाहाङ्गमपि द्वादशाहादहरन्तरं इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । मानसो ग्रहः अहरङ्गं दशमस्य अहः अङ्गं स्यात् न अन्यदहः । चोदनाभावात् अहरन्तरप्रकल्पिकायाः चोदनायाः अभावात् । 'अनया त्वा पात्रेण समुद्रस्त्वा प्रजापतये जुष्टं गृह्णामि इति प्राजापत्यं मनोग्रहं गृह्णाति' इति दशममहरधीकृत्य ग्रहचोदना दृष्टा । अंशुवत्, यथा अंश्वदाभ्यौ विधीयमानौ यस्मिन् कर्मणि भवतः तत्परौ ग्रहाभ्यासौ इति विज्ञायते न कर्मान्तरे तद्वत् । तस्मात् दशमेऽहन्येव गुणविधिरयम् ।

दशमविसर्गवचनाच्च । ३९ ॥

सिद्धान्ते हेत्वन्तरमाह । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' एष दशमस्य विसर्गः अन्तः यन्मानसं इति ब्रुवन् अन्तोऽयं दशमस्य न शक्यमेतत् कर्म इति दशमस्य अह्नः विसर्गस्य वचनं दर्शयति ।

दशमेऽहनीति च तद्गुणशास्त्रात् । ४० ॥

'दशमेऽहनि मानसाय प्रसर्पन्ति', 'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इति दशमे अहनि इति तद्गुणशास्त्रात् तस्य दशमस्याह्नः गुणस्य शास्त्रात् शासनात् मानसो ग्रहः दशमस्याह्नोऽङ्गं नाहरन्तरं इति सिद्धान्तः ।

सत्यासामञ्जस्यात् । ४१ ॥

द्वादशाह इति द्वादशसंख्यायाः सामञ्जस्याच्च मानसो ग्रहः दशमस्याह्नोऽङ्ग इति । मानसस्य अहरन्तरत्वे तु त्रयोदशसु द्वादशाह इति संख्यावचनं असमञ्जसं स्यात् । तस्मान्नाहरन्तर इति सिद्धान्तः ।

पश्वतिरेके चैकस्य भावात् । ४२ ॥

द्वादशाहे ऐकादशिनेभ्यः पशुभ्यः अहः अतिरेके आपतिते सति एकस्य अहः अधिकस्य भावात्, त्रयोदशाहोऽभावात् मानसं न अहरन्तरं इति निश्चीयते । अहरन्तरत्वे तु द्वयोरतिरेकः स्यात् । अह्नां त्रयोदशत्वात् पशूनां चैकादशत्वात् । 'यः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः' इति एकादशिनीं द्वादशाहे विधाय विद्वांसः तस्य एकस्यातिरेकं दर्शयति । एकादश पशवः द्वादश अहानि । एकस्यातिरेकं ब्रुवन् द्वादश एवाहानि इति गमयति । तस्मात् मानसं दशमाङ्गं न कर्मान्तरमिति सिद्धान्तः ।

स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् । ४३ ॥

यदुक्तं पूर्वपक्षिणा 'मानसमहरन्तरं भेदेन व्यपदेशात्' (१०।६।१३।३४) इति 'तेन च मानसेन द्वादशाहस्य स्तवनात् भेदः' (१०।६।१३।३५) इति च, तत्रोत्तरमाह सिद्धान्ती । अङ्गेन समुदायस्य स्तुतेर्व्यपदेशं अविप्रतिषिद्धं मन्यामहे । व्रतवत् यथा महाव्रतधर्मेण सत्रस्तवनम् । 'यन्ति वा एते मिथुनात् ये सत्रमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतः, तेनैव मिथुनान्न यन्ति' इति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेण अनुनिष्कृतेन समुदायस्य अवयवधर्मेण स्तुतिं दर्शयति । लोकेऽपि 'दीर्घैः केशैः शोभनो देवदत्त' इति अवयवधर्मेण अवयवी संस्तूयते । तस्मान्न दोषः ।

वचनादतदन्तत्वम् । ४४ ॥

यदुक्तं पूर्वपक्षिणा 'अहरन्तराच्च परेण चोदना' (१०।६।१३।३६) इति, तत्राह सिद्धान्ती । 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति वचनात् दशमस्याह्नः अतदन्तत्वं तदन्ततासमाप्त पत्नीसंयाजान्तत्वाभावः । द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता, विशेषेण तु दशमस्याह्नो मानसान्तता उच्यते । अतो न दोषः । तस्मात् मानसं दशमस्याह्नोऽङ्गं न द्वादशाहादहरन्तरं इति सिद्धान्तः । के.

● मानसो ग्रहः द्वादशाहस्य दशमेऽहनि । तत्र 'द्वादशाहस्य छिद्राणि छन्दांसि, तानि मानसेनाऽऽप्याययन्ति' इति मानसेन द्वादशाहस्तुतिः । 'वाग्वै द्वादशाहः, मनो मानसम्' इति व्यपदेशभेदः । 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति विसर्गोक्तिः । वि. १०।६।१३. ● मानसे ज्ञाने चाक्षुषादिसामग्री प्रतिबन्धिका । मणि. पृ. ६३.

● मानसान्तता दशमस्याह्नो न पत्नीसंयाजान्तता द्वादशाहे । भा. १०।६।१३।४४

● मानसग्रहान्तता वचनेनोक्ता द्वादशाहगतस्य दशमस्याह्नः । भा ९।१।९।२९.

● मानसप्रत्यक्षे महत्त्वं हेतुरिति केचित्, नेत्यन्ये । मणि. पृ ११.

§ मानससंज्ञको ग्रहः द्वादशाहदशमाहाङ्गम् । मानसाधिकरणम् । मानसग्रहाधिकरणम् ॥

मानसमहरन्तरं स्याद्भेदव्यपदेशात् । १०।६।१३।३४ ॥

भाष्यम्— द्वादशाहे श्रूयते 'अनया त्वा पात्रेण समुद्रं रसया प्राजापत्ये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति' इति । तत्र संशयः किं मानसमहर्द्वादशाहादहरन्तरं उत अहरङ्गमिति । तत्र कानिचित् भेदकारणानि प्रतिभान्ति । तानि निराचिकीर्षन् आचार्य उपन्यस्यति 'मानसमहरन्तरं स्यात्' इति । कुतः ? भेदेन व्यपदेशात् । द्वादशाहाद्भेदेन व्यपदिश्यते । कथम् ? 'वाग्वै द्वादशाहो मनो मानसम्' इति द्वादशाहाद्भेदेन मानसं व्यपदिशति, 'वाग्वै द्वादशाहः' इति वाक्सत्त्वात्, 'मनो मानसम्' इति च मनःसत्त्वात् । यथा वाङ्मनसयोर्भेदो वस्तुनोऽवगम्यते एवमेतयोरपि द्वादशाहमानसयोः । तत्र पृथक्त्वे सति भेदेन व्यपदेशो भवति, नान्यथा । अतो भिन्नते एतदहरिति व्यपदेशाद्गम्यते ।

तदपि महरतरस्य विधानाद्दशमेऽहनि यागान्तरं विधत्ते, न कर्मान्तरमिति समधिगतम् । एवं चेत्, नैतत्पक्षस्य वचनमहरन्तरप्रशस्त्यम्, नान्यत्रमाणान्तरं प्रापकम्, येन सर्वेष्वेऽतिरिक्ते शब्दप्रयोग इत्यध्यवस्याम । तस्मादिह गौण्या वृत्त्या प्रयोग इति । यदपि कर्मगण नामधेयत्वात् प्रकरणाद्गेन भवतःसङ्गीकरणात् नामधेय रूपेण वा वृत्तिर्भविष्यतीति । तदपि न युक्तम् । सत्य कर्मगणनामधेयमेतत्, न स्वयथार्थमस्य येन । द्वादश एतानि कर्माण्यहोभिः परिमितान्येकन दमाद्वयानीत्यनेन रूपेण तत्कर्मगणस्य नामधेयम्, न वर्णानुपूर्व्यमात्रेणेति । तथा हि सर्वेष्वेव कर्मनामधेयेष्वर्थतम उपयेनानुवाद भूतो नामशब्दो वर्तते, न कोऽपि तदर्थतिरस्कारेण परि भाषामात्रेण प्रवृत्तिगुणतः । यथा अग्निहोत्र श्येन ज्योति ष्टोम इति । एवं द्वादशाह इत्यर्थान्वयेन नामधेयम्, नार्थमात्रेणेति । तस्मादपरिचोदनैषा ।

पशुविरोधे चैकस्य भावात् ॥ ४२ ॥

भाष्यम्— इतश्चाहरन्तरमिति विज्ञायते । कुतः ? पशुविरोधे चैकस्यातिरेकं दर्शयति, न दशमे । कथम् ? 'य पशुरतिरिच्येत स ऐन्द्राग्न कार्य ' इति एकादशिनीं द्वादशाहे विधाय विनियागमेकस्यातिरेकं दर्शयति । तत्र तान्यतिरिच्यन्ते, एको न भवति । कथम् ? एकादश पशव, द्वादशाहानि । एकस्यातिरेक मुक्त्वा द्वादशैतानि यहानीति गम्यते । यदि त्रयोदशाहानि स्युः द्वयोरभावः स्यात्, नैकस्येति । तस्मादप्यहरन्तरं न कर्मान्तरमिति ।

स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ॥ ४३ ॥

भाष्यम् – अस्मिन् सूत्रे द्वयो सूत्रयो परिहार उच्यते । यदुक्तम्, मानसमहरन्तरम्, भेदेन व्यपदेशात् । तेन च मानसेन स्तुतानामदद । न ह्यात्मनैव आत्मा संस्तूयते इति । अत्राभिधीयते । नैतद्विप्रतिषिद्धम् । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सरसत्रस्य । ' यन्ति वा एते मिथुनात् ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतस्तेनैव मिथुनात् यन्ति ' इति समुदायोपममभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानु जिघृक्षन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोके ऽप्यवयवधर्मेणावयवी सस्तूयते एवेति । यथा दान्तैः शोभनो देवदत्त इति । तद्वदिहापि द्वादशाह स्तुता विष्वन इति न दोषः ।

वचनादवदन्तत्वम् ॥ ४४ ॥

भाष्यम्— यदुक्तम्, यद्यहरन्तरमेतत्, एवं द्वाद शाहधर्मैर्लक्षण मानसान्तता युक्ता भविष्यति, न वद न्तता । पत्नीसयाजान्तता भवेदिति । अत्र ब्रूमः । वचनादवदन्तत्वं भविष्यति । द्वादशाहिकानामहा सामान्येन पत्नीसंयाजान्तता । विशेषेण तु दशमस्याह्नो मानसान्ततोच्यते ' पत्नी संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति ' इति । नास्ति वचनस्यातिभारः । तस्मादेष दोषः । अतो दशमस्याह्नो मानसमङ्ग न सत्रमिति ।

सोम— मध्यगतस्य सत्रद्वादशाहाङ्गत्वेऽपि मान सस्य न द्वादशाहाङ्गतामित्युत्थानात् सङ्गतिः । प्रयो जनम्– सिद्धान्ते दशरात्रप्रवृत्तो मानसस्यप्रवृत्तिः पूर्व पक्षे । सिद्धान्ते त्वङ्गत्वात् प्रवृत्तिः ।

वि— ' मानस किमहर्भिन्नमङ्ग वा दशमेऽहनि ।, भिन्न स्तुत्यादिना, ऽङ्ग तद् विसर्गोक्त्यादिभिर्भवेत् ॥ '

भाट्ट— द्वादशाहिके दशमेऽहनि ' प्राजापत्य मानसं ग्रहं गृह्णाति ' इति श्रुतम् । तत्र किं क्रत्वन्तर विधि उत दशमस्याहाङ्गत्वेन ग्रहणान्तरमात्रविधिरिति चिन्तायाम्, ' सर्वे द्वादशाहो मनो मानसम् ' इति भेदव्यपदेशात् ' विधृतानि वै द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाऽऽप्याययति ' इति मान सेन द्वादशाहस्याप्यायनवचनेन भेदानुमानादहरन्तरविधि मन्यन्ते । द्वादशाहपदं स्वत्रयुत्थानुवादकत्रयोदशाहे स्व या । इति प्राप्ते, भेदव्यपदेशस्य अवयवावयविभेदेना प्युपपत्ते ग्रहणविधायकस्याप्यस्य यागान्तरविधायकत्व प्रमाणाभावात् द्वादशाहपदस्य स्वदशत्वरूपने प्रमाणाभावाच्च तत्रैव ग्रहणान्तरविधि । अत एव दशमेऽहनि ' मानसाय प्रसर्पन्ति एष वै दशमस्याह्नो विसर्गो यन्मानसम् ' इत्या दिरिङ्गत्वमप्युपपद्यते । विसर्गो अन्त । किञ्च विदुषा पशुकादशिनीं विधाय ' अथ य पशुरतिरिच्येत स ऐन्द्राग्न कार्य ' इत्येकस्यैव पशोरतिरेकं दर्शयति न द्वयो । या तु सर्वेषामह्ना पत्नीसंयाजान्तत्वात् ' पत्नी

सुखाय मानसाय प्रसर्पन्ति ' इति मानसस्य सत्रद्विर्भावा-वगतिः, या पत्नीसंयाजान्तत्वस्य सामान्यविहितत्वात् दशमाहर्व्यतिरिक्तविषयत्वोपपत्तेर्निरस्ता । अतो विकृतिषु द्वादशाहे प्रवर्तमाने दशमाहाङ्गत्वेन मानसग्रहस्यापि प्रवृत्तिः, अहरन्तरस्ते बाध इत्यध्यायसङ्गतिः ।

भण्डन--- ' न मानसमहर्निमम् । '

शंकर--- ' नाहरन्तरमानसं स्यात् । '

● मान्त्रवर्णिको देवताविधिः दर्शपूर्णमासयोस्तथा प्रयाजे । टुप्. १०।२।७।१४. ● मान्त्रवर्णिको देवताविधि प्रयाजेषु । समिधादिमन्त्रानुवर्मनामधेयम् । भा. ९।२।२०।५९-६०, ● मान्त्रवर्णिको द्रव्यनियमविधिः ( अग्नीषोमीये पशौ ) । ६।८।१०।३२, ● मान्त्रवर्णिकी देवता आघारे ' इन्द्र ऊर्ध्वोऽध्वर इत्याघार-माघारयति ' इति । ३।४।३।४.

● मान्त्रवर्णिकदेवताकल्पना आधारादिषु क्रियारूपकरणात् मन्त्राकाङ्क्षाया यत्तद्विनियोगश्वान भवति । सर्वेऽजान्यमर्थं देवताविधि । ।प्र. १।४।६।९ पृ. २४१.

● मान्त्रवर्णिकदेवताकल्पनातश्च चरमाराङ्गुपवाद-परत्वम् । भा. २।१।३।३ पृ. ४७९.

● मान्त्रवर्णिकद्रव्यकल्पनायां अपि गौरवम्, ' इष्टिरा गच्छेत् ' इत्यादौ । भा. ३।४।१।१.

● मान्यानां निमन्त्रणानमनिमन्त्रणे भोजनार्थमागमन न भवति । स्नेहातिशयेन तु पूज्याना अनिमन्त्रितानामपि स्वयमेव भोजनागमन दृष्टम् । वि. १०।१।१ वर्णक ३.

● मायावादी नामरूपप्रपञ्चस्य असत्त्वं प्रति जानीते । तत्र प्रत्यक्षविरोध. । रत्नाकर. पृ. ३६५.

§ मायिका गुणा वास्तवं निर्गुणत्वं न विघ्नन्तीति न्याय । यथा सत्त्वादिगुणा अपापविद्धि इति श्रुतिनिर्गुणत्वमीश्वरस्य न निवारयन्तीति भाव. । साहस्री. ७८५.

§ मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोतीति न्यायः । स्पष्ट. । साहस्री. १४१.

● ' मारुत. कल्मापः ' ऐन्द्राग्निषु अष्टम. पशु अग्निष्टोमे ज्योतिष्टोमे च । वि. ८।१।७, ● ' मारुती आमिक्षा ', ' वारुणी आमिक्षा ' वरुणप्रघासेषु । भा. ११।२।१५।६३, ● मारुती मेषी दक्षिणविहारे हविश्रपणे वरुणप्रघासेषु आग्नमन्यनादेः पुनर्विधिः चातुर्मास्येषु । ७।१।३।२१, ● मारुती उत्तरा दक्षिणे विहारे कर्तव्या वरुणप्रघासेषु । ११।७।९।३९, ● मारुतीमेव दक्षिणस्मिन् विहारे आसादयति इति वचनेन आग्नीयत्वा भवति । १।१।२।९।१९ ● मारुतीमेव (आमिक्षा) प्रतिप्रस्थाता दक्षिणस्मिन् विहारे आसादयति वरुणप्रघासेषु, तत्र पृथग्ग्रहाङ्गत्वम् । ११।२।९।३९-४३. ● ' मारुती पृश्निम् ' इति राजसूये पशुः पृश्नि मरुत्वतः । वि. ४।४।१. ● मारुत्याः भेदेन प्रयागार्थेन भेदेन क्रिया वरुणप्रघासेषु । भा. ११।२।१०।४५.

● मारुतसप्तकपालस्य ऐन्द्राग्नविकृतित्वं व्यक्तरदेवताविधिसामर्थ्यात् । बाल. पृ. १२०.

● मारुत्यर्थं दक्षिणविहारे पृथक्प्रस्तुत्पादनं चातुर्मास्येषु वरुणप्रघासेषु । भा. ११।२।९।३५-४३.

● मार्जनं परिधिधर्मः अग्निपरिधानार्थमनुष्ठीयते । वि.१२।२।१०.

● मार्जनादयः परिधिधर्मा. अग्निपरिधानार्थमनुष्ठीयन्ते । प्रत्युक्तिहरणं यजमानत्वं इत्यादय· परिधिधर्मा· । वि १२।२।१०-११ .

● मार्जालीयस्य चतुर्थार विहरण सोमे । संकर्ष. ३।२।१६ .

§ मार्दवे बहवो दोषा इति न्याय. । अर्थ च मामकविना विवृतः प्रकारान्तरेण । तथाहि ' तुच्छेऽपराधे खमौनुर्मानुमत्तं चिरेत यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुट फलम् ॥ ' इति । साहस्री. ८१० .

§ माल्तीपुष्पसदृमना दन्तुमीहते इति न्याय· । माल्तीति पुष्पविशेषस्य नाम । तामसमना धायाणेन दन्तुमीहते यत्ने इति भावः । नयोग्यसमेत्ने अस्य प्रचारः इति । साहस्री. ७३७ .

§ ' माल्यं कस्य विचित्रपुष्परचितं प्रीत्ये न संजायते ' इति न्याय· । सर्वसुन्दरपदार्थे सर्वमनाभिरुचितविज्ञापनायास्यायम् । साहस्री ८८१.

● मापादे प्रतिषिद्धस्य द्रव्यस्य न प्रतिनिधित्वम्। ('अयज्ञिया वै माषा' इति माषप्रतिषेध)। ६।३।६।२० मीको पृ २०१७ 'प्रतिनिधित्व प्रतिषिद्धस्य०' इत्यत्र द्रष्टव्यम्।

● माषपाकाधिकरणम्। 'माषानेव मह्यं पचत' इत्यर्थवाद। ६।७।१२।२६-३० मीको पृ २८४८ 'परकृतिपुराकल्पाधिकरणम्' इत्यत्र द्रष्टव्यम्।

● माषपाकसम्बन्धो न केवल कर्मीणो किन्तु सर्वेषामेव। तदुक्तं चोक्तिस्तु स्तुत्यथा 'इति ह स्माह बर्कुर्वार्ष्णि माषानेव मह्यं पचत न वा एतेषां हविर्गृह्णाति' इति। (कुतश्चिन्तेयम्। वस्तुतस्तु माषपाको न कस्यापि, आगमाभावात्। स्तुतिरेषा। माषास्तु निषिद्धा एव यज्ञिये कर्मणि)। वि ६।७।१२

● 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्द जुहोतिना समानाधिकरण्यात् कर्मपर। वि ७।३।१८ ● 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्द (अग्निहोत्रशब्दो यथा नित्याग्निहोत्रधर्मलक्षकस्तथा [illegible] पौर्णमास इति' इति) पौर्णमासशब्द धर्मलक्षक (इति सिद्धान्त्येकदेशी)। सोम ७।४।४ ● 'मासमग्निहोत्रं जुहोति' इति कुण्डपायिनामयने नित्यादग्निहोत्रात् कर्मान्तरं विधीयते, न तु मास काले विधीयते। भा ७।३।१।२८ ● 'मासमग्निहोत्रं जुहोति'। न चात्र गुणविधि तल्लिङ्गाभावात्। टुप् ७।३।१।१ ● 'मासं दर्शपूर्णमासाभ्यां यजेत' इति कर्मान्तरविधि न मासगुणविधि कुण्डपायिनामयने। वि २।३।११ ● 'मासं दर्शपूर्णमासाभ्यां यजेत' इति प्रत्यह याग कुण्डपायिनामयने। सतर्प २।१।२५ मीको पृ १८६८ 'कुण्डपायिनामयने मास०' इत्यत्र द्रष्टव्यम्। ● 'मासेन षष्ठी भवति आज्यभ्रणीयत्वात्।' इत्यादय प्रायश्चित्तविधिशेषभूता नित्यार्थवादा न चाति नाशकरा। सतर्प २।८।७ ● 'मासेन षष्ठीभवति' इत्यादीनीति कर्मनिन्दावचनानि, अथवा नगरपर्व हानिनिषेधार्थानि इति वक्तव्यम्। बा १।२।१।२ पृ ११०

● मासाग्निहोत्रस्य नित्याग्निहोत्रं प्रकृति। वि ७।३।१ ● मासाग्निहोत्रे कुण्डपायिनामयनगते अग्नीषोमीयात् प्राचीनेऽपि उपांशुत्वस्य सम्बन्धो नास्ति, तस्य परमापूर्वप्रयुक्तत्वाभावात्। भा ९।१।६।२०-२२, २५

मासाग्निहोत्रन्याय। अग्निहोत्रादिनाम्ना धर्मातिदेश। अग्निहोत्रनामन्याय। अग्निहोत्रशब्दन्याय॥

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्। ७।३।१।१॥

भाष्यम्— नाम्ना धर्मप्रदेश वक्ष्याम इति अग्रे प्रतिज्ञातम्। सोऽयमुच्यते। कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति' इति। तदेतत् समधिगतं नैयमिकात् अग्निहोत्रात् कर्मान्तरमेतत् इति (२।३।११)। अधुना अग्निहोत्रशब्दश्चिन्त्यते कथमत्र प्रयुक्त इति। तदयमारभ्यते। 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति। उक्तमस्माभि क्रियाऽभिधानं नामधेयं अग्निहोत्रशब्द इति 'तत्प्रख्यं चान्यशास्त्रम्' (१।४।२।४) इत्यत्र। तस्यास्य श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेश स्यात् धर्मप्रदेश। नैयमिकस्याग्निहोत्रस्य ये धर्मा ते अस्मिन् अनेन नाम्ना अतिदिश्येरन्। किं कारणम्? उच्यते। यत्र शब्दोऽयं प्रसिद्ध पदत्र वृत्त। परशब्दस्य परत्र वृत्तौ तद्गुणो गम्यते। यत्र निशातो भवति तत्रानुगम्यते। यथा सिंहो देवदत्त इति। यत्र अविज्ञात तत्र विधीयते, यथा अग्नौ तिष्ठति शिखा निपन्ना इति। चाग्निशब्द अत्र जुहोते अग्निहोत्रशब्दात्। तस्मात् न विधीयते। 'मासमग्निहोत्रं जुहोति' इति अग्निहोत्रवत् जुहोति इति। कथ पुन असति यतिप्रत्यये अन्यत्र शब्दोऽयं गन्तु इति। उच्यते, साहचर्यात्। अग्निहोत्रशब्दोऽयं कर्मणा सह तत्सहचरितैर्धर्मादिभिश्च लक्षणा शक्नोति गमयितुम्। शक्नोति चेदमयितुं प्रदेष्टुमपि शक्ष्यति। एवमन्तरेणापि वतिं वत्यर्थं गमयिष्यन्तीति।

टुप् — नैयमिकस्य अग्निहोत्रशब्दो नामधेयं इत्युक्तम्। पुनश्चायमस्मिन् धर्मातिदेशको भवति। कथम्?

अग्निहोत्रस्य या अवगता इतिकर्तव्यता तां शक्नोति लक्षयितुं विनापि वचनेन । न शास्त्रसंयोगात् । न चायं गुणविधिः, तद्धितचतुर्थ्योः अभावात् । उच्चार्यमाण एव विज्ञात नामिन अवरोधयति । उभयत्र नामधेयमिति चेत्, तत्र, नामधेयं विशिष्टे भवति । न चेह विशिष्टताऽस्ति, द्रव्यदेवताऽभावात् । उभयत्र च नामधेयत्वे अदृष्टा शक्तिः कल्प्या ।

अपूर्वे वाऽपि भागित्वात् ॥ २ ॥

भाष्यम्— वाऽपीति विपर्यासेन प्रयुक्ते, अपिवेत्यर्थः । अपिवा अपूर्वे एते उभे अपि कर्मणी स्याताम् । न कौण्डपायिनामयनीयो जुहोतिः नैयमिकपूर्वः । साधारणं च नामधेयमुभयो. । कुतः ? भागित्वात् । अयमपि जुहोतिः भागी एतस्य नामधेयस्य । यथैव तत्र 'अग्निहोत्रं जुहोति' इति समुच्चारणम्, एवमिहापि । तत्र तुल्ये समुच्चारणे तस्यैव एतन्नामधेयं नास्य इत्यत्र विशेषहेतुर्नास्ति । तस्मादुभयोः साधारणं नाम इति नास्ति धर्मप्राप्तिः ।

नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥

भाष्यम्— नैतदुक्तम् । कुतः ? नाम्नस्त्वौत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यथाऽग्निहोत्रशब्दः औत्पत्तिकेन सम्बन्धेन प्रसिद्धः तस्मिन्नेव सदा निवेशः नान्यत्र च । तथा अन्यत्रस्यापि शब्दार्थे विश्वासो न स्यात् । उक्तं अन्यायश्चानेकार्थत्वम् इति । यदा च नोभयार्थः तदा नैयमिके तावदाद्यः । तस्मादस्याभिधानं चेत्तस्यापि प्रयोग उपपद्यते इति नास्ति इतराभिधाने हेतुः । तस्मात् विनिवेशः स्यात् ।

प्रत्यक्षाद् गुणसंयोगात् क्रियाऽभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

भाष्यम्— अथाह । कस्मात् पुनः तन्नामधेयं इदं इह प्रयुक्तमित्युच्यते, न पुनः एतन्नामधेयं तत्रेति । तत आह 'प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात्' । नैयमिके अग्निहोत्रे प्रत्यक्षो गुणसंयोगः । प्रत्यक्षविहिता धर्माः सन्ति । इत्थं दोग्धि, इत्थं श्रपयति, चतुरुन्नयति, एवमादिभिः अग्निहोत्रमिदं भवति, इत्थं जुहोति, एतस्मिन् काले जुहोति, इत्येव प्रत्यक्षात् गुणसंयोगात् नैयमिकस्य तन्नामधेयम् । इह प्रयुज्यमानं दोहनादिक्रियाभिधानं स्यात् । धर्मप्रदेशकमित्यर्थः । अस्य पुनर्जुहोतेः न केचिद्धर्माः सन्ति । तदभावे नैषा धर्माणामभावे अप्रसिद्धं स्यात्, न प्रज्ञायेत किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति ।

एवं वा । प्रत्यक्षो गुणसंयोगो नैयमिकस्य द्रव्यदेवतासंयोगः । 'दध्ना जुहोति', 'पयसा जुहोति', 'अग्नये च प्रजापतये च सायं जुहोति' इति । एतस्मात् प्रत्यक्षात् गुणसंयोगात् क्रियाभिधानं स्यात्, कर्मनामधेयम् । इत्यस्यो जुहोतिः अग्निहोत्राख्य इति । अथ इतरजुहोतेः रूपं नास्ति । तदभावे अप्रसिद्धं स्यात्, न ज्ञायेत कीदृशं तदग्निहोत्रमिति । ननु मासोऽस्य रूपं भविष्यति । न मासः कर्माङ्गम्, कर्तृधर्मः सः । अपि च अग्निहोत्रं तु मासे विधीयते, न मासेन अग्निहोत्रं रूप्यते । तस्मात् नैयमिकस्य एतन्नामधेयम्, इतरत्र तद्धर्मातिदेशः इति ।

शा— कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति' इति । तत् नैयमिकाग्निहोत्रात् कर्मान्तरं इति स्थिते (२।३।११२४) सम्प्रति किमयं अग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः उत नेति । 'उभयोरविशेषेण सामानाधिकरण्यतः । नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति ॥ एकस्य त्वभिधेयत्वे गौणत्वेनापि सम्भवात् । नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥' न च अग्न्यमाणविशेषार्थं नैयमिके अग्नये होत्र इत्येव प्रवृत्तिनिमित्तं सम्भवति । कारणं तु अतिदेशस्य नावगतम् । अधर्मकश्च कौण्डपायिनः, तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते । नैयमिकस्तु धर्मवान् । अतस्तन्नामेदं तद्धर्मातिदेशविवक्षया अन्यत्र प्रयुज्यते । सादृश्यं च धर्मनिमित्तं अतो धर्मातिदेशोऽयं 'मासमग्निहोत्रं जुहोति' इति ।

सोम— प्रत्यक्षवचनस्य प्रथमं बुद्धौ आरोहात् तद्विधिधर्मनिर्देश पादद्वयेन विचार्य कल्पनीयवचनार्थतया तत्र विलम्बितः नामधेयनिमित्तः अतिदेशः तृतीयपादे प्रस्तूयते । सूत्रार्थस्तु— अग्निहोत्रशब्दः कर्मनामधेय-

सिद्धान्तः । प्रधानस्य अनुवाक्यानां च मिथः न अर्थसंबन्धः प्रयोजनप्रयोजनिसंबन्धः लिङ्गादिप्रमाणाभावात् इति कौस्तुभोक्तः सूत्रार्थः साधीयान् । के.

सू मिथश्चानर्थसंबन्धात् । ३।१।१३।२४ ॥

दर्शपूर्णमासयोः श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति । तत्र संदेहः किं अनुवाक्यायुगलस्य प्रधाने निवेशः उत आज्यभागयोः इति । आनर्थक्यतदङ्गन्यायप्रसङ्गागत विचारदर्शं परिसमाप्य इदानीं आनर्थक्यतदङ्गन्यायवैधर्म्येण प्रसङ्गात् यथायोगं व्यवस्था प्रतिपाद्यते । अत्राय पूर्वपक्षिणोऽभिसन्धिः । यद्यपि पौर्णमास्यमावास्याशब्दौ काले मुख्यौ, तथाप्यनुवाक्यायुगलद्वयस्य देवताप्रकाशकस्य कालार्थत्वासंभवात् स्वभावादेव यागयोर्नित्यात् लक्षणया यागपरत्वमेव । तत्र किं क्रमानुरोधेनाज्यभागपरत्वं वाऽनयोः, यदि वा प्रकरणानुरोधेन प्रधानयागपरत्वम् । तत्र प्रकरणस्य बलीयस्त्वात् तत्सामर्थ्येन प्रधानसंबन्ध एव अनुवाक्याद्वयस्य प्रकरणानुगृहीतेन वाक्येन प्रतिपाद्यते । तदुक्तम् 'लिङ्गं तत्रानुवाक्याभिर्यागानामेव संगतिः । न चाज्ययोः क्रमस्तस्मात्प्रधानाङ्गतया द्वयं ॥' इति (वा. पृ. ७३९)।

किञ्च, यथा प्रकरणेनाज्यभागयोः प्रधानार्थत्वं तथा अनुवाक्यायुगलयोरपि । अतोऽपि प्रधानार्थत्वादनयोर्नान्योन्यसंबन्धः । तदुक्तम् 'गुणानां च परार्थत्वादित्यनेनापि हेतुना । सर्वत्र नाज्यभागाभ्यामनुवाक्याचतुष्टयम् ॥' इति (वा. पृ. ७३९)।

तस्मात् आज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वमेव अनुवाक्यानामिति । एवं प्राप्ते, अभिधीयते । भवेदेवं यद्यनुवाक्याद्वयस्य प्रधानकर्मण्यर्थसमवायो भवेत् । तथाहि, एकाप्यनुवाक्याऽऽग्नेयी, अपरा सौमी । पौर्णमास्यामावास्ययोरप्यग्नीषोमीये अग्निप्रहितत्वेन सोमस्य देवतात्वम् । केवलस्य सोमस्य प्रकाशनं महेन्द्राधिकरणन्यायेनैव न संभवति । न चानुवाक्याद्वयेनैव अग्नीषोमप्रकाशनमिति वाच्यम् । 'अनुवाक्यामन्वाह' इत्येकस्मिन् कर्मणि विवक्षितानुवाक्यागतैकत्वबाध प्रसङ्गात् । न च अनेनैव वाक्येन द्वित्वमपि विधीयते । प्राप्ते कर्मणि द्वित्वस्य मन्त्रविशेषस्य च विधाने वाक्यभेदप्रसङ्गात् । 'पुरोऽनुवाक्यामन्वाह' इत्यत्र तु अनेकासां पुरोनुवाक्यानां क्रमप्राप्तत्वात् एकत्वमात्रं विधीयते इति युक्तम् । अत्र तु मन्त्रविशेषस्यापि विवक्षया वाक्यभेद एवेति किञ्चित्कालवचनत्वेनोपपत्तौ कथं लाक्षणिककर्मपरत्वाश्रयणम् ? न च मन्त्रस्य कालार्थत्वासंभवात् पौर्णमास्यमावास्याशब्दयोर्लक्षणया कर्मपरत्वमिति वाच्यम् । व्यवस्थार्थत्वेनैव कालवचनोपपत्तेः । तथापि आज्यभागौ क्रमादद्यदनुवाक्यायुगलद्वयमाम्नायते । आज्यभागयोश्च प्रथमस्य अग्निर्देवता, द्वितीयस्य सोमः । तेन क्रमलिङ्गाभ्यामाज्यभागार्थत्वमेतदनुवाक्यायुगलद्वयमवगतम् । आज्यभागौ च प्रतिप्रधानगुणावृत्तिन्यायेन पौर्णमास्यमावास्याक्रमसमुदायद्वये आवृत्त्या प्रयोक्तव्यौ । तत्र चान्यतरस्य मन्त्रप्राप्तौ व्यवस्थार्थं वचनम् । पौर्णमास्यां यावाज्यभागौ तौ वृत्रहपदवन्मन्त्रकौ, अमावास्यायां याव आज्यभागौ तौ वृधन्वत्पदवन्मन्त्रकौ प्रयोक्तव्याविति । एतच्च पौर्णमास्यधिकरणे एव प्रपञ्चितम् । अतो मुख्यकालार्थत्वेनैव वाक्योपपत्तौ न लिङ्गक्रमबाधेन लक्षणया प्रधानकर्मपरत्वाश्रयणं युक्तम् । तेन अनुवाक्यायुगलस्य आज्यभागयोरेव निवेश इति सिद्धम् ।

प्रयोजनम्— पत्रोक्तम् । सूत्रं तु मिथोऽन्योन्यमनुवाक्यानां प्रधानयोश्च दर्शपूर्णमासयोरङ्गाङ्गिभावेन अनर्थसंबन्धात् अर्थसंबन्धाभावादित्यर्थः । दीता

* अथ अग्निर्देवता भविष्यतीति कश्चित् ब्रूयात् स वक्तव्यः 'मिथश्चानर्थसंबन्धः' इति । नहि आग्नेयशब्दः 'यदाग्नेयोऽष्टाकपालः' इति अनुवादो विधिश्च भवतीति । भा. २।२।३।६ पृ ४८७. * मन्त्रसमाम्नाये अविशेषपठितस्य पुरोनुवाक्यायुगलद्वयस्य आज्यभागयोः कालद्वयगतयोः अव्यवस्थया प्राप्तौ तयोर्व्यवस्थार्थत्वं तृतीयाद्ये 'मिथश्चानर्थ०' इत्यत्र वक्ष्यते । कु. ३।२।३।२. * यदि एनयोः (आज्यभागयोः) अग्नीषोमीयादिवत् अन्यदेवताकत्वमनवगतं स्यात् तत वाक्येन लिङ्गबाधायोगात् अगत्या विशिष्टलक्षणा अङ्गीकृत्य गौणत्वमपि 'मिथश्चानर्थ०' इति न्यायेन आश्रियेत । न तु तदस्ति । कौ. २।२।३।३. * 'वार्त्रघ्नी

संशये धर्मज्ञानार्थं कर्तव्येति सिद्धान्तः । भा. १।१।१।१. * मीमांसा च इतिकर्तव्यतात्वेन अङ्गम् । तदुक्तं 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति । अतो नैव प्रथमं व्याख्यारम्भः । पार्थसारथि पृ. १७. * मीमांसा न्यायनिरूपणात्मिका । बाल पृ. २. * मीमांसा लोकवेदप्रत्यक्षानुमानादिभिः अविच्छिन्नसम्प्रदाय-पण्डितव्यवहारैः प्रवृत्ता । नहि कश्चिदपि प्रथममेव एतावन्तं युक्तिकलापं उपसंहर्तुं क्षमः । वा. १।३।१।२. * मीमांसा समस्तवैदिकतर्कोपसंहारात्मिका वेदशब्दवाच्या 'विधिविशेषस्तर्कश्च वेद.' इत्येतस्मिन् दर्शने इति भवति । १।३।६।११ पृ २४१. * मीमांसा सर्वशास्त्रगतन्यायनिरूपणात्मिका । तेन अस्या यो न्यायमार्गः, तस्मिन्नज्ञाते कुर्वीत वा विवेकाभावात् न किञ्चित् शक्येत । रत्नाकरः १।१।१।१ श्लोवा. १५. * मीमांसया वेदवाक्यानि व्याख्यायन्ते । भा. १।१।१।१. * मीमांसायाः द्वादशाध्यायानां द्वादश विषयाः-प्रमाण- भेद- शेषत्व-प्रयुक्ति-क्रम-अधिकार- सामान्यातिदेश- विशेषातिदेश- ऊह-बाध-तन्त्र-प्रसङ्गाः । बाल. पृ. २. * मीमांसायाः धर्मज्ञानप्रयोजनत्वम् । सु. पृ. १३०, * मीमांसायाः न्यायनिश्चयनात् प्रयोगनिरूपणमयुक्तं इत्याशङ्क्य प्रयोगार्थत्वाभावात् तच्छास्त्रेऽपि यत्र प्रयोगेऽभ्र तत्र तन्निरूपणीयं इत्याह । पृ १६९. * मीमांसायाः पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां धर्मेण दर्शपूर्णमासादीना इति कर्तव्यता चिन्तिता । उत्तरेण इदानीं अविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते । भा. ७।१।१।१. * मीमांसाया. विषय । धर्म इत्येव शास्त्रविषयः न वेदार्थः इति । तथा च दर्शितम् ' अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् । धर्माख्यं विषयं वक्तु मीमांसायाः प्रयोजनम् ॥' (श्लोवा. १।१।१।११) इति । तथा च 'अथातो धर्मजिज्ञासा, चोदनालक्षणोऽर्थो धर्म.' इति च सूत्रम्, 'को धर्मः कथंलक्षण.' इत्यादि भाष्य च न कुर्वद्भिरिव वेदार्थपरं व्याख्येयम् । शा. १।१।१.

प्रथमेऽध्याये प्रमाणम्, द्वितीये स्वरूपम्, षष्ठे फलम्, इतरेषु साधनं विचार्यते इति विवेकः । सोम. १।१।१.

'धर्मो द्वादशलक्षण्या व्युत्पाद्यस्, तत्र लक्षणे । प्रमाण-भेद-शेषत्व-प्रयुक्ति-क्रमसंज्ञकाः ॥ अधिकारोऽतिदेशश्च सामान्येन विशेषतः । ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥' द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः । प्रथमेऽध्याये विध्यर्थवादादिरूपं प्रमाणं निरूपितम् । द्वितीये यागादिकर्मभेदः । तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम् । चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्तस्य अनुष्ठानं न तु क्रत्वर्थप्रयुक्तया इत्येवमादयः । पञ्चमे क्रमनियतिविशेषत्वादयः । षष्ठे कर्तुरधिकारो नान्धादेः इत्यादयः । सप्तमे सामान्यत. अतिदेशः प्रत्यक्षवचनेन अनुमितवचनेन च । अष्टमे विशेषरूपेण अतिदेशः । नवमे 'अग्नये जुष्टं निर्वपामि' इत्यत्र 'सूर्याय जुष्टं निर्वपामि' इत्यादिः ऊहः । दशमे बाध. । एकादशे तन्त्रम् । द्वादशे प्रसङ्गः । वि. प्रस्तावना.

पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां धर्मेणा दर्शपूर्णमासादीना इतिकर्तव्यता चिन्तिता । भा. ७।१।१।१.

पूर्वे षट्के उपदेशविचारः । सोम. ७।१।१.

* मीमांसायां द्वादशलक्षण्या धर्माधर्मावेव जैमिनिना अनुष्ठानोपयोगितया विचारितौ । यद्यपि धर्माधर्मौ अदृष्टविशेषात्मकौ, न क्रियारूपौ, अत एव 'धर्मः क्षरति कीर्तनात्' इत्यादौ वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगः, तथापि 'धर्मस्त्वनुष्ठितः पुंसाम्' इत्यादौ यजनविहितनिषिद्धक्रिययोरपि धर्माधर्मशब्दप्रयोगात् ताविह प्राधान्येन विचार्येते । रहस्य. पृ. १.

* मीमांसाशास्त्रं वेदवाक्यार्थविचारोपायभूतन्यायनिबन्धनम् । परिभाषा पृ. १. * मीमांसाशास्त्रस्य अनुष्ठानपर्यवसायित्वम् । सु पृ. ५४०. * मीमांसाशास्त्रे विचारत्वेन धर्म. प्रमेयः प्रक्रान्तः । शा. २।१।१।१ पृ. ३७०.

* मीमांसाशास्त्रारम्भसिद्धिः अधीतवेदवाक्यार्थज्ञानोपयोगित्वात् वैधी । मणि. पृ ५.

* मीमांसासिद्धान्ते व्यवहार. । यतः विधिर्न कर्तव्यता धर्मेण. अवबोधयति, तस्मात् यत्नदुपादीयते

इति गुणविधिः । (पूर्वपक्षे) । १।४।१२।२३-२ पृ. ३५५.

⊠ **मुख्यं वा पूर्वचोदनाल्लोकवत् । १२।२।८।२३ ॥**

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः, तत्र मुख्यं मुख्यधर्मः कार्यः । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत् अपराह्णे सरस्वतीमाज्यस्य यजेत' इति । अत्र मुख्यस्य मुख्ये आरम्भे विद्यमानस्य आग्नावैष्णवस्य धर्मो भवति । पूर्वचोदनात् पाठक्रमेण पूर्वं विहितत्वात् । लोकवत् लोके एवं दृष्टत्वात् ।

**तथा चान्यार्थदर्शनम् । २४ ॥**

पूर्वं प्राप्तस्य बलीयस्त्वं इत्यत्र तथा च अन्यार्थदर्शनं भवति । 'अप्यस्मिन्नेव पूर्वमध्याधेनीज्यते रूपमपि नैव कर्मवदभिरमे' इति । इह चापि 'यथा वै पूर्वावसायिनो अवसायमवसायिनो नोपीक्षन्ते नावसास्यन्ति इत्येवमेवैतत्' इति भाष्ये उदाहृतं तत्र प्रथमवाक्यार्थो नास्माभिरवगतोऽपि ज्ञातः । उत्तरवाक्यस्य तु कंचिद् विषयं विचार्य निर्णयकारिणां मध्ये ये पूर्वावसायिनः पूर्वमागत्य विचार्य निर्णीतवन्तः ते, जघन्यं पश्चादागत्य स्वीयं निश्चयं कथितवन्तं प्रति न उदीक्षन्ते उन्नमन्ते तस्य स्वीकारं न कुर्वन्ति । न च तदनुसारेण आ-मास्यन्ति निर्णयं करिष्यन्ति, निर्णयं न कुर्वन्ति इत्यर्थः । इति । फे.

• न च ('वाजिभ्यो वाजिनम्' इत्यत्र) निपुणारम्भहानमिति चेत्, न, 'मुख्यं वा०' इत्यवधारणहेतुसद्भावात् । बा. २।२।९।२१ पृ ५३८. • न हि प्रधानमप्युपसंहारस्थं दुर्लभम्, अङ्गगुणविशेषस्याप्यस्य 'मुख्य वा०' इति न्यायप्रसादकरत्वात् । अन्यथा 'य इष्ट्या पशुना सोमेन' इत्यत्र उपसंहारस्थस्यापि सोमयागस्य, प्रधानत्वात् पूर्वानुग्रहो विरुध्येत । कौ. १।३।१।१. • निधनमात्रानुवादेन हीषादिसंबन्धे उपेत्यापि तु (सोमस्य) आश्रयत अनेनप्रस्तावादिभक्तिभि सौभरे, कथमस्या भक्तौ हीषादयः प्रयुज्यन्तां इति नैव ज्ञायते, 'मुख्य वा०' इति प्रस्तावे वा प्रयुञ्जन्ति । वा. ३।३।१३।२९ पृ. ५६८.

• 'प्रजापतिर्वरुणायाश्वमनयत्' इति वरुणात् अश्वं प्रतिग्रहात् इत्युपसंहारानुरोधेन कल्प्येत, यद्वा उपक्रमवशेनोपसंहार 'योऽश्वं प्रतिगृह्णाति' इति 'योऽश्वं प्रतिग्राहयति' इति । तत्र 'मुख्यं वा पूर्व०' इति प्रथममनुपसंहार्यं विरोधाभावात् । पश्चात्तनं तु विरोधात् लक्षणया व्याख्येयम् । भा. ३।४।११।३१ पृ ९६१ । अत्र वार्तिकम्-- कर्मैव तावत् 'मुख्यं वा०' इति श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानं अनुपजातप्रतिद्वन्द्वि द्वितीयविज्ञानान्तरानुत्पत्त्यनवसरत्वात् आञ्जस्येन आत्मानं लभते । पश्चात्तनं तु पूर्वविज्ञानावष्टब्धज्ञाननिलये उपजायमानं सत् विरोधावस्थायां तदनुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति इति अन्यथात्वमपि प्रतिपद्यते । • ('यो होता सोऽध्वर्युः' इत्यत्र) प्रथमोच्चारिते होतृशब्दे किञ्चिदपि कल्पनाबीजं न पश्यामः । तेन 'मुख्यं वा पूर्व०' इति तं स्वार्थमुख्यमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थः अध्यवसीयते । वा. ३।८।१०।२१ पृ. ११२५. • यत्तु 'मुख्य वा०' इति न्यायेन प्रथमश्रुतार्थवादस्यैवानुसरणमिति तन्न । विप्रतिषिद्धधर्मसमवाये प्रधानयोर्विरोधे मुख्यानुसरणमिति तदर्थत्वात् (पूर्वपक्षे) । कु. ३।३।१।१. • 'यस्य पुरोडाशौ' इत्यादिषु आधिकारिकहविरुभयत्वाद् विरोधनम् । अन्यथा हि 'मुख्यं वा०' (१२।२।८।२३) इति कदाचित् आग्नेयग्रहणप्राप्तिः स्यात् । वा. ३।१।७।१८ पृ. ७२३, • ('अग्नेर्ऋग्वेदः' इत्यादीना) सत्यपि विध्युद्देशगतत्वे दौर्बल्य 'मुख्य वा०' इत्येव प्रागवस्थीयत्वात् । ३।३।१।२ पृ. ८०६, • 'मुख्यः प्रथमसंस्थाऽऽज्योतिष्टोमोऽभिधीयते ।' ३।३।८।१६. • मुख्यः (अर्थः) यः शब्दादेवावगम्यते स प्रथमोऽर्थो मुख्यः । मुखमिव भवतीति मुख्य इत्युच्यते । (क्रिया) यस्मिन् निरूपपदात् शब्दात् संप्रत्यय स मुख्यः । भा. ३।२।१।१ पृ. ७४६, यः सुष्ठु प्रसिद्धः स मुख्यः । यस्य बहुशः प्रयोगोऽस्ति स मुख्य । पृ. ७४८.

⊠ **मुख्यो वाऽविप्रतिषेधात् । १२।४।१३।३४॥**

सत्रे यजमानगणे शुक्रान्वारम्भादीनि कर्माणि मुख्यो

यजमानो गृहपतिं कुर्यात् नेतरं कञ्चित् । कृत्स्नानां याजमानानां करणेनैव गृहपतेरयनत्वम् । तस्मात् सर्वे गृहपतिं कुर्युः इति सिद्धान्तः । के

* गुणो बाधितव्यो बाध्य, न मुख्य । भा १०।२।१०।३९ * मुख्येन गौणं बाध्यते, अप्रातत्वात् । धा ३।३।७।१४ पृ ८६० * मुख्येन समानविधानं प्रतिनिधि । भा ३।६।१४।३७–३८

मुख्यस्य अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहसमर्थस्य एव उपादानम् ॥

निधिरप्येकदेशे स्यात् । ६।३।२०।४०॥

भाष्यम्— सन्ति व्रीहयः, यावतो अवदानमात्रं निर्वर्तयन्ति । तथा सन्ति नीवारा शेषकार्याणामपि पर्याप्ता । तत्र किमुपादेयमिति । किं प्राप्तम् ? अप्येकदेशे अवदानमात्रेऽपि निवर्त्यमाने प्रतिनिधिरुपादेय । किं कारणम् ? शेषकार्याणां सर्वनिर्भेरिप्यन्तीति ।

अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्तेरन्नर्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् । ४१ ॥

भाष्यम्— अपि वेति पक्षव्यावृत्तिः । एकदेशेन व्रीहीणां प्रधानमात्रं निर्वर्तयितव्यम् । कुत ? अर्थस्य शक्यत्वात् । योऽसावर्थः, येन कार्यं तच्छक्यं निर्वर्तयितुम् । शेषकार्याणि यदि न शक्यानि, तदनुरोधेन प्रधानस्य गुणो बाधितव्य । तद्यत्र प्रधानस्योपकरोति, न यद् प्रकारे वर्तते । तत्र च शेषकार्याणि क्रियमाणानि प्रधाने व्रीहिरिव गुण विहन्यु । व्रीहिरिव च प्रधाने साक्षादङ्गभूत भूयते 'व्रीहिभिर्यजेत' इति । तस्मात् तेष्वनुरोध कार्य । भवति हि गुणप्रधानविभागे प्रधानस्यैव स्यात् । अस्ति प्राप्तो । तस्मान्न प्रतिनिधिरिति ।

तथा चान्यार्थदर्शनम् । ४२ ॥ (न पुनस्तम मुख्य इद सूत्रम्) ।

भाष्यम्— तथा च अन्यार्थदर्शनं अपि भवति 'तदेव यदद् नाटक् होतव्यम्' इति ।

शा— दर्शपूर्णमासयोस्तु अवदानपरिमाणशेषकार्यपर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तत्र किं तैरेव पुरोडाशः कर्तव्य, उत नीवारै रिति सन्देहे 'भूयसां शेषकार्याणां मा भूदत्यन्तबाधनम् । एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते ॥' उच्यते । 'व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् । तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते ॥' तस्माच्छेषकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्तव्य ।

सोम— पूर्ववदिहापि प्रतिनिधिरिति प्रसक्तस्यानात् सङ्गति । सूत्रार्थस्तु— एकदेशेऽपि पुरोडाशमात्रसमर्थव्रीहिद्रव्येऽपि प्रतिनिधिः स्यात्, शेषकार्यादिसिद्ध्यै इति ।

वि— 'शेषकार्येष्वपूर्णाश्चेद् व्रीहय किं तदेतरत् । व्रीहयो वा सर्वसिद्ध्यै नीवारादिकमिष्यते ॥, पुरोडाशतया व्रीहे प्रधानत्वाद्विलोप्यता । शेषकार्याणि लुप्यन्ता मुख्यत्वेऽमुख्यतो वरम् ॥'

भाट्ट— यत्र स्वल्पकपरिमाणशेषकार्यापर्याप्ताः पुरोडाशस्वरूपजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तत्र तैरेव पुरोडाशं कृत्वा प्रधानमनुष्ठेयम् । शेषकार्याणां लोप । न च बहूनां शेषकार्याणां पुरोडाशाङ्गभूतानां पुरोडाशाङ्गभूतैर्नीवारानुरोधेन गौणत्वमभङ्ग । व्रीहीणामपि यागोद्देशेन विहितत्वाद् यागाङ्गत्वेन पुरोडाशाङ्गत्वाभावात् । न चौषधित्वविशिष्टपुरोडाशानुरोधात् व्रीहिभि' इति तृतीयाश्रुते अङ्गत्वमिति वाच्यम्, पुरोडाशाङ्गत्वस्य व्यापारकत्वेऽपि करणत्वस्य 'काष्ठैः पचति' इत्यादिवदुपपन्नतरत्वेन लक्षणाया प्रमाणाभावात् । अतश्चैकप्रधानानुरोधेनानेकेषामप्यङ्गानां लोपो नायुक्त ।

मण्डन— 'भाक्त तु मुख्यमात्रमङ्गम् ।'

शङ्कर— 'शेषकार्योऽनग्र मुख्यम् ।'

* मुख्यस्य ■ लोप गुणस्य लोपेऽपि । भा १०।२।२७।६२ * मुख्यस्य पुन प्राप्तौ पूर्वं गुणोपचारेऽपि मुख्यस्यैवोपादानम् । मुख्यानुग्रहार्थ । ६।३।१६।३५ * मुख्यस्य संस्काराईस्य लाभे संस्कृतेऽपि प्रतिनिधि परित्याज्य नाशिरलाभे कार्य पूर्व त्याज्य सूत्रयितो । नि ६।३।१७, * मुख्यस्य हविषो नाशे आज्य प्रतिनिधाय कर्तव्यम् । ६।८।१ * दर्श मुख्यस्य आरम्भ गौणत्वनियम । भाट्ट ७।३।१

मुख्ये कार्यासमर्थे लब्धेऽपि प्रतिनिधेः कार्यसमर्थस्य मत उपादानम् ॥

अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् । ६।३।१९।३९ ॥

भाष्यम्-- अस्ति यूपकाले खादिरस्तम्भः पशोःध्यागस्ये न समर्थो, कदरस्य नु तत्समर्थम् । तत्र संदेहः किमुपादेय खदिरद्रव्यमुत कदरं इति । खादिरद्रव्यमित्याह । तद्धि श्रुतम् । तदुपाददानः शास्त्रविहितं करोति । प्रतिनिधावश्रुतकारी स्यात् । तस्मात्प्रतिनिधातव्यम् । इत्येवं प्राप्ते, ब्रूमः । अर्थद्रव्यविरोधे अर्थं प्रत्यादर्तव्यम् । तदर्थं हि द्रव्योपादानम् । नियोजनादस्मागत्यं पशोर्भविष्यतीति, न द्रव्यमेवोपादीयेतेति । कदरमुपाददानो द्रव्यश्रुतिं त्यजति, अर्थं त्वनुगृह्णाति । खादिरत्वानुपादाने अर्थं न जायते । तस्मात्कदरद्रव्यमुपादेयम् । द्रव्याभावे हि तदुत्पत्तिः, प्रतिनिधेरुपादानस्य । द्रव्याण्यर्थं प्रति शेषभूतानि ।

सोम-- सूत्रार्थस्तु- प्रयोजनद्रव्यविरोधे प्रयोजनं बलवत्, अतो द्रव्याणां प्रयोजनशेषत्वात् द्रव्याभावे प्रतिनिध्युत्पत्तिः कार्या इति ।

वि-- ' नियोजनेऽप्ययोग्यश्चेत्खादिरः तदा भवेत् ।, मुख्यत्वेन स एव स्यात्, तदर्थत्वेन कैतरः ॥'

[भाट्टे इदमधिकरणं पूर्वाधिकरणे एवान्तर्भावितम् ।]

मण्डन-- ' कार्यहानिस्तदत्ययम् । '

शंकर-- ' न तु कार्याक्षम तथा । '

● मुख्ये प्रधानपर्याप्ते एव लब्धे शेषकार्यलोपः कार्यः । वि. ६।३।२१. ● मुख्ये विद्यमाने गौणो नोपादीयते । भा. १०।३।१५।७१, मुख्ये सम्भवति भक्तिरन्याय्या ३।८।२२।४३.

● मुख्यातिक्रमः संख्यायाः आनर्थक्येन कारणेन ' सप्तभिराप्नोति ' इत्यादौ । भा. १०।५।५।१४.

● ' मुख्याधिगमे मुख्यमागमो हि तदभावात् । ' ६।३।१६।३५ ॥ इत्यधिकरणे यदा यूपार्थं मुख्य खदिरमलभ्य मत्वा तत्प्रतिनिधिं कदरमुपादातुं प्रस्थितो मध्ये मुख्य लभते चेत् मुख्य एव ग्राह्य, कदर गृहीत्वा तक्षणादिषु वेधुनित् संस्कारेषु कृतेषु प्राक् पशुनियोजनात् मुख्य लभते चेत् तथापि मुख्य एव ग्राह्य इति व्यवस्थापितम् । परिमल. ४।१।१३।१८ नम्.

मुख्याधिगमे मुख्यमागमो हि तदभावात् । ६।३।१६।३५ ॥

श्रुते खदिरादिद्रव्ये अपचरिते कदर्यादि प्रतिनिधिमादास्ये इति संकल्प प्रयोगे प्रवृत्त । कदरमन्विष्यन् देशात् मुख्य खदिरमेव लब्धवान् । तदानीं तु संकल्पितोऽपि प्रतिनिधिर्न ग्राह्य, किन्तु मुख्य एव खादिरो लब्धत्वात् ग्राह्य, तदलाभे प्रतिनिधिरेव । तदाह, मुख्याधिगमे मुख्यस्य अधिगमे लाभे सति मुख्यमेव ग्राह्यम् । हि यस्मात् तदभावात् मुख्याभावात् प्रतिनिधेः आगमः स्वीकृतः । इदानीं मुख्यमेव लब्धं तत किं प्रतिनिधिना । इति सिद्धान्त । के.

मुख्यानुग्रहन्याय. । मुख्यद्रव्याभावे गृहीते प्रतिनिधौ पुनर्मुख्यप्राप्तौ मुख्यस्यैवोपादानम् ॥

मुख्याधिगमे मुख्यमागमो हि तदभावात् । ६।३।१६।३५ ॥

भाष्यम्-- अथ यत्र विनष्टे श्रुते प्रतिनिधिमुपादाय प्रस्थितो मुख्यमेवोपलभते, तत्र किं प्रतिनिधिमेवोपाददीत उत तमेव मुख्यमिति । किं तावत्प्राप्तम् ? प्रतिनिधिमुपादास्ये इत्येन संकल्पितवानसौ प्रतिनिधिमुपाददान एव सत्यसंकल्पो भवति । तस्मात्प्रतिनिधातव्यं तेन । इत्येवं प्राप्ते, ब्रूमः । मुख्याधिगमे तमेवोपाददीत । अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः । श्रुते हि सकल्पा व्यत्ययः । प्रतिनिधौ निष्कल्पः । अथ यदुक्तं संकल्पभेददोषः इति । श्रुतेऽवक्तौ, निष्फलसंकल्पाया वा ।

सोम--- पूर्वत्र वैकल्पिकस्याग्रहणावसरेऽपि इह वद्यतावत् मुख्यानादर इति प्रत्युदाहरणात् संगतिः । सूत्रार्थस्तु- मुख्यलाभे तदेव यतो मुख्याभावादमुख्यागमः इति ।

वि— ' प्रतिनिध्युपगमे मुख्यलाभे ग्राह्य किं द्वयोः । सकल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः ॥ '

भाट्ट--[ भाट्टे १६-१७ अधिकरणयोः एकमेवाधिकरण कृतम् । तत्समर्थनं तु शम्भुभट्टेन एवं कृतम्- तत्र

' मुख्याधिगमे मुख्यमागमो हि तदभावात् ', ' प्रवृत्तेऽपीति चेत् ', ' नानर्थकत्वात् ' इति सूत्रत्रयमुक्तपूर्वपक्षनयनिराकरणार्थं तत् सिद्धान्तनयप्रदर्शकमिति अधिकरणनयप्रदर्शनतया पृथक् पृथक् भाष्यकारैर्व्याख्यातम् । तत्राद्यसूत्रे मुख्यालाभेन प्रतिनिध्युपादाने प्रवृत्तस्य मध्ये मुख्यलाभे यदा तदा तेन मुख्यमेवोपादेयमिति सिद्धान्तो दर्शित । द्वितीये तु सूत्रे यदा पुन प्रतिनिधिमुपादाय केचन संस्कारा कृता तदनन्तरमपि मुख्यागमे मुख्यमेवोपादेयम्, न तु तत्कृतोऽपि प्रतिनिधिरुपादेय इति सिद्धान्त । तृतीये तु सूत्रे प्रतिनिधौ संस्कारकरणानन्तर नियोजनादिरूपप्रधानस्यापि सिद्धिर्जाता तदान्तर मुख्यद्रव्यागमेऽपि न मुख्यमुपादेयं किन्तु प्रतिनिधिरेवेति सिद्धान्त । सर्वत्रापि च पूर्वपक्ष उक्त एव ग्रहन्य । अथवा ' प्रवृत्तेऽपीति चेत् ' इति पूर्वपक्षसूत्रमेव । तदा सूत्रे प्रयोजने श्रुतमेवागमयितव्यमिति पूर्वपक्षोत्तर ' नानर्थकत्वात् ' इति सूत्र प्रयोजनाभावात श्रुतमागमयितव्यमिति सिद्धान्तप्रदर्शकमेवेति सूत्रद्वयेनैकमेवाधिकरणमिति । तदेतदधिकरणभेदप्रदर्शन सूत्रानुरोधात् भाष्यकारादिभि कृतमपि प्रयोजनाभावात् स्वय न प्रदर्शितम् । इति ]

यत्र मुख्यमलभ्य यदा प्रतिनिधिमुपादाय प्रवृत्त तदादाय वा द्रिमा कर्म वा संस्कारा कृता , कार्य न कृत तत्र कार्यकरणात्पूर्वं मुख्यलाभे तदेवोपादाय पुन संस्कारकरणात् तथा तेनैव प्रधान कार्यम्, मुख्यलाभे विकल्पोपादानस्य शास्त्रैरनभ्युपगतत्वात् । न च प्रतिनिधिगता संस्कारस्य, द्रव्यस्य पृथक् संस्कारे प्रमाणाभावात् । तत्रेऽपि या ' यथाश्रुति शास्त्रार्थं संपादयिष्ये ' इत्येव संकल्पात् । प्रधानानुरोधेन पुन संस्कारकरणस्य न्याय्यत्वात् । यदा तु प्रतिनिधिनैव कार्यं निष्पन्नं तदा प्रयोजनाभावात् न मुख्यमुपादेयम् । मुख्याभावनिमित्तप्रत्यवायभयमस्त्येव तु कार्यम् । १४

मण्डन— ' मुख्यागमो तदनयैव् । '

भास्कर— ' सिद्धे मुख्यमेव तत् । '

● मुख्यानुग्रहन्याय । यत्र एकत्रापि हरेत् दर्शितम् इति प्रसङ्गे विरोधे तत्र एकस्यापि तस्मिन पदधर्मा ग्राह्या , बहूनामपि प्रसङ्गिना तदनोपजीवित्वेन स्वधर्मप्रयोजकत्वात् । परात्म . ५७।१, ● मुख्यानुग्रहन्याय । यत्र सर्वेषा तन्त्रिणा न ग्रहणे विरोध तत्र मुख्यानुग्रहन्यायापवाद भूयोऽनुग्रहन्याय । ५६।१–५७।१

● मुख्यानुरोधेन गुणो व्यतिक्रमितव्यो न्याय्य । मुख्यस्यानुगृहीतत्वं । कुत । गुणस्यार्थवत्वात् गुणस्य । भा. ३।३।२।९

● मुख्यापचारे प्रतिनिधि इति न्यायात् औरस पुत्रस्य औरसपुत्र्या अप्यपचारे क्षेत्रजाद्या पुत्र प्रतिनिधयो भवन्ति । दत्तकमीमांसा १०४

● मुख्याभावे गौणो गृह्यते नान्यथा । भा १।४।५।२१

● ' मुख्यार्थो वाऽङ्गस्याचोदितत्वात् । ' (३।८।१९।३६ ) इत्यनेन न्यायेन वैकृतविशेषाणा मन्त्राणां श्रुताना केवल प्रधानार्थं उपांशुत्वम् । शा ११।२।७। सोम- ' यज्ञार्थर्वेण वै काम्या इष्टयस्ता उपांशु कर्तव्या ' इति श्रुतमुपांशुत्व प्रधानार्थम्, अङ्गस्य कामार्थत्वेन चोदितत्वात् काम्यशब्दार्थत्वाभावात् इति सूत्रार्थ । ततश्च काम्येष्टिशब्दप्रयुक्तस्योपांशुत्वस्य प्रधाने एव श्रवणात् प्रधानार्थत्वम् । ● ' मुख्यार्थो वाऽङ्गस्याचोदितत्वात् । ' इति वैकृतविशेषाणा केवलप्रधानार्थत्वम्, तच्च यत्र वाक्योपात्तप्रधानार्थत्वमेव तत्र । वा ३।१।४।१२ पृ ४१३–४१४ ● मुख्यार्थे विनियोगो मन्त्राणाम् । ३।२।१।१–२

● मुख्यार्थानुपपत्तिज्ञान मुख्यार्थबोधे प्रतिबन्धकम्, न तु लक्षणाबोधकारणम् । मणि पृ ७६.

● मुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणाऽनुपपत्ति । भा १।३।८।२६

● मुख्यार्थता च न्याय्या, न लक्षणा । भा २।२।८।२६

● मुख्यार्थप्रयोगो हि औत्पत्तिकत्वात् शब्दस्य दर्शनेन भ्रान्तिर प्रतिपद्यते । वा २।१।८।१२ पृ. ४११

§ मुख्यासंभवे गौणग्रहणं युक्तमिति न्यायः । अथ मुहूर्तचिन्तामणिटीकाया धृतः । तत्र च 'सा दृष्टेन्दुः सिनीवाली' इति वाक्यमीमांसायाम्, ननु च दृष्टश्चन्द्रो यस्या इत्यन्यपदार्थे सप्तमी सामीप्यपरेति व्याख्यायते इति चेत्, न, तस्याः सामीप्यसप्तम्या गौणार्थपरत्वात् मुख्यासंभवे गौणग्रहणं युक्तं इत्युक्तमिति । साहस्री. ८२३.

* मुख्यकार्ये कृते प्रतिनिधिना, ततः मुख्यस्योपलम्भेऽपि मुख्ये न प्रयत्नम् । ६।३।१७।३६–३७.

* मुख्यक्रमः अपि अङ्गक्रमनियमे प्रमाणम् । मुख्यक्रम च प्रधानक्रम । मुख्यक्रमाधिकरणम् । ५।१।७।१४. * मुख्यक्रम. अतिदेशविचार. अपि । टुप्. ५।१।११ । न च प्रकृतौ आग्नेयसान्नाय्ययोः विकृतौ सारस्वतयोः । तत्प्रस्तरम्, ६ मुख्यक्रमः अर्थक्रमाद् दुर्बलः, प्रयोगवचनाभितत्वात् । टुप्. ५।१।१०।१८. * मुख्यक्रम. एवं क्रमप्रमाणम् । बाल. पृ. ८. * मुख्यक्रमः पाठक्रमात् दुर्बलः, अनुमानिकत्वात् विलम्बोपस्थितिकत्वाच्च । तेन पौर्णमास्या अग्नीषोमीयपुरोडाशनिर्वापः प्रथम तत उपांशुयाजाज्यनिर्वापः । भा. ५।१।८।१५. * मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान् । दर्शपूर्णमासयोः आग्नेयस्य अवदानाभिघारणासादनानि पूर्वं कार्याणि न दध्न. । भा. ५।४।२।२–४ । टुप्— स्विष्टकृदवदाने प्रधानप्रयोगाभिघारणं बर्हिषि हविरासादनं चोदाहरणम् । तन्त्ररत्नम्— न तु प्रधानचतुरवत्तावयवभूतावदानाभिघारणविषयम् । ■ मुख्यक्रमेण प्रवृत्तिक्रमो बाध्यते यथा— सान्नाय्यधर्माः पूर्वं प्रवृत्ताः पश्चात् आग्नेयधर्माः । प्रधान ■ आग्नेयस्य प्रथम पश्चात् सान्नाय्यस्य । तत्र सान्नाय्यस्य पूर्वं प्रवृत्तिक्रमात् प्राप्तं अवदानादि, स्विष्टकृदवदानं वा मुख्यक्रमात्तु आग्नेयस्य पूर्वं कार्यम् । इदं 'अवदानाभिघारणासादनेषु०' इत्यधिकरणे ( ५।४।२ ) उक्तम् । बाल पृ. १३७. * मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधो यथा— पाठादर्थाच्च दध्नो धर्मा दोहनादयः पूर्वं क्रियन्ते, पश्चादाग्नेयस्य निर्वापादयः । तत्प्रवृत्तिक्रमेण च दध्न. हविरासादनप्रयाजशेषाभिघारणस्विष्टकृदवदानान्यपि पूर्वं प्राप्तानि मुख्यक्रमात्तु प्रथमं आग्नेयस्य कर्तव्यानि पश्चात् दध्न. । दर्शपूर्णमासयोः । वस्तुतस्तु नेदं विरोधोदाहरणं सम्भवति । उदाहरणं तु मृग्यम् । भाट्ट. ५।४।२. * 'मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्' ( ५।१।७।१४ ) इत्यधिकरणे 'सारस्वतौ भवतः' इत्यत्र स्त्रीपुंसदेवत्याविमौ, न पुंद्वयदेवत्यौ इति निर्णयः, 'एतद्वै दैव्यं मिथुनं यत् सरस्वतीसरस्वांश्च' इत्यर्थवादश्रवणादिति शास्त्रदीपिकायामुक्तम् । बाल. पृ.५७.

§ मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् । ५।१।७।१४ ॥

चित्रायागे चतुर्थपञ्चमे हविषी 'सारस्वतौ भवतः, एतद्वै दैव्यं मिथुनम्' इति समाम्नायेते । 'सरस्वती च सरस्वांश्च' इति विगृह्य समासे 'पुमान् स्त्रिया' ( पा. १।२।६७ ) इत्येकशेषात् सरस्वन्तौ इति भवति । तौ देवते ययोः तौ सारस्वतौ यागौ । तस्य च मिथुनत्वोक्त्या स्त्रीपुंरूपत्वम् । तत्र किं निर्वापादयः प्रथमं स्त्रीदेवत्यस्य पुंदेवत्यस्य वेति विचारे अनियम इति पूर्वपक्षं वाक्यबलेन निराकृत्य सिद्धान्तमाह । न अनियमेन निर्वापादय. । किन्तु मुख्यक्रमेण अङ्गानां निर्वापादीनां क्रम आस्थेयः । होतृकाण्डे 'प्र णो देवी सरस्वती' इत्यादियाज्यानुवाक्यायुगलं स्त्रीदेवत्यं प्रथमं पठितम्, ततः 'पीपिवांसं सरस्वतः' इत्यादि पुंदेवत्यम् । तेन मन्त्रपाठेन स्त्रीदेवत्यं हविः मुख्य प्रथमं इत्यवगम्यते । तस्मात् तेन मुख्यक्रमेण निर्वापादीनां अङ्गानां क्रमः स्वीकर्तव्यः । तदर्थत्वात् अङ्गानां प्रधानार्थत्वात् प्रधानानां च मन्त्रपाठक्रमेण नियतत्वात् । के.

* मुख्यक्रमात् औपदेशिकात् आतिदेशिकपाठक्रमो बलवान् । ५।१।१०।१७–१८. मीको. पृ. ३५५ ' अध्वरकल्पान्यायः ' इत्यत्र द्रष्टव्यम् । मुख्यक्रमे प्रधानक्रमेण नियम क्रियते सह चोदितानाम् । टुप्. ५।१।३।२. * मुख्यक्रमो प्रधाननिरूपितप्रत्यासत्त्यनुग्राहीणम् । भाट्ट. ५।१।७.

§ मुख्यक्रमाधिकरणम् ॥

मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् । ५।१।७।१४ ॥

अनियमप्रसक्तौ मुख्यक्रमेण आग्नेयस्य प्रथममभिघारणं पश्चादन्य इत्युदाहरणं वक्ष्यमाणं द्रष्टव्यम् ।

मण्डन— 'मुख्यक्रमात् क्रमोऽङ्गेषु । '

शंकर— ' मुख्यक्रमात् तदङ्गानाम् । '

* मुख्यक्रमानुरोधः । वैकृतमुख्यक्रमानुरोधेन अध्वरकल्पाया प्रथम आमावैष्णवस्य निर्वापः ततो बार्हस्पत्यचरोः । भाट्ट. ५।१।१०.

* मुख्यक्रमादेः दौर्बल्यं आनिर्देशिकपाठविरोधे एव । भाट्ट. ५।१।१०.

* मुख्यगौणयोः मुख्ये कार्यसम्प्रत्ययः । भा. ३।२। २।१.

* मुख्यजघन्ययोः अन्यतरस्मिन् लोप्ये जघन्यो लुप्येत, मुख्यो ऽनुग्रहीतव्यः । तदुक्तम् ' मुख्य वा पूर्वचोदनाल्लोकवत् ' ( १२।२।८।२९ ) इति । भा. १०।५।१।१.

* मुख्यद्रव्यस्य प्रधानमात्रक्षमस्येस्य लाभेऽपि मुख्यस्यैवोपादानम् । ६।३।२०।४०–४२. * मुख्यद्रव्ये कार्याक्षमत्वे प्रतिनिधेरेवोपादानम् । ६।३।१९।३९.

* मुख्यद्रव्यलाभेऽपि प्रतिनिधिना मुख्यकार्यकरणोत्तर मुख्यं न ग्राह्यम् । ६।३।१७।३६–३७.

* मुख्यद्रव्यसदृशस्य एव प्रतिनिधित्वं श्रुतप्रतिनिध्यपचारेऽपि । ६।३।१५।३३–३४.

* मुख्यप्रतिनिध्योः सामानविध्यम् । ३।६।१४। ३७–३९.

* मुख्यप्रासुचिककर्मौ प्रयोजकत्वयी । वा. ३।१। १।१ पृ. ६५१.

* मुख्ययागक्रमेण निर्वापाद्युपक्रमो ग्राह्य । विनायागे हि चतुर्गपद्मक्रमोः सारस्वतयोः स्त्रीदेवत्यस्य मान्यानुवाक्यापाठस्य प्राथम्येन स्त्रीयागस्य मुख्यस्य प्राथम्यं सिध्यति । वि. ५।१।७.

* मुख्यलक्षणम् । 'तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम् ' । सूत्रम् ४।४।१३।१४.

* मुख्यलाभे मुख्यं ग्राह्यं न प्रतिनिधिः । वि. ६।३।१६.

* मुख्यविशेष्यत्वं वाक्यार्थे भावनायाः । भाट्ट. २।१।१–२.

* मुख्यप्रवृत्तिः लक्षणया बाध्यते आनर्थक्यप्रतिघाते विपरीतो बाधो भवति इति रीत्या । बाल. पृ. १४५.

* मुख्यधीक्षादिधर्माः प्रतिनिधिष्वपि भीमारादिषु कर्तव्याः दर्शपूर्णमासादौ । भा. ३।६।१४।३७–३९.

* मुख्यशब्दः प्रधाने । भा. ७।१।१।१.

* मुख्यसम्भवे गौणग्रहणं नार्हति । भा. १।१।८। २६ । अहीनशब्दस्य न हीनः अहीनः इति नञ्तत्पुरुषमाश्रित्य ज्योतिष्टोमपरत्वं न युक्तम् । स हि ' अहः खः क्रतुसमूहे ' इति व्युत्पादनात् मुख्यः । भा.

* मुख्यसिद्धौ गुणलोपः सोढुं शक्यते । वि.६।३। १९.

* मुञ्जादिषीकोद्धरणन्यायः । यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं बहिरावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्ध्रियते तथा आत्मा अपि युक्त्या अन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात् ब्रह्मचर्यादिसाधनसंपन्नैः पृथक् कृतश्चेत् परब्रह्मैव जायते, चिदानन्दरूपत्वस्य उभयत्रोभयोरविशिष्टत्वात् । उक्तं च पञ्चदश्याम् ' यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः । शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ' इति । लौकिकी. २९.

* मुद्गानां माष–चणक–कोद्रवा न प्रतिनिधिः ' अयज्ञिया वै माषाश्चणकाः कोद्रवाः ' इति वचनात् । वि. ६।३।६.

* मुरारिमिश्राः घटादिज्ञानोत्तर घट जानामि इत्याद्यनुव्यवसायो जायते, तेन घटत्वघटितरीत्याभासे सति घटत्वप्रकारकत्वप्रामाण्यग्रहः इत्याहुः । मयि. पृ. १८.

* मुष्करत्वं पुंसां गुणः । तेन पुंपशि दर्शयति ' मुष्करा भवन्ति सेन्द्रियत्वाय ' इति । भा. ४।१। ६।१७.

* मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिसमुदायेन अनुग्रमः । समुदायानुसमयन्यायः । ५।२।३।४–५.

संख्यायाः मुष्टिगुणत्वात् । मुष्टिलोपो न कर्तव्यः तदपेक्षया संख्यायाः लोपो वरम् । संख्या हि मुष्टेर्गुणः । मुख्यापेक्षया गुणलोपो न्याय्यः । तस्मात् यावद्भिर्मुष्टिभिः समदशरावः पूर्येत् तावद्भिर्मुष्टिभिर्निर्वापः निर्वप्तव्यः इति पूर्वः पक्षः ।

न निर्वापशेषत्वात् । ६६ ॥

दर्शपूर्णमासयोः 'चतुरो मुष्टीन्निर्वपति' इत्यत्र निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'समदशशरावः नैवारश्चरुर्भवति' । मुष्टिलोपो न कर्तव्यः चतुःसंख्यालोपस्तु कर्तव्य इति प्रथमः पूर्वपक्षः सूत्रेणोक्तः । तं पक्षं नशब्देन निषेधयति । न मुष्टिलोपः कर्तव्यः । चतुःसंख्यायाः मुष्टिगुणत्वे स्यात्तथा । न तु संख्या मुष्टेर्गुणः । संख्यायाः निर्वापशेषत्वात् । चतुरो निर्वपति मुष्टीन् निर्वपति इति च पृथगन्वयः । तस्मान्न संख्यालोपः किन्तु मुष्टिलोपः कर्तव्यः इति द्वितीयः पूर्वपक्षः । इममेव पक्षं पश्चात् सिद्धान्तत्वेन स्थापयिष्यति ।

संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः । ६७ ॥

तुशब्दः द्वितीयं पूर्वपक्षं व्यावर्तयति । अथ तृतीयः पूर्वपक्षः उच्यते उभयलोपः इति । न केवलं मुष्टिलोपः । चोदनां प्रति सामान्यात् संख्या तद्विकारः, संयोगाच्च परं मुष्टेः विकारः इति सौत्रपदान्वयः । चोदनां प्रति नैवारचरुविधिं प्रति संख्या समदशसंख्या प्राकृतचतुःसंख्यायाः विकारः । सप्तदशसंख्या चतुःसंख्याया बाधिका । किंच संयोगात् द्रव्यसमसंख्यसंयोगात् परं शरावद्रव्यं मुष्टेर्विकारः मुष्टेर्बाधकः । तथा च वैकृतसंख्यया प्राकृतसंख्या निवर्त्यते वैकृतेन शरावेण प्राकृता मुष्टयो निवर्त्यन्ते । तस्मात् मुष्टिसंख्ययोरुभयोर्लोपः इति तृतीयः पूर्वपक्षः ।

न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात् । ६८ ॥

दर्शपूर्णमासयोः 'चतुरो मुष्टीन् निर्वपति' इति निर्वापसाधनं मुष्टिः संख्या चोक्ता । अथ वाजपेये 'सप्तदशशरावः नैवारश्चरुर्भवति' । तत्र सप्तदशसंख्यया चतुःसंख्या बाध्यते शरावैश्च मुष्टयो बाध्यन्ते इति तृतीयः पूर्वपक्ष उक्तः । तं नशब्देन निषिध्य द्वितीयं पूर्वपक्षमेव सिद्धान्तमाह । न उभयबाधः । चोदनाऽभिसम्बन्धात् । चोदनेति यागं ब्रूमः । यागसम्बद्धा हि सप्तदशसंख्या शरावद्रव्यं च । प्रकृतौ दर्शपूर्णमासयोस्तु संस्कारयोगात् निर्वापसंस्कारसम्बद्धा चतुःसंख्या मुष्टिद्रव्यं च । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यं अभिनिर्वर्त्यते तत् तेन निवर्त्यताम् । तत्र चतुःसंख्यानुग्रहात् मुष्टिलोपो न्याय्यतरः । तस्मात् मुष्टिलोपः कर्तव्यः, चतुःसंख्यालोपस्तु न कर्तव्यः । तर्हि कथमनुष्ठानम् ? उच्यते । चतुर्भिः कुडवादिभिः शरावं पूरयित्वा तस्य निर्वापः कर्तव्यः, पुनरेवं पुनरेवं एवं सप्तदशशरावम् । इति । इति सिद्धान्तः । के

० 'मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात्' इत्यत्र 'चतुरो मुष्टीन् निर्वपति' इत्यत्र चतुःसंख्यायाः लक्षितमुष्टिविशेषणत्वापत्तेः सप्तदशशरावे चरौ प्रधानभूतमुष्टयनुग्रहापत्तौ संख्यानुग्रहो वक्ष्यते । कौ. १।१।५।१२.

● मुष्टीकरणं याचमानं ज्योतिष्टोमे । मा. ३।१।१४।२४. ● मुष्टीकरणं 'मुष्टीकरोति' इति ज्योतिष्टोमे कृत्स्नप्रकरणार्थं न तु दीक्षावेदनार्थम् । भा. ३।१।१४।२४–२५. ० मुष्टीकरणेन हस्तचापल निवारितं ज्योतिष्टोमे दीक्षायाम् । वि. ३।१।१४.

० मुसलं यज्ञायुधम्, 'उलूखलमुसलाभ्यामवहन्ति' इति । वि. ३।१।५. ● मुसलं राजसूये नानावीर्यैकम् । टुप्. ५।२।७।१३.

● मुसलप्रोक्षणस्य प्रयोजकं अपूर्वम् । भा. ९।१।२।२–३.

० मुसलशब्दः दण्डे प्रसिद्धः । यथा, कथ [illegible] तत्र मुसलिनो मागधका गत्वा नावतरेयुः इति । भा. ४।२।६।१८.

० मुहूर्तः नभश्चिरत्नसमासादितलब्धघनफन्‍ सूर्यादिगतिसमचयः इति क्रियानिरिक्षकान्यमाननपदिनः । सु पृ. १७०.

मूढं मूढमापयेत् बोधयेदिति न्यायः । स्पष्टार्थोऽयम् । साहस्री. ७४२.

■ मूर्धाभिषिक्तन्यायः । यत्र क्रिया निगद्य तदन्य प्रवृत्तिरिति भाव. । स्पष्टार्थः । माहसी. १०३.

● मूर्धं न प्रयोजकं आम्रादेरलङ्कारादिमत्त्वानां इत्यादिभावार्थः । शाङ्क. ४।२।३. ● मूर्धानामवयवेषु अङ्गिनः श्रेष्ठः । भा. १३।३।१९।८२.

● मूर्धावधारणप्रतिरेव पौरुषेयवाक्येषु अर्थनिश्चय-प्रतिज्ञा इति मूलाभावे छिन्नेऽपि आलोऽपि निश्चयो ह्यतेन निषीलोऽनुमानगतो भवति । वैद्यनाथः ११११२ पृ. १६.

● मूर्धोक्तेष्टप्रमाणः काथ एव आत्मभावः प्रयु-क्तो । भाव. पृ. १३१.

● 'मूर्धाः मात्रा परिवारयोग्यैर्मं करोति ' इति मूर्धयोगारम्भे करणाधारकत्वा विनियोक्त्री श्रुतिः, योगिभावान्ते । भाव. पृ. ४५.

● मूर्धप्रकृतिरियं इष्यमिष्टोमयोमानाम् । वि. ८।१।१ वार्तिक ९.

● मूर्ध्येन विषेषु आनयनं क्रियते । तद् मधुपि-ष्टैः मुक्तलव लवाई । भा.

■ मूषकविषाणन्यायः । न हि कश्चित् प्रेक्षावान् मूषकविषाण गवेषयेत् गच्छेत् । माहसी. ७१४.

● मूषिकातुषदलस्य वेषाक्षरिण्यां विनियोगः । भा. १।१।५।२३ । अत्र मूषा- भूषिकालक्षणस्य मूषिकाद-क्षिण्यां उपधानाऽर्थे मूषे ' आखुस्ते पशुरिति मूषात् ' इति विधानात् आखुश्रुतौ अर्थगतम् । पृ. ६५७

■ मूषासिक्तताम्रन्यायः । ' लेखसादर्शनी मूषा ' इत्यादि । लेखगतान्तोऽत्र यत्र सा लेखगादर्शनी स्वर्णादि-धातवः । धातविशेषो मूषा स्यात् । ' मुखागी ' इति मुखादावागतो मूषावा । ' मूष स्तेये ' इत्यस्माद्धातो-र्निष्पत्तिरिति । यथा तत्र मूषायां द्रुतं ताम्र सिक्तं सत् तदाकारं जायते तदाकारताकारतामेति, तथा रूपादीन् विषयान् व्याप्नुवत् चित्तमपि तत्तदाकारं तत्तदाकार-मुपगच्छति इति भावः । उक्तं च पञ्चदश्याम् ' मूषा-सिक्तं यथा ताम्रं तन्निभं जायते तथा । रूपादीन् व्याप्नु-वच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ' इति । माहसी. ४५१.

● मृगजलम् । वन्हितापतो भ्रान्त्या जलत्वावच्छे-स्यादिजलगुणदर्शनेन तोयसादृश्यावगमनात् तोयमुद्देश्य तोयशब्दप्रयोगः । सु. पृ. ५०१.

● मृगतृष्णायां भ्रान्त्या तोयमध्यारोप्य यदा शब्दं प्रयुङ्क्ते तदा तमयोर्मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेः भ्रान्तिमुख्यत्वम् ( भ्रान्त्यध्यवसितः मुख्यः शब्दः भ्रान्ति-मुख्यः इति मध्यमपदलोपिसमासः । सु. पृ. ५०० ) । वा. १।४।१२।२३ पृ. ३५८.

● मृगतृष्णादिज्ञानानि दस्याणि मिथ्यात्व-कल्पनया बाध्यन्ते, हानोपादानादिफलनियोगाय बाध्य-व्यपदेशं लभन्ते । वा. १।१।७।१४ पृ. ८५८–८५९.

● मृगतृष्णादिप्रत्ययाः प्रत्ययेन बाध्यन्ते । वा. १।१।७।१४ पृ. ८५९.

● मृगतृष्णादर्शनमिव अन्यार्थदर्शनं भवति भ्रान्तौ न्याये वा । भा. ४।४।११।१२३.

■ मृगतृष्णान्यायः । यथा ग्रीष्मे मरुदेशे सिक-तासु सूर्यरश्मयः प्रतिफलिता अपां धारा इव भवन्ति, मृगास्तृषितास्तु अपां धारा मत्वा पश्यन्ति, भ्रमन्ति च । न च ताः सन्ति । सा भ्रान्तिर्मृगतृष्णापदवाच्या । तादृशस्यायम् 'अर्थमात्रम्' । उक्तं च ' रे चित्त चिन्तय चिर चरणौ मुरारेः, पारं गमिष्यसि यतो भवसागरस्य । पुत्राः कलत्रमितरे सुहृदः सहायाः, सर्वं विलोकय सखे मृगतृष्णिकाभम् ॥ ' इति । माहसी. ४४९.

● मृगतृष्णास्वरूपसेवनदर्शनम् ( येषु पानीयं याजानवता तेषु अर्थसंवाददर्शनम् ) । भा. ९।१।९।३१.

● मृगतृष्णावत् अप्रमाणमूलत्वात् मिथ्यादर्शनम् ( ' अग्नीषोमीयस्य स्थाने अग्नीषोमीयः पुरोडाशः ' इत्यादि दर्शनम् ) । भा. १।८।२।१४१.

■ मृगभिया सस्यानाश्रयणन्यायः । ( अस्यार्थः ' मिथुभिया स्थाल्यनधिश्रयणन्याय. ' सीकों पृ. २०६० इत्यत्र द्रष्टव्यः । ) । माहसी ३४८.

■ मृगवागुरान्यायः । वागुरा मृगबन्धनी । अयं विशिष्टवाचकपदानां सति शुद्धविशेषणवाचकपद-समभिव्याहारे विशेष्यमात्रपरतायां प्रवर्तते । साहसी. २१४.

* मृगारेष्टिः नाम इष्टिविशेषः । भा. ११।२।४। २३.

* मृदाहरणे पण्णां मन्त्राणां समुच्चयोऽग्निचयने । भा. १२।३।१४।३०.

* मृन्मयं पात्रं 'मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत्' इति विहितं काम्यम् । तत्तु नित्ये अपां प्रणयने ग्रहीतुं न योग्यम् । नित्ये तु 'चमसेनापः प्रणयेत्' । वि. ४।१।२. * 'मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य' इत्यं फलतो वाचनिकी व्यवस्था । बाल. पृ. १९.

* मृन्मयादिपात्राणां अपां प्रणयने न नित्यता । भा. ४।१।२।४.

* मृताग्निहोत्रे महापितृयज्ञे वा 'उपरि हि देवेभ्यः' इत्यत्र अनुवादो विधिर्वा इति संशयः । विधिः सिद्धान्तः । वा. ३।४।१। पद्यसूत्री ६, * मृताग्निहोत्रे महापितृयज्ञे वा 'ये पुरोदञ्चो दर्भाः' इत्यत्र विधिरनुवादो वा इति संशयः । अनुवादः सिद्धान्तः । ३।४।१। पद्यसूत्री ४–५. * मृताग्निहोत्रे श्रुतेन 'यज्ञोपवीती हि देवेभ्यो दोहयति' इत्यनेन प्राचीनावीतस्तुत्यर्थमनुवादः यज्ञोपवीतस्य । भाट्ट. ३।४।१.

* मृताधिकारपक्षे अस्थियज्ञे इव सर्वस्वारे ग्राम्याग्राम्यविवेकः । १०।२।२४।६०.

* मृताधिकारित्वपक्षे अस्थियज्ञस्य जप–संस्कार–इष्टीनां लोपः । १०।२।१८।५०.

* 'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्' इत्ययं प्रतिषेधः 'पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति' इत्यनेन विरोधे उपसंह्रियते । बाल. पृ. ३४.

* मृतकर्तृकत्वपक्षे अस्थियज्ञस्य करणमन्त्राणामनुष्ठानम् । १०।२।१९।५१. * मृतकर्तृकत्वपक्षे अस्थियज्ञस्य गुणकामानां नानुष्ठानम् । १०।२।२०।५२. ■ मृतकर्तृकत्वपक्षे अस्थियज्ञस्य सुत्याकालान्तर्गतपुरुषादिफलप्रसाधकभागस्य लोपः । १०।२।२१।५३–५५. * मृतकर्तृकत्वपक्षे अस्थियज्ञस्य दोहनामकानां अनुष्ठीयमानानां गुणकामानां नानुष्ठानम् । १०।२।२२।५६–५७.

§ मृतमारणन्यायः । स्पष्टार्थः । यत्र क्रिया निष्फला, तत्र अस्य प्रवृत्तिरिति भावः । साहस्री. ३००.

* मेखला न संस्कारजनिका, द्रव्यत्वात् । परन्तु तथा दीक्षाभिव्यक्तिर्भवति । वि. ५।३।११.

§ मेघोदये शालिसमृद्धौ कोद्रवाशनमिति न्यायः । यथा मेघोदये वृष्टौ सत्यां शालिसमृद्धौ व्रीहिसंपत्त्या कोद्रवः कुत्सितधान्यविशेषस्तस्य भक्षणं लज्ज्यते, तथा ज्ञानोदये कर्मादिकं तुच्छमेव । केचित्तु मेघोदये इति पदं विहाय 'शालिसमृद्धौ कोद्रवाशनम्' इति न्यायस्वरूपं वदन्ति । यथा शालिः उत्तमधान्यविशेषः, कोद्रवः इत्यधमधान्यविशेषः । उत्तमवस्तुसद्भावे यत्राधमवस्तुसेवनं तत्रास्य प्रवृत्तिरिति । साहस्री. १४४.

* मेधस्य यज्ञः । भा. ३।८।३।१०.

■ मेधपत्यधिकरणम् । अग्निषोमीये मेधपतिशब्दः देवतापरः ॥

मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् । ९।३।१२।३३ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगुप्रैषे मेधपतिशब्दः एकवचननिगदः, यदेषां शाग्निना द्विवचननिगदः । न प्रति सन्देहो भवति । द्विपशावपि पशुगणेषु किं अधिकारेण इतरथा इतरथा प्रयोक्तव्यः, उत स्वामिपरः ऊहः कर्तव्यः, उत देवतापरः इति । किं प्राप्तम् ? अविकारः । कुतः ? मेधपतित्वं स्वामिदेवतस्य, स्वामी मेधपतिर्देवता च । स्वामिनः पशुः देवतायाश्च इत्येवं मन्त्रस्थितः । मेधपतये स्वामिनेऽपि भवति, तस्य कार्यं करिष्यतीति । देवतायामपि, ताभ्यां उपलभ्यते इति । बहूनामपि हि तं मेधं प्रति आधिपत्येन समवायोऽस्ति । सर्वत्र चाधिपत्ये पतिशब्दः प्रयुक्तः यथा द्विभरत वा च कुमारीभ्यः । स एष बहूनामेकवचनान्तो वाचको द्विवचनान्तश्च । यथा प्रकृतौ अविवक्षितैकत्वः अविवक्षितद्वित्वश्च संख्यावाचनिकत्वेन:, एवं सर्वासु विकृतिषु । तस्मात् न विक्रियेत ।

टुप्—मेध इत्यत्र चत्वारः पक्षाः, अविकारेणोभयोः प्रयोगः, व्यवस्थया वा द्विवन्निगदो देवतायामेकवन्निगदो यजमाने, उभौ वा स्वामिपरौ द्विवन्निगदः पत्न्यपेक्षया, उभौ वा देवतापरौ प्रधानापेक्षया एकवन्निगद इति । तत्र तृतीये पक्षे दोषमाह 'उत्कर्षो देवतायां स्यात्' इति (३५ सूत्रे), यस्य देवतावचनः तस्योत्कर्षं प्राप्नोति, एकवन्निगदोऽसौ एकदेवत्येषु पशुषु इति । तत् पाशन्यायमनालोच्य । (पाशन्यायं दर्शयति—) 'यत्रास्ति प्रधानभूतः प्रातिपदिकार्थः, तत्र गुणभूतं वचनं नीयते' इति । (उत्कर्षे कारणान्तरमाह—) प्रधानस्य देवतात्वमदृष्टैव ।

अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् । ३४ ॥

भाष्यम्—अपि वा नैतदेवम् । तयोरिह समवायः एकवन्निगदस्य द्विवन्निगदस्य च । तयो एकवन्निगदः स्वामिनि प्रयोक्ष्यते येषां समाम्नातः । येषां द्विवन्निगदः समाम्नातः, तेषां तु देवते वक्ष्यति । तस्मात् विकृतौ बह्वीषु देवतासु द्विवन्निगदः ऊहेन प्रवर्तिष्यते । बहुयजमानेषु एकवन्निगद ऊहिष्यते । एवं यथासंख्यं प्रयोगो भविष्यति ।

स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥

भाष्यम्—वाशब्दः पक्षं व्यावर्तयति । स्वामिदेवतयोरुभयोर्वाचक इति नैतदेवम् । एक एव मेधपतिशब्दः यस्मात् द्विवचनम्, अस्मात् एकवचनं स एव न स्वामिदेवतयोर्वाचको भविष्यति । ननु एकोऽपि मेधपतिः अपरोऽपि प्रतीयते, कथमवाचक इति । उच्यते । यदा स्वामिनः, तदा मेधपतये यो मेधः, तं मेध्या दुर उपनयत इति सम्बन्धः । यदा देवतावचनः, तदा मेधपतये उपनयत मेध्या दुरः इति सम्बन्धः । स एव शब्दः उच्चरितः उभाभ्यां पक्षाभ्यां न सम्बन्धुमुत्सहते । वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । तस्मात् स्वामिनो वाचक इति अध्यवसीयते । अथ किमर्थं न देवतावचनः कल्प्यते । तथाहि कल्प्यमाने एकवन्निगद उत्कृष्येत एकदेवत्ये भवेत् । तत्र प्रकरणं बाध्येत ।

यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत । तत्रैव यजमानयोः दम्पत्योः वाचको भविष्यति । तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते । स्वामिपरस्य ऊहो भविष्यतीति ।

देवता तु तदाशीष्ट्वात् संप्रदानत्वात् स्वामिन्यर्थिका स्यात् । ३६ ॥

भाष्यम्—तुशब्दः पक्षं व्यावर्तयति । न स्वामिवचनः, देवतापरो भविष्यति । कुतः । तदाशीष्ट्वात् । 'आशासाना मेधपतये मेधम्' इति देवताभ्यां हविराशास्यते, मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्याम् इति । यजमानं प्रति आशास्यमानानुकीर्तनमनर्थकं अकर्तव्यं च । स प्राप्त एव स्वामिनि मेधः किमर्थमाशास्यते । न च तेन निर्ज्ञातेन स्वामिशब्देन प्रयोजनम् । याग एव हि न सम्भवेत । तस्मात् देवतावचनो मेधपतिशब्द इति ।

टुप्—सिद्धान्तस्तु देवतावादिपक्षः । स्वामिपक्षे वाक्यार्थ एव बाध्यते, आशासानपदानर्थक्यात् । अपि च यजमानाय मेधपतये यो मेधः, तं मेध्या दुरः यद्द्वार उपनयत । किमर्थं इति प्रयोजनार्थित्वात् असमर्थो वाक्यार्थः । न च मेधमनूद्य किञ्चित् विधीयते इति । इतरथा (देवतापक्षे) मेध्या दुर उपनयत मेधपतये मेधं कर्तुं इत्येवमाशासानाः इत्युपपन्नो वाक्यार्थः । न च पत्नीयो देवतायै कर्तुं शक्यते इत्यर्थात् योऽयं यजमानस्येति ।

उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३७ ॥

भाष्यम्—उत्सृष्टं च यजमानेन नाय ममेति । केवलं परकीयो रक्ष्यते । फलेन देवतया सम्बध्यते इति । कः पुनरस्य देवतया सम्बन्धः, यत् तामुद्दिश्य परिग्रहोऽस्य त्यज्यते । स च यागः प्राक् कृतः । तस्मात् यागात् परार्थं द्रव्यं नात्मीयम्, परित्यज्य आस्ते । आत्मप्रधानं यत् तदात्मीयम्, न यं प्रति आत्मा गुणभूतः । तादृशे तु भक्त्या पतिर्भवति । तस्माद्देवतायोरेव तत्र मुख्यं मेधपतित्वम्, भाक्तं स्वामिन इति ।

तत्प्रख्येनैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥

भङ्ग एव दूषणतावीजम् । न च तदस्ति । शाखाभेदेन द्विःश्रुतस्य पक्षान्तरत्वाभावात् इति वाच्यम् । तथापि निष्कल्पितश्रुतेः अनेकत्वकल्पनागौरवभिया एकस्यैवार्थस्य वाच्यत्वात् । तदिह किंपरत्वमिति चिन्तायाम्, देवताया विग्रहाद्यभावेन स्वामित्वाख्यपर्यायपतित्वानुपपत्तेः यजमानपरत्वमेव । न च तस्य एकत्वेन द्विवचनानुपपत्तिः । पाशन्यायेन ( १।३।७ ) तदुपपत्तेः । वस्तुतस्तु दंपत्योर्व्यासज्यवृत्तिकर्तृत्वैक्यात् यजेत इत्येवत् एकवचनम्, पत्नीयजमानाभिप्रायेण च यजानौ इत्येवत् द्विवचनम् । अत एव एकपत्नीकप्रयोगे द्विवचनान्त एव मन्त्रः । अन्यत्र तु एकवचनान्त एव इति नास्त्यत्र विकल्पोऽपि, इति प्राप्ते, यजमानपरत्वे पत्नीयजमानस्य तावत् सिद्धत्वेनैव वैयर्थ्यम् । दक्षिणादीनां च अश्रुतानां कल्पनात् । तदाम्नानमपि संभवति । अतः देवस्वादिव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकारात्स्वसम्बन्धस्य तृतीये साधितत्वात् तमादाय मेधपतित्वोपपत्तेः देवतापरत्वमेव । वचनं तु तदुद्देशेनैव देवतात्वस्य अग्नीषोमयोः व्यासज्यवृत्तित्वात् एकत्वोपपत्तेः अभिधानभेदेन च द्वित्वोपपत्तेः समाप्युपपन्नमेव । तदुक्तं इय च देवतात्वेऽपि मेधपतित्व सामानाधिकरण्यादेव उपपन्न इति न काचित् क्षतिः । एष च विकल्पोऽपि फलमुखत्वात् न दोषाय । प्रयोजनं पूर्वपक्षे सर्वे द्वयोरपि ऊहः निरूहश्च अर्थभेदानुसंधाने । सिद्धान्ते तु अग्निर्माधिकरणे वक्ष्यते ।

मण्डन— ' स्यादूहन मेधपतेर्विकल्प्यम् । '

शंकर— ' देवतस्वाम्योर्मेधपतिः । ' ऊहः ।

मेधपतित्वं स्वामिदेवतयोः समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् । ९।३।१२।३३ ॥

अग्निष्टोमे एकेषां शाखिनाम् 'मेधपतये मेधम्' इति एकवन्निगदः । अन्येषां शाखिनां तु 'मेधपतिभ्यां मेधम्' इति द्विवन्निगदः । अनयोर्मन्त्रयोः पशुगणेषु विकृतिषु अविकारेण प्रयोगः, उत द्विवचनस्य देवतापर ऊहः एकवचनस्य तु यजमानपरः, अथवा उभयोर्यजमानपर एव, अथवा उभयोर्देवतापर ऊहः इति विचारे प्रथमं पक्षमाह । सर्वत्रैव विकृतिषु अविकारः स्यात् । मेधो यज्ञः, तत्साधनत्वात् पशुर्मेधः । मेधस्य पतिः मेधपतिः । मेधपतित्वं च स्वामिदेवतयोः । स्वामी यजमानश्च अग्नीषोमौ देवता च तत्समाहारत्वात् स्वामिदेवतस्य । समवायात् सम्बन्धात् । दातृत्वेन यजमानस्य सम्बन्धः । ग्राहकत्वेन च अग्नीषोमयोः सम्बन्धः । सर्वत्र च देशेषु आ हिमवतः आ च कुमारीभ्यः पतिशब्दस्य आधिपत्ये प्रयुक्तत्वात् । तस्य च एकवचनान्तमेधपतिशब्दघटितस्य द्विवचनान्तमेधपतिशब्दघटितस्य च मन्त्रस्य प्रकृतौ एव अन्यायनिगदत्वात् एकवचनेन द्विवचनेन वा मन्त्रेण मेधपतीनां वक्तुमशक्यत्वात् । तत्रैवं सति एकत्वं द्वित्वं वा अविवक्षित्वा प्रातिपदिकार्थमात्रेण प्रकृतौ मन्त्रयोः प्रयोगस्य स्वीकृतत्वात् विकृतावपि तथैव प्रयोगात् न दोषः । तस्मात् पशुगणेषु अनूहेनैव मन्त्रयोः प्रयोगः स्यात् इत्येकः पक्षः । पतिशब्दस्य आधिपत्ये सर्वत्र च प्रयुक्तत्वात्, समवायात् स्वामिदेवतस्य मेधपतित्वं स्यात् । एकवचनान्तस्य द्विवचनान्तस्य च मन्त्रस्य अन्यायनिगदत्वात् प्रातिपदिकार्थमात्रविवक्षया च सर्वत्रैव प्रकृतौ विकृतौ च मन्त्रयोरविकारः स्यात् । इति सूत्रपदानामन्वयोऽर्थश्च ।

अपि वा द्विसमवायेऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् । ३४ ॥

अग्निष्टोमे मेधपतिशब्दः क्वचित् एकवचनान्तः पठितः मेधपतये इति, क्वचित् द्विवचनान्तः मेधपतिभ्याम् इति । तयोरविकारेण पशुगणेषु प्रयोग इति प्रथमः पक्ष उक्तः, तं निराकरोति अपिवाशब्दः । अथ द्वितीयं पक्षमाह । मेधपतिशब्दस्य द्विसमवायो भवति स्वामिनि देवताद्वन्द्वे चेति द्वयोः समवायः । येषामेकवचनान्तो मेधपतिशब्दः तेषां स स्वामिनमभिप्रेत्य स्यात् । येषां तु द्विवचनान्तः तेषां अग्नीषोमौ अभिप्रेत्य स्यात् । एवं अर्थान्यत्वे अर्थयोः स्वामिदेवतयोः अन्यत्वे भिन्नत्वे सति यथासंख्यं प्रयोगः स्यात् । प्रकृतौ एकवचनान्तस्य स्वामिनमपेक्ष्य प्रयोगः, बहुयजमानकेषु च ऊहेन प्रयोगः । द्विवचनान्तस्य देवताद्वन्द्वमपेक्ष्य प्रकृतौ प्रयोगः बह्वीषु देवतासु सतीषु ऊहेन प्रयोगः इति यथासंख्य

प्रयोगः स्यात् । स्वाम्यपेक्षया एकवचनान्तः देवतापेक्षया द्विवचनान्तः इति यथासंख्यता । अयं द्वितीयः पूर्वपक्षः ।

स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३५ ॥

वाशब्दो द्वितीयपक्षनिरासार्थः । अग्निषोमीये मेषपतिशब्दः स्वामिनो बोधकः स्यात् । एकवचनान्तः यजमानपरः द्विवचनान्तस्तु देवतापरः इति वैरूप्यं तु न युक्तं ऐकशब्द्यात् एकस्य शब्दस्य एकस्मिन्नेव वाक्ये अनेकार्थपरत्व अन्याय्यत्वात् । ननु द्विविधो अपि मेषपतिशब्दो देवतापर एव किं न स्यात् इति चेत्, एकवचनान्तमेषपतिशब्दस्य एकदेवताके विकृतौ उत्कर्षः स्यात्, स च प्रकरणविरुद्धः । तस्मात् देवतापरः । किन्तु स्वामिपर एव । ननु द्विवचनस्य का गतिः स्वामिपरत्वे । उच्यते । द्वितीयशब्दः द्विवचन पत्न्या स्यात् पत्नीं अभिप्रेत्य द्विवचनं युज्यते । तथा च यजमानपत्नी यजमानमभिप्रेत्य मेषपती इत्येकवचनान्त पत्नीयजमानौ अभिप्रेत्य मेषपतिभ्यां इति द्विवचनम् । पत्न्यभावे तु यत्र यजमानसिद्धिः तत्र ऊहेन तयोः प्रवृत्तिः मेषपतिशब्दः नैव देवतापरः इति तृतीयः पक्षः ।

देवता तु तदाशीष्ट्वात् संप्रदानत्वात् स्वामिन्यनर्थिका स्यात् । ३६ ॥

तुशब्देन तृतीय पक्ष निरस्य चतुर्थ सिद्धान्तपक्षमाह । देवता मेषपतिशब्दार्थः स्यात् । तदाशीष्ट्वात् ताभ्यां देवताभ्याम् आशास्यते इतरेन तु मन्त्र तदाशीः, तस्य भाव. तदाशीष्ट्वं तस्मात् देवतापरत्व मन्त्रगतमेषपतिशब्दस्य । 'आशासाना मेषपतिभ्यां मेषं उपनयत मेष्या दुरः' इति । स्वामिनि मेषपतिशब्दस्य स्वामिपरत्वे तु सा आशीः अनर्थिका स्यात् संप्रदानत्वात् स्वामिनः यतु प्राप्त एव पूर्वमपि, इति पुनराशासन व्यर्थम् । तस्मात् मेषपतिशब्दः देवतापर एव । तस्मात् देवताप्रकृत्वे एव ऊहः ।

उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३७॥

अग्निषोमीयगतमेषपतिशब्दो देवतापर इति सिद्धान्त उक्त. । यत्तु तस्मिन् यजमाने पतित्व मेषपतित्व तत् भक्त्या गौण्या वृत्त्या । उत्सर्गात् 'अग्नीषोमाभ्यामिदं न मम' इति यजमानेन पशोरुत्सर्गः कृतो भवति इति उत्सर्गकर्तृत्वात् गुणात् यजमानस्य मेषपतित्वं स्यात् । मुख्यं तु मेषपतित्व देवताया एव ।

चरुश्चाप्येवैकसंयुक्तो द्विदेवतेऽसंभवात् । ३८ ॥

अग्निषोमगतमेषपतिशब्दस्य देवतापरत्वे द्विदेवते द्विदेवताके पशुगणे एवमयुक्त. एकवचनान्तो मेषपतिशब्दः असंभवात् न संभवतीति कृत्वा उत्कृष्येत मेषपतिशब्दस्य एकदेवताके पशौ उत्कर्षः कर्तव्यः स्यात् इति यदुक्तं 'उत्कर्षो देवतायां स्यात्' (९।३।१३।३४) इत्यत्र तत् परिहर्तयन् । अनुवादसूत्रमेतत् ।

एकस्तु समवायात् तस्य तल्लक्षणत्वात् । ३९ ॥

अग्निषोमगतमेषपतिशब्दः एकः सः अग्नीषोमयोर्गणः उत्तरः । समवायात् अस्मिन् गणे मेषपतिशब्दस्य यान्वकरेन ग्रहणात् । 'आशासाना मेषपतये देवतागणाय मेषं उपनयत' इति उच्यते । तत्र गणस्य च तल्लक्षणत्वात् सः एकत्वरूपः गुणः लक्षणं यस्य तादृशत्वात् । गणस्य एकत्वात् एकवचनान्तमेषपतिशब्दप्रयोगस्य युक्तत्वे इत्यर्थः । गुणस्य अर्थः अनुक्तगुणसमुच्चयार्थः । द्विवचनान्तमेषपतिशब्दोऽपि गणगताव्ययवापेक्षया उपपन्नः इति । तस्मात् एकवचनान्तो गणवाची मेषपतिशब्दः एकदेवताके पशौ नोत्कर्षणीयः ।

संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् । ४० ॥

अग्निषोमगतमेषपतिशब्दः द्विवचनान्तोऽपि क्वचित् पठ्यते मेषपतिभ्यां इति । तस्य देवतापरत्वेऽपि न विरोधः संसर्गित्वात् अग्नीषोमात्मकदेवतागणस्य । संसर्गी अवयवों देवता नाम । तदा सहभावों कदाचित् एका देवता भवति । द्वौ अर्थौ संसृष्टौ एकता यातः तस्मात् एकवचनान्त. द्विवचनान्तोऽपि मेषपतिशब्दः प्रकरणेन अभिनिविशते । तस्मात् विरोधाभावात् तेन द्विवचनान्तेन सह एकवचनान्तस्य विकल्पः स्यात् प्रकृतावेव । विकृतौ बहुदेवताके ऊहेन प्रवर्तिष्यते ।

एकत्वेऽपि गुणवत्पायात् । ४१ ॥

अग्निषोमगतमेषपतिशब्दः एकवचनान्त. पठ्यते । तत्र एकवचनेन एकत्वे विवक्षितेऽपि गुणान्यायात् एकत्वस्य गुणस्य अग्नीषोमरूपदेवतागणे अन्तर्भूते अग्नी

होमे च प्रत्येकं अन्वयात् अनाम्नानात् तद्भिन्नस्य 'मेधपतये मेधं उपनयत' इति वचनं यजमानत्वात् एक-वचनान्तस्यापि मन्त्रस्य प्रकरणाद्विकर्षः । देवतान्तरेण एकत्वात् एकवचनं मेधपतिशब्दस्योपपन्नम् । अग्नी-षोमरूपान्तरेण च द्वित्वात् द्विवचनमपि उपपन्नम् । तस्मात् देवतानुसारेण विकृतौ मेधपतिशब्दस्य ऊहः न यजमानानुसारेण इति सिद्धान्तः । के.

● 'मेधपतित्वं स्वामिदेवतयोः०' (० देवतयोः इति सुपाठः) इति आनन्तर्यसूत्रस्थमेधपतिशब्दस्य 'स्वामिनो वा०' इत्यनन्तरसूत्रे अनुवृत्तस्य पूर्वसूत्रगतस्यानुषङ्गः । सु पृ. १४७.

● मेधपतिशब्दस्य अधिगुप्रैषगतस्य एकवचना न्तस्य एकादशिन्यां बहुवचनान्तेन ऊहः । भा. ९।३। १४।४४. मीको पृ. ३४० 'अधिगुप्रैषगतस्य मेधपति-शब्दस्यैकवचनान्तस्य एकादशिन्यामूहः' इत्यत्र अधि-करणं द्रष्टव्यम् । ● मेधपतिशब्दस्य अधिगुप्रैषगतस्य एक-वचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन निवृत्तिः । ९।३।१३।३९-४३. मीको. पृ ३४० 'अधिगुप्रैष-गतस्य मेधपतिशब्दस्यैकवचनान्तस्य बहुदेवत्ये पशौ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● मेधाप्राप्तिः वचामक्षणेन भवति । सु पृ ५९.

● 'मेधातिथिर्मेधः' इत्येवमादि अतिहासवचनमिव प्रतिभाति । इतिहासे च नित्ये सति आदिमत्त्वदोषो वेदस्य प्रसज्येत । अस्तु इति चेत् तथा सति तत्प्रामाण्यात् मेधातिथेर्हि कण्वायनस्य मेष इत्यप्रसिद्धिः । भा १।१।१६।४४

ॐ मेध्याधिकरणम् । अग्नीषोमीयपशावधिगुप्रैष-प्रश्नोऽदृष्टविधिः अविहितप्रकरणगताया सारस्वत्या मेष्या न पठनीयः । पूर्वचिन्ता ॥

लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सार-स्वती स्त्रीत्वात् । ९।१।१७।४५॥

भाष्यम् — अस्ति ज्योतिष्टोमः । तत्र पशुः समा-म्नातः 'आ देव. पशूनामिषो आलभन्ते, ऐन्द्राग्न पशुमर्थ्यं, ऐन्द्रो वृष्णि षोडशिनि, सारस्वती मेष्य तिरात्रे' इति । अस्ति तु अग्नीषोमीये अधिगुप्रैषः

'उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्' इति । तत्र संदेहः किं सारस्वत्या मेष्यामधिगुवचनं कर्तव्यम्, नेति । नन्वग्नीषोमीयार्थं तत्, चोदकेनेह प्राप्त-मिति । अत्रोच्यते । सर्वेषां समानो विधिरिति कृत्वा चिन्ता । किं तावत् प्राप्तम् ? समानविधानेषु पशुषु, अप्राप्ता सारस्वती मेषी अधिगुवचनम् । कुतः ? लिङ्ग-विशेषनिर्देशात् । विशिष्टलिङ्गो ह्यधिगुवचनेन निर्दिष्टः, 'प्रास्मा अग्निं भरत' इति पुंपशुः, स्त्रीत्वं चास्याः । न च पुंवचनः स्त्रियमभिवदितुमलं भवति शब्दः । तस्मादधिगुवचनमप्राप्ता सारस्वती मेषीति ।

टुप्— चतुष्पुं पशुमेकवचनान्तोऽयमर्थ एव प्रारभ्ये शब्दः । उच्यते । प्रातिपदिकार्थस्तावद्धियते । वचनेन यथा प्रातिपदिकं नोल्लङ्घ्यते तथा वक्ष्यामः पाशाधिकरणे (९।३।८) । तस्मात् समवेतवचनः, प्रातिपदिकार्थसंम-वात् । स्त्री तु पुल्लिङ्गेन न शक्यते वदितुम् । नात्र लिङ्ग वचनमिव विभक्त्यर्थः । किन्तु प्रातिपदिकार्थो लिङ्ग-मित्युक्तम् । तस्मात् मेष्यामभावो युक्तः, असमवेतार्थ-त्वादिति सिद्धान्तवादी मन्यते, 'लिङ्गविशेषनिर्देशात्' इति ।

पश्वभिधानाद्वा, तद्धि चोदनाभूतं, पुंविषयं पुनः पशुत्वम् । ४६ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति अप्राप्ता सारस्वती अधिगुवचनमिति । सारस्वत्यामप्यधिगु-वचनं स्यात् । कुतः ? प्रकरणात् । समानं प्रकरणं सर्वेषां पशूनामिति कृत्वा चिन्त्यते । तेन सारस्वत्या अपि प्राप्नोतीति । लिङ्गविशेषाद्युक्तं गम्यमिति यदुच्यते, तत्र । पश्वभिधानात् । अस्ति तत्र पशुः संनिहितम् । तदभिप्रेत्य 'प्रास्मा अग्निं भरत पशवे' इति ब्रूयात् । तद्धि चोदनाभूतं सर्वनामशब्दस्य पुंविषयत्वम् । तत् पशुशब्देनोच्यते । अस्ति च तत् मेष्याम् । तदभिप्रेत्य पशुशब्दसमानाधिकरणः सर्वनामशब्दः समुच्चारयिष्यति । एवं प्रकरणमनुग्रहीष्यते । तस्मात् प्राप्नुयात् सारस्वती अधिगुवचनमिति ।

टुप्— पूर्वस्मात् ■ भवेत् । पशुशब्देनात्र सामानाधिकरण्यं भविष्यति, 'प्रास्मै पशवे' इति ।

तच्च पशुशब्दवाच्यं मेध्यामपि विद्यते । तस्मात् समर्थो निगदोऽयम् । 'पश्वभिधानाद्वा' इत्यनेन प्रतिपाद्यते ।

विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥

भाष्यम्— वाशब्दः एतं पक्षं व्यावर्तयति । नैतदस्ति प्राप्नुयात् सारस्वत्यभिगुवचनमिति । अयमन्यः पक्षः, न प्राप्नुयादिति । कुतः ? विशेषो वा तदर्थनिर्देशात् । पुमर्थे ह्येष शब्दो निर्देष्टुं शक्नोति । स्त्रीलिङ्गश्चायमर्थो मेषीति । स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुमिति प्रथम एव पक्षः संकीर्तितः । केवलं परपक्षव्यावर्तकस्तिर्यक्त्वा ।

टुप्— 'विशेषो वा तदर्थनिर्देशात्' इति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते ।

पश्वर्थं चैकशब्द्यात् । ४८ ॥

भाष्यम्— अथ यदुक्तम्, पशुत्वाभिप्रायमेतद्वचनम्, एको हि शब्दः पशुत्वस्य च पशोश्च, तेन प्रास्मै प्राय इत्यभिसम्बन्धो भविष्यतीति । तत् परिहर्तव्यमिति ।

टुप्— 'पशुत्वं चैकशब्द्यात्' इति पशुशब्दोऽत्र पुंलिङ्गः । अस्मैशब्दोऽपि, तयोर्यत् सामानाधिकरण्यम्, तत् प्रति उच्यते ।

यथोक्तं वा सन्निधानात् । ४९ ॥

भाष्यम्— यथोक्तं स्यात् अध्रिगुवचनं अप्राप्ता सारस्वती । कुतः ? पूर्वस्मादेव कारणाल्लिङ्गविशेषादिति । यदुक्तम्, पशुशब्दसामानाधिकरण्यः सर्वनामशब्दः प्रयोक्ष्यते इति, तन्न । कुतः ? सन्निधानात् । संनिहितवचनो हि सर्वनामशब्दः । उच्चरितमात्रे यः पदार्थः शब्देन संनिहितः, तेन सम्बध्यते । अथ तस्मिन्नसति लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते । संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नोति । संनिधानात् तत्रैकं सामान्यं व्याश्रीयते, नान्यत् किञ्चित् पशुत्वादि । तत्रोच्चार्यमाणे पशुशब्दे, शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे, 'अस्मै पशवे' इति शक्यते संबन्धः कर्तुम् । अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति । तस्मादप्राप्ता सारस्वत्यध्रिगुवचनमिति । कृत्वा चिन्तेयम् । अत्र प्रयोजनं न वक्तव्यम् । किमग्नीषोमीयार्थाः पशुधर्मा उत साधारणा इत्यस्मिन्नधिकरणे प्रयोजनाय विचारोऽयम् । यदि साधारणाः पशुधर्मास्ततः सारस्वत्यध्रिगुवचनमप्राप्तम्, अथाग्नीषोमीयधर्मास्ततोऽस्यामध्रिगुवचनमूहेन प्राप्यते । न च प्रयोजनस्य प्रयोजनं वक्तव्यम् ।

टुप्— 'यथोक्तं वा सन्निधानात्' इति पूर्वपक्षवादिना यदुक्तं तदेतेन निराक्रियते । सन्निहितवचनत्वं सर्वनामशब्दानां स्वभावः । उच्चरितमात्रः सर्वनामशब्दो यच्छब्दान्तरेण सन्निधाप्यते, तेन सह शीघ्रं सम्बध्यते । न चेह पशुशब्द उच्चरितः, येन सम्बन्धः स्यात् । तस्मिन्नसति शब्दोपात्ते, संबन्धप्रकारः आश्रीयते प्रकरणालोचनेन । 'लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते' इति कोऽर्थः (आदिशब्दस्य रूपशब्दस्य च कोऽर्थः इति प्रश्नः)। जातिलिङ्गसंख्याविशेषणविशिष्टां व्यक्तिमभिदधाति रूपेण स्वसामर्थ्येनेत्यर्थः । सर्वनाम्नामेतदेव सामर्थ्यम्, यदेतानि विपरिवर्तमानमेवाभिदधति । व्यक्तिस्तु विपरिवर्तते । अथवा, रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते । तत्र विद्यमानं यदि विपरिवर्तते प्रकरणसंनिहितम् । संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति । यद्वद् सन्निधानविशिष्टं तत्तदभिदधति । तस्मात् संनिधानमेव सामान्ये निमित्तम् । संनिहितं च पुंलिङ्गम् । यद्यपि स्त्रीलिङ्गमपि संनिहितं तथाप्यसमर्थः शब्दस्तत् वदितुम्, पुंलिङ्गत्वात् । 'तत्रोच्चार्यमाणे पशुशब्दे' इति । उच्चार्यमाणः पशुशब्दः 'अस्मै पशवे' इति पुंलिङ्गेन पुंलिङ्गशब्दः शक्यः संबन्धयितुम् । अस्मिन् पक्षे व्यक्तितो निष्कृष्य पशुत्वम्, तेन सह संबध्यते अस्मैशब्दः, न व्यक्त्या । एतदपि पशुशब्दे उच्चार्यमाणे न भवतीत्युक्तमेव ।

शा— प्रकरणाविशेषात् 'प्रास्मा अग्नि भरत' इति च पुंलिङ्गस्य अस्मैशब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण 'अस्मै पशवे' इत्येवं स्त्रियामपि उपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुवचनम् । इति प्राप्ते, अभिधीयते । 'पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः । तस्मात् प्रयोगकाले यत् परोक्षतया स्थितम् ॥ द्रव्यं, तत्र प्रयुक्तोऽयं पुंलिङ्गं वदितुं क्षमः । न स्त्रीद्रव्यमतो मेध्या-

वरुणीमामिक्षा वशा दक्षिणा ' इतीयं चतुर्थी अवेष्टिः राजसूये । भाट्ट. ११।४।३. ● **मैत्रावरुण्यामामिक्षाया** ' न वाजिनेन प्रचरन्ति ' इति निषेधः । भा. ७।३। १०।२६.

● **मैत्रावरुणादिग्रहेषु** अश्वमार्येषु पयआदिषु प्रदेय धर्मा नानुष्ठेयाः । ३।३।१२।४५-५०. मीको पृ १८६४ ' ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● **मैत्रावरुणादिग्रहापेक्षया** ऐन्द्रवायवस्य प्रथम-मनुष्ठानं ज्योतिष्टोमे । १०।५।१७।६२-६४, कामसंयोगे ऽपि ऐन्द्रवायवस्य ग्रहस्य पाठक्रमे स्वस्थाने एवानुष्ठानम् । १०।५।१८।६५-६६.

● **मैत्रावरुणग्रहः** चतुर्थो ज्योतिष्टोमे मन्त्रकाण्डविधि-काण्डयोः । जै. १०।५।१७, ● मैत्रावरुणग्रहः ज्योतिष्टोमे प्रातःसवने श्रूयते । ३।३।११.

● **मैत्रावरुणदण्डदानन्यायः** ( ४।२।६ ) । न च प्रागुक्तमपि एकमेव मानवत्त्वात् भिन्न यत्नमुपादाय तेनैव मन्यद् उपायहरण ( आहर्गणे ) कर्तव्यमिति वाच्यम्, उपायहरणकालस्य प्रागस्तुते दानविधानात् तस्य च मैत्रावरुणदण्डदानन्यायेन प्राकृतोभीयानुष्ठानमान-सादृशतानुष्ठानकृत्वेन प्राकृतिकत्वावश्यभावात् । भाट्ट. १०।६।१९.

● **मैत्रावरुणपात्रे** पयस्या निदधाति ज्योतिष्टोमे । नियमानाया एवात्र एकदेशप्रयोग, न तु कृत्स्नः । भा. ३।८।१८।३३.

● **मैत्रावरुणप्रैषे** तृतीयसवनोक्ते ' अयं यजमानः ' इत्यत्र ' अयं सुतासुती यजमानः ' इति पाठविकारः । वि १२।२।१२.

● **मैत्रावरुणसाम** शाकरं विश्वजिति सर्वपृष्ठे । भा. १०।६।५।१४.

● **मोक्षः** शास्त्रात् भवति । कथम् ? इत्थम् । यो हि देहात् विविक्तं अनन्तं अजरं अमरं अदुःखमात्मानं जानाति, तस्य देहसंप्रयोगनिरस्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां च कर्मणामननुष्ठानादेव अप्रसवात् देहान्तरानुत्पत्तेः अत्यन्तासंबन्धः शरीरेण भवति । ' तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते । तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ प्रार्थ्यमानं फलं ज्ञातं न चानिष्टो भविष्यति । आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥ ' श्लोवा. संबन्धाक्षेपपरिहारे १०८-१११, रत्नाकरश्च. ● मोक्षः ब्रह्मविषयकसर्वकलाद्यज्ञाननिवृत्तिः । रहस्य. पृ. ९. ● मोक्षः । शरीरसंबन्धो बन्धः । तदभावो मोक्षः । तेन निष्पन्नाना देहानां यः प्रध्वंसाभावः यश्च अनुत्पन्नानां प्रागभावः स मोक्षः । कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति । रत्नाकरः, संबन्धाक्षेप-परिहारे १०६. ● मोक्षस्य धर्मविशेषस्यापि ब्राह्मणपरि-व्राजकवत् भेदेनोपादानम् । सु. पृ १२७.

● ' मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ ' ( श्लोवा. संबन्धाक्षेपपरिहारः ११० ) इत्यनेन न्यायेन काम्य-निषिद्धवर्जनात् तत्कर्मोपभोगार्थं शरीरानुत्पत्तिः । सु. पृ. ३२९. ● न. स्वर्गं न कामयते बन्धात्मकत्वात् मोक्षार्थी तस्य कर्मस्वरूपे एव कर्तव्यता ( न फले ) । टुप्. ६।३। १।२ पृ १४०८, ● मोक्षार्थिनाऽपि अशक्य पापक्षय एषितव्यः, तस्मिन् (अ-)सति मोक्षाभावात् । ६।३। १।२.

● **मोक्षवादः** । कः पुनरयं मोक्षो नाम । विचित्र-वासनाशेन विचित्रनीलपीतादिरूपेण प्रवृत्तो ज्ञानसंता-नस्य निःशेषवासनोच्छेदात् नीलपीतादिविविक्तत्वेन केवल संविन्मात्रेणावस्थानं इति केचित् । अपरे तु दीपसंतानस्येव ज्ञानसंतानस्योपरमम् । उभयमप्येतत् बाह्यार्थाभावमूलं इति तत्सद्भावप्रतिपादनेनैव निराकृतम् ।

अपरे तु प्रपञ्चविलयं अपवर्गमाहुः । अविद्या-निमित्तो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधेनैव ब्रह्मविद्यया अविद्यायां विलीनायां स्वयमेव विलीयते । तथाहि श्रुतिः ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ' इति ।

तदिदमपि प्रपञ्चस्य अविद्यानिमित्तत्वनिराकरणेन परमार्थत्वप्रतिपादनात् निरस्तमेवेति । 'आत्मैवेदं सर्वम्' इति सर्वस्यात्मा भोक्ता इत्यर्थः । यथा 'स कामयेत राष्ट्रं स्याम्' इति राष्ट्रस्य भोक्ता इत्यर्थः, यथा 'स कामयेत सर्वमिदं भवेयम्' इति सर्वस्य भोक्ता भवेयमित्यर्थः, तथा 'आत्मा सर्वम्' इति सर्वस्यात्मा भोक्तेत्यर्थः ।

यत्तु 'यत्र हि द्वैतमिव भवति' इति द्वैतभानस्य भ्रान्तित्ववचनं तदौपचारिकम् । यथा दृष्टं स्वप्नप्रपञ्च इन्द्रजाल-मृगतोयादि कियन्तंचित् कालं दृष्टिपथमापन्नं पश्चात् विलीनो भोग्यतामतिवर्तते, तथा अयं शरीरेन्द्रियविषयरूपप्रपञ्चोऽपि अस्य आत्मनः कियन्तंचित् कालं उपभोग्यः सन् पश्चात् विनाशात् अनुपभोग्यो भवति इत्यनेन सादृश्येन भ्रान्तिः इति उपचारेणोच्यते, पुरुषाणां विषयभोगेषु आस्थानिरसनेन मुक्तौ अभिरुचिं जनयितुम् । यदपि 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति मुक्तौ आत्मनः अद्वितीयत्ववचनम्, तदपि न प्रपञ्चस्वरूपनिषेधार्थम्, किन्तु तत एव प्रपञ्चस्य आत्मसम्बन्धनिषेधार्थम्, 'अस्य' इति वचनात् । नहि अत्र एतावदुच्यते 'यत्र सर्वं आत्मैवाभूत्' इति, किं तर्हि ? 'यत्र त्वस्य सर्वमात्मैव' इति । तेन अयमर्थः, यत्र यस्यामवस्थायां मुक्तौ इत्यर्थः, अस्य आत्मनः द्रष्टृत्वेन दर्शनसाधनत्वेन दर्शनागतत्वेन वा न किञ्चित् अन्यत् स्वस्य विद्यते, किन्तु आत्मैवास्य सर्वं नापरं किञ्चित्, तदा केन कं पश्येदिति । यथा लोके यस्य न किञ्चिदपि बान्धवो वित्तं वाऽस्ति स एव वदति 'न मे किञ्चिदस्ति अहमेव सर्वम्' इति तत्र स्वव्यतिरिक्तं न किञ्चिदस्ति इत्येतावद्विवक्षितम्, एवं मुक्तौ आत्मैवात्मनः सर्वं इति स्वव्यतिरिक्तसम्बन्धाभावमात्रं विवक्षितम्, न प्रपञ्चस्वरूपाभावः । तस्मात् न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः । त्रेधा हि प्रपञ्चः पुरुषं बध्नाति भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः । भोग इति च सुखदुःखानुभवः अपरोक्षानुभव उच्यते । तदस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयो मोक्षः । किमिदं आत्यन्तिकत्वम् ? पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः । कथमत्यन्तानुत्पत्तिः ? उत्पादकयोः धर्माधर्मयोः निःशेषयोः परिक्षयात् । सोऽयं प्रपञ्चसम्बन्धो बन्धः, तद्विमोक्षश्च मोक्षः ।

ननु एवं अशेषधर्मक्षयात् मुक्तस्य न किञ्चित् सुखं स्यात्, ततश्च अपुरुषार्थो मोक्षः स्यात् । नैष दोषः । नहि धर्मजन्यो मुक्तस्य आनन्दः, तथा सति उत्पत्तिमत्त्वात् विनाशी स्यात् । तत्र अपुनरावृत्तिश्रुतेः विरोधः स्यात् । स्वाभाविकस्तु आत्मानन्दः संसारेऽभिभूतः सन् निर्मुक्तसंसारस्य अभिव्यक्तो भोग्यो भवति । स्वाभाविकत्वे च आनन्दस्य 'आनन्दं ब्रह्म' इत्यादिश्रुतिसहस्रं प्रमाणम् । ननु सुखाभावेऽपि श्रुतिरस्ति 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति । सत्यम्, विषयसुखाभिप्रायं तु एतद्वचनम्, अन्यथा आनन्दश्रुतिविरोधात् । अथ सुखाभाववचनबलेन आनन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते ? सुखाभाववचनानां अल्पत्वात् तेषामेव अन्यथा करणं युक्तम्, न भूयसां आनन्दवचनानाम् । किञ्च, आनन्दशब्दस्य दुःखाभावपरत्वे अत्यन्तस्वार्थहानिः स्यात्, सुखशब्दस्य तु सामान्यवचनस्य विशेषेऽपि व्याख्याने नातीव स्वार्थहानिः इति तदेव युक्तम् ।

ननु विद्यमानोऽपि आनन्दः अननुभूयमानः अकिञ्चित्कर एव । न च मुक्तस्य सर्वकरणहीनस्य आनन्दानुभवः सम्भवति । स्वप्रकाशोऽयमानन्द इति चेन्, [illegible] । ननु तथापि आनन्दस्वभाव सुखरूप प्रकाशते एव, आत्मनि प्रेमोत्पत्तेः । नहि असुखे प्रेमोत्पत्तिः सम्भवति नाप्यविज्ञाते सुखे । (उत्तरम्-) किमिदानीं अस्माभिः आत्मा सुखरूपोऽनुभूयते ? इत्यपीति पुराणस्य अविवादसिद्धस्य नोत्तरं वाच्यम् । यदि संसारिणोऽपि परमानन्दं अनुभवेयुः, ततो मुक्तस्य न कश्चिद्विशेष इति तदेव अपुरुषार्थत्वं मोक्षस्यापद्येत । अतो बलात् असुखरूपस्यापि आत्मनः प्रेमविषयत्वं दर्शनात् अङ्गीकर्तव्यम् । अथ स्वप्रकाशोऽपि आनन्दः संसारावस्थायामभिभूतः न प्रकाशते, (तदा) सोऽयं प्रकाशमानत्वाभिमतो नाम ? प्रकाशनिवारणं हि

अभिभवः, न च प्रकाशमानस्य अप्रकाशनं सम्भवति । यदि तु नैव प्रकाशते संसारावस्थायाम्, तस्यामवस्थायां सतः प्रकाशस्य मुक्तावस्थायाम् उपलभ्यमानस्य कारणं वक्तव्यम् । विज्ञानमेव च प्रकाशरूपस्य तस्य कारणम्, तच्च इन्द्रियाधीनम् । न च मुक्तस्य इन्द्रियाणि सम्भवन्ति, इति कथं आनन्दानुभवः स्यात् । उच्यते । बाह्येन्द्रियाण्येव मुक्तस्य निवर्तन्ते मनस्तु तस्यामवस्थायामनुवर्तते इति आनन्दश्रुतिसामर्थ्यादेव अध्यवसीयते, एवं ज्ञानं च, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः, विज्ञानघनश्रुतेश्च । तस्मात् मुक्तावस्थायां मानसप्रत्यक्षेण परमानन्दमनुभवन् आत्माऽवतिष्ठते । तदुक्तम् 'नित्यं यदात्मचैतन्यमानन्दश्चेष्यते च यः । यच्च नित्यविभु स्यादि तेनात्मा नैव मुच्यते ॥' इति ।

यत्तु 'तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते । न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥' इति वार्तिकं (श्लोकवा. सम्बन्धाक्षेपपरिहारः १०६–१०७) तत् परमतं इत्येव आनन्दमोक्षवादिनो मतम् ।

अपरे त्वाहुः, अभावात्मकत्वमनयोः सम्भवः उपपत्त्यभिधानात्, आनन्दवचनं तु उपन्यासमात्रत्वात् परमतम् । नहि मुक्तस्य आनन्दानुभवः संभवति, करणाभावात् । मनः स्यादिति चेत्, न, अमनस्कत्वश्रुतेः 'अमनोनाम्' इति ।

यत्तु 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति, तत् ज्ञानकारणाभिप्रायम्, अन्यथा हि सुषुप्तावपि ज्ञानानुवृत्तिप्रसक्तिः स्यात्, सा च अनिष्टेति इत्युक्तम् । एवं विज्ञानघनः इत्यादीनामपि शक्तिपरत्वं वेदितव्यम् । स्वयमेव श्रुत्या शक्तिपरत्वं व्याख्यातम् 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति भूतेन्द्रियनाशात् आत्माऽपि प्रमाणागोचरत्वमापन्नो विनष्ट इव भवतीति । न तस्य प्रेतस्य मुक्तस्य संज्ञाऽस्तीति । सम्भवति च शक्तस्यापि ज्ञानाभावः इति नास्ति विरोधः । अनया च श्रुत्या सर्वविज्ञानश्रुतयः शक्त्यभिप्राया व्याख्याताः । (ननु) यदि मनश्चिरस्ति तदा तस्या अवस्थाया केन ज्ञानानुवृत्तिः । ज्ञानसाधनानां इन्द्रियाणां ज्ञेयानां च विषयाणामभावात् । एवं अर्थान्तरज्ञाने साधनाभावात्प्रसक्तौ इति स्वात्मानमेव मुक्तावस्थायां जानातु इत्याशङ्क्याह 'विज्ञातारमरे केन विजानीयात्' इति । न हि आत्माऽपि विना साधनेन ज्ञातुं शक्यते । मनसा एतस्मै संसारावस्थायां ज्ञायते । न च मुक्तस्य मनःसम्बन्धोऽस्ति, अतः केनात्मानं जानातु इति व्यक्तमेव मुक्तस्य आत्मज्ञानस्याभावः ज्ञानशक्तिमात्रस्यावस्थानं श्रुत्या दर्शितम् । तस्मात् निःसम्बन्धः निरानन्दश्च मोक्षः । शा. दी. १२५–१२८.

* मोक्षवादः । कः पुनर्मोक्षः ? अत्र केचित्, संस्काराजनकानुभवध्वंसो मुक्तिः इति । केचित्तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मुक्तिः इति । दुःखसमवायिसमवेतमिथ्याज्ञानध्वंसः मुक्तिः इत्यपरे । शरीरेन्द्रियबुद्ध्यादितज्जन्यज्ञानधर्माधर्मध्वंसः इत्यन्ये ।

आत्यन्तिकदुःखाभावो मोक्ष इति गुरवः । संस्कारजनकभोगविषयदुःखध्वंसः इति केचित् । समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसो मुक्तिः इति मणिकृत् ।

प्रपञ्चसम्बन्धविलयो मुक्तिः इति वेदान्तिनः । प्रपञ्चसम्बन्धो बन्धः । तस्य आत्यन्तिकविलयो मोक्षः । तथाहि, भोगायतनभोगसाधनभोगविषयाणां शरीरेन्द्रियाणां संबन्धात् आत्मा बद्ध इत्युच्यते । एतत्कारणधर्माधर्मपरिक्षयात् एतेषामात्यन्तिको विलयः पूर्वनाशापरानुत्पादस्वरूपः ।

न चैवं अपुरुषार्थत्वापत्तिः । सुखवत् दुःखानुत्पादस्यापि पुरुषार्थत्वात्, तत्स्वरूपस्य परमानन्दरूपात्माभिव्यक्तेः मुक्तित्वाङ्गीकाराच्च । तस्य सुखस्य नित्यत्वात् धर्मजन्यत्वाभावात् ।

आत्मनश्च सुखात्मत्वे मुक्तावस्थायां तन्नित्यत्वे च 'आनन्दं ब्रह्मणो रूपम्' 'न स पुनरावर्तते' इत्यादिश्रुतयो मानम् ।

यत्तु 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति मुक्तस्य सुखाभावप्रतिपादनम्, तत् प्रपञ्चसुखाभिप्रायम् ।

ननु मनःशरीराद्यभावात् कथं तदानन्दानुभवः । न च तस्यानन्दस्य स्वप्रकाशत्वम्, संसारावस्थायां तादृशस्य

गतिः । तथैव ज्ञानवर्त्मना प्राप्यते ब्रह्म शाश्वतम् ॥' इति ।

ब्रह्मप्राप्तिर्मुक्तिः इति जीर्णाः ।

नव्यास्तु 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या, 'न कर्मणा न प्रजया' इति श्रुत्या च मोक्षे ज्ञानातिरिक्तसाधननिषेधात् तीर्थस्नानमहादानकाशीमरणादिकर्मणां ज्ञानद्वारैव मोक्षजनकत्वाच्च ज्ञानमेव साक्षात् मोक्षजनकम् । कर्म तु ज्ञानजनकान्तःकरणशुद्धिजनकम् ।

न च 'तमेव' इति आत्मातिरिक्तविषयकज्ञानस्य मोक्षजनकत्वपरिसंख्या इति वाच्यम् । ज्ञानस्य मोक्षजनकत्वेन नियतप्राप्त्यभावात् परिसंख्यानुपपत्तेः । वाक्यान्तरप्राप्तपरिसंख्यायां तत्त्वज्ञानस्य 'नान्यः पन्थाः' इति निषेधस्य चानुपपत्तिः ।

एतेन उपनिषज्जन्यज्ञानातिरिक्तमायाद्यभ्यासादिजन्यज्ञानपरिसंख्या इति परास्तम् । अध्ययनविधिनैव प्राप्तेः ।

न चैवं उपनिषदध्ययनजन्यतत्त्वज्ञानस्य त्रैवर्णिकेष्वेव संभवात् शूद्रादीनां मुक्तिर्न स्यादिति वाच्यम् । तेषामपि 'श्रावयेच्चतुरो वर्णान्' इति पुराणश्रवणविधिना तत्त्वार्थज्ञानसत्त्वात् मुक्तिसिद्धेः । अतोऽयं ज्ञानस्य मोक्षसाधनत्वविधिः, 'नान्यः पन्थाः' इति तद्व्यतिरिक्तकर्मणः साक्षात्साधनत्वनिषेधः । 'न चतुर्विंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इतिवत् । एतन्निषेधवशादेव कर्मणां मोक्षसाधनत्वबोधकश्रुतयः परंपरासाधनत्वपराः । अत एव 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति श्रुतेः अविद्यारूपकर्मणः मृत्युतरणशब्दलक्षिताज्ञाननाशस्य आत्मज्ञानद्वारकत्वबोधकश्रुतिरपि संगच्छते । 'न कर्मणा' इत्यादि श्रुतिरपि परंपरया मोक्षसाधने सन्न्याससाहचर्यनिषेधनद्वारा सन्न्यासशास्त्रत्वबोधिका कर्मणा परंपरया साधनत्वं बोधयति, न साक्षात् । एवं 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतिरपि कर्मणा ज्ञानार्थत्वमेव बोधयति, न साक्षात् मोक्षार्थत्वमिति ।

न चैवं ज्ञानेन संचितकर्मविनाशेऽपि शरीरजनकनित्याकरणजन्याधर्मविनाशायोगात् मोक्षो न स्यादिति वाच्यम् । तस्य संचितविनाशकत्ववत् अधर्मानुत्पादकत्वस्यापि अङ्गीकारात्, उत्पन्ननाशाङ्गीकाराद्वा ।

न चैवं वेदान्ताध्ययनजन्यतत्त्वज्ञानोत्तरं मुक्तिः स्यात् इति वाच्यम् । प्रारब्धस्य प्रतिबन्धकत्वात् ।

न चैवं संचितानां प्रायश्चित्तेन, प्रारब्धानां भोगेन नाशात् निरर्थकमिदं अनुवादात् तत्त्वज्ञानस्य अनुपयोग इति वाच्यम् । सुखभोगयोग्यदेहजनकधर्मविनाशद्वारा तस्य मोक्षोपयोगित्वात् इति जीर्णाः ।

अन्ये तु तत्त्वज्ञानस्य संचितनाशकत्ववत् प्रारब्धनाशकत्वमपि । तत्त्वज्ञानव्यक्तिविशेषस्यैव मोक्षजनकतया तदुत्तरमेव मुक्तिः । जीवन्मुक्तादिव्यवहारस्तु शरीरस्य तत्त्वज्ञत्वेन बाधात् भाक्तः इत्याहुः । मणि. पृ. ५५-५९.

* मोक्षसंबन्धि यत् तत् वेदप्रभवम् ।- शा. १।३।१।२.

* 'मोघमन्नं विन्दते अप्रचेताः' अत्र निर्विषयुक्तवाक्यान्तरकल्पनात् मन्त्रकल्पः प्रतिषेधः । शाल. पृ. २०.

* मोदकापूपादयस्तेषां शानमक्षणादि सदाचारः । शा. १।१।३। पृ. २०५.

* 'मौद्गं चरुं निर्वपेत् श्रीकाम' अत्र मुद्गानां मोपचणकादयः प्रतिनिधयो भवन्ति, 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः' । वि. ६।३।९. * मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्य ऊहः । ९।३।२।३ मीको. पृ. ११२६ 'ऊहः रक्तपदस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* मौलिना स्वामिप्रायपरिशासनद्वारा अर्थज्ञापनं अक्षिनिकोचादिना क्रियमाणं न श्रेयःसाधनम् । सु. पृ. ३१८.

* म्रक्षणग्रन्थस्य मैथुने प्रयोगो दृश्यते । सु. पृ. १७८.

* म्लेच्छाः. पक्षिणां पोषणे बन्धने च अभियुक्ततराः । भा. १।३।५।१०. * 'येषां दर्शनमात्रेऽपि

वेद एव न पठ्यते । समाचारोऽपि च न म्लेच्छैः सहासार्यनिवासिनाम् ॥ तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ॥ ' ( इदं पूर्वपक्षे ) । वा. १।३।५।१०.
• म्लेच्छेभ्यः अन्यजनपदवासिभ्यः आर्यावर्तनिवासिना सर्मीचीनतरः आचारो भवति । मा.२।३।२।२.
• 'तस्मात्पथैव मेषादौ यवादिषु च कौशल्यम् । म्लेच्छानामधिकं तद्वदभिधेयार्थनिर्णये ॥ ' वा. १।३।५।१०,
• यस्तु कथमपि अज्ञात एव शब्दः म्लेच्छानामपि प्रयोगविषयतामत्रः तस्य च आर्यैरेव अनादिवृद्धव्यवहारपरम्परया अर्थं जानन्ति तत् किं तेषां निराकर्तुं शक्यते । १।३।५।१० पृ. २२८.

• म्लेच्छादीनां दुर्गमदेशान्यथासिद्धत्वेन वेदव्यवहाराभाव. । ऋजु पृ. १५५. • यानि पुनः अनुपलब्धवेदमूलानाना म्लेच्छादीनां अतीन्द्रियार्थस्मरणानि तेषां मूलकल्पनापेक्षायामेव चोदना समाचनायत नास्त्येव इति मिथ्याभ्रमेतुभूतमनुरागादीनामेव व्यक्तमास्तम् । समानित्वात् पुनश्चोदनाया कारणान्तरनिषेधे कृते निर्मूलत्वासंभवात् परिशेषसिद्धं चोदनामूलत्वम् । वा. १।३।१।२.
• म्लेच्छार्यप्रयोगविप्रतिपत्तौ वाक्यार्थविचारः । वा १।३।८।१ पृ. २१९.
• म्लेच्छदेशाः अनन्ताः । 'अनन्तम्लेच्छदेशाश्च कः सर्वानुपलप्स्यते । अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम् ॥ ' वा. १।३।५।१० पृ. २२५.
• म्लेच्छप्रयोगः । 'दृष्टार्थेषु तु ( कर्मसु ) तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् । ' वा. १।३।४।९ पृ २१९.
• म्लेच्छप्रसिद्धोऽर्थः पिकनेमादिशब्दाना ग्राह्यः, न तु निगमनिरुक्तादिना कल्पनीयः । पिकनेमाधिकरणम् । १।३।५।१०.
• म्लेच्छप्रसिद्धिः आर्यविरुद्धा नादरणीया । आर्यविरोधे आर्यप्रसिद्धौ न म्लेच्छप्रसिद्धिरपि आदरणीया । पिक- नेम- तामरस- इत्यादिशब्दार्थविषये निर्णयोऽयम् । वि. १।३।६, • म्लेच्छप्रसिद्धया वराहशब्दस्य कृष्णशकुनिरर्थः, स न ग्राह्यः । आर्यप्रसिद्धया तु सूकर एवेवार्थो ग्राह्यः । १।३।५.
• म्लेच्छभाषा ' न म्लेच्छभाषा शिक्षेत ' इत्येवमादिस्मृत्यनुसारेण शिमबल्लिन्यान्तरस्मृत्यनुगमश्चयोगुरश्रितवर्णाधिकृतार्यावर्तनिवासिन्यति रिक्तवर्बरादिभाषायामस्य म्लेच्छितत्वसमानाधिकरणापशब्दत्वज्ञानात् तेन भाषण प्रतिषिध्यते । पुष्ट च तस्य अदोषवत्तामाचरणवत् परिहरणीयत्वम् । वा. १।३।८।२४पृ २५८.
• 'यथा शास्त्रानुरूपत्वात् प्रमादाशक्तिजेष्वपि । वाच्यते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥ ' वा. १।३।८।१ पृ. २१९.

## य

• 'यजतिषु द्रव्यकल्पनैकत्वसंयोगात्.' ( ४।३।५।१४ ) इति न्यायेन याग विना द्रव्यदेवतासम्बन्धयोगः । सु. पृ. ७४३. • यजतिः भावनाविधानार्थः ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादौ । मा. ११।१।१३, • यजतिः यत्र अयने [illegible] अहीनसूक्तस्य द्वादशाहस्य प्रकृतिः । ८।१।१।२७, • यजति समुदायवचन ' दर्शपूर्णमासाभ्यां यजेत ' इति । किमर्थ तर्हि दर्शपूर्णमासशब्दः ? निरपेक्षतानामन्नम् ( अर्थविधानपक्षे ) । ११।१।१।१३, • यजतेः स्वार्थपरत्वम् । २।२।१।१. • यजतेः देवपूजाद्यनात्मकत्वनिरासम् । संकर्षे. २।४।१. • यजतेः न विवक्षा गुणे फलकल्पनायाम् । मा १।४।२।३ • यजते स्वत्वत्यागरूपत्वस्थापितत्वम् । स्वत्वत्यागस्तावत्प्रक्षिप्त-देवतोद्देश्यक-द्रव्यत्यागो यजिवाच्यः । माणि. पृ.१०२. • ' यजतिषु ये यजामहं करोति नानुयाजेषु ' अयं अन्वयतः उद्देश्यविशेषणपर्युदासविधिः । बाल. पृ. २०, • 'यजतिषु ये यजामहं करोति नानुयाजेषु ' अत्र पर्युदासविधि. इत्यर्थ. । पृ २१. • यजतिषु 'ये यजामहे' इति मन्त्रः अनारभ्यवादेन प्राप्त । नानुयाजेषु इति च अनुयाजेषु प्रतिषेधः । तत्र अनुयाजवर्जितेषु यजतिषु ' ये यजामहं करोति ' इति पर्युदासः न तु विकल्पः । मा. १०।८।१।१-४.

● यजत्यर्थः । 'इदं द्रव्यं नेतःप्रभृति कस्मिंश्चित् स्वकार्ये विनियोक्ष्यामि' इति संकल्परूपे मानसे त्यागे, वाचिके च ■ ममेतिशब्दोच्चारणरूपे कृतेऽपि हस्तादिना उपादाय क्वचिद्देशे निक्षेपरूपं कायिकं त्यागं विना यागापरिसमाप्तेः । मु. पृ. १५२७ ● यजत्यर्थस्य यत् कार्यं तत् प्रधानम् । तद्धि कर्मव्यतया चोद्यते । भा. ९।१।१।१ वर्णकं २.

● यजतिचोदनः सोमः, दर्विहोमाः पुनः जुहोति-चोदनाः । भा. ८।४।१।१२. ● यजतिचोदनाः अहीनाः, आसनोपायिचोदनानि सत्राणि । वि. १०।६। १६. ● यजतिचोदनात् स्वामिना च अपरिमितपरि-माणत्वात् अहीनत्वम् । भा. १०।६।१७।६१.

▆ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् । ४।२।१२।२७ ॥

अत्र सूत्रे यागलक्षणं उच्यते यागप्रयोगो वा कथ्यते । यजतिचोदना यजति यजेत् यजेत इति यजधातुः द्रव्यं च देवता च 'न मम' इति त्यागरूपा क्रिया च येषां समाहारं द्रव्यदेवताक्रियं ब्रवीति, एतावान् यागपदार्थः । यजतिचोदनायाः समुदाये द्रव्यदेवतात्यागसमुदाये कृतार्थत्वात् अर्थस्य परिपूर्णत्वात् । के.

● 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' इत्यत्र देवतोद्देश्यकद्रव्यत्यागो यागः, स एव प्रक्षेपसहितो होम, इति गम्यते । कु ३।४।१८।४७. ● उत्पत्तिविधिगुणविधौ तु उत्पत्तिवाक्यपरिपठितामिक्षादि-पदस्य द्रव्यसामान्यपरत्वे तत्पदवैयर्थ्यापत्तिः तद्विशेषा-स्येति सर्वेनाम्नः 'यजतिचोदना द्रव्यदेवताक्रियं०' इति न्यायेन यागचोदनामात्रेण च द्रव्यसामान्यलाभात् । अद्वैत. २।२९।४०–४१.

▆ यजतिचोदनासु प्रक्षेपान्तत्वम् ॥

'आग्नेयोऽष्टाकपालो भवति' 'वैश्वदेव्यामिक्षा' इत्यादौ द्रव्यदेवतासंबन्धमात्रश्रवणेन हविषो मन्त्रणादार-भ्योत्सर्गादाविव त्यागमात्रं कर्तव्यं नाहुतिः । इति प्राप्ते, यजतेर्देवपूजादानान्यतरवाचित्वेन देवता गन्धादिभि-रिज्यते, विप्राय दीयते इत्यादौ च त्यागानन्तरस्य प्रक्षेपान्तताप्रतीतेर्देवताविग्रहाभावेन परस्वत्वमापादयितुं त्यागानन्तरस्यैव प्रक्षेपः । अत एव 'मध्येऽग्नेराहुतीः पश्चाहुतीः पुरोडाशाहुतीश्च जुहोति' इति श्रुत्युपपत्तिः । सकर्ष. २।४।१.

● यजतिचोदनोत्पत्तिषु पुनः सिद्धयोः त्याग-देवतोद्देशयोः जुहोतिः प्रवर्तमानः प्रक्षेपमात्रवचनो विज्ञायते । वा. ३।४।१४।४१ पृ. ९८६.

● यजतिचोदनत्वे सति अहर्गणसाध्यत्वमहीन-त्वम् । १०।६।१६।६०–६१. 'यजत्यासनोपायि-चोदनत्वम्०' इत्यत्र द्रष्टव्यम् ।

● यजति-जुहोति-इत्यादौ शब्दान्तरं कर्मभेदकं प्रमाणम् । २।२।१।१. 'शब्दान्तराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● यजति-ददाति-जुहोति-इत्यादिभ्यः यत्नाद्य-र्थश्च गम्यते भावयेदिति च । भा. २।१।१।१.

● यजतिपदाभ्यासात् कर्मभेदः 'समिधो यजति, तनूनपातं यजति' इत्यादौ । भा. २।२।२।२.

● द्रव्यदेवताक्रिये यजतिशब्दो वर्तते । भा. ६।१। १।२.

● यजतिशब्दवाच्यमेव धर्मं समामनन्ति 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इति । भा. १।१।२।२.

● 'यजतीयेऽह्नि सोमभेद् ब्राह्मणो विधि दृश्यते । तत्र ब्राह्मणमिहत्या दण्डं दद्याद् द्विजातये ॥' अयं दण्डकल्पः प्रतिषेधः । याज्ञ. पृ. ३०.

● यजमानः एक एव ज्योतिष्टोमे । वि. ३।१। १५. ● 'यजमानः एककपालः' इत्यत्र एककपालस्य यजमानशब्देन स्तुतिः, न तु यजमानशब्दो नामधेयं नापि गुणविधिः । १।४।१३. ● यजमानः गृहपतिरेव सत्रे शुल्कयागसंभवाद्विप्रयजमानकर्ता, न य. गोऽपि । १२। ४।१३।३४. ● यजमानः द्विपत्नीको बहुपत्नीकश्चापि । भा. ९।३।६।२०. ● 'यजमानः प्रस्तरः' इति समा-म्नायते । तत्र किमेष गुणविधिः किमर्थवादः इति संदेहे एवंजातीयकः अर्थवादः न विधिः इति सिद्धान्तः ('यजमानः प्रस्तरः' इति यजमानशब्दः प्रस्तरस्य स्तावकः, उभयोः कर्मसाधकत्वात्) । भा. १।४।१२।

यथाकथंचित् प्रातर्होमं कर्तव्यं प्रशान्ताग्न्यातिनिमित्त दोषपरिहारार्थम्। धा ७।२।५।१६ पृ ५०८.

● यजमानाध्वर्युभ्यामुभाभ्याम् 'वाचस्य मा०' इति मन्त्रो दर्शपूर्णमासयो पठनीय । वि. ३।८।८

● यजमानाध्वर्यूभयगामि 'मदम्' इति मन्त्रोच्च फल ज्योतिष्टोमे उपरवेषु। वि ३।८।२६

● यजमानाध्वर्यूभयप्रयोज्यो 'वाचस्य मा०' इति मन्त्र दर्शपूर्णमासयो । वि ३।८।८.

● यजमानानेकत्वे अहीने गुरुन्वारम्भादीनामेक यजमानकर्तृत्वम् । १२।४।११।२२। स चैक अनियत । १२।४।१२।२३.

● यजमानान्वारम्भ गुरुचापारगुरुप्रशान्ते। सोम. ४।१।४.

● यजमानार्थं हि कर्म साद्गुण्य। मा ६।८।११।२६.

● यजमानावेक्षितेन परयवेक्षितेन चाज्येन होम उत्पद्ये। तन्नान्यतराभावे वैगुण्यम्। मा ६।१।१२०।४२.

● यजमानाहवनीययो मितापुनभावश्च च । सनर्प ३।४।१

● यजमान ऋत्विगुभयगामि-फलविधि मन्त्र 'विमन, भद्र तनौ सद' इति। वाल पृ ६३

● यजमानैकस्य ज्योतिष्टोमादौ, यजमानद्वित्व कुलाय-यये, यजमानबहुत्व सत्रे। वि ३।३।१८

● यजमानकर्तृकस्य दक्षिणादानस्य। ३।८।१।१-२.

● यजमानकाण्ड यजुर्वेदे मन्त्रान्तरकाण्डम्। वि. ३।८।१०

● यजमानगणकर्तृके कर्मणि 'यजमानप्रमितोदुम्बरी भवति' इति औदुम्बरीमान एकेनैव यजमानेन न वर्यं । स नैमी गृहपतिरेव तत्रे। अहीने च येन कियमानेन न सर्वं । वि १२।४।११-१२.

● यजमानजन्मेव अरत्न्यादिपरिमाण यूपादौ । सरूप. १।४।९. 'यूपादौ अरत्न्यादिपरिमाणम्' इत्यत्र अधिकरण द्रष्टव्यम्। ● यजमानगत मान अग्निचयने विहितमानेषु प्राह्यम् । सकर्प १।८।१० मीमो. पृ १४ 'अग्निचयने विहितमानेषु०' इत्यत्र अधिकरण द्रष्टव्यम्।

● यजमानगामिता करणमन्त्रप्रकाश्यफलस्य। ३।८।१३।२६-२८

● यजमानगामिफलविधि मन्त्र 'ममाग्ने वर्चो विहवेष्वस्तु०' इति। वाल पृ ६२.

● यजमानत्वं अधीतवेदस्य विदितवेदार्थस्य च। वि ३।८।९

● यजमानद्वित्वबहुत्वे कुलायादिषु एकाहेषु अहीनेषु च प्रत्यक्षविहिते विधेते, 'राजपुरोहितौ यजेयाताम्' 'एतेनैव द्वौ याजयेत्' 'एतेनैव त्रीन् याजयेत्' 'एको द्वौ त्रयो वा अहीनैर्यजेरन्' इति। धा ३।३।१।१७.

● यजमानधर्ममाहिता सत्रे प्रतिनिधे । ६।३। १०।२६.

● यजमाननामनिर्देश सर्वत्रालिगदे नित्य, न वैकल्पिक । सकर्प ८।३।२१

● 'यजमानपञ्चमा इडा भक्षयन्ति' इति द्रव्य-संस्कारत्वात् यजमानोऽग्राह्यो निर्धीयते वाक्यप्रकरणसमाख्याभि । टुप् ६।४।२।५ ● 'यजमानपञ्चमाः समुपेता भक्षयन्ति' इति यजमानस्यापि भक्षोऽस्ति दर्शादौ। वि १०।३।९

§ यजमानपत्नीना सर्वासा सनहन दर्शपूर्णमासादौ ॥

पत्न्या सनहनं कृत्वा सा कुर्यादिति विधौ एकत्व-श्रोपादेयविशेषणत्वेन निर्धारितत्वात् औदुम्बरीसमानय हैकस्यापि विधेश्चारितार्थ्यादेकैव या काचिद्यजमानपत्नी सनह्या। इति प्राप्ते, सर्वासामपि सनहनादिसंस्कारा कर्तव्या, कर्तृत्वाविशेषात् फलभागत्वप्रयुक्तत्वेन संनिधानित्वाच्च। प्रकृतसंस्कार्यत्वाविशेषेण सर्वासा सन्निधि-तत्वाच्च। पत्नीप्रातिपदिकस्य यजमानस्वामिसाम्बन्धाभिधायकत्वाच्च। सरूप-१।२।१ वर्णक २

● यजमानपदमुदितस्य नहुसंके निमरे सूत्रवाके प्रस्तरप्रहरणादौ। ९।१।१४।४०

● यजमानपुरुषेभ्यश्चैते (यजमानपर्यन्त) अस्ये ऋत्विग्भ्यश्च। यजमानेन यजमानपर्यन्तं न वरीतव्या। ऋत्विग्भिर्वरीतव्या। मा ३।७।१०।२५.

● यजमानपूर्वजाः एव ऋषयः 'आर्षेयं वृणीते' इति उक्ताः। संकर्ष. ३।४।१. मीको. पृ. १००४ 'आर्षेयं वृणीते इति०' इत्यत्र द्रष्टव्यम्।

● यजमानफलविभ्रमसङ्गनिवृत्त्यर्थत्वेन इष्टेर्यजमानकर्तृत्वाद्यसमवायात् पत्न्यन्वेन च इष्टिवमन्त्रयोरेककर्तृकत्वनिर्देशात् यजमानपत्न्यैव एव इष्ट्या भवितव्यम्। सु. पृ. १५१२.

● यजमानबहुत्वं एतत्त्स्तवम्। भा. १०।६।१६।६०-६१.

● यजमानभक्षा. ज्योतिष्टोमे ऐष्टिकेषु सन्त्येव। वि. १२।१।१५.

● यजमानमिश्रकर्तृत्वप्रतिपादनम्। भा. ३।७।८।१८-२० पृ. १०८९.

● यजमानमरणोत्तरमपि सर्वस्वारः कार्त्विग्भिः समापनीयः। १०।२।२३।५८-६९. 'सर्वस्वारः यजमानमरणोत्तरम्०' इत्यत्र द्रष्टव्यम्।

● यजमानशब्दः एककर्तृत्वमुत्त्यर्थः. 'यजमान एककपालः' इत्यत्र। वि. ११।४।१३. ● यजमानशब्द. एतद्यजमानवाचिनि समस्यमानाव्येव वचनमिति कृत्वा द्वियजमानके च प्रयोगे समस्यमानवचनप्रदेशात् ऊह्यते। भा. ९।४।१।१०.

● यजमानशरीरे अग्नीनां यज्ञपात्राणां च निक्षेपः प्रतिपत्तिः परिधानीये कर्मणि। भा ११।३।१३।३४-४२,४५

● यजमानसंस्कारः इह दीक्षापदार्थः। भा. १०।६।१५।५२, ● यजमानसंस्काराः ज्योतिष्टोमे 'केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति' 'तं अभ्यनक्ति, शरेषीकया अनक्ति' इति। ३।८।२।३-८. ● यजमानसंस्कारा वपनादयः प्रधानोपकारका नाङ्गोपकारका 'स्वामिगुणाधिकरणम्' इत्यत्र द्रष्टव्यम्। ३।७।२।६. ● यजमानसंस्कारा. सर्वयजमानार्थाः सत्रे। १२।४।१४।३९-४१. 'सत्रे यजमानसंस्कारा०' इत्यत्र द्रष्टव्यम्। ● यजमानसंस्कारामा च यागगुणभूतसंस्कारातिरेकेण फलार्थद्रव्योपयुक्तत्वात् भोक्तृत्वप्रतिनाम्नि यागाङ्गत्वं यश्वने (३।७।२।६)। वा. ३।१।७।१४ पृ. ७१८. ● यजमानसंस्काराणा स्वक्रमप्रतिमोक्षात् पूर्वभाविता चयने। ५।२।१२।२३.

● यजिरपूर्वं साधयति, तदपूर्वात् कालान्तरे फलं भवतीति उक्तम् 'चोदना पुनरारम्भः' इत्यत्र (२।१।२।५)। भा ७।१।२।११. ● यजि. उद्देश्यविशिष्टत्यागवाची। सु. पृ. ७४९, ● यजिः देवतोद्देशपूर्वकत्यागसमुदायवाची। पृ. ७४८. ● यजेः प्रत्यक्षफले गुणमात्र इति यत्, ■ नाङ्गत्वा अपूर्वं भवति इति प्रागुक्तिरो विज्ञायते। भा ७।१।१।७.

● यज्यर्थः द्रव्यदेवतासम्बन्धः। भा. १०।१।१०।४२. ● यज्यर्थः मन्त्राकरणक-देवतोद्देश्यक-प्रक्षिप्यमाणद्रव्यत्यागः। कु. ४।१।७।१९.

● यजिमत्कर्मविधानत्वसिद्धिः पशुसोमाधिकरणसिद्धान्तेन। सु. पृ. १२५.

● यजिवाच्यं कर्म। अग्नीषोमीयवाक्येऽपि एतदधिकरण (२।३।५)सिद्धयजिवाच्यकर्मवाचित्वाङ्गीकारेण। पशुसोमाधिकरणे सिध्यनुवादविचारः। सु. पृ. १२५

● यजूंषि कानिचित् निष्पाणि वेदेषु पठ्यन्ते, तथा श्रुतौऽपि। भा १।३।२।१. ● यजूंषि तान्येव उपेत्यत्वेन गुणेन व्यपदिश्यन्ते निगदा इति। भा. २।१।१३।४१, ● यजूंषि यानि न परसम्बोधनार्थानि तेषु उपांशुत्वं निवेक्ष्यते। २।२।१३।४२. ● 'यजूंषि वा तद्रूपत्वात्' (२।१।१३।४०) इति निगदा यजुर्भेदा एवेत्युक्तम्। बाल. पृ. ५८.

● यजुरेकत्वम्। यावत्पदजातं यजुरुपकार्यं यागसाधन अथ च विभागे साकाङ्क्ष तावदेकं यजुः। कु. २।१।१४।४२.

● यजुषो यज्ञपशायश्चित्तार्थं 'भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्'। वि १२।३।५.

● यजुष्ट्वं निगदानाम्। निगदाधिकरणम्। २।१।१३।३८-४५.

● यजु परिमाणाधिकरणम्। २।१।१४।४६.

● यजुर्भेद परस्परनिराकाङ्क्षत्वेन तुल्येषु। कु. २।१।१५।४६.

- * 'यजुर्युक्तो दक्षिणा' इत्यधिकरणे (१०।३।२१।७४–७५) प्राकृतवत् यजुर्युक्तरथोऽपि अध्वर्युभागस्य निवर्तक इति पूर्वपक्षं कृत्वा प्राकृतो अपूर्वो विधीयमानो युक्तं रथम् अध्वर्युभागं बाधते (१०।३।१७। ६३–६४)। इह तु समदश सप्तदशकानि प्राकृतदक्षिणाबाधेन परस्परसहितत्वेन दक्षिणात्वेन विहितानि, तत्र यजुर्युक्तस्यापि प्राकृतेन दानम्, स तु अध्वर्यवे अन्यस्मै वा दातव्यः प्राप्तः अध्वर्यौ उपसंह्रियते इति सिद्धान्तितम्। बाल. पृ. १७.

※ यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥

'वाजपेये रथाः, निष्काः, इत्यादयः सप्तदशार्थाः सप्तदशसप्तदशसंख्याकाः सप्तदशेभ्यः सप्तदशभ्यः ऋत्विग्भ्यो दीयन्ते। तत्र 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्याम्नायते। सोऽयं यजुर्युक्तः यजुर्मन्त्रेण युक्तः संयोजितो रथः दक्षिणा अध्वर्योः भागस्य विकारः बाधकः स्यात्। यजुर्युक्तः रथ एव अध्वर्यवे नान्यत् किंचिदिति। इति पूर्वः पक्षः।

अपिवा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥

पूर्वपक्ष अपिवाशब्दो व्यावर्तयति। सर्वासां सप्तदशरथरूपाणां दक्षिणानां श्रुतिमूलकत्वात् 'सप्तदश रथाः' इति श्रुत्या विहितत्वात् अभियुक्तः अध्वर्योः स्यादेव। तेन तस्य अध्वर्योः भागः नियम्यते यजुर्युक्तो रथः अध्वर्यवे एव नान्यस्मै इति। यथा श्रेणुयुक्तः क्षेत्रे एव सामयुक्तः उद्गात्रे एव इति। यस्मिन् रथे अश्वौ यजुषा मन्त्रेण युक्तौ भवतः, यो रथो यजुषा युक्तः अश्वयुक्तः कृतः स यजुर्युक्तः, एवं ऋग्युक्तः सामयुक्तः इति। तस्मात् अध्वर्योः सर्वस्य दक्षिणाभागस्य रथेन न निवृत्तिः इति सिद्धान्तः। के.

* 'यजुर्युक्तो०' (१०।३।२०।७४–७५) इत्यधिकरणं वाजपेये यजुर्युक्तेन उपदिष्टेन रथेन अतिदिष्टस्य अध्वर्युभागस्य समुच्चयः उक्तः। बाल. पृ. १७७.

* यजुर्युक्तो रथः वाजपेये यजमानरथः 'इन्द्रस्य वज्रोऽसि' इत्यादिमन्त्रैः सज्जीकृतः। मि. १०।३।२०.



* 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति वाजपेये अयं अनियमनः उपसंहारविषये प्राप्तो उपसंहाररूपः प्रतिषेधः। बाल पृ १७.

※ यजुर्युक्ताधिकरणम्। वाजपेये श्रुतेन यजुर्युक्तरथेन अध्वर्योः दास्यादिभागान्तरस्य समुच्चयः॥

यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात्। १०।३।२१।७४॥

भाष्यम्— अस्ति वाजपेयः। तत्रेदं समाम्नायते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। तत्रायमर्थः सांशयिकः किं यजुर्युक्तोऽध्वर्योर्भागस्य निवर्तकः, किं भागे नियम इति। किं प्राप्तम्? यजुर्युक्तो (यजुर्युक्ते इति श्रुतिपाठ) दक्षिणा त्वध्वर्योर्विकारः स्यात्। तुशब्दः पक्षव्यावृत्त्यर्थः। न पक्षः सम्यगस्ति। यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते। स रथोऽध्वर्युभागनिवर्तः इत्यर्थोऽध्वर्युभागस्य चोदकप्राप्तस्य निवृत्तिं न शक्नोति कर्तुम्। नैवमभिसंबन्धः क्रियते यजुर्युक्तं रथं वाजपेये ददातीति, येन क्रतुसंयोगो गम्यते। कुतः? प्रकृतो हि वाजपेयः। अध्वर्युः पुनर्वाक्येन श्रूयते। वाक्यं पुनः प्रकरणाद्बलीयः। तस्मादध्वर्युभागस्य निवर्तको रथ इति।

अपिवा श्रुतिभूतत्वात् सर्वासां, तस्य भागो नियम्यते। ७५॥

भाष्यम्— अपिवेति पक्षव्यावृत्तिः। श्रुतिमूला हि सर्वे रथाः समाम्नेन वचनेन 'सप्त सप्तदशानि ददाति' इति। 'सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश युग्यानि, सप्तदश गवां शतानि, सप्तदशो वयस्यश्च सप्तदश' इति। तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ता नियन्तव्याः। अतो न ज्ञायते कस्य को रथः। तत्राध्वर्योर्यजुर्युक्तः। पक्षे प्राप्तः स नियम्यते। यजुर्युक्तमध्वर्यवे ददाति, नान्यम्, न चान्यस्मै। एवं ऋग्भिर्युक्तं होत्रे, नान्यम्, न चान्यस्मै। सामभिर्युक्तमुद्गात्रे, नान्यम्, न चान्यस्मै। तत्र पक्षे नियमार्थं यजुर्युक्तग्रहणं नाध्वर्योः भागं निवर्तयितुमुत्सहते। तस्यानिवृत्तौ चोदकानुग्रहो भविष्यति। तस्मादध्वर्योर्भागे रथो नियम्यते, न तद्भागं निवर्तयतीति।

शा-- वाजपेये 'सप्तदश रथा सप्तदश दास्य' इति दक्षिणा विधाय श्रूयते 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। (यजुर्युक्तं 'इन्द्रस्य वज्रोऽसि' इति यजुर्मन्त्रैः सज्जीकृतमित्यर्थः।)। तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभाग निवर्तयेदेति। तत्र 'प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधक ।, न स्वयं बाधकत्वस्य प्राप्तस्य नियमो ह्यसौ ॥'

सोम-- यदि दक्षिणाशब्दे सत्यपि एकवाक्यतया भागनाप्तत्वात् तदभावे किं वक्तव्यमित्युपस्थितेः संगतिः।

वि— 'यजुर्युक्तोऽध्वर्युभाग बाधते यमवत्तुत ।, बाध. प्राकाशवत्, नैव पक्षे प्राप्तेर्नियम्यते ॥'

भाट्ट— वाजपेये 'सप्तदश रथाः सप्तदश दास्यः सप्तदश निष्का सप्तदश कुम्भानि सप्तदश गवां शतानि सप्तदश वयसो वयस्यश्च इति एता सप्तदशकानि ददाति' इति श्रुतम्। तत्रापि प्राकृतमेव दानं पूर्वप्रवृत्तषड्गीकारेण नियतद्रव्यविशिष्टं विधीयते इति प्राकृतद्रव्यनिवृत्ति। तत्र च 'यजुर्युक्तं रथमध्वर्यवे ददाति' इत्यादि श्रुतम्। तत्रापि 'प्राकाशावध्वर्यवे ददाति' इतिवत् यजुर्युक्तरथोऽध्वर्युभागान्तरस्य दास्यादेः निवर्तकः, वैकृतद्रव्येण प्राकृतद्रव्यस्येव वैकृतविभागेन प्राकृतस्यापि विभागस्यापि बाधात्। इति प्राप्ते, नात्र प्राकाशवदपूर्वो यजुर्युक्तो रथो विधीयते, येन भागान्तरनिवृत्तिराशङ्क्येत, पूर्ववाक्येन प्राप्त एव तु सप्तदशानां यजुर्युक्तो रथोऽनियमेन यस्मै कस्मैचिदृत्विजे प्राप्तोऽध्वर्यवे नियम्यते। प्राप्तिश्च दास्यादिद्रव्यान्तरसाहित्येनैवेति तादृश एव नियम्यते। अत एवात्र नियमद्वयम्। यथैव हि अनियमेन यस्मै कस्मैचिदृत्विजे प्राप्त इति शेषिरूपाध्वर्युनियमः तथैवाध्वर्योर्यजुर्युक्तः कदाचित् प्राप्तः कदाचिन्न इति शेषरूपयजुर्युक्तनियमोऽपि। नियमद्वयस्यापि च फलत्वात् वाक्यभेद। शास्त्रदीपे तु सम्प्रदानत्वोद्देशेनैतत्कर्मयोगमते चतुर्थ्या तस्य कर्मतत्वाभावान्न अध्वर्यूद्देशेन यजुर्युक्तो विधीयते। दानं तु सन्निधिप्राप्तमात्रम् इति प्रकारान्तरम्। अत एव नियमफलत्वेनैवोपपत्तौ समुच्चय शतदास्यादिभागान्तरनिवृत्तिफलकत्वमपि अनपायादिविधेः न्युमून-नियमफलकत्वेनैवोपपत्तौ यवादिपरिसंख्याफलकत्वानङ्गीकारवत् नाङ्गीकर्तुमुचितम्। अतो नात्र भागान्तरनिवृत्ति।

मण्डन--- 'यजुरथोऽध्वर्युमुपैति नान्यम्।'

शंकर--- 'यजुर्युक्ते ग्लो न स.।' सः भागबाधः।

* यजूरूप. ऋग्रूपः सामरूपश्चेति त्रिविधो मन्त्र.। बाल. पृ. ५८.

## यजुर्लक्षणम् ॥

शेषे यजुःशब्दः। २।१।१२।३७ ॥

भाष्यम्— अथ यजुषः किं लक्षणमिति। यजुषो लक्षण न वक्तव्यम्। ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन, या न गीतिर्न च पादबद्धम्, तत् प्रश्लिष्टपठितं यजुरिति।

वा--- 'शेषे ब्राह्मणशब्द.' इतिवत् समस्त व्याख्येयम्।

वि— 'नवर्गामयजुषां लक्ष्म शाकर्यादिति शङ्किते। पादश्च गीति. प्रश्लिष्टपाठ इत्यस्त्वसंकर ॥' वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि।

भाट्ट—ऋक्सामभिन्नमन्त्रत्व यजुष्ट्वम्। स्तोभाक्षरेष्वपि तत्वाद्यतिव्याप्ति.।

मण्डन—'ऋक्साममिन्नो यजुरेव मन्त्र'।'

शंकर—' यजुषा लक्षण तथा।' (उक्तमिति शेषः)। १५.

* यजुर्वेद' आध्वर्यवप्रवर्तकास्त्व। मु पृ ७५७.
* यजुर्वेदेन यत् किञ्चित् काम्य नैमित्तिक वा चोद्यते तत् सर्वं उपांशु कर्तव्यम्। वा. ३।३।२।९
* यजुर्वेदस्य उपांशुत्व स्वर. । भा. ३।३।१।३.
* यजुर्वेदे दोहानिर्वापयोः धर्मा. पठिताः। वि. ३।३।६ * यजुर्वेदे द्रव्यदेवताक्रिय अकल्पमाम्नायते। वेदान्तरे तु क्रियामात्रं सकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते। तत्र द्रव्यदेवताकाङ्क्षितकर्मपर्यन्तं इत्याकाङ्क्ष्य स्ततन्त्रनियमविधानम्। यजुर्वेदे तु समस्तस्वरूपाम्नानात् विनापि स्तोत्रशस्त्रादिभिः शक्यते यागो निर्वर्तयितुम्। वा ३।३।४।१० * यजुर्वेदे याजमान अवान्तरकाण्डम्, महाकाण्डं तु आध्वर्यवत्वेन। वि. ३।८।१०, * यजुर्वेदे सोम-

द्रव्यशादिमतिः इन्द्राग्न्यादिदेवताना च इति चोत्र विधिः ज्योतिष्टोमस्य । ३।२।३.

* यजुर्वेदोक्तं वाजपेये हिरण्यमालित्वं सर्वेणामेव ऋत्विजां न तु अध्वर्युणामेव । वि. ३।८।९.

* यजुर्वेदविहितप्रधानविधिविहितत्वात् आधानसाम्ना उपाकरणम् । या. ३।३।२१९ पृ. ८१३.

* यजेत इत्यत्र अस्ति अंशद्वय यजिधातुः प्रत्ययश्च । प्रत्ययेऽपि अस्ति अंशद्वयं आख्यातत्वं लिङ्त्वं चेति । तत्र लिङ्वाच्या शाब्दीभावना, आख्यातवाच्या च आर्थीभावना । मीन्या. * यजेत इत्यत्र आख्यातस्य 'भावयेत्' इत्यर्थः । भावनायाश्च आकाङ्क्षात्रयं 'किम्' इति भाव्यस्य साध्यस्य फलस्य, 'केन' इति करणस्य साधनस्य, 'कथम्' इति इतिकर्तव्यताया:—अङ्गसमूहस्य—उपकारकसमूहस्य इति । तत्र अर्थभावनायां भाव्याकाङ्क्षया स्वर्गादिरन्वेति, करणाकाङ्क्षया यागादिरन्वेति, इतिकर्तव्यताकाङ्क्षया च अग्न्यन्वाधान-प्रयाज-प्रोक्षण-अवघातादियावदङ्गकलापः अन्वेति । प्रयाजादि कृत्वा यागानुष्ठानेन स्वर्गः साध्यः इति तात्पर्यम् । वि. २।१।१ वर्णक २, * यजेत इत्यत्र प्रत्ययस्य आख्यातत्वाकारेण भावनाभिधायित्वम्, लिङ्प्रत्ययत्वेन विधिरूपत्वात् पुरुषप्रवर्तकत्वम् ।, पुरुषश्च फलमन्तरेण न प्रवर्तते इति कृत्वा सुखं तत्र भाव्यम् । ६।१।१, * यजेत इत्यत्र विधेया यागक्रिया । आख्यातगतं चैकत्वं तस्या विशेषणम् । क्रिया च कर्तारमाक्षिपति इति क्रियाद्वारा कर्ताऽपि विधेयः । विधेयकर्तृगता च संख्या विवक्षिता भवितुमर्हति । ६।१।२, * यजेत इत्यत्र शाब्दीभावना प्रत्ययगतलिङ्त्वांशेन बोध्या । सा च भाव्यं, भाव्य करणं इतिकर्तव्यता चेति त्र्यंशा । तत्र भाव्य प्रत्ययगताख्यातत्वांशेन बोध्या अर्थभावना, करणं भावनाभाव्यनिर्वर्तक लिङ्ज्ञानम्, अर्थवादलभ्य प्राशस्त्यं च इतिकर्तव्यता इति । मीन्या. * यजेत इत्यात्मनेपदं विधिप्राप्तानुवादकमेव । सोम. ६।२।२. * यजेत इत्यादौ अंशद्वय धातुः प्रत्ययश्च । प्रत्ययस्य भावना अर्थः । स च भावना नाम अर्थः । णिजन्तात् भवतेर्भावनाशब्दनिष्पत्तिः । भावनाया कर्गेतिः । करोतेः भवनिमाकाङ्क्षति । एव करोत्यर्थद्वारेण सर्वाख्यातेषु भावनार्थः सिद्धः । के. ( वा. २।१।१।१ ). * यजेत इत्यनेनाऽऽक्षिप्तः कर्ता । स विशेष्यते स्वर्गकामशब्देन । यथा 'राजा राजसूयेन यजेत' इति । विशेषणं च कर्माङ्गं भवति । ११।१।१।१, यजेत इति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स नाऽऽक्षिप्त किमंशं प्रथम पूरयति । तदोपायत्वेन यागो विधीयते । टुप्. ११।१।१।१, * यजेत इत्यनेन विषयस्य फलकरणेतिकर्तव्यतान्वय कर्तव्यतोच्यते । ५।१।५।८. * यजेत इत्यस्यार्थ. याग कुर्यात् यागेन वा कुर्यात् इति । तत्राभिव्यक्तिमात्र गम्यते न फलस्य कर्ता आधारता वा । यज्यर्थः करण कर्म वा । भा. ६।२।२।६, * यजेत इत्यस्य पूर्वो भागः यजत्यर्थं ब्रवीति, उत्तरो ( भागः ) भावयेदिति, तथा ददातीति पूर्वो भागो ददात्यर्थम्, उत्तरः तमेव भावयेत् इत्यनुवदति । एवं जुहोति इति पूर्वो भाग. जुहोत्यर्थं उत्तरस्तमेव ( भावयेत् इति ) अनुवदति । परो भागो भावनावचनः सर्वेषु समानः । दद्यात् इति दानेन साधयेत् इति केवलमेव दानं करण भावनाया. प्रतीयते । २।२।१।१, * यजेत इत्यस्य यागेन कुर्यात् इत्यर्थः । करणं हि याग. । १।४।१।२. * यजेत इयं तिङन्त-एकपदरूपा विनियोक्त्री श्रुतिः । बाळ. पृ. ४२. * यजेत इत्युक्ते किं केन कथ इत्याकाङ्क्षात्रयं भवति । तत्र किं केन इति फलकरणाभ्या निराकाङ्क्षीकृते । कथमिति अन्याङ्गसाकाङ्क्षाया सन्निधाने अनाम्नानात् इतिकर्तव्यतायाः तुल्यं वाक्य बुद्धौ सन्निधीयते । तत् सन्निधापितं आत्मीयमर्थं सन्निधापयति । अनेन द्वारेण अग्न्यन्वाधानादिका इतिकर्तव्यता अनुषज्यते । एव चेत् यत्र सादृश्य तत्र धर्माः प्राप्यन्ते, असति सादृश्ये नास्ति धर्मप्राप्तिः । टुप्. ८।२।२।२. * यजेत इत्युक्ते जुहोतित्वाविशेषः ज्ञायमानत्वः । या. ३।४।१४।४१ पृ. ६८२. * यजेत इत्युच्चरिते किं केन कथमिति तिस्र आकाङ्क्षा जायन्ते । तत्र किं इति नियमेव पुरुषार्थसिद्धः साक्षात् पारंपर्येण वा । धातुरुत्तरम् भवति । ओदनं पचेत् इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते । तत्र (पाके)

प्रत्यक्षादिना निर्दिश्यते इतिकर्तव्यता । इह ( वैदिके कर्मणि ) शास्त्रेण निर्दिश्यते । आकाङ्क्षा तु तुल्यम् । टुप् ७।४।१।१ * यजेत इत्येवमादय साकाङ्क्षा जायन्ते किं केन कथमिति स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षा । भा २।१।१।१, * यजेत जुहुयात् इति धातुना क्रियोच्यते, प्रत्ययेन कर्ता । तयो कर्ता प्रधानभूत उपसर्जनभूता क्रिया । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत । ११।१।८।२९, * यजेत जुहोति ददाति इति शब्दान्तरे कर्मभेद । २।२।१।१, * यजेत यागेन स्वर्गं कुर्यात् स्वर्गाय व्याप्रियेत इत्यर्थ । इह तु न ज्ञायते कोऽसौ व्यापार इति । तत्सन्निधौ च अन्यद्यागादि श्रूयते । तस्मिन् आकाङ्क्षितत्वात् सन्निधानाच्च एतज्जानि अयमस्मिन् व्यापार येन याग स्वर्गं करोति इति । ११।१।२।१० * ' यजेत स्वर्गकाम ' इति । यजेत इत्यस्य उत्तरार्धात् तिस्र आकाङ्क्षा जायन्ते । तत्र प्रथम तावत् भावयमान आकाङ्क्षति भावयेत् किं ' इति । तत् फलपदेन निराकाङ्क्षीक्रियते । तत् भावयमान केन भावयेत् इति द्वितीया आकाङ्क्षा पूर्ववत् निराकाङ्क्षीकरोति । कथ इति तृतीयामाकाङ्क्षा अन्यद्यागादीनि निराकाङ्क्षी कुर्वन्ति सन्निधानात् । नह्येव असम्भवदर्थात् यागात् फल श्रूयते न देवतात । टुप् ९।१।४।९ पृ १६९२

* यज्ञश्च त्याग । भा ३।८।२।१०, * यज्ञो हि मेध । ३।८।२।१०, * यज्ञस्योदराणि । ' त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवाव पन्ति अत एवोद्धपन्ति । ' १०।५।६।२२, * यज्ञस्य एतानि पात्राणि ( वारणवैकङ्कतादीनि ) वाक्येन प्रकरण बाधित्वा भवन्ति । ३।१।१२।२२ * यज्ञानामग्निष्टोमपूर्वकत्वा ( यज्ञेषु अग्निष्टोमस्य प्राथम्यम् ) । ५।३।१३।३७–३८ मीको पृ ७१ अग्निष्टोमस्य यज्ञेषु प्राथम्यम् ' इत्यत्र अधिकरण द्रष्टव्यम् । * यज्ञानां सर्वेषामङ्ग वारणादिकम् । वारणाधिकरणम् । ३।१।१२।२२ * यज्ञे कर्तृभ्यो दक्षिणाया यस्य यावान् भाग आपद्यते स्वयमेव यजमानेन विभज्य तस्मै साक्षात् दत्तव्य , न परिपद्य । भा १०।३। १२।५०, * यज्ञे च अचिकीर्षितो न प्रयोक्तव्य । ५।२।१।१ वर्णक २ * यज्ञे रथन्तरादिसाम्ना तृचे गानम् । १०।६।१।१-२

* यज्ञावचर यज्ञे अवचर्यते अनुष्ठीयते अनेन इति यज्ञावचरशब्देन यागाङ्गत्वाभिधानम् । सु पृ २०६० * यज्ञावचर यज्ञप्रचारहेतु पात्राणि इत्यर्थ । वि ३।१।१२

* ' यज्ञाङ्गो साधन ( मात ) स्मृत ' इति स्मृति । सकर्षं १।१।१८

* यज्ञायुधानि दश ' स्फ्यश्च, कपालानि च अग्निहोत्रहवणी च शूर्प च कृष्णाजिन च शम्या च, उलूखल च मुसल च दृषच्च उपला च, एतानि वै दश यज्ञायुधानि दर्शपूर्णमासयो । भा ४।१।४।७

¶ यज्ञायुधानि धार्येरन् प्रतिपत्तिविधाना-दृजीषवत् । ११।३।१३।३६ ॥

यज्ञायुधानि यज्ञपात्राणि शरीरेण धार्येरन् धारयितव्यानि । प्रतिपत्तिविधानात् ' आहिताग्निमग्निभि र्दहन्ति यज्ञपात्रैश्च ' इति तेषां प्रतिपत्ते अन्त्येष्टौ विधानात् । ऋजीषवत् यथा अहरहणे सर्वेषामृजीष अवभृथे प्रतिपत्त्यर्थं धार्यते तद्वत् । इति सिद्धान्त ।

यजमानसंस्कारो वा तदर्थं श्रूयते तत्र यथा कामी तदर्थत्वात् । ३७ ॥

पूर्वपक्षमाह । ' यज्ञपात्रैर्दहन्ति ' इति यजमान संस्कार श्रूयते, न पात्राणां प्रतिपत्ति । तदर्थं तेषां पात्राणां अर्थे विनियोग श्रूयते, पात्राणां तृतीयया यजमानस्य द्वितीयया च निर्देशात् । तत्र एव सति पात्राणां तदर्थत्वात् अर्थकर्मत्वात् यजमानसंस्कारार्थत्वात् यथाकामी स्यात् तेषामन्येषां वा अन्त्येष्टौ प्रापणम् । इति ।

मुख्यधारण वा मरणस्यानियतत्वात् । ३८ ॥

सिद्धान्ती पुनराह । मुख्यधारण मुख्यानां आधान कालीनानां आधानादेव पात्राणां धारण कर्तव्यम् । मरणस्य अनियतत्वात् । कदाचित् नाशि पात्राणि उत्सृज्यानि मध्येषु मरण चापतेत । तत्र यजमानशरीर संस्कारलोप स्यात् । तस्मात् मुख्यधारणमेव न्याय्यम् ।

**यो वा यजनीयेऽहनि म्रियेत सोऽधिकृत स्यादुपवेषवत् । ३९ ॥**

पूर्वपक्षी पक्षान्तरमाह । यो यजमान यजनीये अहनि यागदिने म्रियेत, अस्मिन् संस्कारे अधिकृत स्यात्, तस्मिन् दिने पात्राणां सन्निहितत्वात् । उपवेष वत् यथा सान्नाय्यवाजिन एव उपवेषस्य कपालोपधाने अधिकार उपवेषस्य सन्निहितत्वात् तद्वत् ।

**न शास्त्रलक्षणत्वात् । ४० ॥**

नाय दृष्टान्तोऽत्र सङ्गच्छति । उपवेषस्य शास्त्रलक्षणत्वात् । यथा सान्नाय्यवाजिन एव उपवेषो न्याय्य इति शास्त्रेण लभ्यते । सान्नाय्यार्थो शाखा तामननिष्पन्न उपवेष । पात्राणां तु भारणस्य यजनीय दिवसे । तस्मा द्विषमो दृष्टान्त ।

**उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् । ४१ ॥**

पूर्वपक्षान्तरमाह । अथवा न सर्वेषां धारणम् । किन्तु संस्कारकाले नवानां पात्राणामुत्पत्ति कर्तव्या । संस्कारस्य पात्रप्रयोजकत्वात् । संस्कार पात्राणां प्रयोजक । आशिरवत्, यथा क्रतुपेये सर्वो 'पयस्वती भवत' इति वचनात् नवदुह गोरभावे 'अ वा यजमानस्य नवदुह्यामाशिरे दुहन्ति' इति श्रुते आशिरार्थं अन्या गौरुपादीयते तद्वत् ।

**शब्दासामञ्जस्यमिति चेत् । ४२ ॥**

उक्त पक्षे कश्चिदाशङ्कते । संस्कारकाले नवीनोत्पत्ति पक्षे 'यज्ञपात्रै' इति यज्ञशब्दस्य असामञ्जस्य प्राप्नोति । नहि नवीनानां पात्राणां यज्ञेन सम्बन्धोऽस्ति । इति चेत् ।

**तथाऽऽशिरेऽपि । ४३ ॥**

नवीनपात्रवादी प्रतिवन्द्या शङ्कां प्रतिक्षिपति । तथा पात्रेषु यज्ञशब्दस्येव आशिरेऽपि 'नवदुहा' इति शब्दस्यापि असामञ्जस्य तुल्यमेव । नहि अन्या गौ अत्रापि नवदुहा ।

**शास्त्राच विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावशेषाद् पूर्वार्थवद् भूतोपदेश । ४४ ॥**

सिद्धान्ती आह । तत्र आशिरविषये शास्त्रादेव विप्रयोग नवदुहाशब्दस्य भवति । 'पयस्वती भवत' इति शास्त्रेणैव नवदुहो गो विप्रयोग निवृत्ति कृता । प्रकृतौ ज्योतिष्टोमे एकद्रव्यचिकीर्षा प्रकृत्या गो यत् पयो द्रव्य तस्यैव व्रते आशिरे च चिकीर्षा, तस्मात् 'नवदुहामाशिरे दुहन्ति' इति प्रकृतौ श्रुतम् । तस्य च क्रतुपेये विप्रयोग । तस्मात्तत्र न दोष । अथ इह यज्ञपात्रविषये तु अपूर्वार्थवत् अपूर्व अर्थं अस्ति अस्य इति अपूर्वार्थवत् धारणम् । नहि यज्ञपात्रैर्दाह अन्यत्र प्राप्त । तस्मात् यज्ञशब्दासामञ्जस्य अत्र दोष स्यात् । अत भूतोपदेश भूतानां पूर्वसिद्धानां पात्राणां उपदेशोऽयम् । तस्मात् यज्ञपात्राणां यावज्जीव धारण इति सिद्धान्त ।

**प्रतिपत्तिर्वा यथाऽन्येषाम् । ४७ ॥**

प्रेतस्य यजमानशरीर पात्रासादन नार्थकर्म किन्तु प्रति पत्ति । यथा अन्येषां सोमलिप्तानां द्रव्याणां अवभृथ गमन प्रतिपत्ति तद्वत् । तस्मात् आधानप्रभृति यावज्जीव यज्ञपात्रधारण इति सिद्धान्त । 

० यज्ञायुधानि यज्ञस्थितानि विशिष्टक्रियासु 'स्फ्येनोद्धन्ति कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति शूर्पेण विविनक्ति, कृष्णाजिनमधस्ता दुलूखलस्यास्तृणाति, शम्या दृषदमुपदधाति ( शम्यया इति पाठ ), उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनष्टि' इति । [ ति ३।१।५, ० 'यज्ञायुधानि सम्भरति' अत्र यज्ञायुधानां दशानां सम्भरणस्य विधि । ४।१।८

* यज्ञायुधाधिकरणम् । यज्ञायुधवाक्यमनुवादकम् ॥

**द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयेरन् । ४।१।४।७ ॥**

भाष्यम्— स्तो दर्शपूर्णमासौ । तत्राऽऽम्नायते 'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिन च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति । तत्र संशय किमेतानि द्रव्याणि प्रमाणान्तरसिद्धान्येव स्वेनार्थेन सम्बध्यन्ते, उत तदेतत्सिद्धवर्थमिदं विधीयते इति विशेषविधि, उत अनुवाद इति । किं प्राप्तं विधिरिति । तथा हि

प्रवृत्तौ विशेष , इतरथा वादमात्रमनर्थकम् । प्रदाने चैषां यज्ञायुधशब्दोऽनुगृहीत । यज्ञस्य आयुधानि यज्ञस्य साधनानीति । इतरथा उद्धननादीनां आयुधानि भवेयुः श्रवणेन, अन्यथा यज्ञस्य । सङ्ख्या चैवमवकल्प्यते, वाक्ये नैकेन सम्बन्धात् । इतरथा नानासम्बन्धाद्दशेति सङ्ख्या नावकल्पते । तस्मात् प्रदीयेरन् । अविशेषेण विहित प्रकरणेन प्रधानस्य भवितुमर्हति ।

टुप्— ( ननु तृतीये एवैषां यथासंयोग विनियोगेन उद्धननाद्यर्थत्व सिद्धम् । अत किमर्थमिदमुच्यते इत्यत आह- ) प्रदेयत्वे इह निराकृते तृतीये चिन्ता ( किं सर्वमुद्धननादि सर्वैः कार्यमुत यथासंयोगमिति । इह प्रदेयत्वमेवाशङ्क्य निराक्रियते इति । पूर्वपक्ष माह- ) 'एतानि वै दश यज्ञायुधानि' इति विधि स्वम् ( यागसाधनतया स्फ्यादीनामवधारणम् ), न्याय्यत्वात् ( यज्ञायुधशब्दस्य श्रुत्यर्थलाभात् ) । इतरथा ( यदि उद्धननादीनां प्राप्तानामनुवाद तदा ) पर्यायता ( लक्षणार्थता ) स्यात् । यदैतानि (स्फ्यादीनि) प्रदीयमानानि यागं निर्वर्तयन्ति तदा भवन्ति यज्ञसाधनानि । साधनवचनोऽयं ( यज्ञायुधशब्द अत ) तत्र ( प्रदेयत्वपक्षे ) यज्ञायुधशब्दो मुख्य । इतरथा ( यदि प्रदेयत्वं नोच्यते तदा ) परम्परया ( यज्ञसाधनानुसाधनमिति कृत्वा ) गौण स्यात् । ( गौणशब्देन लक्षणैव उच्यते ) । यागसाधनत्वाविशेषेऽपि ( यागविशेषेऽपि इति मुद्रितपाठ अयुक्त ) प्रधानयागसाधनत्वेन । कथम् ? 'एतानि वै दश यज्ञायुधानि' इति ( एतानि पदानि ) ( अत्र 'दर्शपूर्णमासयोराम्नानात् प्रधानस्यैव अङ्ग इति अधिक मुद्रिते । लिखिते पुस्तके च इद नास्ति ) साकाङ्क्षाणि प्रकरणेन ( प्रकृतेन दर्शपूर्णमासेन सह ) एकवाक्यता यान्ति । अतो नैषां प्रयाजादिभि ( अङ्गैः ) एकत्व । अथवा 'एतानि वै दश यज्ञायुधानि' इति दर्शपूर्णमासयो आम्नानात् प्रधानस्यैवाङ्गम्, न प्रयाजादीनाम् । ( ननु यज्ञशब्दस्य यागमात्रवाचित्वात् तदनुवादेन विधीयमानानि द्रव्याणि प्रकरणबाधेन यावद्-यद्धर्मादिवदङ्गप्रधानार्थानि इति युक्तम् । अत आह- ) 'यद्दर्शीयासादयति' इति अथ प्राप्तमासादनमनूद्य वेदिर्नियम्यते । अङ्गप्रधानहविरासादनमथ प्रधानम् । तस्मात् तत्र ( प्रकरणबाधेन ) वाक्यादङ्गप्रधानार्थता । ( इह तु ) 'एतानि वै दश यज्ञायुधानि' इति न किञ्चिदनूद्यते ( येन तदनुवादेन विधीयमानानि द्रव्याणि सर्वार्थानि भवेयुः ) । न खलु सगाणां ऽर्थेनवैरेवमुपदन्नगिनरद्धिभावक भवितुमर्हन्ति । ( एष मति ) सङ्ख्या चैकक्रियायोगादुपपत्स्यते ।

स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात् तस्माद् यथाश्रुति स्युः ॥ ८ ॥

भाष्यम्— न चैतदस्ति विधि प्रदेयानीति । अनुवाद प्राप्तत्वात् । 'स्फ्येनोद्धन्ति', 'कपालेषु श्रपयन्ति', 'अग्निहोत्रहवण्या निर्वपति', 'शूर्पेण विविनक्ति', 'कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति', 'शम्यया दृषदमुपदधाति', 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति', 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि' इत्येतैः स्वेन स्वेन वाक्येनोद्धननादिषु प्राप्नुवन्ति । प्राप्तानां वचनमनुवाद । प्रकरणमपि वाक्येन बाध्यते । यज्ञायुधशब्दश्चानुवादपक्षे न्याय्य, न विधिपक्षे । गौणो हि स आयुधशब्द स्फ्यादिषु । सङ्ख्याऽपि पाठात्प्राप्ता भविष्यति । विस्पष्ट चैतदुद्धननादिभि स्फ्यादीनि प्रयुक्तानीति । भवति हि तत्र विधि 'स्फ्येनोद्धन्ति' इत्येवमादि । न तु यज्ञायुधानि कर्तव्यानीति । तस्मादुद्धननादिषु वाक्येन प्राप्तानामनुवाद इति ।

टुप्— स्वार्थविमर्शस्य स्वेन ( स्वेन इति मुद्रित पाठ ) किमपि कर्तव्यमिति ( आकाङ्क्षिते ) पदान्तरेण ( उद्धन्ति इत्यनेन ) उद्धनने दत्ते ( प्रयोजन प्रति ) निराकाङ्क्षत्वान्नान्यप्रयोजनम् आकाङ्क्षति । वाक्यादेषां ( स्फ्यादीनां ) उद्धननादि प्रयोजनम् । प्रकरणेन तु सम्बन्धो भवेद्वा न वा । आयुधशब्दोऽप्यायुधेष्वेव ( शक्त्यादिषु ) प्रसिद्धो लक्षणया ( गौण्या वृत्त्या ) स्फ्यादिषु वर्तते । तान्यपि साधनानि यतो यदि इति । न च विद्यमाने विधौ लक्षणा न्याय्या । अत स्तुतित्वादनुवादोऽयम् । ( अस्ति हि विधि यज्ञायुधानि सम्भरति इति ) । तेन स्तावकतया एकवाक्यभूतमवगम्य

मानं न पृथक् विधित्वमर्हन्ति, वाक्यभेदप्रसङ्गात्। सत्या चाऽऽसादनाभिमाना।

**चोद्यन्ते चार्थकर्मसु ॥ ९ ॥**

**भाष्यम्** — अर्थकर्मसु चोद्यन्ते पुरोडाशादीनि, तान्यपि विकल्पेरन्। तत्र पक्षे बाधः। न समुच्चयः, पुरोडाशादीनां निरपेक्षाणां साधनत्वात्, रूपकर्दीनां च।

एवं वा। चोद्यन्ते चार्थकर्मसु। चोद्यन्ते परिधानीये कर्मणि 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति। यदि प्रदीयेरंस्तस्य न भवेयुः। तस्मादपि न प्रदानार्थानीति।

**टुप्** — (अत्र भाष्यकारेण अर्थकर्मसु आग्नेयाग्नीषोमीयादियागेषु पुरोडाशादीनि चोद्यन्ते तैरेषां न विकल्पः पाक्षिकबाधप्रसङ्गात्, न समुच्चयः निरपेक्षविधानात् इत्युक्त्वा पुनः कर्मान्तरं उक्तं परिधानीये कर्मणि पात्राणां दर्शनं प्रदेयत्वेन अनुपपद्यते इति। तत्र यदिदं पाक्षिकबाधनं निरपेक्षत्वं उक्तं तत्र शोभनं इत्यभिप्रायेण आह—) अयुक्तोऽयं विकल्पः, विषमशिष्टत्वात्। द्वितीयेऽपि वर्णके (अन्येन अनुपपत्तिः। कथम्? पूर्वपक्षे) 'मध्यात् पूर्वार्धाच्च द्विरवद्यति' इति (वचनेन) सांनाय्यस्य होमात् क्षिप्रं क्रियते। तेन यजमानो धक्ष्यते। नैतदेवम्। (कुतः?) मरणस्य अनियतत्वात् कदाचित् (दीर्घकालेऽपि क्रियमाणे सति स्फ्यादीनां) आसादनकाल स्यात्, बहुकालकालीनत्वात्। तत्र यज्ञपात्रता नोपपद्यते (स्फ्यादिजातीय हि द्रव्य यज्ञपात्रम्। अन्यथाभावे तदनुपपत्तिः।) अथवा देवतोद्देशेन द्रव्यपरित्यागात् निरिष्टकानि। तस्मात् प्रतिप्रयोगमुत्पत्तेः (एकप्रयोगोपयुक्तानां प्रयोगान्तरेण यज्ञपात्रेन पुनरुपयोगायोगात्)। तदा उरे क्रियमाणे न तैर्धक्ष्येत। निरिष्टकानामुपादानमशक्यम्, निरिष्टत्वादेव। (न हि निरिष्टेन एतस्मिन् कर्मणि उपयोगेन शिष्टाः कार्यं कुर्वन्ति)। अथवा द्रव्यत्यागे उद्धृते यत्र (अविकृत) सत् (द्रव्यदानोद्देशात्) पूर्वं यज्ञसाधनमभूत्, मरणेनोत्तरं न तादृक् (निष्कृष्टम्) इति यज्ञपात्रता नोपपद्यते। उद्धनानार्थत्वे तु न किंचित् विरुद्धम्।

**लिङ्गदर्शनाच्च ॥ १० ॥**

**भाष्यम्**— लिङ्गदर्शनेन च, 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति। तस्मादप्यनुवाद इति।

**टुप्**— [अत्र टुप्टीकाया आनन्दाश्रमीयादौ पूर्वसूत्रे मुद्रितः। परं वयमस्ते 'लिङ्गदर्शनाच्चेति सूत्रमाश्रित्य' इत्यवतारितत्वात् स अस्मिन् सूत्रे आवश्यक इति प्रतिभाति।] ('लिङ्गदर्शनाच्च' इति सूत्रमाश्रित्य) चतुर्दश त्रयोदश इति उभयत्र (पूर्वपक्षे सिद्धान्ते च) तुल्यम्। (कुतः?) न हि द्रव्यभेदादाहुतिभेदः। एकदेवतत्वात् एकैवाहुतिः (भविष्यति)। तत्र केचिदाहुः। उत्पत्तिवाक्यशिष्टेन (पुरोडाशादि-) द्रव्येण बाधितत्वात् (स्फ्यादीनि) कर्मान्तरं (कल्पयन्ति इत्यस्य वाक्यस्य कर्मान्तरमेव पूर्वपक्षे विधेयं) आपद्यते इति (लिङ्ग-) दर्शनं (उपपन्नमिति। तदेतदेकदेशिमतं दूषयति-) इदं नोपपद्यते। न हि द्रव्यसंयोगमात्रेण (देवतामन्तरेण) कर्मान्तरं भवति। तस्माद् यथा वर्णितं। 'चतुरवत्तं जुहोति' इति आघारादिषु सर्वहोमेषु चतुरवत्तम् (विहितम्)। तेनेमानि दश दश द्रव्याणि इतोत्तरमुक्तानि होमसाधनानि (न व्रीहिवद् विकल्पेनोपादानानि, सहविधानात्)। तेनैषां प्रतिद्रव्यं द्रव्यदाने गृह्यमाणे बहूनि चतुरवत्तानि भवन्ति। होमे चैकचतुरवत्तं श्रूयते। यद्यपि एकस्माद् गृह्णीत, इतरैः साधनत्वं हीयेत। (यदि तदनुरोधेन सर्वेभ्यो गृहीत्वा हूयेत तत्र एकत्वं हीयेत)। तस्मात् तदुपपत्तये अन्यस्मिन् याग एकेनैव चतुरवत्तेन। ननु बहूनि गृहीत्वा सकृद्धोष्यन्ते देवतैक्यात्। यथा सांनाय्ये द्वे चतुरवत्ते (गृहीत्वा सकृद्धोमः)। उच्यते। तत्र कर्मभेदादन्येन सह प्रदाने सकृत् क्रियमाणे, इतरदपि (प्रदानं) आत्मीयं चतुरवत्तं विवेकेन गृह्णाति, इतरदपि विवेकेन तत्र चतुरवत्तविधानो नास्ति। इह तु एकत्वात् कर्मणः सह क्रियमाणे चतुरवत्तविघातभयादवद्यते नोपयोगः। तस्मादाहुतिबहुत्वात् दर्शनं नोपपद्यते।

**आ**— 'स्फ्यश्च कपालानि च' इत्युपक्रम्य 'एतानि वै दश यज्ञायुधानि' इति श्रुतम्। नियम

प्रयोजनवत्त्वोपपत्तेः इति मीमांसकमर्यादा । तत्रापि तु लिङ्गवशात् फलवत्त्वस्याङ्गीकारे नातीव काचिदनुपपत्तिः, परन्तु तत्र निराकाङ्क्षस्य फलस्य लिङ्गवशात् प्रतीयते यथा प्रयनमन्त्रादौ । प्रकृते तु प्रथम तावत् इति-कर्त्तव्यतेन किञ्च प्रति विनियोगः 'अथ प्रतिपद्यते इत्याह' इत्यादिना मन्त्रोच्चारणस्यैव इडाभक्षणाङ्गत्वेन विधेयत्वात् । अस्तु वा श्रुत्यादेरुल्लङ्घनेन मन्त्रस्य यजमानविशेषणविशिष्टो-पाह्वानप्रकाशनरूपेण इडाभक्षणाङ्गत्वेन विधिः । सर्वथा नोपाह्वानं नाम किञ्चिदस्ति क्रियाङ्गम्, यत्फलं यज्ञपति-वृद्धिर्भवेत् । यागाङ्गोपयागोपाह्वानप्रकाशनस्यैव तच्च-विषमनुपोपाह्वानस्यैवाङ्गार्थत्वात् ।

वस्तुतस्तु तत्त्वनुपाह्वानस्य मन्त्राङ्गत्वे न तत्फलत्व यज्ञपतिवृद्धेरन मन्त्रे प्रतीयते, येन मानान्तरणिकफलकल्पना शङ्क्येत । नहि इडाभक्षणार्थं यज्ञपतिवृद्धिकर्तृमनुष्योपाह्वानमन्त्रेण यज्ञपतिवृद्धिर्भवति इति मन्त्रस्यार्थस्य प्रमाणान्तरमन्तरेण प्रतीयते, 'ये यज्ञपतिवृद्धिं कर्तुं समर्थास्ते उपहूता' इति हि तदर्थः । न च यो यत्कर्तुं समर्थः तदुपाह्वाने तत्करोते इत्यत्र प्रमाणमस्ति, अतो न तावदस्य फलप्रतिपादकत्वम् । अत एव न प्रोत्साहनार्थ-त्वमपि, वृद्धिगतस्य निष्ठफलानन्तरेण प्रोत्साहनानुपपत्तेः । अतोऽत्र यज्ञपतिवृद्धेः उपाह्वानविशेषणत्वेन व्यावाया: प्रकाशनात्, अदृष्टार्थप्रकाशनविषयत्वेन अदृष्टार्थत्वाच्च, कर्ते मन्त्राप्रकृतत्वात्प्रयोगेऽ यज्ञपतिप्रकाशनमात्रेण च तदुपयोगेऽस्तु । यद्यपि यजमानः न स्वरूपेणोपयुज्यते पर तु गुणभूतः यथा औदुम्बरीसंमानादिषु, तत्राप्या-द्रेपीत्यायात् ( ३।२।८ ) मन्त्रग्रहणेऽपि एकस्यैव ग्रहणं न सर्वेषाम्, यजमानस्यैकारणत्वाभावात् । तत्र का कथा अदृष्टार्थप्रकाशनविषयभूते यज्ञपताविति । अत एव यत्र यजमानस्य मन्त्रप्रकाशनगुणादिफलभोक्तृत्वेन प्राधान्यं यथा सूक्तवाकादौ 'आशास्तेऽयं यजमान' इत्यादौ, यत्र वा प्रोत्साहनार्थत्वेन यजमानोन्निष्ठश्रद्धाजननात् तस्य प्राधान्यं यथा 'आयुर्दा अग्ने' 'उरु ते यज्ञपतिः प्रथताम्' इत्यादौ, तत्रोभयत्रापि स्ये ऊह । तदिदमुक्तं 'विकारस्तत्प्रधाने स्यात्' इति प्रयुदाहरणसूत्रेण ।

मण्डन— 'नहि भवेद् यज्ञपतिस्त्विडायाम् ।'

शंकर— 'न यज्ञपतिशब्देऽस्मो ।' २२.

* यज्ञपतिवत् । यथा 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति यज्ञपतिमनुभाषा होतृणां प्रयासार्थो न स्वार्थं वीक्षते इति अविशेषेण प्रयुज्यते । न वर्धान् यजमानान् प्रति आशः । भा. १०।८। ६५।९१.

* यज्ञपतिशब्दस्य इडोपाह्वानमन्त्रगतस्य बहुयजमानके विकारे नोह, अयमवेतार्थत्वात् तस्य । भा. ९।२।१३।८०.

* यज्ञपात्राणि आ अन्तात् ( यावज्जीवं ) धारयितव्यानि । ११।३।१३।३४–४२, ४५, * यज्ञपात्राणि यजमानत्वेन हि दात्राणि भवन्ति । भा ११। ३।१३।८०, * यज्ञपात्रैः 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' । ६।८।६।३४, * यज्ञपात्राणां अग्नीनां च परिधानीये कर्मणि प्रतिपत्तिः यजमानशरीरे निक्षेपणम् । ११।३।१३।३४. * यज्ञपात्राणां तन्त्रस्य नियम । भाट्ट ११।३।१३.

ऊ यज्ञपात्राणां धारणं आधानमारभ्यैव ॥

प्रकृत्यर्थत्वान् पौर्णमास्याः क्रियेरन् । ११।३। १४।४३ ॥

भाष्यम्—एव स्थितमपवर्गश्चिन्तितम् । अनन्तरं चिन्तान्तरं क्रियते ( सूत्रद्वयेन ) । यज्ञपात्राणि धारयितव्यानि इत्युक्तम् । तत्र चिन्त्यते किं पौर्णमास्याः आरभ्य धारयितव्यानि, उत आ अग्न्याधेयात् इति । किं प्राप्तम् ? पौर्णमास्याः आरभ्य धारयितव्यानि इति । कुतः ? प्रकृत्यर्थत्वात् । इमानि पात्राणि अनारभ्योक्तत्वात् दर्शपूर्णमासार्थानि । तत्रैवासामुत्पत्तिः । तदुत्पत्तिप्रभृति च धारणम् । तस्मात् पौर्णमास्याः आरभ्य धारयितव्यानि ।

अग्न्याधेये चाऽविप्रतिषेधात् तानि धारयेन्मरणस्यानिमित्तत्वात् । ५४ ॥

भाष्यम्— न वा पौर्णमास्या आरभ्य धारणम् । किं तर्हि ? अग्न्याधेयात् । कुतः ? अविप्रतिषेधात् । यद्यपि पौर्णमास्या निहितानि चोदकेन यजमानहविःष्ठानानि । तत्प्रभृति धार्यमाणेषु विप्रतिषेधो भवति, मरणस्यानिमित्तत्वात् । प्राक् पौर्णमास्या यदि मरण-

मापद्येत, यजमानशरीरसंस्कारलोपो भवति । आधाना- च्चारभ्य धार्यमाणेषु अविप्रतिषेधो भवति । तस्मा- दाधानादारभ्य धारणम् ।

वि— ' किं पौर्णमासीमारभ्य यज्ञाऽऽधानमिते धृतिः ।, प्रकृत्यर्थतयाऽऽद्यः स्यात्, मरणानियमात् परः ॥ ' परः पक्षः आधानमारभ्य धारणमिति ।

भाट्टदीपिका तु पूर्वाधिकरणे गता । तत्र हि अन्त- रालभिधानादितीकस्यैवाधिकरणं कृत्वा व्याख्यातम् ।

सण्डन— ' नैषामग्न्याधानात्ते धारणं स्यात् । '

शंकर— ' यस्मान्नेष्टिरन्तु मा । ' सा पात्रधृतिः ।

सू॰ यज्ञपात्राणां यावज्जीवं धारणं नियतम् ॥

यज्ञायुधानि धार्येरन्, प्रतिपत्तिविधानादृजीष- वत् । ११।३।१३।३४ ॥

भाष्यम्— यज्ञपात्राणि तु आ अन्तात् धारयि- तव्यानि । कुतः ? प्रतिपत्तिविधानात् । प्रतिपत्तिरेषां परिधानीये कर्मणि विधीयते, ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति । ऋजीषवत् । तद्यथा, अहर्गणे सर्वे- षामह्नामृजीषोऽवभृथे प्रतिपादनार्थं धार्यते । ' ऋजीष- मप्सु प्रहरति ' इति श्रूयते ( तद्वत् ) ।

यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथा- कामी तदर्थत्वात् । ३५ ॥

भाष्यम्— न चैव पात्राणां प्रतिपत्तिः । किं तर्हि ? यजमानसंस्कारोऽयम् । तदर्थमेषां पात्राणामर्थः श्रूयते । कथं गम्यते ? तेषां तृतीयया निर्देशात्, यजमानस्य द्वितीयया । तत्र यथाकामी स्यात् । तेषामन्येषां वा साधनम् । तदर्थत्वात् अर्थकर्मत्वात्, पात्राणां वै. कैश्चि- दर्थैः सिध्यतीति ।

मुख्यधारणं वा, मरणस्यानियतत्वात् । ३६ ॥

भाष्यम्— मुख्यानां वा आद्यानां पात्राणां धारणम्, नानियमः । कुतः ? मरणस्यानियतत्वात् । अनियतकालं मरणम् । कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः, मरणं चापद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः, यावदस्तदीयैः पात्रैरर्थकर्म भविष्यति । पूर्वेषु विद्यमानेषू- त्पादनमन्येषामनर्थकम् । तस्मान्मुख्यधारणमेव न्याय्यम् ।

यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् । ३७ ॥

भाष्यम्— अथवा न मुख्यानां धारणम् । यो यज- नीयेऽहनि म्रियेत यजमानः, सोऽनेन संस्कारेणाधिकृतः स्यात् । तस्य तानि पात्राणि संनिहितानि । उपवेषवत् । यथा सान्नाय्ययाजिनः उपवेषेणोपधानेनाधिकारः । तस्यो- पवेष संनिहितः इति ।

न, शास्त्रलक्षणत्वात् । ३८ ॥

भाष्यम्— नैतदेवोपपद्यते । किं कारणम् ? शास्त्र- लक्षणं तद्भवति । यथा सान्नाय्ययाजिनः उपवेषेणो- पधानमिति । तत्र हि सान्नाय्यार्था श्रुतिः । तामनुनिष्पद्यते उपवेषः । तस्मात् असान्नाय्ययाजिनः असम्भवः । अपे- दमनियतं संस्कारविधानम्, यजनीये वाऽहन्यन्यत्र वा, अनारभ्यविधानात् 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति । न चान्यस्मिन्नहनि यज्ञपात्राण्युपयोगमर्हन्ति । शक्यन्ते हि धारणेन सम्पादयितुम् । तस्मादुपवेषः अदृष्टान्तः ।

उत्पत्तिर्वा, प्रयोजकत्वादाशिरवत् । ३९ ॥

भाष्यम्— अथवा न धारणम् । किं तर्हि ? संस्कारकालेऽन्यानि नवानि पात्राण्युत्पाद्यानि । प्रयोजक- त्वात् संस्कारस्य । आशिरवत् । यथा क्रतुपेये ' धृतव्रतो भवत ' इति यजमानमाने व्रतदुहः, ' अन्या यजमानस्य व्रतमाशिरे दुहन्ति ' इति श्रुतेराशिरार्थमन्या गौरुपा- दीयते, एवम् ।

शब्दानामसम्बन्धमिति चेत् । ४० ॥

भाष्यम्— अथ पश्यसि एवं सति यजमानशब्दः असमञ्जसो भवति । यज्ञसम्बन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति । न च नवानां यज्ञसम्बन्धोऽस्तीति ।

तथाऽऽशिरेऽपि । ४१ ॥

भाष्यम्— आशिरेऽपि याऽसावन्या गौरुपादीयते, सा यजमानस्य व्रतधुङ् न भवति । तत्र शब्दस्यासामञ्ज- स्यमेव । यदि तत्रान्या गौः, इहाप्यन्यानि पात्राणि भविष्यन्ति । तयोर्न विशेष इति ।

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृता- वर्थेनापूर्वार्थवद् भूतोपदेशः । ४२ ॥

जुहोति' अथ सामान्यविधिः नत्वर्थे. । पू. १५. * 'यदुत्तमे प्रयाजे देवताः समावर्तति, प्रयाजभाज एवैनास्तत् करोति' तथया श्रुतिः. सोऽपि भागी भवति एवं तदप्रभागे देवताभागिनीः करोति । प्रयाजविषयिका कौषीतकिश्रुतिः. । संकर्ष. २।२।२. * 'यदेकया जुहुयात् दर्विहोमं कुर्यात्' इत्यत्र दर्विहोम. कर्मनामधेयम् । स्थालीपाक', अष्टका', अग्निहोत्रम्, नाग्निहोमाः इत्यादयो दर्विहोमाः । नात्र वाक्ये दर्वीरूपो गुणो विधीयते, 'दर्विहोमो यज्ञाभिधानं होमसंयोगात्' इति । वि. ८।४।१. * 'यदेषादः पौर्णमास्या हविः' इति वाक्ये पौर्णमास्य हविः. अग्नीषोमीयपुरोडाश एव उत्कृष्टं, अन्यैः होमादुत्कर्षः । उपांशुयाजात्प्रमपि अग्नीषोमीय होमात् प्राक् न कर्तव्य ब्राह्मणेन, परन्तु प्राजापत्यं वैष्णवं कर्तव्यमेवेति न तयोरुत्कर्ष । दर्शपूर्णमासयोः । भा ५।४।६।१९-२१. * 'यदेव तृतीयं ज्योतिस्तदेव तेनाप्यते' ■ आहवनीय प्रकृत्य श्रूयमाणत इति पूर्व. पक्षः । तृतीयज्योतिःपद औत्तरवेदिकाग्निपर इति सिद्धान्तः । संकर्ष. ३।१।१.

■ यत्कार्यं जायते यस्मात्तस्मिंस्तत्प्रविलिप्यतेति न्यायः । यथा — 'मृत्तिकायां घटस्तिष्ठति घट. स्वर्णे अङ्गुलीयकम्' इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि । इति । साहस्री. ९०८.

* 'यत् किंचित् सोमलिप्तं तेनावभृथं यन्ति' इतिनात् । अत्र यथा प्रतिपत्तिर्न स्वीक्रियते तथा 'स्वरुणा पशुमनक्ति' इति पदाञ्जन प्रतिपत्ति., पूर्वपक्षे । सोमलिप्ते तु अवभृथपदे गौणत्वादनेकदोषमिया तदङ्गीकरणाभिक्षुत्तमेव (४।२।८ इत्यत्र) इत्युक्तम. । भाट्ट. ४।४।१०. * 'यत् कुम्भीतुरोति तमग्नि दारुमयेण होत पशुनिर्धूयवाये' । सत्यमस्यार्थीय इदम् । संकर्ष १।३।२.

■ यत्कृतकं तदनित्यमिति न्यायः । कृतकं कार्यम्, जन्यभाव इति यावत् । तथा च कार्यमात्रस्योत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वाच्च प्रागभावप्रतियोगित्व-घटितानित्यत्वम् । ध्वंसस्य प्रागभावप्रतियोगित्वेऽपि भाववत्त्वाभावान्न व्यभिचार इति तार्किकाः । वेदान्तिमते तु ध्वंसस्यापि नाशाभ्युपगमेन न भावत्व निवेशनीयमिति भेदः । साहस्री. ९११.

* यथार्थात् कृत न तत् चोदकः प्रापयति । भा. १०।७।८।२३, * यत्र बुद्धौ (विशेष्यत्वेन) सन्निहित वस्तु (प्रमाणं) इत्युच्यते । ८।२।१७।३३–३४, * यत्र विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः क्रियते । यथा घटं न पश्यामि इति प्रदीप करोति, न शशविषाण न पश्यामीति । ७।२।१।१०.

■ यत्र स्तूयते तद्विधीयते इति न्यायः । अनेन अध्ययनस्यार्थज्ञानमपि विधिरभ्युपगन्तव्य इत्युक्त प्रदर्शने स्वीक्रियते । साहस्री. ७६६.

* 'यत्रास्ति भूतलादौ घटादि तस्याग्रहीयमाणस्य । योऽसौ प्रमाणविरहः प्रमाणनिषयेऽपि सोऽभावः ॥' ऋजु. पृ ९४.

■ यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि नेति न्यायः । स्वप्नोऽयम् । साहस्री. ९७४.

* 'यत्र दुःखेन सम्भिन्नं, न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम् ॥' इद न लक्षणम्, विशेषणचतुष्टय यावत्त्वाभावात् । किन्तु स्वरूपकथनमात्रम् । विशेषणत्रयेणापि हि शास्त्रादिष्वनुप्रवैलक्षण्यमात्रं प्रवक्ता सुखस्य अवान्तरजाति स्वर्गलक्षण लभ्यते । तद्धि दुःखमिश्रम्, इदं तु न तथा । एव शास्त्रादिषु ग्रस्तत्वमपि वर्षादिवधिप्रमाणाभावात् शान्तत्वापहाराद्विशङ्कनीयम् । इद तु अर्थवादादिप्रमाणतो वर्षादिपर्यवस्थाभोग्यत्वात् प्रमितम्, न तन्मध्ये अपहारादिशङ्कावकाशः । तथा इह अनन्तर अनभिमृष्ट सतत वर्षादिपर्यन्तम्, इतरत्तु न तथा । किंच सुखन्तु गोभगवदिलावत्तया अवच्छिन्नम् । एतदिद अभिलाषमात्रेण उपनीत उपस्थितम् स्रक्चन्दनवनितादिविषयापेक्षम्, इतरत्तु विषयापेक्षमेव । यद्वा, इद प्रयत्नानपेक्षाभिलष्यमानोपनीतविषयम्, इतरत्तु प्रयत्नोपनीतविषयमिति । अत एव आनुकृत्याधिकरणे 'सल्लावां सर्वशब्दानामिति प्रख्याप्यलक्षणम् । न्यपूर्वदेवतास्त्राग समभ्यासुर्णनादिषु ॥' (१।३।९।३० पृ. २९७) इति, वैयाकरणमतनिरासावसरे तदुक्तदृष्टान्तोपमोक्तयर्थं 'कार्यसामर्थ्यमिन्द्रादि-

निर्मिश्रसुखसन्ततिः' (वा. पृ. २१९) इति वार्तिके निर्मिश्र-सन्ततिपदाभ्यां आवनूनीयविशेषणार्थौ एव स्वर्गपदात्सुपलब्धव्यार्थमुक्तौ। तद्व्याख्याने भट्ट-सोमेश्वरेण तु 'केवलमेव सुखं इत्युक्तेः दुःखासंभिन्नत्व-मेव स्वर्गत्वसामान्योपलक्षणत्वेनोक्तम्, मनसिस्त्व तु चिर कालतात्पर्यं दुःखासंभिन्नत्वेनैव आक्षिप्यते' इति वदता अलौकिकसुखविशेषपरत्वसत्यर्थं वद्गुणाच इत्युक्तमिति। बाल पृ. ४८–४९

यस्मिन्नुत्पन्नेऽपि तदुत्पत्तिमदपीति न्यायः। 'ध्रुवं जन्म मृतस्य च' इति भगवद्वाक्यमस्मिन् न्याये बीजम्। साहस्री. २६२.

* 'यत् पशुर्मायुमकृत॰' इति मन्त्र. निमित्त-विधिस्वरूप.। बाल. पृ. ६५. * 'यत् पूर्णं तन्मनु-ष्याणां॰' इत्यादौ विधिरनुवादो वा इति संशये, अनुवाद इति सिद्धान्त ज्योतिष्टोमे। भा. १।४।३।११

यद्यथा वर्तते तस्य तथात्वं भाति मानतः इति न्यायः। यत् शुक्त्यादि यथा येन शुक्तिकादि-रूपेण वर्तते, तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरतीत्यर्थः। उक्तं च- 'यद्यथा वर्तते तस्य तथात्वं भाति मानतः। अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्व-लौकिकः॥' इति। साहस्री. ५५१.

यद्यदा यत्करणसमर्थं तत्तदा तत्करोतीति न्यायः। यथा- 'सामग्री स्वकार्ये (कर्तुं) समर्था' इति। सामग्री कारणसमूह इत्यर्थः इति तत्र बौद्धे। साहस्री ६९६.

यद्यदा यन्न करोति तत्तदा तत्राऽसामर्थ्य-मिति न्यायः। यथा हि- शिलाशकलमङ्कुरे इति सर्वदर्शनसंग्रहे बौद्धे। साहस्री. ६९७

* यत् यस्मात् प्रतीयते तत् तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम्। मीन्या * 'यज्ञोन्या उद्गच्छतो-र्गायति'। इह तस्य (ऐ) आयी भवति। सोऽत्र आयीभावरूप ऊहः छन्दःसामर्थ्यवशेन वर्तते. न तु चोदितत्वात्। 'कया नश्चित्र' इत्यत्र 'कया' इत्यक्षर-द्वयात्मकः प्रथमो भागः। 'नश्चित्र आभुवत्' इति द्वितीयो भागः। तत्र 'श्चि' इत्यक्षरस्थः इकारो वृद्धस्वरत्वात् ऐ भवति, स च सन्ध्यक्षरत्वात् विश्लेषेण 'आई' भवति। परन्तु 'कस्त्वा सत्यो मदानां' इत्यत्र 'स्त्वाई मदानां' इति न कर्तव्यम्। किन्तु 'अवाई तृणाम्' इत्यत्र कर्तव्यम्। वि. ९।२।९. * 'यद्वैतदविशेषेण स्थितं क्रमवशादुभौ। प्रत्य-यार्थे सह ब्रूत प्रकृतिप्रत्ययाविति॥' इति न्यायेन (वा पृ. ९०२) कर्तुः प्राधान्यस्यापि वाच्यत्ववत् आगमिकतया दर्शनीयत्वात् (व्याकरणमते)। सु. पृ. १८१७.

* यद् विधेयमसमाप्तं तदेव स्तोतव्यम्। भा. ३।७।१२।२० पृ. ३५९. * 'यत् सप्तदशवतीमुप-दधाति॰' इत्यादिश्रुतिः, पानवारणपूर्वकभोजनाचारमूल-भूता। एतेन परिगृह्य इत्येव अस्ति इति अन्वयः। सु. पृ. २१८. * 'यः अमावास्यां पौर्णमासीं वाऽतिपातयेत्, अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्'। अयं विहितारम्भनिमित्तकपुरुषार्थाधिकारविधिः। बाल. पृ. १५. * 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽ-मावास्यायां पौर्णमास्यां वा' इत्यत्र मुख्यैव पर्वणि, दीक्षायास्तु अपकर्ष.। न तु दीक्षणीया पर्वणि, मुत्याभ्र-ष्टेत्यर्थं इति। प्रधानलोपयोः प्रधानस्य प्राबल्यात्। वि. १२।२।९. 'य इष्ट्या' इति वचनं (यथा) साङ्गानि कर्माणि अमावास्याकालं प्रति उपादाय दर्शपौर्णमाससा समत्वात् उक्तं यत् आतिदेशिकं न्यहकालत्वं बाधते, न तथा चातुर्मास्यसवनमेधीयेष्टिषु। इति पूर्वपक्षः। सार. ५।१।११. * 'य इष्ट्या' इत्यादिवाक्येन यथा पौर्णमास्यादिकालविधा-नात्, इत्यासां (विकृतीनां) इष्टीनां न्यहकालता एव प्रातरादिकालविधानात् सद्यस्कालता किं न स्यात् अत आह पूर्वपक्षी। सोम ५।१।११. 'य इष्ट्या पशुना॰' इति वचनेन विकृतीनां चोदकेन प्राप्त न्यहकालत्वं बाध्यते। वि ५।४।७. * 'य एतेनानिष्ट्वाऽथान्येन यजेत' इत्यत्रान्यशब्देन अग्निष्टोमादयः सैव्या, एकाहाः, अहीनाः, सत्राणि, चेति अशेषाः सोम-विकृतयो गृह्यन्ते। ५।३।१४.

■ य एतेनेत्यग्निष्टोमः, प्रकरणात् । ५।३।१३।३७ ॥

'एष वाव प्रथमो यज्ञो यज्ञानाम्, यत् ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजेत गर्तपत्यमेव तज्जायते, प्र वा मीयते' इति श्रुतम् । यज्ञानां मध्ये ज्योतिष्टोमः प्रथमो यज्ञः । यः ज्योतिष्टोमं अकृत्वा अन्यं याग प्रथमतः कुर्यात् तेन तथा कृतेन गर्तपत्यं गर्ते पतनमेव स्यात् अथवा प्रमीयेत मरणं स्यात् इति श्रुत्यर्थः । अत्र श्रुतौ 'य एतेन' इति एतच्छब्देन को यागो गृह्यता इति विचारे सिद्धान्तमेवाह । य एतेन इति एतच्छब्देन अग्निष्टोम एव उक्तः, नान्यः कश्चित् । प्रकरणात् । अग्निष्टोम एव हि प्रकृतः । प्रकृतवाचकं च सर्वनाम । तथा च अग्निष्टोमविषयकमेतद्वचनम् । वाक्यार्थकथनार्थमेव सूत्रम् ।

लिङ्गाच्च । ३८ ॥

सिद्धान्ते हेत्वन्तरमाह । चकारः समुच्चये । लिङ्गात् अग्निष्टोमपरः एतच्छब्दः । उक्तवाक्यस्य वाक्यशेषे, नवत्यधिकशतपरिमिताः स्तोत्रीया ऋचः उक्ताः । ताश्च अग्निष्टोमे एव भवन्ति नान्यत्र । वाक्यशेषश्च 'नवतिशत (१९०) स्तोत्रीयाः' इति । सम्भवाक्यमिदं भाष्ये एवमुक्तम्- त्रिवृद् बहिष्पवमान एव च नव ऋचः, पञ्चदश आज्यानि चत्वारि, ता एकोनसप्ततिः । [ ९+ (१५ × ४ = ६०) = ६९ ] पञ्चदशो माध्यन्दिनः पवमानः, तेन चतुरशीतिः [ ६९ + १५ = ८४ ], सप्तदशानि पृष्ठानि चत्वारि, ता अष्टषष्टिः. चतुरशीत्या सह द्विपञ्चाशच्छतम [ ८४ + ( १७ × ४ = ६८ ) १५२ ] । सप्तदश आर्भवः पवमानः तेन षष्ट्यधिकशतं नव च [ १५२ + १७ = १६९ ] । एकविंशं यज्ञायज्ञीयं तदेकत् नवतिशतम् [ १६९ + २१ = १९० ] अग्निष्टोमस्य इति । के.

● 'य एतेनेत्यग्निष्टोमः प्रकरणात्' । ५।३।१३।३७-३८ ॥ 'न प्रथमयज्ञे प्रवृत्त्यात्'- प्रत्येकशब्दस्यैव अर्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य च अप्रवृत्तप्रवर्तनविषयवाचित्वात् आद्य प्रयोगपरत्वावगतेः, यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वम्, प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वा अङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स च अग्निष्टोमसंस्थाकज्योतिष्टोमस्य पाशुनिकन्यायात् अतिरात्रसंस्थाकस्य च वचनात् । भाट्ट. ३।३।१२. ● 'य एतेन०' इत्यनेन अग्निष्टोमस्य ज्योतिष्टोमस्य वादः । भा. ५।३।१३।३७-३८. ● 'य एतेन अनिष्ट्वा अथान्येन' इति वाक्यं पूर्वमग्निष्टोमस्य कर्तव्यतामाह पश्चाद् गवादीनाम् । वा. ५।३।१४।३९. ● 'य एवं विद्वानग्निं चिनुते' इति चयन अग्निद्रव्यसंस्कारः । वि. २।३।१०. ● 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादि विद्वद्वाक्यं अनुवादकं न कर्मान्तरविधायकम् । २।२।२. ● 'य एवं विद्वान् वामदेव्यं गायति' इत्यादीनि यजुर्वेदवाक्यान्येव । वा. ३।३।२।९ पृ. ८११. ● 'य एव पदानां प्रतिपत्तौ प्रतिपदं पाठः' इति महाभाष्यकारोक्तन्यायेन साधूनां प्रतिपदं पाठं नाप्ययस्यति । सु. पृ. २६३.

■ यः कल्पः स कल्पपूर्वक इति न्यायः । एव हि संसारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशतीति भावः । 'यथापूर्वमकल्पयत्' इति श्रुतेरिति । साहस्री. ४७१.

● 'यः कामयेत, प्रथेय पशुभिः, प्रजया जायेयेति, स एतामवि मेषीमादित्येभ्यः कामायाऽऽलभेत' । अत्र बहुदेवत्येऽपि एकस्मिन् पशौ गर्भैकत्वात् मेषपतिशब्दे नाभ्यूहः । एकत्वनान्तश्च मेषपतिशब्दः ( तद्घटितमन्त्रः ) द्विवचनान्तेन विकल्प्यते प्रकृताविव । वि. ९।३।१३. ● 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयात्' अयं विशेषविधिः पुरुषार्थः । बाल पृ. २९.

■ यः कारयति स करोत्येवेति न्यायः । कारयितुः कर्तृत्वमिति । यथा राजादिर्हि भृत्यैः युद्धादिकं कारयन् स्वयं करोतीति प्रसिद्धं तथा प्रकृतेऽपि । साहस्री. ५४.

य कुरुते स भुङ्क्ते इति न्याय । स्पष्टं । साहस्री १०७

यश्चार्थादर्थो न स चोदनार्थ इति न्याय । अस्यार्थ – य श्रुतार्थनान्तरीयकतया लभ्यते, न स वेदार्थं इत्यर्थ । नान्तरीयकतयैवास्य सन्निधिकल्पकत्वेऽस्यर्थ । शबरस्वाम्युक्तिरूपोऽयं इति (११।३।८।१९)। साहस्री ७८३

* यश्चोभयोर्दोषो नासौ एक पर्य निवर्तयति । भा ८।३।३।७, * यश्चोभयोर्दोषो नासावेकस्य वाच्य । ८।३।६।१४, * यश्चोभयो पर्यनुयोगो न तत्रैकश्चोद्यो भवति । ६।६।१।२०

यश्चोभयो समो दोषो न तेनैकश्चोद्यो भवतीति न्याय । कल्पनागौरव चात्मकल्पोपचयो नाति रिक्तस्योपकल्पना अपकल्प्यते इति सर्वदर्शनसंग्रहे पाणिनीयेऽभिहित । साहस्री ७२२

* 'यश्चोभयो समो दोष परिहारोऽपि वा सम । नैक पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति न्याय । 'तन्मायश्चोभयोर्दोष ' दोष समानम् । श्लोवा नूपवादे १७२ * यत्र यस्य कर्ता, स तत्र व्यपदिश्यते, यथा पाचको लावक इति । भा १।१।२।२ * 'यो नाम ननुमध्यस्थ कन्यामानि भञ्जयेत् । न कतोश्चास्य वैगुण्य यथाचोदितसिद्धित ॥' पुरुषार्थानुष्ठानकत्वे तु 'यो नाम०' इति न्यायात् क्रतोर्न वैगुण्य किन्तु पुरुषस्य प्रत्यवायमात्र इति प्रतिषेध्यप्रतिषेधयो एक-रूप्यमेवाश्रित कत्वधिकरणे । सोम १०।८।७ * य पन्थे चोद्यते, स इतिकर्तव्यतया सह क्रमान इति कर्तव्यता प्रति प्रधानम् । या ७।१।१।२ * 'यो ब्राह्मणायावगुरेत्, त शतेन यातयात्, यो निहनेत् सहस्रेण, यो लोहित कुर्यात् यावत प्रस्कन्द्य पांसून् सङ्गृह्णीयात् तावत सवत्सरान् स्वर्गं लोक न प्रजानीयात्, तस्मात् ब्राह्मणायावगुरेत्, न हन्यात्, न लोहित कुर्यात्' अयं पञ्चो व्यवस्थात्मक प्रतिषेध । बाल-पृ ३८ * 'यो ब्राह्मणायावगुरेत्०' इत्यादि प्रतिषेध नरकपरिहाराय । स च पुरुषानर्थकाव्य सर्वीक्षित न तु क्रत्वर्थ । वा ३।४।६।१७. * 'यो मास, स सवत्सर ' इति वचनात् मास गौण संवत्सर । वि. ६।७।१२

यो यद्वपति बीज हि लभते सोऽपि तत्फलमिति न्याय । स्पष्ट । साहस्री ७३६

यो य प्रति सेव्य स तस्माद्भिन्न इति न्याय । तत्र तथाहि अनुमानेनापि जीवेश्वरयोर्भेदोऽव सीयते । परमेश्वरो जीवाद्भिन्न, त प्रति सेव्यत्वात् । यो य प्रति सेव्य स तस्माद्भिन्न, यथा भृत्याद्राजा । साहस्री ७१०

यो यस्य प्रसङ्गे लभतेऽसौ तत्कृतानि कार्याणीति न्याय । तद्यथा– उपाध्यायस्य शिष्यो यान्यनुकूलानि गत्वाऽऽसनादीनि लभते, एव सद्वा तरेऽपि बोध्यम् । अयं 'स्थानिवदादेशोऽनल्विधौ' १।१।५६ इति सूत्रभाष्ये स्पष्ट । साहस्री ८३३.

यो यस्य मित्र न हि तस्य दूरमिति न्याय । स्पष्ट । साहस्री ९८०

यो यन्निरूपितसांसिद्धिकप्रकाराक्रान्त स तन्निरूपित-तज्जातीयविशेषणाधानविशेषसतानक इति न्याय । अयं मर्यादापरिपाटीमध्ये विस्तरशो निरूपित इति निरस्यते । साहस्री ८१५

* यो यद्विशेषस्य बोधक स तद्बोधक इति श्रीतत्त्वी व्याप्तिग्रहणम् । मु पृ १४३६ * यो याग कर्ता स एव यागफलभोक्ता । यजमानस्य च प्रयोजक तया शास्त्रकर्तृत्वस्येन । साक्षात्तु स्वागयान यजमानेन कर्तुं न शक्यत् ऋत्विग्भि । वि २।७।८ * 'यो वा अयस्या वस्य प्रवेत्थ' इति यजमानेतरस्य परानुकीर्तने निर्देशम् । सङ्कर्ष ३।८।२ * 'यो विद्वान् स नैकत्र' इत्यादौ दर्शपूर्णमासयो विधिप्रत्ययादो वा इति मध्ये अनुवाद सिद्धान्त । भा ३।४।३।११, * 'यो पुष्टिकामो, योऽन्नाद्यकामो, य स्वर्गकाम, स सौभरेण स्तुवीत । हीष् इति पुष्टिकामाय निधन कुर्यात्, ऊर्क् इत्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय इति' । तत्र किं सौभर पुष्ट्यादेर्निमित्त हीष् इत्यादि अथवा पुष्टेर्निमित्त अथ सौभरे एव निधनविशेष यजहया इति विचारे

नियतविशेषयत्स्या इति निर्णयः । २।२।१३।२८–२९.

**☞ यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः इति न्यायः ।** साहस्री. १०९.

• 'यः शिष्यते स लुप्तार्थाभिधायी' इति न्यायः । प्रजापतिर्देवता एषा इति विग्रहे प्रजापतिशब्दात् समनन्तरं तद्धितेषु कृतेषु, तेषां चैकशेषेण एकशेषे सति 'यः शिष्यते०' इति न्यायेन शिष्टस्यैकस्य तद्धितस्य तत्तदर्थानुवृत्त्या प्रथम बहुत्वेनान्वितस्य, पश्चात् प्रकृतिभूतप्रजापतिवाचकेन अन्वयः । कु. २।२।७।२१.

• 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तु प्रतीक्षेत नक्षत्रम्' इति कालविशेषनाम सोमस्यैव, न व्याघातस्य । भा. ५।४।५।१५–१६, • यो हि अन्येन सह समनुष्ठीयते, न तत्समीपगतोऽपि अन्यः तेन सह सम्बन्धमर्हति । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दो न पुरुषेण सम्बध्यते । ३।१।६।१२, • यो हि अंगेन द्रव्यं उच्छिष्टः शयानो मौञ्जपादो वा, वामेन हस्तेन वा पादेन वा, यथाकथंचित् देवतायै उत्सृजति, तस्य फलं न भवति इति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं शुचौ देशे, प्रयतः, प्राङ्मुखः, दक्षिणेन हस्तेन, समाहितमना, मन्त्रवत् नियमवच्च देवतायै उत्सृजति, तस्य फलं भवति इति स्मरन्ति । ७।४।२।१. • 'यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोति इति कल्प्यते' इति औदुम्बराधिकरणोक्तस्य (वा. २।२।२।२२ पृ. १३६) अङ्गापनारन्यायस्य स्वरूपम् । सु. पृ. ८५५, • यो हि महतः भागान् कल्पयति, भरणस्थो एकम् । भा. २।२।७।२१

**☞ यो हि मुक्तवन्तं प्रति ब्रूयान्मा भुक्था इति किं तेन कृतं स्यादिति न्यायः ।** अयं 'स्थानेऽन्तरतमः' । १।१।५० इतिसूत्रमहाभाष्ये 'अनर्थकं च' इति वार्तिकव्याख्यानावसरे समुद्धृतः । भुक्था इति निरनुस्वारपाठ इति बोध्यम् । साहस्री. ४३०.

• 'यो हि यदिच्छति, स तत् करोति' इति न्यायः । कणिका. पृ. ९६. • 'यो हि यदिच्छति०' इति न्यायश्च प्रवृत्तस्यैव सिध्यति नाप्रवृत्तस्य इति निश्चयविषयः इति भाव. । सोम. ६।२।२. • 'यो हि यदिच्छति०' इति हि इन्द्रियं भावयितुं स्वरसेन एव पुरुषः प्रवर्तते । वा. २।२।११।२६ पृ. ५५१, • यो हि स्मरति इदं मया कर्तव्यमिति स तत् करोति । वा. १२।३।१६।३७, • यौ द्वौ गोणौ स एको वाहीकः (इति गौणता) । ८।३।६।२९. • ये एव लौकिकाः पदार्थाः, ते एव वैदिकाः, लोपागमविकारविशेषास्तु छान्दसाः व्याकरणसिद्धाः । वि १।१।१०, • ये धर्मा यस्मिन् प्रकरणे आम्नाताः, ते तत्रैव व्यवतिष्ठन्ते । अतः अतिदेशनिवारः कर्तव्यः । ७।१।१. • 'ये पुरोदञ्चो दर्भाः' इत्यस्यानुवादता (मैत्राग्निहोत्रे)। भाट्ट. ३।४।४. • 'ये पुरोदञ्चो दर्भाः तान् दक्षिणाग्रान् स्तृणीयात्' इति मृताग्निहोत्रे, महापितृयज्ञे वा श्रूयते । तत्र अनुवादः एव, न विधिः । भा. ३।४।१।१–४, ५ पृ. ८९७. • 'ये वा अमी वैराजस्य स्तोमास्तैरेवैते सामन्वन्तः' अत्र तत्तोनत्वमहास्तवसाम्यप्रतिपादकवियस्य गौणत्वमपि तद्योग्यत्वपादनम् । सङ्कर्ष. ३।३।६.

**☞ येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः ।** यथा– 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इत्युक्ततात्पर्यनिर्णायकषड्लिङ्गेषु आदिमौ प्रकरणप्रतिपाद्यस्य अर्थस्य तदाद्यन्तयोरुपपादनरूपावुपक्रमोपसंहारौ स्तः । अयं न्यायः पदार्थाऽनुमाने प्रसिद्धः । साहस्री. १२८.

• येन क्रमेणोपकरण तेनैव क्रमेण नियोजनादि वाजपेये प्राजापत्यपशुषु । चिन्दु. ५।१।५.

**☞ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायः ।** आप्तमिति भावे क्तः, येन नाप्राप्ते इत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थः, ननु- द्वयस्य प्रकारार्थदार्ढ्यबोधकत्वात् । अयं हि विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्न वृत्तिसामान्यधर्मावच्छिन्नोद्देश्यक-

* यस्मिन् काले यत् प्रयोजनमपेक्ष्यते तस्मिन् काले एव तत् सम्पाद्यते इति लौकिको न्यायः उपावहरणाधिकरणे बीजम्। वृ १०।८।२२।८०.

‡ यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः। १।४।३।३॥

'चित्रया यजेत पशुकामः' 'त्रिवृद् बर्हिष्पवमानम्' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' इत्युदाहरणम्। किं चित्राशब्दः, बर्हिष्पवमानशब्दः, आज्यशब्दः, पृष्ठशब्दश्च गुणविधयः, उत कर्मनामधेयानि इति संशयः। अत्र प्रभाकरेण उद्भिदधिकरणे एव सर्वेषां वक्ष्यमाणाधिकरणानामपि नामधेयत्वे सिद्धे तत्तदुदाहरणेषु विशेषाशङ्का वाजपेयपर्यन्ताधिकरणचतुष्टये निराक्रियते इति चतुर्णामधिकरणानां उद्भिदधिकरणशेषत्वात् तदीयसङ्गतिप्रदर्शनेनैव प्रमाणलक्षणे सर्वेषां सङ्गतिरुपपादिता। तेन उद्भिदधिकरणसङ्गतिरूपणेनैव सर्वेन सङ्गन्तव्यमिति यथावार्तिकमेव अधिकरणं प्रस्तूयते।

उद्भिदादिपदानां यौगिकानां क्वचिदर्थविशेषे प्रसिद्धिरहितानां नामधेयत्वं निरूप्येदानीं व्रीह्यादिपदवत् निरूढार्थानां चित्रादिपदानां नामधेयत्वं निरूप्यते। अत्र पूर्वपक्षिणोऽभिप्रायः। ननु उद्भिदादिपदानां क्वचिदर्थविशेषे निरूढत्वासम्भवेन यजिसामानाधिकरण्यात् यागनामधेयत्वम्, चित्रापदस्य तु चित्ररूपार्थविशेषे, तथा आज्यादिपदानां घृतादिरूपार्थविशेषे निरूढत्वात् व्रीहिसोमवत् यागनामत्वासम्भवात् गुणविधित्वमेव युक्तम्। एतच्च पूर्वाधिकरणे प्रयोक्तं 'पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति। निर्णीयते, निरूढं तु न स्वार्थादपनीयते ॥' इति (वा. पृ ३२५)। तथा च सति प्रसिद्धार्थत्वम्, अविकार्यत्वम्, प्रवृत्तिविशेषकरत्वं चानुरुद्धं भवतीति। ननु कुत्रायं गुणो विधीयते? न तावत् फले, आश्रयाभावात्। नापि 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत् संसृष्टं प्राजापत्यं भवति' इत्येतद्वाक्यविहिता प्राजापत्येष्टिः सन्निहिता समस्ति, तामेवाश्रयमाश्रित्य पश्वर्थे फले गुणविधानं इति वक्तव्यम्। तस्या अफलत्वेन आश्रयत्वायोगात्। अथ तस्यामेव प्राजापत्येष्टौ गुणविधिः (द्रव्ये) इत्युच्यते, नैवम्। तस्या उत्पत्तिशिष्टद्रव्याद्यवरुद्धत्वेन गुणान्तरप्रवेशासम्भवात्। अथोच्यते नायं चित्राशब्दो द्रव्यपरः, किंतु चित्ररूपवर्णपर एवायम्। न चात्र वर्णान्तरं श्रुतमस्ति, अतो दध्यादिभिरेव विहितैः चित्रवर्णैर्यष्टव्यमिति वाक्यार्थः। एतदप्ययुक्तम्। वस्तुतस्तस्य नित्यानुवादासम्भवेन आनर्थक्यात्। किंच चित्रया इत्यनेन स्त्रीप्रत्ययान्तेन पदेन स्त्रीत्वसमानाधिकरणचित्रत्वं प्रतिपाद्यते, न तु चित्रत्वमात्रम्, तच्च प्राणिद्रव्ये एव परं सम्भवति, न दध्यादौ। तेन प्रकृतप्राजापत्ययागेऽपि न गुणविधिः। अत एव दधिमधुघृतवाक्योत्पन्नयागमनूद्य चित्रापदेन यथासिद्धान्तं फले विधानं इत्येतदपि न सम्भवति, स्त्रीप्रत्ययान्तेन चित्रापदेन अप्राप्तरूपस्य अनुवादासम्भवात् इति। नापि चित्राद्रव्यविशिष्टं यागान्तरमेव फले विधीयते अध्यवसितचित्रगुणकद्रव्योपादाने प्रवृत्तिविशेषानिर्धारणेन विध्यन्तरानुपस्थिते देवताया अभावेन यागत्वाभावात्। किंच गुणस्याप्रवेशस्य न तावद्यागसाधनत्वम्, कृत्स्नलक्षणायां तु लक्षणैव तावद्दोषः। किंच मत्वर्थलक्षणा, विशेषणविधिकल्पना, उत्पत्तिविधिकल्पनाऽपि, चित्रापदाच्च नानाकारीयद्रव्योपस्थित्येन अध्यवसायश्चेति न विशिष्टविधिः। उच्यते। पशुयागस्य प्राथमिकत्वात् 'प्रकृतौ वा द्विरुक्तत्वात्' इति न्यायेन ( ३।६।।१२ ) अनन्यपशुयागप्रकृतिभूतेऽग्नीषोमीयपशुयागे चित्रत्वस्त्रीत्वविधानमिति ब्रूमः। ननु अग्नीषोमीयपशुः उत्पत्तिशिष्टकृष्णसारङ्गलोहितसारङ्गादिवर्णान्तरावरुद्धः पुंस्त्वावरुद्धश्च, तेन तत्र कथं वर्णान्तरं लिङ्गान्तरं वा विधातुं शक्येत, तथा सति कर्मणि कथमनेकार्थविधानं उपेक्षापदमपि उपयाति? न च अत्र वाक्यान्तरासम्भवोऽपि, यतोऽस्ति अग्नीषोमीयविकृतिभूता सारस्वती मेषी, न च तस्या वर्णान्तरं विशेषकमस्ति लिङ्गान्तरं वा। न च तत्र अनेकार्थविधानदोषोऽपि, चित्रत्वमात्रविधानात्। तेन यथा अनारभ्याधीतमपि स्रुवादस्य दर्शपूर्णमासाद्यप्रकृतौ पाठद्वयादृशेन प्रवेशं अलभमानं मिन्दाविन्दाऽध्वरकल्पादासु विकृतिषु निविशते, तथा इहापि चित्रत्वमात्रविधानं सारस्वतमेषीगोचरमेव भविष्यतीति।

मैवम् । 'चित्रया' इत्यत्र चित्रत्वस्त्रीत्वविशिष्टं करणत्वं तावत् तृतीयाविभक्त्या अभिहितं प्रतीयते । यथा 'पशुना' इत्यत्र एकत्वपुंस्त्वविशिष्टं करणत्वं प्रतीयते। तथा चेयीयम् स्त्रीत्वविशिष्टं करणत्वमनुवाद्य तथा किं चित्रत्वविशिष्टमनुवाद्य विधेयं वा ? न तावदनुवाद्यम्, सोमीयत्वेन चित्रत्वस्य अप्राप्तत्वात् । नापि विधेयम्, वस्तुन्यवस्थिता विभक्ते अनुवाद्यविधेयार्थमति वाक्यभेदात् । न च एतस्मिन्नव प्रातिपदिके गारवस्य स्त्रीत्वेन मतब्येन, न चित्रत्वेन इति गाढ्यम् । न च गत्यन्तरं नास्ति अग्नीषोमीयमत्तत्वेनैवोपपत्ते । तेन लिङ्गाभिधानमनुवद कारकस्याप्राप्तमेवेति । न चोत्पत्ति शिष्टलोहितसारङ्गत्वाख्यादिगुणावरोधेन चित्रत्वविधानं लोहितसारङ्गश्यामारङ्गगुणयो चित्रत्वाविरोधात् । तेन यथा 'वायव्यं श्वेतमालभेत भूतिकाम' 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम' इत्यत्रातिदेशतः प्राप्तयोरेव आलम्भनिर्वापयोरनुवाद तथा एतद्वाक्यविधास्यमान चित्रत्वातिरिक्तलोहितकृष्णवर्णादेरयमनुवाद । नापि पुंस्त्वा यद्यपि कथं स्त्रीत्वविधानमिति वाच्यम्, 'पशुना यजेत' इत्यत्र नित्यं पुल्लिङ्गस्य पशुशब्दस्य पुम्पशुस्त्रीपशुसाधारणत्वेन एतद्वाक्यगतस्त्रीत्वविधानाविरोधात्, निष्क्रयानुवादेन वा पाशुकस्त्रीत्वाविरोध एकहायनशब्देऽपि क्रये विधानाविरोधात् । न च मासे कर्मणि अनन्यगुणविधाने दोष, नियतस्त्रीत्वविशिष्टकरणस्यैककारकविधानात् पशुकामपदमपि पशुसाधनैककर्मणि पशुपादानेन अप्राप्त कामनानुवादेनैव उपपन्नमिति अग्नीषोमीयगत एवाय गुणविधि । तदुक्तं 'चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावत । तेनैते प्राणियागाङ्ग प्रकृति वेक्षणामिति ॥' इति (वा पृ ३२८)।

तथा 'पञ्चदशान्याज्यानि' इत्यत्र आज्यशब्दस्तावत् घृते निरूढ, न च स्तोत्रसमानाधिकरण श्रूयते, तेनास्य न स्तोत्रनामधेयत्वम्, किन्तु 'पञ्चदशान्याज्यानि' इत्यत्र पञ्चदशसंख्याविशिष्टाज्यविधानात् अत्रापि प्राप्त उभय विधिदोष । अथ यत्र प्रतीता स्तुति आज्यक्रियापदेन श्रूयते तत्र 'अग्निर्मूर्धेत्यादिना प्रथममुक्तेऽप्युपयन्तोऽपि' इति कात्यायनस्मरणात् पञ्चदशसंख्याविशिष्टता प्रतीत्य सत्ता प्रतीयते । सा च स्तुतिरनिषिद्धनीता स्तुति प्रयोगवचनोत्पत्तिविधिना विनीयते तथाभूतायाश्च प्रकरणेन ग्रहणात् भवति सत्ताविशेषणत्वेन समस्तस्यैव आज्यस्य साधनत्वेन विधि, तेन साधनत्वगतस्यैव आज्यस्य 'आज्यैः स्तुवते' इत्यत्रानुवाद, स्तुतिमात्रं विधीयते इति । न चाज्यस्य स्तुतिसाधनत्वं न सम्भवति, 'अग्निमुपनिधाय स्तुवते' इतिवत् धातुभेदेऽपि कल्पितपञ्चदशसंख्या सामाम्नानात् उपनिधानेनैव स्तुतिहेतुत्वोपपत्ते । ननु 'स्तोम इति च पञ्चदशाद्यर्थे' इत्यनुशासनात् स्तोमशब्दाद् यत्नुनिष्पन्नसमुदायवाचकत्वात् कथं ढप्रत्ययान्तस्य पञ्चदश्यानीति पदस्य स्तुतसाध्यावाचित्वम् । मैवम् । स्तुतिसाधनसमूहवचनो हि स्तोमशब्दो न स्तोत्रीयासमूहवचन । स च स्तुतिसाधनत्वाविशेषात् स्तोत्र इव घृतेऽप्यविशिष्टत्वात् तेनात्रापि गुणविधानमेवेति ।

एवमेव 'त्रिवृद् बहिष्पवमानम्' इत्यत्र लोकसिद्ध त्रिवृत् शौल्ब इत्यम्, तद्विशिष्ट पवमान बहिष्पवमानशब्दाभिधेयम्, 'बहिष्पवमानेन स्तुवते' इति विहितस्तुतिप्रयोगवचनोत्पत्तिविधिना विधीयते ।

तथा 'सप्तदशानि पृष्ठानि' इत्यत्रापि लोकप्रसिद्धपृष्ठाख्यानि साधनान्येव सप्तदशसंख्याविशिष्टानि 'पृष्ठै स्तुवते' इत्येतद्विहितस्तुतिप्रयोगवचनोत्पत्तिविधिना विधीयन्ते । इति सर्वत्र गुणविधिरेवेति ।

एवं प्राप्तेऽभिधीयते । यद्येवं यदि मासे कर्मणि चित्रत्वं स्त्रीत्वं च अनन्यप्राप्तेन विधिना विधातुं शक्यते । न च चित्रत्वस्त्रीत्वविशिष्टैककरणत्वविधानादनापत्तिरिति वक्तव्यम् । तत करणत्वस्यापि प्राप्तत्वेन अविधेयत्वात् । अथ प्राप्तत्वेऽपि तस्य चित्रत्वस्त्रीत्वावच्छेदेनाप्राप्तत्वात् विधानमित्युच्यते । एवं तर्हि 'दध्ना जुहोति' 'पयसा जुहोति' इत्यत्रापि दध्यवच्छिन्नस्य होमस्य पयोऽवच्छिन्नस्य च होमविशेषणस्य अप्राप्तत्वेन विधानप्रसङ्ग । न च चित्रत्वस्त्रीत्वविशिष्टं करणान्तरमेव विधीयते, उत्पत्तिशिष्टकरणान्तरावरोधेन तस्य विधातुमशक्यत्वात् । प्राप्ते तु करणत्वे चित्रत्वस्त्रीत्वविधाने विध्यावृत्तिर्दुर्वारैवेति । तदुक्तं 'अर्थाद्वानेकमप्यर्थं विधापयति भावना । विशेषणविधिस्त्वन्यत्र गृह्णाति विशेषणम् ॥'

इति (शा भा ३२९)। अनेकार्थविधानकल्पनागौरवं च मुख्यत्वमेवेति।

तथा उत्पत्तिशिष्टपुंस्त्वावरोधेनापि नाग्नीषोमीये स्त्रीत्व विधानं सम्भवति। न च नित्यपुल्लिङ्गत्वेन साधारणत्वात् पशुशब्दस्य स्त्रीत्वविधानाविरोध इति वक्तव्यम्। शाखान्तरे 'अजोऽग्नीषोमीयः' इत्याम्नानेन साधारणस्यापि पशुशब्दस्य पुल्लिङ्गछागपरत्वात्। न च शाखान्तरविधेर्गुणविधायकत्वात् स्त्रीनपुंसत्वयोर्विकल्प इति पूर्वपक्ष्यभिप्रायो वाच्यः। आम्नानेऽपि 'अजोऽग्नीषोमीयः' इत्यत्र द्रव्यदेवतासम्बन्धविशेषेणोत्पादकत्वात् 'यजेतामत्यमृतैः क धर्मे' इत्युत्पत्तिशिष्टपुंस्त्वावरोधेन स्त्रीत्वानवकाशात्। न च सर्वान्तरावरुद्धेऽपि निष्कृष्टानुवादेन गुणान्तरविधिः शक्यते इति वक्तव्यम्। निष्कृष्टानुवादस्यैवानवकल्पनात्। तदुक्तं 'प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया। वाक्यान्तरगतैः पश्चात् शुद्धा सा प्रतिपद्यते॥' (वा भा ३२०) इति। यत्र प्रभृतीनां तु गुणान्तरावरुद्धेऽपि कर्मणामानतिलक्षणद्वारभेदात् आकाङ्क्षासम्भवात् विधानमुपपद्यते एवेति तत्र न विकल्पः, किन्तु समुच्चय एवेति। तथा पशुकामपदोपात्तफलसम्बन्धनिमित्तोऽपि अत्रो वाक्यभेदः। यद्यपि फलं न विधीयते, तथापि तत्र कर्मविधानात् कर्मणि च गुणविधानात् फलसम्बन्धविधानस्य वाक्यावृत्तिमन्तरेणासम्भवात् वाक्यभेद एव। न च पशुसाधनत्वे कर्मणि अर्थप्राप्तपशुकामनाऽनुवादोऽयमिति वक्तव्यम्। यतः पशुकामपदात् काम्यमानत्वेन प्रधानीभूतफलसम्बन्धितया कामना अवगम्यते। अग्नीषोमीये तु पशुकामनायास्ताद्रूप्याभावात्तदनुवादकत्वं शक्यो गुणविध्यभावात् विधित्सितानाद्व्यक्तप्रकृतशासार्थपर्यवसितनामधेयमेव चित्रापदम्। एवं सति चित्रापदेन प्रकृतकर्मोत्पत्त्यपशुफले विधीयते इति। चित्रया इति स्त्रीलिङ्गनिर्देशश्च इत्यभिप्रायेणैवेति न किञ्चिदनुपपन्नम्।

तथा 'पञ्चदशान्याज्यानि' इत्यत्रापि प्राप्ते स्तोत्रे गुणद्वयविधानं नोपपद्यते, वाक्यभेदप्रसङ्गात्। नापि पञ्चदशत्वविशिष्टान्याज्यानि विधीयन्ते इति वक्तव्यम्। यत्र क्रिया विधीयते, तद्विशेषणं वा, न चाज्यपदवाच्यं पूर्वं क्रिया, नापि क्रियाविशेषणम्। अतो न विशिष्टद्रव्यविधिः। अथ यत्र अन्यत् क्रियापदं न श्रूयते, तत्र 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' इत्येतद्बलात् अध्याहृता अस्तिक्रिया समस्ति, सैवोभयविशिष्टा स्तुतिप्रयोगवचनोत्पत्तिविधिना विधीयते इत्युच्यते, तदप्यसत्। सर्वत्र पुरुषव्यापारो हि विधीयते। अस्तिशब्दवाच्यायास्तु सत्तायाः पुरुषव्यापारत्वाभावात् विधिविषयत्वात् 'अग्निमुपनिधाय स्तुवीत' इत्युपनिधानस्य पुरुषव्यापाररूपत्वेन गत्या विधानम्। न चात्रापि पात्रभेदोपकल्पितानि पञ्चदशसंख्याकानि आज्यानि उपनिधाय इति कल्पनीयम्, कल्पनागौरवदोषादेव वाक्यस्य चान्यथाऽप्युपपत्तेः। तेन उद्भिदधिकरणन्यायेन 'आज्यैः स्तुवते' इति स्तुतिनामधेयत्वे सिद्धे, 'पञ्चदशान्याज्यानि' इत्यनेन आज्यनामकस्तोत्रानुवादेन सङ्ख्यामात्रं विधीयते इति। एवं च सति 'स्तोमे डविधिः पञ्चदशाद्यर्थः' इति अनुशासनमपि अर्थवद्भविष्यतीति। प्रवृत्तिनिमित्तं च अर्थवादावगतं एतस्मिन् स्तोत्रे क्रियमाणं तेषां नामाभिगमनम्। अर्थवादश्च 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इति।

एवं प्राप्ते स्तोत्रे 'त्रिवृद् बहिष्पवमानम्' इत्यत्र त्रिवृद्विशिष्टपवमानरूपगुणद्वयविधाने, तथा 'सप्तदशानि पृष्ठानि' इत्यत्र सप्तदशसंख्याककपृष्ठद्वयविधाने वाक्यभेदप्रसङ्गात् न गुणविधित्वम्। अन्यतरविशिष्टान्यतरविधाने च उभयविशिष्टव्याहृतक्रियाविधाने च प्राग्योदाहरणदूषणेनैव निरस्त इति अत्रापि नामधेयत्वमेव। तथा च सति 'बहिष्पवमाने स्तुवते' इत्येतद्वाक्यविहितबहिष्पवमाननामकस्तोत्रानुवादेन त्रिवृत्त्वाभिधानसंख्या स्तोत्राङ्गत्वेन विधीयते। प्रवृत्तिनिमित्तं च बहिष्पवमानपदव्युत्पत्त्यनिर्वचनीयत्वमेव स्तोत्रस्येति। तथा 'सप्तदशानि पृष्ठानि' इत्यत्रापि 'पृष्ठैः स्तुवते' इत्येतद्वाक्यविहित— पृष्ठनामकस्तोत्रानुवादेन सप्तदशसंख्यामात्रं विधीयते इति। नामप्रवृत्तिनिमित्तं च प्रजापतिना पृष्ठे स्पृष्टे रथन्तरादिसामानि जातानि, तस्मात् तत्साधनत्वात्पृष्ठानि स्तोत्राणि

पृष्ठानि । तथा चार्थवादोऽपि 'नाना वायुः पृष्ठे व्यवर्तेत' इति । प्रयोजनं तत्रतत्र तत्तद्गुणोपादानं पूर्वपक्षे, सिद्धान्ते तु नामधेयप्रयोक्तानि । सूत्रं तु यस्मिन् गुणविधिनामधेयत्वेन संदिग्धे सति वाक्ये गुणान्तरोपदेशः प्रतीयते, तस्मिन् उपदेशस्य प्रधानेन कर्मणा नामधेयत्वेनैव सम्बन्धः इति । मीमा.

■ यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः । १।४।२।३ ॥

'चित्रया यजेत पशुकामः' 'त्रिवृद् बहिष्पवमानं' 'पञ्चदशान्याज्यानि', 'सप्तदशानि पृष्ठानि' इति चित्रा–पवमान–आज्य–पृष्ठशब्दाः, किं गुणविधयः, उत कर्मनामधेयानि इति विचारे सिद्धान्तमाह । यस्मिन् वाक्ये गुणोपदेशः, गुणस्य अपरस्य उपदेशो भवति तस्य प्रधानतः प्रधानेन कर्मणा अभिसम्बन्धः परिच्छेदकत्वेन । तद्वाक्यस्थं चित्रादिपदं नामधेयं स्यात् इत्यर्थः ।

किंवा नामधेयं स्यात् इत्यनुवर्तते । प्रधानतः अभिसम्बन्धः इत्यस्य प्रधानद्वारा, अनेकेषां गुणानां अनेकविशेषणविधिप्रसक्तसमर्थेन एकेन विधिना सम्बन्धो भवति इत्यर्थः (कु. पृ. ४१५) । 'चित्रया यजेत पशुकामः' इति चित्राशब्दः 'दधि मधु घृतमापो धानाः तण्डुलाः तत्संसृष्टं प्राजापत्यम्' इत्युत्पत्तिवाक्ये विहितस्य यागस्य नामधेयम् । अग्निष्टोमे सवनत्रये, पवमानदेवताकैस्तृचैर्गीयमानानां स्तोत्रविशेषाणां नामधेयं पवमानपदम् । तत्र प्रातःसवने बहिष्पवमानं नाम, माध्यंदिने सवने माध्यंदिनपवमानं नाम, तृतीयसवने च आर्भवं पवमानं नामेति । प्रातःसवने एव पवमानस्तोत्रोत्तरं गीयमानानि चत्वारि स्तोत्राणि तेषां नामधेयं आज्य (आज्यानि) इति । माध्यंदिने सवने पवमानोत्तरं गीयमानानि स्तोत्राणि चत्वारि, तेषां पृष्ठं (पृष्ठानि) इति नामधेयम् । के.

■ यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् । ४।१।२।२ ॥

इदं सूत्रं साक्षात् पुरुषार्थस्य लक्षणं प्रतिपादयति, क्रत्वर्थस्य तु आर्थात् । यस्मिन् इति फलपरं करणपरं च । प्रीतिः इत्यत्र 'क्तिन्' भावे करणे च । यस्मिन् फले फलविषया पुरुषस्य प्रीतिः इच्छा भवति स पुरुषार्थः साध्यरूपः । यस्मिंश्च करणरूपे यागादौ कृते सति पुरुषस्य प्रीतिः प्रियं स्वर्गादि भवति, सोऽपि पुरुषार्थः साधनरूपः । तस्य पुरुषार्थस्य उभयविधस्यापि लिप्सा लब्धुमिच्छा अर्थलक्षणा । अर्थेन पुरुषार्थेन लक्ष्यते न शास्त्रेण । शास्त्रं विनैव सिद्धत्वात् । अविभक्तत्वात् । प्रियरूपः प्रियसाधनरूपश्च पुरुषार्थः, प्रीत्या सह स्वरूपेण साधकत्वेन च अविभक्तो भवति । तस्मात् स्वर्गादिः प्रियः साक्षात् पुरुषार्थः, साधनरूपश्च यागादिः साधनतया पुरुषार्थः ।

पुरुषार्थभिन्नः सन् यो विहितः, स क्रत्वर्थः इति तु क्रत्वर्थस्य लक्षणं अर्थात् सिद्धम् ।

किंवा यस्मिन् फले अनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति, तस्य फलस्य लिप्सा फलविषया प्रवृत्तिः, अर्थलक्षणा रागप्राप्ता, न विध्यधीना । अविभक्तत्वात् फलस्य रागाविनाभूतत्वात् इत्यर्थः ।

किंवा, वर्णकान्तरानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् उपात्ते पुरुषस्य प्रीतिः प्रियं पशुलक्षणं फलं भवति, तस्य गोदोहनस्य लिप्सा अनुष्ठितिः अर्थलक्षणा पशुलक्षणफलप्रयुक्ता, न तु क्रतुप्रयुक्ता । विभक्तत्वात् । अत्र पक्षे अकारप्रश्लेषो न कर्तव्यः, गोदोहनस्य प्रयोगविधिपरिग्रहाभावात् । तथा च गोदोहनं पुरुषार्थं न क्रत्वर्थम् ।

किंवा अन्यवर्णकानुसारेण सूत्रस्य अन्योऽर्थः । यस्मिन् द्रव्ये पुरुषस्य प्रीतिः अभिलाषो भवति, तस्य द्रव्यस्य लिप्सा अर्जनं अर्थलक्षणा पुरुषभोग्यरूपप्रयोजननिबन्धना पुरुषार्था इत्यर्थः । अविभक्तत्वात् पुरुषार्थनाया. इन्द्रियसंनिकृष्टत्वात् । तस्मात्, द्रव्यार्जनं पुरुषार्थमेव सत् क्रतावपि उपकरोति । के.

० 'यस्मिन् प्रीतिः पुरुषस्य' (४।१।२।२) इत्यनेन न्यायेन एकैकस्य फलं प्रार्थ्यमानस्य सकृदुपायो विधीयते, न सर्वं प्रति ते विधीयन्ते । टुप्. ६।२।१।२ पृ. १३८९. ० 'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा ।

या ते अग्ने रजाशया, या ते अग्ने हराशया ' इत्यत्र मदेह्. किं तनूर्वर्षिष्ठा॰ इति सर्वेषु अनुषक्तव्य आहो स्वित् नैमित्तिको वाक्यशेषोऽध्याहर्तव्य । ' या ते अग्नेऽयाशया॰ ' इत्यादौ अनुषङ्गैकवाक्यत्वं ज्योतिष्टोमे उपसद्धोमेषु । चि. २।१।१६. ● ' या ते अग्ने (ऽया शया) ' इति मन्त्रत्रये तनूरित्यादिवाक्यस्य सकृदाम्नातस्यापि आवृत्त्या विनियोगः । संकर्ष. २।८।२७

▪ ' या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ ' इति न्याय । ' इति न्यायेन सर्वस्मात्क्रोध्यजनाद्विरक्ता । उपगृह्य तां प्रीतिं भोक्तुमेव बुभुक्षते ॥ ' अयमर्थः - भोग्येषु प्रेमत्यागापूर्वकमात्मप्रेमकर्तव्यतायां दृष्टान्तत्वेन ईश्वरे प्रेमप्रार्थनापुरःसरं पुराणवचनरूपन्यायमुदाहरति - या प्रीतिरिति । नास्ति विवेको येषां ते अविवेकाः । अर्थादविवेकिनामस्मदादिजनानां सुखसाधनत्वेन विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे नाथ लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिन्तयतो मम हृदयात् मनसः सकाशात् मापसर्पतु । मम मनो विषयेभ्यः प्रीतिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः । यद्वा– अविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरस्ति सा तादृशी विषयेषु निरस्ता प्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु मा अपगच्छतु सदा तिष्ठत्वित्यर्थः । भवतेन पुराणे श्रुतो विष्णुमाहात्म्ये आह - इति न्यायेनेति । इत्यनेन पुराणोक्तन्यायेन सर्वस्मात्क्रोध्यजनात् पतिजायादिलक्षणात् विरक्ता विरक्ता धीः यस्याः सा विरक्तधीः पुरुष तां लोकप्रसिद्धां प्रीतिं भोक्तव्यत्वेन उपगृह्य स्वीकृत्य बुभुक्षते भोक्तुमिच्छतीति भावः । उक्तं च कयाचित्सु शिरोमणिराधया– ' हस्तावुत्क्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम् । हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥ ' इति । साहस्री ४५४

● याः इष्टा देवता सा. ( सकृदाने ) सर्वनाम्नां प्रत्यवेक्षणं, इदमग्रीष्टा, न काचिदत्वादिवेति । मा. ६।१।३।६।५८. ● या इमा प्रजा आप्ता चरन्ति सा या ऐकादशिनी । संकर्ष. १।८।२७. ● ' या वै का च देवतामन्त्रीयात्, तस्यै आतृव्यैः आश्वैनैता देवता परिलेख्याय यजेत् ' अत्र भावे कर्तर्यो विधि. । बाल. १, २०. ● यस्यां चितौ ये मन्त्राः प्रकाशकाः, तैरेव मन्त्रैः आवृत्ते, भा या चिति. पूरणीया । इति प्राप्ते । ' यदेवास्योन यच्छिद्र तदेतया पूरयति ' इति वचनेन लोकंपृणाया एव एव न्यूनपूरणे विनियोगात्, प्रकान्तनियतमन्त्रकमन्त्रसमाप्तौ अवशिष्टा इष्टकाः, लोकपृणामन्त्रेण उपधेया., पुनः पुनरावर्त्यमानत्वेन, ' अयातयाम्नी लोकंपृणा ' इति स्मृतित्वप्रपदते । संकर्ष. २।१।१६.

▪ यद्धत: पुरुषो लोके तद्धतस्तस्य देवताः इति न्यायः । यथा– विश्वामित्रर्षिः, अजपत्नी अपचगृहादारब्धेन्द्रादिदेवोद्देशेन त्यक्त्वा गोऽस्यामीति मनसि कृत्वा यदा यथादेवं तद्धागोऽस्त्विति प्रयुक्तवान् तदेन्द्रादिभिर्गृहीतम् । तदा, तस्य च तत्क्षणमेव प्रभृत मभूदित्यस्वाभिधान पुराणेषु सर्वत्र द्रष्टव्यं विस्तरः । साहस्री १३३.

● यदर्थो नियमश्च , तदर्थो नियम इति सर्वत्र लक्षणम् । भाट्ट. ४।१।१४ ● ' यदर्था क्रिया, तदर्थो नियमः ' । अवघातादिनियमादृष्टस्यापि ' यदर्था॰ ' इति न्यायेन व्रीह्यर्थत्वावधारणात् व्रीहिनिष्ठत्वमेव । कौ. २।१।३।६ पृ. ५७

● यथागमे योऽर्थः स तस्य । सु पृ. ५६८.

● यत्किंचिच्छब्दस्य पर्याप्तिसम्बन्धेन बुद्धिविषयत्वविशिष्ट–घटत्वावच्छिन्ने शक्तिः । ' यत्किंचित् प्राचीनमशीषोमीयम् ' ' यत्किंचित् सोमलिप्त ' इत्यादौ तथैव बोधात् । अत एव शक्यतावच्छेदकतावच्छेदकस्य विषयतस्य ऐक्यात् न वाक्यभेदः । यत्किंचिदादय इत्यादौ तु पर्याप्तिसम्बन्धेन उपेतबुद्धिविषयत्वविशिष्टे लक्षणा । केवलकिंचित्पदस्य अज्ञातप्रकारावच्छिन्ने शक्तिः । मणि पृ १९३-९४.

▪ यद्भ्रमदे यदपेक्षं चक्षुस्तद्भावमदेऽपि तदपेक्षते इति न्याय । आलोकमदे आलोकापेक्षया अभावेन तदभावमदेऽपि तदपेक्षया अभावादिति । तमदर्शनमदे औलूक्ये विस्तर । साहस्री. ७१६.

० यत्तदोः परस्परापेक्षत्वम्। सु. पृ. ४९१. ० यत्तदो-र्नित्यसंबन्धः। 'नहि यच्छब्दस्तच्छब्दो वर्तते भिन्न वस्तुनि'॥ श्लोवा आत्मवादे ५० पृ ७०१. ० 'यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः' इति न्यायेन पुरोडाशस्य पूषा देवता। वि ३।३।१९.

𝄞 यत्परः शब्दः स शब्दार्थः इति न्यायः। यः अर्थः परः तात्पर्यविषयो यस्य स यत्परः। स्पष्टमन्यत्। साहस्री. ७८८, मणि. पृ. ८१. ० 'यत्परः शब्दः स शब्दार्थः' इत्यनेन न्यायेन अभिधेयसंसर्गरूपस्यापि शब्दार्थत्वम्। सु. पृ. ८९८. ० 'यत्परः शब्दः स शब्दार्थः' इति न्यायेन 'य एवं वेद' इत्यादिवचनानां स्वार्थे प्रामाण्यं नास्ति इति चेत्, न। महातात्पर्यस्य विधेयविषयत्वेऽपि अवान्तरतात्पर्येण स्वार्थविषयत्वानिवारणात्। ततश्च वेदान्तस्य अनुष्ठानवत् स्वतन्त्रफलवत्त्वम्। तैस. उपोद्घात पृ. ९ (सायणभाष्यम्).

० 'यत्प्रसङ्गेन यद् आगतं तत्प्रभावो तद् बुद्धिस्थ जायते' इति न्यायेन आग्नेयाधिकरणोक्तगुणविधित्वे बुद्धिस्थे सति अत्रापि (वैश्वदेवाधिकरणे) तस्यैव न्यायारोपेण गुणविधित्वपूर्वपक्षकरणम्। प्री ११८।१२। १३.

० यन्मध्यपातिनोऽङ्गं न प्रयुक्तम्, तत्कार्ये तन्निर्णोऽङ्गं प्रसज्यते। भा. १२।१।८।११। यत् तन्निर्णोऽङ्गमप्रयुक्तमङ्गं तत्, तत्कार्ये तत् प्रसज्यते। यथा पाशुके, प्रयाजा. पौरोडाशिकेषु। १२।१।३।८। यत्र तन्निर्णोऽङ्गं क्रियमाणं द्वयस्यापि कृतं भवति तत्र प्रसङ्गः यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। १२।१।४।११.

० यन्मात्रं तत्र वचनान्तरेणोत्पन्नं तन्मात्रव्यतिरिक्तेन सर्वेण यष्टव्य इति न्यायः। वा. २।२।६।१७ पृ ५१२. ० 'यन्मात्रेण विना चोदितस्य पदेनासक्यानुपपत्तिः, तन्मात्रमेव अदृष्टाश्रुतं अर्थापत्त्या कल्पयितुं शक्यते नान्यत्' इति न्याय. शब्दान्तराधिकरणपूर्वपक्षोक्त.। वा. २।२।१।२१ पृ ५२३.

𝄞 यद्विवाहस्तद्गीतगानमिति न्यायः। यथा यद्वधूवरयोर्विवाहो भवति लोके गानमपि तत्संबन्धि गीयते, नान्यदिति। तथा वनदेवतापुराणादिषु तत्तद्देवमाहात्म्यवचनानि प्रपठ्यन्ते इति नापि दर्शनेनापि परस्परविरोधः पुराणानामिति। साहस्री. ४९८.

𝄞 यद्विशेषयोः कार्यकारणभावोऽस्ति बाधके तत्सामान्ययोरपीति न्यायः। यथा– तार्किकाणां घटत्वकुलालत्वादिना कार्यकारणभावे सिद्धे, कार्यत्वेन कृतित्वेन च कार्यकारणभावः, न [illegible] कुलालकृते जन्यत्वेन द्रव्यत्वेन घटादिकं प्रति कारणत्वम्, तथात्वे तयोरन्यथासिद्धत्वेनाकारणत्वं स्यात्, कारणता प्रत्यन्यथासिद्धेर्दोषत्वात्। अत एव न द्रव्यत्वेन दण्डादेर्घटादिकं प्रति कारणत्वम्, नापीन्द्रियत्वेन प्रत्यक्षज्ञानविशेषं प्रति इन्द्रियत्वस्यैकस्याऽभावादिति। साहस्री. ५००.

० 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इति न्यायः। सु. पृ ८९३. ० 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्' इति न्यायेन प्रथमनिर्दिष्टस्य प्राधान्यमवगम्यते इति भाव.। आमरणम् ८।१।५।६ प्रम्. ० 'यद्वृत्तयोगः०' इति न्यायात् ('वसन्ते आदधीत, उपनयीत' इत्यत्र) वसन्तादिकालस्य निमित्तता प्राधान्यादुपपन्ना भवति। तस्कलं च वसन्तातिरिक्तहेमन्तादिकालेऽपि आधानस्योपनयनस्य वा प्रामाण्यनियतकर्तृकत्वसिद्धिः। कौ ७।३।१४ पृ. २८.

० यच्छब्द. एव हि तच्छब्दार्थं स्वाकाङ्क्षोपस्थित नियोगनापेक्षते, 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इत्यादौ तथैव श्रुतत्वदर्शनात्। न तु तच्छब्दोऽपि। कौ. ३।३।७।१४ पृ ३५८. ० यच्छब्दः कर्तृसमानाधिकरणः, यदिशब्दः, सप्तमी च निमित्तत्वबोधकाः। यथा– 'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते'। अत्र असमर्थकर्तृकनिमित्ता वैश्वानरेष्टिः। यथा वा– 'यो न प्रतितिष्ठति .. स पञ्चचितिं चिनुते' अत्र कर्तृसमानाधिकरणात् यच्छब्दात् पञ्चचितिनैमित्तिकी। 'यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यत्र यदिशब्दः रथन्तरसामत्वस्य

ऐन्द्रवायवाग्रतानिमित्तत्व बोधयति । 'भिन्ने जुहोति' अत्र सप्तमी पात्रभेदस्य होमनिमित्तत्वं बोधयति । वि ८।४।५-७ • यच्छब्द-क्रियासामानाधिकरण्याच्च 'यदा ग्नेयोऽष्टाकपाल' इत्यादेर्यच्छब्दात् विलक्षण कर्तृसमाना धिकरणोऽयं 'य एव विद्वान्' इत्युपलभ्यमानो विधि सामर्थ्यं निरुन्ध्यात् । तथा चोक्त — 'क्रियापदैकयोगित्वे यच्छब्दो न रुणद्धि विधिम् । कर्तृयुक्त स एवायं प्राप्तितार्थानुवादकृत् ॥' या २।२।३।७ पृ. ४८८. • यच्छब्देन अनुवादत्वप्रतीति । वि १।४।८ • यच्छब्देन, उत्तमपुरुषेण, आमन्त्रणादिना च विधि शक्तिरुध्यते । यथा — 'यस्योभय हविरार्तिमार्छति' अत्र यच्छब्द 'नहिर्दिनम्दन दामि' इतिवाक्ये उत्तमपुरुष, 'अग्नीदग्नीन् विहर' इत्यादौ आमन्त्रण (सम्बोधन) विधिशक्ति हत्वा अनुवादत्व बोधयति । वि २।१।५ • यच्छब्देन विधिशक्तिप्रतिबन्ध, 'न ता नशन्ति' इत्यादौ । वा २।१।७।११ पृ ८९३ • यच्छब्दस्य क्रियासमानाधिकरणस्य, विधिशक्तिप्रतिबन्धकत्वेऽपि, कर्तृसमानाधिकरण, कर्तृ- त्वानुवादित्वात् विधिशक्ति प्रतिबध्नाति । सु पृ ७८०

• यच्छब्द-आमन्त्रण-उत्तमपुरुषानुपपन्नविधि शक्तयो (हि) मन्त्रा न कम नन कल्पयन्ति । वा ३।१।३।१ पृ ६४३

• यच्छब्दोपबन्धेन आरभ्यस्य विधायकत्वस्याकते प्रतिबन्ध । सु पृ ७२६

• यच्छब्दतच्छब्दौ उद्देश्यप्रतिनिर्देशकौ । वा ६।८।३।१६ पृ १४८५

• 'यच्छब्दयोग प्राथम्यमित्याद्युद्देश्यलक्षण' इति न्यायेन दक्षिणाद्यर्थं प्रथम गवादीनामुपादाना उद्देश्य त्वागममलम् । सु पृ. ८३५

• 'यच्छब्दसमभिव्याहारे सति तच्छब्दस्य तदपरामर्शित्वम्' (यच्छब्दार्थपरामर्शित्व तच्छब्दस्य) इति नियम (अय जातेष्टि-अधिकरण प्राप्तो नाम)। भाट्ट ४।३।१४.

• 'यत्सन्निधाने यो दृष्ट' इति न्याय । ननु ब्राह्मणस्य विधायकत्वोत्तरकाल सर्वायत्वेन 'यत्सन्निधाने यो दृष्ट ' इति न्यायात् विधेयस्मारकत्वावगते, विनि योगात् प्राक् विधायकत्वमविरुद्धम् । सु पृ ६६७-

• यद्धनि संस्कारक यद्भक्षण तत् तद्वियोग सन्निधिपदार्थकन्यानिरूपम्, तद्वियोगमन्यविषयिष्य माणपदार्थविषये कल्याधानरूपम् वा संस्कार जनयति । भाट्ट १०।७।८

• 'यत्र एकतरस्ततोऽन्यस्य व्यावृत्ति' इति न्यायेन एवकारान्या यथावच्छेदकत्वाच्चिरवात् । सु पृ ८९३

• यतीभाव विराम समाप्तिर्वा । 'दहय एवं यागा । यदि तु सह क्रियते, तत सर्वसमाप्तौ यती भाव पर्यवसितो भवति इत्येवमनुपन्यार उपपद्यते'। भा ११।२।८।२०

¶ यत्रार्थान्तगतिरेव नास्ति, तत्र सन्देहस्य का कथेति न्याय । सर्वदर्शनसङ्ग्रहे जैमिनीये स्पष्ट । साहस्री ७२०.

• यत्रादशब्देन कर्म प्रतिपाद्यते, तत्र तन्नाम, तत् धर्मातिदेशक भवति । यथा 'मासमग्निहोत्र जुहोति' इति । टुप् ११।२।१५।६३ • 'यत्रेति वाऽर्थवत्त्वात् स्यात्' । २।१।१७।११ । यत्र संस्कार्यसंस्कार, तत्र प्रत्याय स्यात् इत्येत तत्र व्याख्यातम् । सु पृ ६५६ • यत्रोभयो प्रत्यक्षवचनत्वेन सम्पत्तम्, तत्र उप संहार, यथा 'पुरोडाश चतुर्धा करोति, आग्नेय चतुर्धा करोति' इति । यत्र तु विपर्ययम्, नास्ति तत्रोपसंहार । यथा — प्रत्यक्षपरोक्षयो 'आज्यभागौ यजति' इति चोदकप्राप्तप्रत्यक्षवचनरूपयो । वि १०।७।९

¶ यत्रोभयो समो दोषो न तत्रैकोऽनुयोज्य इति न्याय । साहस्री २४०

¶ 'यत्रोभयो समो दोष, परिहारोऽपि वा सम । नैक पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति न्याय । अय साख्यप्रवचनभाष्ययुत । यत्र वादि प्रतिवादिभ्या स्वपक्षोऽस्तु तद्दोष, न तत्रैक पर्यनु योज्य, स्वपक्षेऽपि तद्दोषसत्त्वात् इत्येत यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । साहस्री १३९

• 'यत्र च कारणात् कार्यदर्शनम्, तत्र शक्तेरस्तित्व सम्प्रतीयते' इति न्यायेन शक्ते कारणाश्रितत्वेन शब्द-

समवेतत्वात् तद्भेदे (शब्दभेदे) युक्त एव भेदः (तच्छे.)। सु. पृ. २५९. ● 'यत्र नित्यानुवादवचनानि स्युः' ७।४।२।५ इति न्यायेन । कृष्णलनिशिष्टप्रयाजान्तरस्यैव सौर्ययागाङ्गतया विध्यङ्गीकारेण, दर्शपौर्णमासिकप्रयाजानुवादेन कृष्णलनिष्पत्त्यङ्गीकारेण वा 'यत्र० स्युः' इति न्यायेन परिहर्तव्यम्। कौ. २।२।३।५. ● 'यत्र नित्या० स्युः' अत्र नित्यन्ताधिकारणोक्तो न्यायः। सु पृ. ४४७. ● यत्र परस्परसामानाधिकरण्यम्, तत्र गुणेन (निमित्तेन) पदार्थः परत्र वर्तते। टुप्. १।२।२।१।३६, ● यत्र बहूनामल्पानां च धर्मविरोधः, तत्र भूयोऽनुग्रहः, 'भूयस्त्वात् स्यात् तद्धर्मत्वं' (१२।२।७।२२) इति। यत्र तुल्यत्वसरणानि तत्र 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (१२।२।८।२३) इति। न हि न्यूनसंख्य मुख्यहीनकारणे न भूयान्ति समर्थं बाधितुम्। ७।४।३।१९. ● यत्र मन्त्रार्थस्य नानात्वम्, तत्र अस्य (मन्त्रस्य) आवृत्तिर्भवति। यथा अग्नौ (चयने) लोकम्पृणायाः। भा. ११।४।१२।४२. ● यत्रयत्रानूयाजसामान्याभाव, तत्र चतुर्थचतुर्गृहीतनिवृत्तिः। भाट्ट. ५।१।९७. ● यत्र यागः फलं प्रति चोद्यते, तत्राङ्गानि गृह्णाति। भा. ११।२।९।३६. ● 'यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं विधीयते। तन्मात्रग्रहणं तस्मिन्' इत्यनेन न्यायेन उद्देश्यापूर्वसाधनाभावत्वमनोपश्वीनस्य पुरुषार्थरूपस्य उद्देश्यत्वाभावात्। सु पृ. १३९५. ● यत्र विशिष्टं नैमित्तिकम्, तत्र विशेषणाभावे विशिष्टमेव बाध्यम्। बाल. पृ. २१६. ● यत्र सूक्ष्ममपि किंचित् सामान्यम्, तत्रोऽर्थो वा, हविर्देवतादि, तद्गुणो वा रूपादय उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः। भा. ८।१।२।२.

● 'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥' इति न्यायेन प्रतियुगमनुवर्तमाना अनादय अग्निहोत्रादयश्चन्द्रमआदिवत् वैदिकपदगोचराः सन्तः नैव वेदस्य नित्यतां विहन्यते। कु. १।२।१।१८ पृ. २६. ● 'यथैव पाठः प्रतिपत्त्युपायः (तथैव सामर्थ्यमपि श्रुतीनाम्। तेनैव चैता न समामनन्ति सद्रूपमार्गं तु समामनेषु॥' वार्तिक १।८।३४।२९ सूत्रे) ननु अध्याहार्यपदस्य यथैव पाठः प्रतिपत्त्युपायः इत्यनेन न्यायेन सामर्थ्यलभ्यतया अनुचार्यमाणत्वात् लौकिकप्रयोगतदर्थाभिधानं अयुक्तं इत्याशङ्क्य। सु. पृ. ६९७. ● यथा 'जातस्य पुनस्य नीडतः' एव नोदितस्य परिपूर्णस्य दोषः आम्नायते। इति पूर्वपक्षः। भा. ५।१।९।१७.

☞ यथा नाम तथा गुण इति न्यायः। माहत्मी. ६५.७.

● यथा अग्नौ पुरोडाशस्य कपाले पाकः, तथा विकृतौ चरौ. इत्येकः पक्षः। उदकधारणयोग्ये कटाहघटादौ क्वापि पाकः इति द्वितीयः पक्षः। चरौ, स्थाल्यामेव पाकः इति सिद्धान्तः। चरौ पेषणादिनिवृत्तिश्च। वि १०।१।११. ● 'यथा शक्नुयात् तथा आश्रयेत्' इति न्यायः। वा. २।२।१३।२९ पृ. ५६८, सु. पृ. ८७९ ● 'यथा शक्नुयात्तथा कुर्यात्' । द्रव्येन्द्रियवैकल्यादिना दृढोऽशक्तोऽपि, द्रव्यार्जनादिना यथा शक्तो भवति, तथा यत्किमपाचा सर्वधर्मोपेतं कुर्यात् इत्यर्थः। यदि तु न कश्चित् सर्वाङ्गोपसंहारसमर्थः स्यात्, तत् प्रतिपन्नाङ्गोपसंहारेणापि अधिकारः कल्प्येत। सु. पृ. ५३२. ● 'यथा स्यात् सत्त्वदर्शनम्'। युगपत् प्रवृत्तेः 'यथा सत्त्वदर्शने' इत्यनेन न्यायेन तदेव कर्म एकेन इतरेण च प्रतिपाद्यते। न च शक्यते विशेष कारणेण प्रतिपाद्यते कनवत् पौनरुक्त्यादनर्थकमिति। वा. २।३।१४।२८. ● 'अपि वोत्पत्तिसंयोगात् यथा स्यात् सत्त्वदर्शनं तथा भावो विभागे स्यात्'। यथा एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शनं एकैकेन कृत्स्नमभिनिर्वर्त्यते एवमेव सत्त्वे तत्त्वभावो भवेत्। सर्वेषां मध्यम इत्यम्। भा. ६।१।१।२

● 'यथोत्तरं श्रुतीनां प्रामाण्यम्' इति न्यायः। ('उत्तरोत्तरं श्रुतीनां प्रामाण्यं' इत्यत्र द्रष्टव्यम्)। कौ. १।३।८।२७ पृ. १३१.

● यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति। ३।२।११।२९॥ लिङ्गेन मन्त्रस्य अनैन्द्रहोमभक्षणे विनियोगाभावेऽपि 'इन्द्राय त्वा वसुमते गृह्णामि' इति इन्द्रलिङ्गेन मन्त्रेण सोमग्रहणात् इन्द्रलिङ्गेनैव न सोम-

मानात् सोमस्य मानग्रहणे इन्द्रलिङ्गमन्त्रनिर्देशात् ऐन्द्राणां एव प्रदानानां औपदेशिकधर्मवत्त्वावगते, 'सोमेन यजेत' इत्यस्यापि मन्त्रालोचनया 'ऐन्द्रेण सोमेन यजेत' इत्येवमर्थत्वावगते, कर्मभेदेऽपि च अभ्यासानां प्रकृतिविकारभावोपपत्ते, सर्वेषां प्रदानानां समानविधानत्वाभावात् अनैन्द्रसोमप्रदानानां यथादेवतं मन्त्रवत्ता इत्यत्र (पूर्वसूत्रोक्त–) पूर्वपक्षप्रतिषेधनार्थं इदं सूत्रम्। प्रयोजनोक्तत्वमपूर्वसूत्रार्थयत्नोपगमान्तस्त्व निराकार्यो वा शब्दः। 'तत्प्रकृतित्वे हि अनैन्द्राणां गतियोगित्वेन उपस्थापिते इदमहूनि' इति। 'लिङ्गविशेष निर्देशात्' इति पूर्वसूत्रवचनमनुपपन्नं च ऐन्द्राणां प्रकृति त्वोपपादने ग्रहणमन्त्रेण सोमस्य इन्द्रमदनविषयत्वात् इति। लिङ्गविशेषनिर्देशात् तथाकृतित्वं इत्यस्यानुसृत्य अभिहितम् 'नमति' इत्यत्र 'अनुष्टुप्छन्दस' इति विशेषविधान इति द्रष्टव्यम्। मु पृ १३४१–४२

* 'यथाभाग व्यावर्तध्वम्' इति ऊह पुरोडाश गणे कार्यः। सकर्षे ३।२।१८ मीको पृ २६६० 'पुरोडाशगणे यथाभाग व्यावर्तध्वम्' इत्यत्र द्रष्टव्यम्।

X यथाभाग व्यावर्तेथा इत्यत्र पिण्डावेव सम्बोध्यौ॥

सूर्योमन्त्राधिकरणे 'यथाभाग व्यावर्तेथाम्' इत्यादि मन्त्राणां निरूप उक्त ते देवते सम्बोध्य विभजनं निरूपति, देवतानां यागसंबन्धित्वात् मनुष्यत्वरूपत्वात्, चेतनत्वेन संबोधनार्हत्वात्। इति प्राप्ते। पिण्डावेवात्र सम्बोध्यौ। तयोर्मन्त्रानोऽन्तरङ्गत्वात्, स्वाधिष्ठानचेतना नामपि संबोधनार्हत्वात् देवताया अपि नान्यत्वात्। सकर्षे १।१।१६

* यथाशक्ति। यदि प्रयोगशास्त्रपादेन तर्हि यथा गानि इत्युपपद्यते। शा ६।२।१.

X यथाशक्त्यधिकरणम्। यथाशक्तिन्यायः। यथाशक्त्युपनयन्यायः। नित्य यथाशक्त्यनुष्ठानप्राप्ति अधिकार॥

सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात्॥ जै ३।१।१॥

भाष्यम्— बह्वृचब्राह्मणे श्रूयते, 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। नित्यमग्निहोत्रं, नित्यौ च दर्शपूर्णमासौ। तत्र यदेतत् कामश्रवणादन्यत् अकामश्रवणं द्वितीयम्, तत्र सन्देहः। किं यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्नोति तस्यैवाधिकारः, उत विगुणमपि तत् प्रयोक्तव्यमिति। एतावद्धि कामश्रुते प्रथमे श्रवणे चिन्तयिष्यते शास्त्रे। इह नित्ये श्रवणे द्वितीये इति। किं प्राप्तम्? सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात्। यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्नोति, स एवानुतिष्ठेत्। तथाभूतोपदेशात्। यथाभूतं हि तत् कामयुक्तं श्रुतम्, तथाभूतमेव नित्यमप्युपदिश्यते। तस्मात् सर्वाङ्गोपसंहारेण प्रयोगः कर्तव्यः। दर्शपूर्णमासशब्दश्च साङ्गस्यैव वाचकः। कथम्? पौर्णमास्याममावास्यायां च साङ्गं विधीयते। यच्च पौर्णमास्यां विहितम्, सा च पौर्णमासी। यदमावास्यायां विहितम्, सा चामावास्येति। साङ्गममावास्यायां विहितं पौर्णमास्यां च, तस्मात् साङ्गं दर्शपूर्णमासशब्देनोच्यते इति।

टुप्–('सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात्।') यावज्जीविके प्रयोगे चिन्त्यते किं सर्वाङ्गोपसंहारसमर्थ पुरुषोऽधिक्रियते, उत (आह–) एकदेशोपसंहारसमर्थोऽपि इति। एतस्मिन् तु (११।१।२।१६) कथ्यमानं, किं सर्वेष्वङ्गे निराकाङ्क्षीक्रियते, उत एकदेशेनापि इति (चिन्ता) सर्वेऽपि सिद्धान्त। एकान्तो (कथ्यमाने) सर्वाङ्गग्रहणे स्थिते (एव) इदम् (अधिकरणम्) आरभ्यते। (भाष्ये 'प्रथमे श्रवणे' इति अत्राह्निक कृतम्, न तु प्रथमकर्मणि, प्रथमप्रयोगे इति वा। तस्याभिप्रायमाह–) 'अग्निहोत्रं जुहोति' इत्येवमुत्पन्नस्य (कर्मणः) विपरिवर्तमानस्य निमित्ते पुनः विधानात् न तावत् कर्मान्तरमिदम्। नापि प्रयोगान्तरम् (प्रयोगभेद इति आनन्दाश्रमीये रत्ने च पाठः) अन्तर्गतत्वात् काम्ये नित्यप्रयोगस्य (काम्यनित्ययोः तन्त्रेणानुष्ठानादिरयं)। श्रुतिकृतस्तु अस्ति भेदः। तमेव (भेदम्) आश्रित्य भाष्यकारस्तु आह द्वितीये श्रवणे इति। (उत्तराधिकरणमपि न विकृतिमात्रविषयम्, किन्तु सकलकाम्यविषयम्। विकृत्युदाहरणं तु

प्रदर्शनार्थं इत्यभिप्रायेणाह –) सर्वशक्त्यधिकरणसिद्धान्त जनिताशङ्काया (सूत्रे) उत्तरमधिकरणमारभ्यते 'काम्येषु चैवमर्थित्वात्' इति। (यद्वा, यथा निमित्तवत्त्वेन अङ्गत्यागः, तथा स्वर्गकामादिमात्रस्य अधिकारावगमात्, तद्बलेन काम्यमपि हीनाङ्गं प्रयोक्तव्य इत्येवमाशङ्कमानं प्रति उत्तरमधिकरण सकामविषयमारभ्यते इत्यभिप्रायः)। सर्वाङ्गोपसंहारसमर्थस्य (एव काम्येषु) अधिकारः, तादृशस्य (एव) फलार्थत्वात्। न तु नित्ये तादृशोऽस्ति, यदैव यः सर्वाङ्गानि उपसंहर्तुं शक्नोति। तस्मात् (तत्र) एकदेशाङ्ग– (उपसंहार–) समर्थोऽपि अधिक्रियते। (एवं अधिकरणानां विषयविभाग उक्तः। इदानीं प्रकृतमधिकरणं पूर्वपक्षप्रभृति अभिधीयते–) सर्वैः अङ्गैः क्रतुर्निराकाङ्क्षीक्रियते। तादृश एव (क्रतुः) फलार्थत्वेन (यावज्जीवत्वेन) चोद्यते। तदुक्तम् 'तथाभूतोपदेशात्' (इति। योजनान्तरमाह–) अथवा यथा धात्वो (धात्वर्थस्य) पूर्वापरीभूतस्य (भावना–) करणता सर्वैः (अङ्गैः) निराकाङ्क्षीक्रियते काम्ये, तथा नित्येऽपि (विधेरुभयत्रानुक्रमात् इत्यस्य न्यायस्य काम्ये नित्ये वा अविशेषात्) इत्यतः तथाभूतोपदेशात् (इत्युक्तम्। यथाभूतं काम्यम्, तथाभूतमेव नित्यमिति)। अथवा नामधेयादि (दर्शपूर्णमासादि कर्म) सर्वैः (अङ्गैः) निराकाङ्क्षीक्रियते यथा काम्ये तथा नित्येऽपि, तयोरुभयत्र तुल्यत्वात्। इत्यतः तथाभूतोपदेशात्। अथवा यथा काम्यस्य सनियमी इतिकर्तव्यता (आम्नाता) तथा नित्यस्यापि (द्वयोरपि) सन्निधानाविशेषात्। इत्यतः तथाभूतोपदेशात् (इत्युक्तम्)। अथवा नामधेयगतैतरेतरयोगकरणविभक्त्यो आख्यातपदस्य च ('भावनाऽऽत्मनेपदेतरेतरयोगकरणानाम्' इति वार्तिकपाठ लिखितमुद्रितेषु) तुल्यत्वात् तथाभूतोपदेशात्। अथवा पुरुषार्थस्य (भाव्यस्य) उभयत्र (काम्ये नित्ये च) विद्यमानत्वात् तथाभूतोपदेशात् (इत्युक्तम्। अत्र षट् पक्षा उक्ताः)।

अपि वाऽप्येकदेशे स्यात्, प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत् तदर्थत्वात्। २॥

मी. को. ४०३

भाष्यम् — अपि वेति पक्षव्यावृत्तिः। अप्येकदेशे अङ्गानां स्यादेव प्रयोगः। यत. साङ्गस्यापि अनङ्गस्यापि प्रयुज्यमानस्य प्रधानादेव अयमर्थो निष्पद्यते। गुणमात्रं सर्वाङ्गप्रयोगेण भवति। को गुणः। साङ्गान् स्वर्गाभिनिर्वृत्तिः प्रधानमात्रात् इदमन्यत् फलम्। तस्मात् स्वर्गप्राप्त्यर्थं सम्पूर्णाङ्गं करिष्यामि इत्यारब्धम्। यदि कानिचिदङ्गानि न शक्नोति कर्तुम्, तथापि अस्मात् एकदेशाङ्गयुक्तात् प्रधानात् फलं भविष्यति। तस्मात् प्रधानमात्रस्य प्रयोगमाह, नाङ्गानाम्। दर्शपूर्णमासशब्दकः अग्निहोत्रशब्दश्च प्रधानपदार्थः, अन्यानि अङ्गानि सर्वाणीति।

टुप्— (एकदेशिमतेन तावत् सिद्धान्तमाह) नास्ति इतिकर्तव्यता, (अपूर्वाभावात्। अपूर्वप्रयुक्ता हि इतिकर्तव्यता)। कथमपूर्वाभाव.? फलाभावात्, (कालान्तरभाविफलसिद्ध्यर्थं हि अपूर्वं कल्प्यते)। कथं फलाभाव.? निमित्तफलयोः एकत्र (वाक्ये) असम्भवात्। कथमेवमसम्भवः? निमित्तफलयोः (द्वयोरपि) अनुपादेयत्वात्, ते प्रति कर्म उपादीयते। ('ते प्रति कर्म उपादीयेते' इति तु आनन्दाश्रमीये पाठ, स च सन्दर्भानुसारी न भाति)। तत्र अन्यतरोपादाने (वाक्यस्य) कृतार्थत्वात् एकं (एव) प्रति उपादीयते (कर्म, न द्वे अपि प्रति) उभयोपादाने वाक्यभेदः स्यात्। (फलमेव तु प्रति कस्मात् नोपादीयते? अत आह–) निमित्तस्य श्रुतत्वात् तत् प्रति (कर्म) उपादीयते (न फलं प्रति)।

(इतः परं अस्मदीयलिखिते भाष्यचित्तपुस्तके ग्रन्थस्य अभावात् आनन्दाश्रमीय एव उपलभ्यते, क्वचित्तु पुस्तकान्तरादपि)।

ननु भावनावचनस्य 'किम्' इति आकाङ्क्षा उत्पन्ना न निमित्तेन पूर्यते (निष्फलत्वात्), नापि यागेन (अपुरुषार्थत्वात्)। केन तर्हि? फलेनैव (तेन वचनात् फलार्थत्व युक्तम्)। उच्यते। यदि फलार्थी पुरुष. कर्मणि प्रवर्तेत (तत.) तस्य 'यावज्जीवम्' इत्येतत् अङ्गत्वेन स्यात्, (इतरथा वाक्यभेदात्। किञ्च फलप्रयुक्ते कर्मणि) फले च अनर्थी न प्रवर्तेत

निवर्तते ( नोत्पद्यते )। ननु (एकमपि प्रत्यवायहेतुभूता) अकरणनिवृत्तिरेव ( करणस्य ) फलं स्यात्। उच्यते, आत्मव्यतिरेकेण क्रियायाः फलम् ( भवति )। अकरणनिवृत्तिश्च करणमेव। स ( च ) क्रियायाः धर्मः ( सन् ) कथं फलं स्यात्। न च प्रत्यवायाभावः फलं इत्युक्तमेव। यदि च अप्रत्यवायः फलं स्यात्, ( ततः ) फलनिमित्तयोः (द्वयोरपि) एकवाक्यत्वादिदोषः उक्तः ( प्राक्। अतो नित्यस्य कर्मणो निष्फलत्वेन अपूर्वाभावात् इतिकर्तव्यता नास्ति, इति हीनाङ्गस्य प्रयोगः–) इति केचित् एव ( अधिकरणसिद्धान्तम् ) वर्णयन्ति। ( एतदिदानीं दूषयितुमारभते– ) तत् ( एकदेशिमतम् ) नोपपद्यते। कथं भावनातो हि नित्य आकाङ्क्षा उत्पद्यन्ते किं केन कथमिति। ( तत्र–), सन्निहिता चेतिकर्तव्यता। ( नन्त इति आनन्तर्यात् कथमाकाङ्क्षा प्रत्ययमुद्रयते )। सा च ( आकाङ्क्षा ) इह ( अपि नित्ये कर्मणि ) विद्यते। तस्मात् अस्ति इतिकर्तव्यता। यदि च अस्मिन् ( नित्ये ) यागेन ( किमाकाङ्क्षा ) पूर्यते, पश्वकामादिष्वपि तत् ( ततः इत्यर्थः ) न साधनत्वेन स भविष्यति ( किन्तु साध्यत्वेनैव स्यात् यागः। ततश्च तत्रापि इतिकर्तव्यता न स्यात्। शङ्कते– ) तत्र ( काम्यकर्मसु ) निमित्ताभावात् ( कर्म एव कर्तव्यतया विधीयते इति नेतिकर्तव्यता ) इति चेत्, तन्न। अत्रापि तस्मिन् ( निमित्ते ) निमित्ताकाङ्क्षोत्पत्तेः यागेनैव ( च ) परिपूरणात् न फलान्तरम् ( चोदयति– )। फलनिमित्तयोर्विशेषः इति चेत्। ( उत्तरम्– ) अविशेषः, भिन्नवाक्यत्वात्। ( एकवाक्यसमवायो हि फलनिमित्तयोर्विरुध्येत। वस्तुतस्तु नास्त्येव विशेषो भिन्नवाक्यत्वादनयोरित्याह– ) निमित्तं हि कर्म प्रयुङ्क्ते, न कामार्थेन व्यावर्तयति। ( तदेव स्पष्टयति– ) न हि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात्। ( प्रत्युत– ) तस्मिन् निमित्ते, कर्म क्रियमाणं किम्प्रयोजनम् इति पुनरा फलाभिमुखं भवति ( अतश्च निमित्तवत्त्वेन अपेक्ष्यमाणं फलं कर्म तेन विरुध्येतेति )। फलं न कामयते ( मोक्षार्थी ) इति चेत्। उच्यते। न हि ईदृशः पुरुषोऽस्ति, यः अवश्यकर्तव्ये, फलं न कामयते। मोक्षार्थी ( न कामयेत ) इति चेत्, तन्न। तेनापि अवश्यं पापक्षय एषितव्यः। तस्मिन् सति, मोक्षभावात्। अमोक्षार्थिना अपि असौ एषितव्यः फलाय। इतरथा ( अप्रक्षीणे पापे ) फलाप्राप्तेः। तस्मात् नित्यानि कर्माणि तस्य ( पापक्षयस्य ) उपायत्वेन चोद्यमानानि इतिकर्तव्यतामपेक्षन्ते। वीतायाः च ( स्वर्ग– ) फलेच्छायाः कर्मणः इदमेव ( पापक्षयः ) फलम्। यदि च नित्ये अत्यनुग्रहात् यागः कर्मभूतः स्यात्, सर्वथाविशिष्टः अत्यनुग्रहः, इति सर्वत्र ( काम्येऽपि ), कस्मात् न भवति। (चोदयति–) फलपदसामर्थ्यप्रत्ययात्तु ( यागः कर्मभूतः ) न भविष्यति। ( निराकरोति– ) साधनत्वेन ( स्वर्गकामाधिकरणपूर्वपक्षन्यायेन ) तस्य उपनिपातविधि ( फलपदस्य द्रव्यपरत्वाशङ्कनात् इति। किञ्च) यदि च क्रिया स्वशक्त्या ( स्वतः ) अन्यत् किञ्चित् कुर्यात्, ततः तदेव वेदेन च उच्यते। नहि अशक्यमीदृशम् ( वस्तु ) स ( वेदः ) फलाधत्वेन चोदयति, ज्योतिष्टोमस्य यावत् प्रयोगे सर्वफलप्राप्तिरिति। उच्यते। यज्यादीनां क्रियाणां द्वौ धर्मौ दृष्टौ, एकस्मिन् प्रयोगे एकफलता नियतफलता च। तत्र ज्योतिष्टोमस्य फलचोदनाभिः ( सर्वेभ्यो ज्योतिष्टोमः इत्यादिभिः ) अनियतफलता विहिता। एकस्मिन् प्रयोगे ( तु ) एकफलता ( क्रियास्वभावत्वेन लोके दृष्टा ) येन आश्रीयते। यदि च फलं नास्ति ( तत्र 'दर्शपूर्णमासाभ्यां यजेत' इत्यत्र ) करणविभक्तीतरेतरयोगात्मनेपदानां ( करणविभक्तेः, इतरेतरयोगस्य द्वैदार्थस्य, आत्मनेपदस्य च ) अभावप्रसङ्गः। (यदि च नैमित्तिके, कर्मभूतः एव धात्वर्थो न फलमपेक्षते, ततः ) 'भिन्ने जुहोति' इति ( होमस्य ) निराकाङ्क्षत्वात्, अनुबन्धो न स्यात्। आकाङ्क्षोत्तरकाले हि क्रत्वर्थता, पुरुषार्थता वा। न च भवत्पक्षे ( भेदनहोमस्य प्रयोजनविषयिणी ) आकाङ्क्षाऽस्ति, निमित्ते श्रुतत्वात्। नहि आकाङ्क्षा जन्यते क्रतुना ( तस्मात् भेदनहोमस्य न क्रत्वर्थतासिद्धिः। किञ्च ) यदुक्तम् ( भवता ) फलनिमित्तयोः अनुपादानात् ( अनुपादेयत्वात् नैकत्र

मासार्थे च शब्दं फले विधीयते । तस्मात् साङ्गमग्निहोत्रपदवाच्यं दर्शपूर्णमासपदवाच्यम् (च) । यथाग्निहोत्रं तदिह चोद्यते कर्तव्यतया, यौ च दर्शपूर्णमासौ ; तस्माद्विगुणमपि कर्तव्यमेव अग्निहोत्रं दर्शपूर्णमासौ च । यथा क्रत्वन्तरेषु – प्रकृतिविकृतिषु यस्य धर्मा यस्य न भवन्ति, एवं न कामसंयुक्तस्य धर्मा नित्यस्य भवितुमर्हन्ति ।

विध्यपराधे च दर्शनात् समाप्तेः ॥ ६ ॥

भाष्यम्— विध्यपराधेषु च समाप्तिं दर्शयति । 'यदेव यादृक् तादृक् होतव्यम्' इति विगुणस्य समाप्तिं दर्शयति ।

प्रायश्चित्तविधानाच्च ॥ ७ ॥

भाष्यम्— विध्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि । यथा, भिन्ने जुहोतीति । विगुणे नित्यके सति कस्याङ्गभूतैः प्रयोजनं स्यात् । तस्मात् विगुणानामपि प्रयोगः कर्तव्य इति ।

टुप्— 'प्रायश्चित्तविधानाच्च' ॥ येषां (मते नैमित्तिकस्य) इतिकर्तव्यता नास्ति, तेषां प्रायश्चित्तविधानं अत्यन्तमनुपपन्नम् । (प्रसक्तानुप्रसक्ते ■ उपपद्यमिन्याह– ) सेतिकर्तव्यताके तु नैमित्तिके (सति), निमित्ते (भेदने) जाते वैगुण्यात् तत्परिहाराय अपरं होमान्तरमङ्गं उपजायते, तत् क्रियते एव । (इतरथा तु) अकरणात् (इतिकर्तव्यतायाम्) भेदने उपजाते (अपि) वैगुण्यं नास्ति । तस्मात् प्रायश्चित्तदर्शनं सर्वथा अनुपपन्नमिति ।

शा— 'समुच्चितानामङ्गानां कृत्स्नभावेन संग्रहः । सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥' अतो न हीनाङ्गस्य प्रयोगः । उच्यते । 'नैमित्तिके नियोगेन कर्तव्यमवगम्यते । निमित्तेन तदोऽवबद्धेनापि प्रयुज्यते ॥' तस्मात् यथाशक्तिप्रयोगेणैव अधिकारः ।

सोम— नित्ये यथाशक्त्यङ्गोपसंहारसमर्थस्य अधिकारः अस्मिन् पादे न्यरूप्यते । स च पूर्वपादद्वयोक्तकाम्य– नित्यनैमित्तिकाधिकारनिरूपणाधीननिरूपणः इति पादान्तरत्वं आनन्तर्यं च ।

वि— 'नित्ये सर्वाङ्गोपसंहारः [illegible] फलिश्रुतः ।, शक्त्या [illegible] स्मिते ॥'

भाट्ट— नित्यनैमित्तिकयोः [illegible] सर्वाङ्गोपसंहारेणैव प्रयोगः, [illegible] साहित्येन [illegible] (११।१।२) विधिगतविचारे (६।१।२) तद्विनियोगं अधिकारे [illegible] । न च [illegible] नित्येऽपि यथा [illegible] अनुष्ठानाभावात् निमित्त[illegible] रूपस्य निमित्तस्य [illegible] नन्वादौ अवच्छेदोऽस्यैः । [illegible] वच्छिन्नजीवनादेरेव निमित्तत्वात् [illegible] माधवेन नैमित्तिकाकरणे न प्रत्यवायः, [illegible] मानेऽपि इति श्रेयम् । न च [illegible] सामर्थ्यम्, कर्मेऽपि तदावेः । न वा [illegible] सर्वाङ्गकरणसामर्थ्यं इति निर्यं [illegible], [illegible] पीप्सा[illegible] [illegible] पपत्तेः । किंच, निमित्तस्य अनुष्ठापकस्य [illegible] मत् प्रयोगान्तराधिगमात्, यथैव 'अप्सु अवभृथेन चरन्ति' इत्यादौ अर्थात् देशनात् [illegible] तम्, तथा निमित्तरूपाणि । अतश्च अनेषु [illegible] यथा न [illegible], [illegible] शोधनात्, एतज्ज्ञानाभावे इति न हेतु [illegible] । अत एव [illegible] प्रयोगान्तरविधया च निमित्तश्रुतेः [illegible] कालीनत्वात् [illegible] सत्यपि यदि निमित्तस्य [illegible] अङ्गेष्वेव [illegible], न [illegible] प्राप्तिं, न निमित्तस्य अनुष्ठापकत्वेन, [illegible] बोधितस्यैव अनुष्ठानस्य [illegible] उद्बोधकस्य च [illegible] नैमित्तिकाकरणस्य [illegible] बोधः, अन्यथा चैतन्यमात्रेः [illegible] अतश्च यथैव काम्ये प्रयोगान्तर[illegible] एव, न तु अङ्गे, नैव [illegible]

चोदनायाम्, यागगतफलवत्त्वज्ञानार्थं कामयाक्यविव-वाक्याभ्याम् एकवाक्यताङ्गीकारेण निमित्तपापक्षयान्वयो-त्तरोग, अन्यस्य यथाङ्गतानीषेन प्रयाजादिवत् तत्रापि यथाशक्त्युपबन्धोपपत्तेः । ६।३।४, * चक्षुरा-द्यङ्गहीनः अप्रतिसमाधेयाङ्गवैकल्ये तु काम्ये नाधि-क्रियते । नित्ये तु यथाशक्तिन्यायात् अधिक्रियते एव । ६।१।९. * 'युवं हि स्थः' इति द्वयोः यजमानयो. प्रतिपदं कुर्यात् । 'एते असृग्र०' इति बहुभ्यो यजमानेभ्यः । पाक्षिकेणासामर्थ्येन एकस्य यज-मानस्य कदाचित् दक्षिणादिसंपादनपुरःसर अशक्तो सत्या यथाशक्तिन्यायानुसारेण एकस्यापि अपि अर्थात् प्राप्तस्य द्विवचनबहुवचनान्तप्रयोगस्य प्रकृते ज्योतिष्टोमे समय इति चेत्, न, निखिलसोमप्रकृतेर्ज्योतिष्टोमस्य एकेनैव कर्त्रा गतत्वात्, सोमेन यजेत इति उत्पत्तिविधौ, कर्तु रेकत्वस्य न बाधः । एकस्य अननुष्ठेयतया अनुष्ठेयत्वाय विषय यथाशक्तिन्यायविषयताऽपि नास्ति । कस्तूरि. ३।३।९।१८–१९ * अग्नेरपि होमाधिकरणस्य न प्रतिनिधिः । गार्हपत्यीयादेराधानविधिसिद्धत्वा-देव, क्रतुप्रयोगविध्यविषयत्वात् तेषामधिकारिविशेषण-त्वमनीतेः यथाशक्तिन्यायाविषयत्वात् एव न प्रति-निध्याशङ्का । भाट्ट. ६।३।५, * निरग्नेऽपि ज्योति-ष्टोमस्य नैकध्ये यथाशक्तिन्यायविषयता, उपस्थादि-वाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्य (एकस्य) अन्तरङ्गत्वेन अशक्तौ दक्षिणापरिमाणा-न्यङ्गान्तराधेन अस्यैवानुग्राहकत्वात् । ३।३।९.

* यथाशक्तिप्रयोगे कपलोपेऽपि नैकहायनीप्रवृत्तिः, होमस्तु आहवनीये निरधिकरणक एव वा । भाट्ट. ४।१।१०.

* यथाशक्तिप्रयोगादौ (पशौ) यूपाभावेऽपि स्वर्वर्यमेव वनगमनादिविधिः । यूपच्छेदनादेस्तु तत्र निवृत्तिः । भाट्ट ८।४।१.

* 'यथाशिष्टम्' इति सूत्रांशः (५।१।१।१९), यथा शिष्ट विहितं प्रकृतौ ब्राह्मणान्तत्वम्, तथा अत्रापि (चातुर्मास्यपाकमेधीयानीकवत्यादीष्टिषु)। यद्वा, यथा शिष्ट शेषाद्ग्रहणपः प्राकृतः तथा कालोऽपि । पूर्वपक्षः । वृ. ५।१।११।१९.

☐ यथाश्रुतीति चेत् । १०।७।२०।७२ ॥

अग्नीषोमीये पशौ 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति श्रूयते । इदं श्रूयमाणं पञ्चावत्तं यथाश्रुति श्रुतिमनतिक्रम्य कार्यम् । वपाया पञ्चावत्तं श्रुतं नाङ्गेषु इति वपायामेव कार्यं नाङ्गेषु । इति पूर्वः पक्षः ।

न, चोदनैकत्वात् । ७३ ॥

अग्नीषोमीये पशौ वपायां श्रुतं पञ्चावत्तं वपायामेव स्यात् नाङ्गेषु इति पूर्वपक्षं निरस्य सिद्धान्तमाह । न वपायामेव पञ्चावत्तं किंतु अङ्गेष्वपि तत् । चोदनैक-त्वात् । अङ्गयागाना वपायागस्य च 'अग्नीषोमीय पशुमालभते' इत्येकैव चोदना । तत्र वपायागेन चेत् पञ्चावत्तं सबध्यते, तदा अङ्गेष्वपि भवितुमर्हति । तस्मात् अङ्गेष्वपि पञ्चावत्तमेवेति सिद्धान्तः । चोदनाया एकत्वात् इति समासः । के.

☐ यथाश्रुतीति चेत् । ६।४।६।२२ ॥

दर्शपूर्णमासप्रकरणे 'यस्योभय हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति श्रुतः पञ्चशरावः यथाश्रुति उभयश्रुतिमनतिक्रम्य स्यात् । उभयस्य सायं-प्रातःकालीनस्य हविषः आर्तौ सत्यामेव, प्रायश्चित्त पञ्चशराव. न तु एकहविरार्तौ । 'भिन्ने जुहोति' इत्यत्र 'पुरोडाशो क्षामन' इत्यत्र च न यथाश्रुति अर्थः स्वीकृतः कारणान्तरात् । 'उभयं हवि' इत्यत्र तु तथा कारणाभावात् यथाश्रुत्येव अर्थ. स्वीकार्यः । तस्मात् उभयोर्हविषोरार्तौ एव प्रायश्चित्तं इति चेत् पूर्वपक्षी ब्रूयात् ।

न, तल्लक्षणत्वादुपपातो हि कारणम् । २३ ॥

'यस्योभय हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र सायंप्रातःकालयोर्हविरार्तौ एव प्रायश्चित्तम्, नैकहविरार्तौ इति पूर्वपक्षं नाना निषिध्य सिद्धान्तमाह । न यथाश्रुति वाक्यार्थो ग्रहीतुं शक्यः । उभयपदस्य तल्लक्षणत्वात् प्रायश्चित्तनिमित्तविशेषणत्वात् निमित्त-स्वरूपान्तर्गतत्वाभावात् । उभयपदेन निमित्तं लक्षितम् ।

उभयवस्य निमित्तलक्षणत्वम् । तेन उभयत्वस्य न निमित्तताबच्छेदकत्वमित्यभिप्रायम् । हि नर उपपात हविषो बिनाश एव निमित्तम् । तच हति उभय वा स्यादेक वा स्यात् । तस्मात् एकस्मिन्नपि हविषि आर्ति प्रते पञ्चशराव प्रायश्चित्तम् । चे

* यथासरव्यक्रम (न्यगोर्निशेषे) पौवापर्यप्रत्या सत्तिस्यात् गर्रीयान् । ना ३।३।८।२४ पृ ८४० * यथासरव्यक्रमात् वध्यमान उत्पन्नयाङ्ग दर्श पूर्णमासयो । चि ३।३।

यथासरव्यन्याय । अत्र 'यथासरव्यमनुदेश समानाम्' (१।३।१०) इति पाणिनीसूत्रमस्ति । यथा 'गाहमित्यग्निमाददीत ' (७।११२) इत्यादिषु पाणिनीयसूत्रेषु शास्त्रविहितानुविधेयेनानन्तरप्रकृतो निर्दिश्यते, यथाक्रम प्रथम प्रथमन द्वितीयो द्वितीयेनेत्यन्वय प्राप्नुवन्नपि, एवमन्यमपि योज्यम् । शाब्दली ३९०

* यथासख्यन्याय (यथासरव्यमनुदेश समानाम्)। विनापि श्रुत्यादेनासामर्थ्येन यावति प्रदेशे ब्राह्मणे प्रधान पठ्यते, तावत्येन मन्त्र मन्त्र । तमेव अग्न्याद्यवदानविशया यथासरव्यन्यायेन सन्निदेशनात् बुद्धौ सन्निधान भवति । वा ३।३।७।१२ पृ ८१९

* यथासरव्यपाठ पाठसादेश्यरूपमन्त्र एक प्रकार (क्रममन्त्र, दृश्य) । वाल पृ १९ * यथासरव्यपाठात् 'एद्धाग्नकपाल निवपत्' 'वैश्वानर द्वादशकपाल निवपत्' इत्यत्र नामविहितानु इष्टिषु इत्यादि गेयना दिव ' इत्यादिना याज्यानु वाक्यायुगलानाम्, यथासख्य प्रथमाया प्रथमम्, द्वितीयस्या द्वितीय इत्यत्र क्रमेण विनियोग । सौम्या

* यदाऽर्थप्रमाणुजत्यन्ति अर्थेन समतुजत्यन्ति' अथ पञ्चमस्य द्वयाविकार म मलविकार । मनुस्तु स्यादेव पञ्चमस्य। भा ३। ।१०।८०-८१ * 'यत एकस्मात्पूर्वं हृदेद्य तद्वयम्' (यत वाक्यगयात् एकस्मादेव पदात् अपूवस्य ज्ञान भवेत्, तत इत्यत् पदजात तदर्थ अपूवत्रोधकत्वलक्षण भवत् इत्यथ – सु पृ ९६८) इति च यावत पदार्थो नामपदार्थनुयार्थो टप्पत्तीर्थ । वा २।२।११।२६ पृ ५४९ * 'यदा क्रिया अनुष्ठानतया विधीयते, तदा अथात् कारकापारो गम्यते' (भा ३।३।४।१३ पृ ९०१) इति भाष्योक्त यत्र्येन करकाख्यायत्वमाण भवति । सु पृ १४१६ * 'यदा क्रिया अनुष्ठानतया विधीयते तदा अर्थात् कारकव्यापारो गम्यते' । यथार्थात् गम्यते न स श्रौत यस्य न श्रौतो न स वाक्यद् गम्यते । भा ३।४।४।१३ पृ ९२१ * 'यदा स्वात्मपरिस्पन्दात् प्रभृत्या फलागमात । क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥' इति न्यायेन एकफलसाधनानेकक्रियायवपर समुदायस्य एकक्रियात्वम् । सु पृ ६६१ * यदा सुरानीय्यालमन नीवारै सक्तरा कृत, मनसा व्रीहीणा राम, तदा सकस्य बाधित्वा, सुरानां व्रीहय एव प्राप्ता न नीवारा । चि ६।३।१६

* 'यदि – अपि चतुरत्ती यजमान पञ्चावत्तैव वपा कार्या' इति यदत्त तत् पञ्चसत्त्व सर्वे इत्येव द्विविधे वाक्ये वपाग्रहणमविवक्षितम्, वाक्यभेदप्रसङ्गात् इति दशम (१०।७।२०।७१) च चरि । मा ३।१। ७।१४ पृ ७१३ * 'यदि अर्थक्रम तत्तो विकल्प, अथ प्रतिपत्ति तत समुच्चय ' इति पूर्व एव (१०। ८।४।८) अत्रापि (१२।४।६।१०) न्याय । के * 'यदि आतुर स्यात् मनसा वाचा वा सम्पदेत्' अत्र यदिशब्दस्योपलक्षण विधि । बाल पृ ९८ * 'यदि आत्मनिर्वापौ विधीयेते, न प्राकृतौ तौ उहित्ते यदि न विधीयते तत्र प्राकृतो रूपत यौ आत्मनिर्वापौ कतो यौ' इत्यनेन आत्मनिर्वापवि परताभाष्योक्त न्यायेन (२।३।७।१३ सूत्रे) कर्तव तावाविना पवमान उपस्थापीभूवा साधुत्वादविनेयत्व कतव्यम् । सु पृ ११२८ * यदीदृशा यदि पशुना यदि सोमेन यजेत, तत्रैवाग्न पूर्वोऽनिश्चित स्यात्तमपर मतत्पादा यतेत' इत्यत्र अग्निचित्कर्तृकयोने लोकपूर्ण रूपगुणसत्तरविधिरयमेव, अन्य सर्वोऽपि अनुवादवाद । इतिपशुराग्नी च सोमप्रयोगानर्गतेष्टिपशुमानवरो, इति न सापि पुराणामिहविग्रहनस्य पुनर्विनियोग । सवर्यं १।३।११ । अत्र च इष्टिपशुराग्नौरेव पुराणद्रव्यविधि प्रवर्तयति । तत्तुलस्तु उत्तरवेदिपुराणामिहत्र्यैव दर

निरतिरेकगुणानामपि अग्निचित्कर्तृस्तोमे समुच्चयः सोमानन्तर्गतेष्टिपशूनां एकनिरतिरेकगुणाऽभाव इति अन्तरा चिन्ता । १।२।१०.

सू यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् ॥ ६।५।२०।५५॥

ज्योतिष्टोमे प्रातःसवने प्रसर्पणानन्तरं बहिष्पवमानार्थं अध्वर्यु, उद्गाता, प्रस्तोता, प्रतिहर्ता, यजमानः, ब्रह्मा च पिपीलिकापङ्क्तिवत् अन्वारभ्य गच्छन्ति । तत्र दैवात् यदि उद्गातुः अध्वर्युणा सह अपच्छेदः नाम अन्वारम्भभङ्गः स्यात्, तदा आरब्धो यज्ञ अदक्षिणक एव समापनीयः । समाप्य च स एव यागः पुनः कर्तव्यः । पूर्वयागे भवतः दक्षिणा अस्मिन् पुनर्यागे दातव्या । इति उद्गात्रपच्छेदे प्रायश्चित्तम् । अथ यदि प्रतिहर्तुः प्रस्तोत्रा सह अपच्छेदः स्यात्, तदा न्यारब्धे एव प्रतिहर्त्रपच्छेदवति यागे सर्वस्वदक्षिणा देया इति प्रायश्चित्तम् । यत्र तु एकस्मिन्नेव प्रयोगे अपच्छेदद्वयं क्रमेण सञ्जातम्, पूर्वं प्रतिहर्त्रपच्छेद, अपरं उद्गात्रपच्छेदः, तत्र 'पौर्वापर्ये पूर्वदौर्बल्यम्' ( ६।५।१९।५४ ) इति न्यायेन अपरापच्छेदनिमित्तक अर्थात् उद्गात्रपच्छेदनिमित्तक प्रायश्चित्तं कर्तव्य भवति । तदुद्दिशति सूत्रकारः— यदि उद्गाता जघन्यः स्यात् यदि उद्गात्रा कृतोऽपच्छेदः पाश्चात्त्यः स्यात्, तदा आरब्ध यागं अदक्षिणं समाप्य पुनर्यागं कर्तव्य, तस्मिन् पुनर्यज्ञे द्वादशशतरूपा दक्षिणा न दद्यात् किंतु सर्ववेदसं दद्यात् । यथा इतरस्मिन् । यथा प्रतिहर्त्रपच्छेदवति सर्वस्वं दीयते तथा अत्रापि सर्वस्वं देयम् । तथा सति पौर्वापर्यन्यायोऽपि अनुगृह्यते, निमित्तसमुच्चयप्राप्तप्रायश्चित्तसमुच्चयोऽपि अनुगृह्यते । न च विरोध प्राप्नोति । तस्मादेतदन्तारब्धे एव कर्तव्यम् । के.

● 'यद्यन्तरतो यज्ञमार्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्' । अयं विहिताक्रियानिमित्तकः, नैमित्तिक. दोषनिर्घातार्थः. फलार्थ. अधिकारविधि. । बाल. पृ. १४. ● 'यदि ऋक्तो यज्ञमार्तिमियात्, भूः स्वाहेति जुहुयात्' इत्यादिषु दोषनिर्घातार्थेषु प्रायश्चित्तेषु विकल्प. न तु समुच्चय. । भा. १२।३।५।१६ ● 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति ब्रूयात्' 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । यद्यूपमुपस्पृशेत् यज्ञस्य दुरिष्टमामुञ्चेत् । तस्माद्यूपो नोपस्पृश्यः' इदं प्रायश्चित्त लौकिके यूपस्पर्शे, न तु उच्छ्रयणकालीने वैदिके । वि. ९।३।३. ● 'यद्येक यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' अयं निषिद्धाचरणनिमित्तकदोषनाशफलसम्बलितपुरुषार्थाधिकारविधि. । बाल. पृ. १५. ● 'यदि कामयेत वर्षुक पर्जन्य. स्यात् इति, नीचैः सदो मिनुयात्' इति वृष्टिफल यजमानस्यैव । 'यजमानकामिता वृष्टि पर्जन्यः सम्पादयतु' इत्येव योऽध्वर्युः कामयते, स नीचैः मिनुयात् इति व्याख्येयम् । तादृशी तु कामना ऋत्विजाम् । कश्चित्तु 'एवंविदुद्गाताऽऽत्मने वा यजमानाय वा' इत्यादौ ( बृह. २।१।१८ ) वाचनिकं फलमृत्विजाम् । वि. ३।८।९. ● 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयात्' अय गुणस्य अपूर्वविधि. । बाल. पृ २२, ● 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयात्' परस्मैपद ( रूपा ) विनियोक्त्री श्रुति. । पृ. ४१, ● 'यदि कृष्णसारङ्ग न विन्देत् अथो अपि लोहितसारङ्ग. स्यात्' ( शतपथे ) । अयं गुणप्रतिनिधिनियमविधि. । पृ. २३. ● 'यदि च हेतुरवतिष्ठेत' १।२।३।२० इति न्यायात्, सूर्यस्यैकार्थसमवायिनोऽवकरणानान्तरसामान्यस्य होमसाधनत्वहेतुवाक्ययानुपपत्त्या अन्वयविधि. कल्प्यतानः सूर्यविषय एव कल्प्यते । सु. पृ १२९३. ● यस्मादय देशाचारः अयं वा मूलप्रविस्य, अन्यथा नोपपद्यते यदि श्रुतिमूलकत्व नास्ति इत्यनयोपपत्त्या मूलकल्पना । तस्मात् व्यवस्थितविषयेव वाऽध्यवसातव्या । तथा चोक्तं 'यदि च हेतुरवतिष्ठेत निर्देशात्' इति । वा. १।३।७।१५ पृ २४४. ● दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोजनस्य 'यदि च०' इत्यनेन निरासः । सु. पृ. ९९२. ● 'यदि जगत्सामा आग्रयणाग्रान्' इति आग्रयणाग्रत्वकं सोमयागे गुणविधायकं न कर्मान्तरविधायकम् । भा. २।३।१।१-२.

ॾ यदि वचनात्तदूनं तद्विकारः स्यात् । १०।३।२०।७२ ॥

अथवा अधिकरणान्तरस्य पूर्वपक्षसूत्रमिदम् । अस्यार्थस्तु 'तथा च सोमचमसः' (१०।३।१९।६८–७१) इत्यधिकरणे आधिकोश सूत्रे द्रष्टव्यः ।

सर्वे वा पुरुषापनयात् तासां क्रतुप्रधानत्वात् । ७३ ॥

अथवा अधिकरणान्तरस्य सिद्धान्तसूत्रमिदम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अस्यार्थस्तु 'तथा च सोमचमसः' इत्यधिकरणे द्रष्टव्यः । के

ॾ यदि तु वचनात् तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् । १०।२।१८।५०॥

अस्त्यत्र अस्ति सत्रापिवाग इति कृत्वाचिन्ता । तुशब्दः कृत्वाचिन्तामुद्भावयति । यदि वचनात् तेषां अस्त्यत्र सत्रं स्यात्, तदा तेषां आत्मसंस्कार अर्थलुप्तं सन् निवर्तेत । यत्र 'जपति' इति चोदना, ते मन्त्रजपाः, संस्काराः 'केशश्मश्रु वपते' इत्येवमादयः, जपाश्च संस्काराश्च तेषां समाहारः जपसंस्कारं अर्थलोपात् कर्तव्यम् । न तैः अस्त्यपि शक्यं जपितुम्, नापि केशश्मश्रु वप्तुम् । अभावश्च चोदको न प्रापयति । किंच सेष्टि दीक्षणीयया इष्ट्या सहितं सेष्टि प्रथमस्कार उत्पन्नेव । तदर्थत्वात् यजमानार्थत्वात् दीक्षायाः । दीक्षा च व्रतानि नियमाश्च मानसं कर्म । न चास्त्यत्र मनः अस्ति । तस्मात् अस्थिपक्षे जपाः संस्काराः इष्टिश्च निवर्तेते । इति सिद्धान्तः । के.

● 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय०' इत्यादिना गुणविशिष्टकर्मान्तरं विधीयते अवेष्टिनाम । वि. २।३।२ ● 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय, आहुतिमाहुतिं हुत्वा, तमभिघारयेत् । यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्' अत्र पुरस्तादनुपङ्गेण विधिः । बाल. पृ. २०. ● "यदि यजमानं प्राश्नीयात् – 'प्रजापतेर्विभान्नाम लोकः' इति मुनायां यजमानभागमन्यथा समिध्यमुप सह जुहुयात्" (आपस्तम्बसूत्रम्) अत्र क्रियाप्रतिनिधिनियमविधिः । बाल. पृ. २१ ● 'यदि रथंतरसामा' इति यदिके वाक्ये चिन्तिते प्राथमिकत्वसाम्येन बुद्धिस्थाना 'यदि ब्राह्मणो यजेत' इत्यादिवाक्यानां पूर्वाधिकरणे निमित्तार्थत्वप्रतिपादनेन प्रयोगनिविदत्वप्रत्यादनात्, इहापि ब्राह्मणादिसंयुक्तत्वसाम्येन बुद्धिस्थाना वसन्तादिवाक्यानां प्रयोगविधिपुरःत्पादनाद् अनन्तरसंगतिः । सु. पृ. ९१४. ● 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादिपदार्थविशेषः ज्योतिष्टोमस्यैव विधीयते, न तु रथंतरसाम-बृहत्सामशब्दाभ्यां च क्रत्वन्तरम्, किन्तु ज्योतिष्टोम एव अभिधीयते । रथन्तराधिकरणम् । भा. २।३।१।१–२. ● 'यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इत्यादि, अत्र अन्यतरसाम्नि व्यवस्थया विधिः । अत्र पाठतः ऐन्द्रवायवाग्रत्वं प्राप्तम् । बाल. पृ. १८, ● 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इत्य निमित्तोपादाननिर्देशे व्यवस्था श्रौती । पृ. १९, ● 'यदि सत्राय दीक्षितानां प्रमीयेत, योऽस्य नेदिष्ठः स्यात् तं तस्य स्थाने दीक्षयित्वा' अत्र द्रव्यप्रतिनिधिनियमविधिः । पृ. २३ ● 'यदि मुसदृशमन्यद्गृह्यते, तत्र मिथ्या भवति विसदृशादन्यसादृश्ययुक्तम्' इति न्यायः । स्वरूपसमवाय्यन्तरङ्गद्रव्यसामान्ययुक्तसुसदृशप्रकृतित्वभङ्गभये, शान्दमानसमवायिबहिरङ्गदेवता सामान्ययुक्तस्य कर्मेण मन्दसादृश्येन 'यदि सुसदृश०' इत्यनेन न्यायेन विसदृशत्वात् प्रकृतित्वकल्पनाशक्तिः । सु. पृ. १२८१. ● 'यदि सोमविक्रयी प्रतिविलेत, शृतेन पयसा गणेडेन कारयेत्, रजुदेवैर्मैत्रीसरैरैके, नित्यदेवके वर्णं समापयन्ति' अत्र प्रकरणेऽप्यनुष्ठानापि । बाल. पृ. १९.

● यदिशब्दः निमित्तबोधकः । 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यत्र ऐन्द्रवायवाग्रत्वस्य रथंतरसामसोमस्य निमित्तमित्युक्तम् । वि. ४।८।५. ● यदिशब्देन विधिशक्तिप्रतिबन्धः, 'यदि सोममपहरेयुः' इत्यादौ । भा. २।३।६।११.

वाचकभावोऽश्वमक्षपादादिशब्दवत् ॥ विभीतके ऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकत्वस्य ज्ञायते शकटाक्षवत् ॥ ' तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारमस्यार्येषु प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि । (" शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्य आर्येषु भाष्यन्ते ' शव ' इति " इति निरुक्ते २।२ ) । बहव एव हि भाषन्ते नामशब्दाश्च प्रतिदेशं अर्थभेदेन व्यवहरियता दृश्यन्ते तस्मात् एषा इह अभिधाने विप्रतिपत्तिः स्यात् । एवं च निरुक्तेषु केषाञ्चिदर्थानां साधारणशब्दवाच्यत्वात् प्रकृताधिकरणप्रयोगाद्यर्थं चोदकोऽनुप्रदीयते । ' तेष्वदर्शनाद्विरोधस्य ' इत्यनेन चैतत् व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरुपलभ्यमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वात् विकल्पः । इति प्राप्तेऽभिधीयते ।

शास्त्रस्था वा तन्निमित्तत्वात् । ९ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । यवशब्दो यदि दीर्घशूकेषु, शास्त्रकाः प्रियङ्गुषु अभिष्वज्यन्ते, यदि प्रियङ्गुषु, शास्त्रस्थाद् यवेषु । किं शास्त्रस्थम् ? पूर्वस्मिन् क्षीणे भवति दीर्घशूकः प्रियङ्गवश्च एतत्तयोः शास्त्रस्थम् । क पुनरेतन्निश्चय ? न शास्त्रस्था न शब्दार्थं । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते अत्र समा भवन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषः ' यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति ' इति । दीर्घशूकान् यवान् दर्शयति वेद । वेदे दर्शनात् विच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मात् प्रियङ्गुषु गौणः । तस्मात् दीर्घशूकाना पुरोडाशः कर्तव्यः । ' वराहं गावोऽनुधावन्ति ' इति सूकरे वराहशब्दं दर्शयति । ' अप्सुजो वेतसः ' इति वञ्जुले वेतसशब्दम् । सूकरं हि गावोऽनुधावन्ति । वञ्जुलोऽप्सु जायते । जम्बूश्च स्थले गिरितटेषु वा ।

वा— ' शास्त्रस्था तन्निमित्तत्वात् प्रतिपत्तिर्बलीयसी । लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥ नानाविप्रतिपत्तौ हि न लोकस्येह गम्यता । या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥ लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा । शास्त्रस्था पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥ प्रमाणत्वेन मन्तव्या सम्प्रत्ययतरा हि ते । शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥ लोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् । लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विरुध्यते ॥ रसवीर्यविपाकानां भेदाद्वैद्यैर्यथाद्य । निर्धार्य स्वार्थतत्त्वेन, धर्मसिद्धयेव याज्ञिकैः ॥ तस्माद्ये याज्ञिकैर्येषां नैर्धार्योऽर्थो निरूपितः । तेषां तत्त्व शब्दानामर्थो मुख्या हि सेतरे ॥ अनवस्थितशब्दार्थसम्बन्धे सति सम्भवे । विकल्पस्त्वाष्टदोषत्वान्न कथञ्चन युज्यते ॥ अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते । तत्रत्यनिर्णयात् तस्माल्लोके भवति निर्णयः ॥ ' यवमतीभिरद्भिः औदुम्बर्या प्रोक्षणे विधीयमाने वाक्यशेषोऽयम् ' यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति ' इति बह्वृचु शाखासु श्रूयते, अन्यथाकारेण ब्राह्मणप्रायासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलभ्यो य स मन्दफलो जनत्वात् तथा नामास्तु । ' फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥ प्रियङ्गव शरत्पक्वास्तावद्गच्छन्ति हि क्षयम् । यदा वर्षासु मोदन्ते स्वस्वयत्नाना प्रियङ्गव ॥ तदा नान्यौषधिम्लानि सर्वाभावेन मोदनात् ।' एवं वराहवेतसशब्दा अपि शास्त्रप्रयोगादेव निर्धार्यन्ते । तस्मान्नायुदाहरणानि लोकप्रसिद्धरेव व्यवस्थितत्वाद्भूतानि । तथाहि ' नैवोच्यन्ते क्वचिद्देशे यवभुजो प्रियङ्गव । जम्बू न वेतस प्राहुर्वराह नापि वायसम् ॥ अध्यारोप्य विचारेण किं मुधा क्रियते मन । सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥ वक्ष्यत्येव च तेनापि पृथक्कार्यो विचारणा । ' यद्यपि तत्राभिधेयसंदेहमनुदाहृत्य तत्रादानसंदेहनिर्णयोपाय शास्त्रेण करिष्यति, तावद्वाक्यशेषमेव स निर्णयो नायत्र । अत्र तु अभिधेयनिर्णय एकत्र च कृत , सर्वत्र च कृत एव भविष्यति इत्येवमपुनरुक्तत्व

मापद्यते । 'तथापि न्यायतुल्यत्वाद्यथा घृतपरिग्रहः। वाक्यशेषात् तथैव स्यात् यवाद्यर्थविनिर्णयः ॥' तत्सिद्धिसूत्रे च गव्यादीनां गौणवृत्तिनिमित्तानामनुक्रमणात् वेदावयवशब्दानामप्रत्यक्षसिद्धिगव्यार्थत्वेऽपि निश्चयते एवेति नेहोदाहृतेन कार्यम्।

( आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलम् । )

'तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् । यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगजा ॥ तत्र किं तुल्यता युक्ता किमेकैव बलीयसी । ( पूर्वपक्षमाह- ) समा विप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् । आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥' सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते । अर्थश्च व्यवहारप्रसिद्धपूर्वमभिधीयते ।

'तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा । तथापि तस्य सामर्थ्यमनालोच्य प्रतीयते ॥ यथैवार्यगम्येऽर्थे संतन्वानादिता मतिः । म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम् ॥ न प्रयोगानवितत्वं म्लेच्छेष्वपि हि दृश्यते । अनाद्योरर्थशब्दयोश्च विशेषो गम्यतां कथम् ॥ यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः । एवं आर्ये प्रयोगात् नैरेः शब्दोऽपि वाचकः ॥ तस्मात् पील्वादिशब्दानां वृक्षहस्त्यादिबोधने । समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगत: ॥' इति प्राप्तेऽभिधीयते । नान्यथा नेति पूर्वादेव शास्त्रसूत्रस्याप्या योजनीया । किंच, 'यथा साम्यानुरूपत्वात् प्रमाणाभासिकेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥' शब्दापभ्रंशादेव गौणग्रन्थादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति ते आर्यैरनादिप्रयुक्तार्थक्रियानिमित्तपूर्णाभिमिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिव तत्परीक्षिभिर्विवेक्तुम् । अभियुक्तानभियुक्तयोश्चाभियुक्तज्ञानं ... विषयस्य मुख्यप्रमाणत्वात् । 'अतः शास्त्राभियुक्तानामार्यावर्तनिवासिनाम् । या मतिः सैव धर्मादिशब्दार्थत्वप्रमा मता ॥' एतेन आर्यावर्तनिवासिमध्येऽपि 'अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तेते यत्र प्रयुञ्जीरन् सोऽर्थस्तत्त्वतो भवेत् ॥'

( स्मृत्याचारविरोधे बलाबलविचारः ) 'स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये । समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि ॥ यथैव श्रुतिमूलत्वात् स्मरणानां प्रमाणता । आचाराणां तथैवेति न विशेषो भविष्यति ॥ यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात् प्रतीयते । फलाद्विप्रयुज्यमानं हि प्रमाणं दुर्बलीभवेत् ॥ श्रुतिराचारमूलं या फलस्था सोपलभ्यते । यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥ तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति । प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥ तेनाऽऽचारबलीयस्त्वं समत्वं वेह युज्यते । स्मृतीनां वा बलीयस्त्वं शास्त्रस्था चेति वर्ण्यते ॥ उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ॥ सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ॥ आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः । तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥ न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका । भिन्नाभिर्विप्रकीर्णाभिः स्यात्स्मृताभिः प्रवर्तनम् ॥ नैकत्रपाठकेनैव ह्याचाराणां विधिश्रुतिः । क्वचित्प्रकरणे काश्चित् कश्चिदुपलभ्यते ॥' तत्राऽग्निप्रकरणे 'यत् सतदग्नाबीजुपदधात्यकृतमेनोपमस्तो ददाति, तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽश्नाति' इति । तथापि हेतुर्नक्षत्राऽवलेपप्रसिद्धिरहिते हेतमभवात् । 'विधायिष्यते तु येन यत्नेन' इत्यनेन न्यायेन विध्यनुमानम् । न चैतन्नियोगतोऽर्थेन प्राप्तम्, येन 'तस्मात्प्रजा दश मासान् गर्भं धृत्वा, एकादशमनु प्रजायन्ते, तस्माद्दशमं प्रजाः' इतिवत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान् पितोपजीवन्ति' इतिवदनूद्येत इत्यतो न्याय्यात् पुरुषधर्मविधि । एवम् 'अन्नमेव तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति । तथा 'दीक्षितो नवनीतं दक्षिणं प्रथमस्य नक्ति, सर्वं हि मनुष्याः पूर्वमञ्जते निक्त्वै' इति । तथा यूपैकादशिन्यां 'द्वे द्वे रशने यूपमुच्छ्र.,

त्वेनापि युज्यते । यद्वा तत्रापि नगरान्तरवत्तमेन निरूढ-त्वात् प्रयोक्ष्यते, तथा स्थानान्तरत्वमपीति । यद्वा यथैवाय नगरे दृष्ट तथाऽयं स्तोनीशगतेऽपीति यथैव तत्रागमस्थानेन तत्प्रसिद्धयनुपाती भवति । यत्र तु साध्ये-यान्तर्गतपरत्वम्, तत्र वैदिकोऽर्थो गौणो यद्वा लौकिको वा मुख्य इति तादृशे विषये मुख्यार्थत्वस्त्रौकिकप्रसिद्धि-रेव प्रतीतेरुत्तरसूत्रे वक्ष्याम. ' चोदितं तु प्रतीयेता-विरोधात् ' इति । तथा चरुशब्दोऽपि अन्यान्यानेकार्था-भिधानप्रतिपन्नशक्तिकाद्देशस्य नियम्यमानो याज्ञिकोद-प्रसिद्धिरुपयोगोदनविषय एव भवति । आध्वर्यवैखरी-शब्दो तु यदि नाम वैदिकप्रयोगान्तरवशात्समुदायप्रसिद्धि-त्वेन लौकिकीं अवयवप्रसिद्धिं जहीत, ततः सिद्धमेव शास्त्रप्रतिपत्तिर्बलीयस्त्वम् । अथापि स्वेनशास्त्रमपि प्रसिद्धत्वेनपरो गौणत्वादन्यत्वाऽसमप्रसिद्धिः ' समाना-भिनवच्छयेनेन ' इत्यादिषु इव आश्रीयते, तथापि शास्त्रकल्पितत्वात् धर्मं प्रति बलीयस्त्वम् । ' अथापि शब्दगौणत्वं तथापि बलवत्तरम् । स्वतन्त्रस्य हि वेदस्य दृष्टं येन निधार्यते ॥ गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ ' न चात्र ' संदिग्धेषु वाक्यशेषात् ' ( १।४।११।२४ ) इत्येतेन तुल्यार्थता प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात् । ' लौकिकी प्रति-पत्तिर्हि स्वार्थे नि संशया स्थिता । वैदिक्यपि तथा स्वार्थे बाधनेऽतो विपर्ययात् ॥ तस्माच्छास्त्र-स्थितैवैषा प्रतिपत्तिर्बलीयसी । न समा मुग्धका-र्यैर्निरूढैः ससंस्कृतैः ॥ ' इति ।

शा— आचारप्रसङ्गात् शब्दस्यार्थे प्रयोगव्यापार-विप्रतिपत्तौ बलाबल चिन्त्यते । अत्र भाष्ये आर्यम्लेच्छ-विशेषानुपादानात् वाक्यशेषेण सिद्धान्तकथनात्, शिष्टा-चारस्य च पूर्वप्रकृतत्वात् यत्र शिष्टानामेव विशेषाभि-धानविप्रतिपत्तिः केषाञ्चित् वाक्यशेषानुगुणा, केषाञ्चि-दननुगुणा, तत्र तुल्यबलत्वाभावादुत्कृष्य वाक्यशेषानुगुणाया बलीयस्त्वं प्रतिपाद्यते इति लक्ष्यते । ( तदयुक्त ) इति मत्वा आचार्यैः अन्यथाऽधिकरणं व्याख्यातम् । यत्र आर्यम्लेच्छयोः अभिधानविप्रतिपत्तिः, यथा पीलुशब्द

आर्याः वृक्षविशेषे प्रयुञ्जते, म्लेच्छास्तु हस्तिनि । तत्र चिन्त्यते– किं तुल्यबलत्वम्, उत आर्यप्रसिद्धिर्बलीयसी इति । तत्र ' लोकप्रसिद्धिगम्यत्वात् शब्दार्थसंबन्ध-योरपि । समा विप्रतिपत्तिः स्यात् शास्त्रार्थे हि बलाबलम् ॥' इति प्राप्ते, ब्रूम. । ' प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते । अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥ ' तस्मात् पीलवादिशब्दाः वृक्षा-द्यर्थाभिधायिन इति सिद्धम् । माध्यमपि आर्यम्लेच्छ-विशानाविरोध व्याख्येयम् ।

( वर्णक द्वितीयम् ) स्मृत्याचारविरोधे च । यत्र मन्वादिनिबन्धनाना अनिबन्धनाना चाचाराणा विरोधो मातुलदुहितृपरिणयनादिषु, तत्र किं तुल्यबलत्वम्, उत स्मृतीना बलीयस्त्व इति चिन्त्यते । तत्र ' यत्नाबल-विशेषस्तु कश्चान्तरविचारित. । श्रुतिस्मृत्योरिव स्वैवं न द्वयोः श्रुतिमूलतः ॥ ' अत्रोच्यते । ' सत्यत्व-यप्रणीता हि स्मृतिः सोपनिबन्धना । तस्मात्तेन बलीयस्त्वमाचारात् निर्निबन्धनात् ॥ ' ( प्रत्यय-शब्देन मन्वादीना निप्रकीर्णवेदतदर्थानुभवः, इदानीं-तनापेक्षया मन्वादिषु विश्वासश्च विवक्षितः । इतस्ततो विप्रकीर्णस्य-परम्परागतस्य-विधानिर्देशकस्मरणादिना विशेषितान् विधीन् उपसंहृत्य तन्निबन्धनकर्मणा कर्तव्य-त्वकथन उपनिबन्धनम्., तद्युक्ता इत्यर्थ. ) ।

( वर्णकान्तरं तृतीयम् ) ' त्रिवृत् बहिष्पवमानं ' ' पयसि चरुः ' ' आश्वाल. प्रस्तर. ' ' ऐन्द्रं यो विषूची ' इत्यत्र किं लोकवाक्यशेषयो. तुल्यबलत्व उत वाक्य-शेषस्य प्रतीतिर्बलीयसी इति संशयः । ' पदार्थपद-संबन्धे तुल्यत्वं लोकवेदयो: । अदृष्टसाधनत्वे हि लोकाद् वेदोऽतिरिच्यते ॥ ' इति पूर्वः पक्षः । सिद्धान्तस्तु ' वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते नहि । तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी ॥ ' १।३।५

सोम— आचारप्रसङ्गात् संगतिः अतिक्रान्तपक्षा-भिप्रायेण, भाष्यकारपक्षे तु बलाबलप्रसङ्गात् सगति-र्बोध्या । प्रथमवर्णके प्रयोजनं पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वात् हस्तिवाचकत्वाभिप्रायेण पीलुशब्द-

केचित् तन्व्याम् । क्षौमप्रथा पत्रोर्णारवानादिकल्पः ( इलोक ५३: ) । यः शास्त्रस्थाना स शब्दार्थः । के शास्त्रस्था: । शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तस्मात् दीर्घशूकाना पुरोडाशः कर्तव्यः । सूकरो वराहशब्द. । वञ्जुले वेतसशब्द इति सिद्धान्तः । १।३।८।८-९. ● यववराहाधिकरणे तु वाक्यशेषात् प्राक् सदेह एव, यवादिशब्दानां प्रियङ्ग्वादिषु सार्थनिर्णयविच्छेदाभावात् । न तु विपरीतनिश्चयः । कु. १।२। ५।८ पृ ६६ वार्तिकमतेन वर्णकं ३. ● यववराहाधिकरणे शास्त्रप्रयोगबलेन लौकिकप्रयोगबाध. उक्त. । सु पृ. २५१.

● अनेकार्थकल्पना—व्यवहारानुपपत्ति विकल्पापत्ति – नियमभङ्गापत्तिश्चेति दोषचतुष्टयं यववराहाधिकरणोक्तम् । कौ. १।४।१३।२१ पृ. २७३. ● एकस्यैव शब्दस्य वाचकत्वनियमात् एकस्यैव चार्थस्य वाच्यत्वनियमात् इति यववराहाधिकरणोक्तः वाच्यैकत्वनियम. दृष्टान्तत्वेन दीप्त्या उक्तः । सु. पृ २०७.

● यथैव मङ्गलानां प्रियङ्गुदीर्घशूकादीनां एकाभिधानेनैव प्रतीतिसिद्धे., यवादिशब्दानां अर्थैकत्व नियमं तथैव सहस्रानामपि एकाभिधानेनैव इतरत्र प्रतीतिसिद्धेः शब्दानां अनेकार्थता । इति यववराहाधिकरणोक्तन्यायपरामर्शः । सु. पृ. २५६.

● यववराहाधिकरणन्यायेन लोकप्रसिद्धिः शास्त्रप्रसिद्ध्या बाध्या । न्यायनि. २।३।१७।४५ अमृ.

● यववराहाधिकरणप्रयोजनकथनावसरे 'विद्वुनि सवनादेन० ' ( १०।६।७।२१–२२ ) इत्यधिकरणम् । कौ. १।३।८।९.

● अर्थवादानामर्थवादार्थपरत्वाभावे यववराहाधिकरणविरोध । कु. १।२।१।२८.

● यववराहवेतसशब्दानां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यः उत शिष्टप्रसिद्धोऽर्थोऽथवा विकल्पः इति संदेहे, शिष्टप्रसिद्ध एवार्थो ग्राह्य. इति सिद्धान्तः । भा. १।३। ४।८–९

● यवविधिः ' यवमयश्चरुर्भवति ' इति । वि. १।३।५.

● यवनिष्पत्त्यर्थवाद. ' यदान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति ' इति । अयमर्थवादः ' यवमयीभिरद्भिरौदुम्बरीं प्रोक्षति ' इत्यस्य विधेर्वाक्यशेष· बह्वीषु शाखासु उपलभ्यः । भाष्ये तु वारणपात्रश्रीतयवमयकरम्भपात्रविधिशेषत्वेनोदाहृतः (' यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं ... ' इति भाष्यम् ) । कौ. १।३।८।९ पृ. ५७.

● यवव्रीह्योरेकस्मिन् कर्मणि विकल्प., एकार्थत्वात् । भा. १२।३।८।१०–१५.

● यवव्रीह्यन्यतरनियमस्य विशेषो तण्डुलेषु बाध.। भा. १०।२।२१।७०.

● यवशब्दः वेदे दर्शनात् अविच्छिन्नपारम्पर्यः दीर्घशूकेषु इति गम्यते । भा. १।३।८।९.

● यवमध्या गायत्री । पादेषु अक्षराणि ७।१०।७। उदा० ' य इन्द्र सोमपातमः ' (ऋसं. १।१०८।१३) । के. ● यवमध्या त्रिष्टुप् । पादेषु अक्षराणि ८।८।१२। ८।८ । उदा० ' स मा तपन्त्यभितः ' (ऋसं. १।१०५। ८ ) । के.

● यवागूः एकपरिमाणास्तण्डुलान् षोडशपरिमाणे जले विपाच्य साध्यमानं द्रव्यम् । इद राजन्यस्य यज्ञे व्रतम् । के. (भा. ४।३।४।८). ● 'यवागूः राजन्यस्य' ज्योतिष्टोमे व्रतं कर्तव्यम् । भा ४।३।४।८–९, ६।१। ७।२८, १०।८।११।१, १२।१।१४।१०. ● 'यवाग्वा जुहोति ' इत्य कर्मणि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । याज्ञ. पृ. ४४.

● यवागूपाकस्य पश्चात्त्व अग्निहोत्रहोमस्य पूर्वत्वं च पाठात् प्राप्तम्, अर्थानुसारेण प्रयोजनानुसारेण बाध्यते । अर्थक्रमः पाठक्रमाद् बलवान् ' अग्निहोत्रं जुहोति यवागूं पचति ' । भा. ५।१।१।१.

● यशः । ' माभ्ययशःश्रीकामाना पुलपादपीत ' । भा. १०।३।५।३०.

● ' यष्टीः प्रवेशय ' यष्टिग्रहवत्पुरुषान् इत्यर्थः गौणी वृत्तिः लक्षणा वा । वा. १।४।१२।२३ पृ. ३५४, सु. पृ. ४६८.

निरूपणम् । ३।१।३।६ पृ ६६८. * यागस्य न स्वरूपेण श्रेयःसाधनत्वं किंतु विहितत्वेन स्वरूपेण ( विहितत्वविशिष्टस्वरूपेण ) । सु. पृ. ३२. * यागस्य यागान्तरं रूपं न भजति । भा. २।२।१।६. * यागस्य रूप – द्रव्यदेवतेन यागान्तराद् व्यवच्छिन्नो यागो निरूप्यते तदेव रूपम् । भा २।२।४।१०. * यागस्य स्वर्गाङ्गत्वम् । भाट्ट. ३।१।३ * शब्देन प्रत्यासन्नस्य यागस्य फलसाधनत्वात् प्राधान्यम् , देवताया गुणत्वं विज्ञायते । टुप् ९।१।४।९.

* यागानां दैवस्य चैतरेष्विति न्यायः । साहस्री ८९५.

* यागानां प्रायेण दर्शपूर्णमासत्वम् । भा. ७।३। २।२. * यागे अङ्गहीनस्याप्यधिकारः । ६।१।९।४१. मीको. पृ. २८२ 'अधिकार अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैगुण्यस्यापि ' इत्यत्र द्रष्टव्यम् । * यागे दम्पत्योः सहाधिकारः । ६।१।४।१७–१८. 'सहाधिकाराधिकरणम् ' इत्यत्र द्रष्टव्यम् । * यागे निर्धनस्याप्यधिकारः । ६।१।८।३९–४०. मीको पृ. २८५ 'अधिकार कर्मसु द्रव्यरहितस्यापि ' इत्यत्र अधिकरणं द्रष्टव्यम् । * यागे शूद्रस्यानधिकारः । ६।१।७।२५ –३८. मीको पृ ५०४ ' अपशूद्राधिकरणम् ' इत्यत्र द्रष्टव्यम् । * यागे स्वर्गकामस्याधिकारः । ६।१।१। १–३. ' स्वर्गकामाधिकरणम् ' इत्यत्र द्रष्टव्यम् । * यागे हि द्रव्य गुणभूतं चोद्यते । भा १०।६।१७।६५. * यागेषु कर्तृणां कर्मतारतम्येन मानतारतम्यं नास्ति । १०।३।७।९०–९३.

* यागाङ्ग कर्तृत्वादिना पुरुषः । भाट्ट. ३।१।३. * यागाङ्ग गुण । वि. ३।१।३. * यागाङ्ग देश । भाट्ट. ३।१।२.

* यागाख्यामात्रस्य ज्योतिष्टोमस्य निष्पादनसामर्थ्यस्य शब्दैकसमधिगम्यत्वम् । सु पृ. ८००.

* यागाख्यासमभाजात् अङ्गभेदोऽयमिति ' उद्देशात् कर्मणोऽभ्यास ' ( २।७।६।१९ ) इति न्यायात् । सु. पृ ९४८.

* यागात्मकस्य क्रियाविशेषस्य द्रव्यदेवताधस्याविभाग. । सु पृ. ४६३.

* यागादौ विधिगतशब्दैरेव देवतासंप्रदान कार्यम् । १०।४।१२।२३–२८. 'विधिशब्दाधिकरणम् ' इत्यत्र द्रष्टव्यम् । * यागादिषु मनुष्याणामेवाधिकारः, न तिरश्चा देवानामृषीणां वनस्पतीनां च । ६।१।२।४–५. मीको. पृ. १३५० 'तिर्यगधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यागादिकर्मणां स्वर्गादिफलसाधनता । स्वर्गकामाधिकरणम् । भा ६।१।१।१–३.

* यागादिक्रियायां कार्यत्वान्वये नियोगान्वयो हेतु. । नियोगविशिष्टतयैव पाकादिक्रियायां कार्यत्वान्वयदर्शनात् । ( इति गुरव ) । मणि. पृ. ८४.

* यागगतेन व्यापारेण गृहीतेन, आत्मसिद्ध्यर्थं नियमादृष्टद्वारभूतानि दृष्टानि अदृष्टानि च प्रयोजनानि गम्यन्ते । तानि च निर्वाणपरिमाणान्येव प्राप्नुवन्ति । तेषामात्मसिद्ध्यर्थं पदार्था आश्रयमाणाः स्वात्मनिरता एव प्राप्यन्ते । बा. ३।८।१६।३१.

* यागचोदना रूपणया भवति 'गार्ग्यां दक्षिणस्मिन् शिखरे आलभ्येत ' ' सौर्यं चरुं निर्वपेत् ' ' सौम्य बभ्रुमालभेत ' इति । भा. ११।२ ९।१९.

* यागत्वं प्रत्येकं समवेतम्, तद्धाथिना च धातुना प्रत्येकस्य द्रव्यदेवत्यस्य भावनान्वितत्वार्थति । ननु समुदायस्याविनाभावित्वेऽपि यागत्वं धातुना समुदायस्यैवार्थता भवेत् । न, तस्य एव धात्वर्थानन्वयेन प्रत्येकवृत्ति स्यात् । तदुक्त पौर्णमास्यधिकरणे ( २।२।३ ) । था. ३।२।३।१९ पृ ७६७. * यागत्वं विद्यमानस्य कर्तुः अनात्मलाभफलकस्य यागत्वाभावम् । सु पृ ३४३.

* यागदेवतायै सङ्कल्पिते द्रव्ये स्वत्वमन्यमानो यजमानो न तेन ऋत्विजः, किंतु शक्नोति । वि. १०।२।१, * यागदेवतयोः विधि विना न संबन्ध । १०।४।१४.

* यागद्रव्यं भक्षयितव्य चोदनेन भवति । भा. ३।५।१९।४८.

विवेः शेषाक्षसानता ॥ स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् । तथा सम्पादनं दानं त्यागोऽप्येवमियं भिदा ॥'

भाट्ट — प्रसङ्गात् यागादिपदार्था निष्कृष्टाः के इति विचार्यन्ते । यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागो विधीयते स यागपदार्थः । प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमाग विशेषणं तत्र यागाक्षेपेणैव प्रक्षेपसिद्धेः । दानयनान्तर्भूतस्य चोक्तविधत्यागत्वसमवायकं जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव । प्रक्षेपप्रधानक उक्तविधत्यागो होमपदार्थः । परस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः । अत्रापि उक्तत्यागत्वव्याप्यं तत्तद्धर्मसमवायकं पूर्ववदेव सामान्यम् । एतत्सूत्रव्याख्यानान्तराणि तत्रार्थतत्त्वा लिखितानि ।

मण्डन— 'त्यागः श्रुतोद्देशगुणो बलिः स्यात् ।'
शंकर— 'यागस्य लक्षणं योक्तम् ।'

● यागपदनः स्वाहाकारशब्दो यथा अग्निरादयः । भा. १०।१।७।१४.

● यागविधायकत्वं नास्ति देवताद्रव्यसंयोगाभावे । अतः 'वत्समालभेत' इत्यत्र स्वर्गकामविधिः अग्निहोत्रदोहाधिकारे । भा. २।३।६।१६–१७.

● यागविधिः अत्र द्रव्यदेवतासंयोगात् , 'वायव्यं श्वेतमालभेत', 'सोमं चरुं निर्वपेत्' । भा. २।३।५।१४.

● यागविधिप्रकारश्चास्माभिः अनागताबेक्षणन्यायेन आमेयाधिकरणे एव प्रदर्शितः । कौ. २।३।५।१४.

● यागरूपं द्रव्यदेवतम् । तु. पृ. ७६१.

● यागशेषः कर्ता । भाट्ट. ३।१।२, ● यागशेषः कालः । ३।१।२.

● यागशेषत्वं द्रव्यस्य । भाट्ट ३।१।२.

● यागसाधनानि । अवदानानि हवींषि भागयापनानि [illegible] फलाकृतिः । भा. २।२।७।२१.

● यागहोमौ । 'फलवाक्ये यजिरेव सफलः श्रूयते स्तुतः । तत्संनिधौ समाम्नानात् जुहोतिरङ्गमेष्यते' ॥ वा. २।४।१४।४१ पृ. ९८२, ● 'अथवा नैव भिद्येते यागहोमौ परस्परम् । पूर्वापरौ हि मध्यो तद्भागौ नरसिंहवत् ॥' २।४।१४।४१ पृ. ९८३.

● यागहोमादौ त्यागांशः आरादुपकारकः । भाट्ट. ४।१।७.

● याच्ञा ज्योतिष्टोमे नित्या धनवतोऽपि । वि. ६।८।६.

सू. याच्ञाक्रयणमविद्यमाने लोकवत् । ६।८।७।२६ ॥

ज्योतिष्टोमे 'द्वादश वाजीदीक्षितो भूतिं वन्वीत' इति भूतेर्वननं नाम द्रव्यस्य याचनम्, 'सोमं क्रीणाति' इति सोमस्य च क्रयणं तत्कम् । याच्ञा च क्रयणं च अनयोः समाहारः याच्ञाक्रयणम्, स्वीये धने स्वीये च सोमे अविद्यमाने सति कर्तव्यम् । यः स्वयं धनवानेव तेन धनयाचनं न कर्तव्यम् । यस्य च स्वीये अरण्ये सोमः स्यात् तेन सोमक्रयणं न कर्तव्यम् । लोकवत् । लोके यथा दरिद्रो याचते, यस्य च यः पदार्थः स्वीयो न भवति स तं क्रीणाति तद्वत् । इति पूर्वः पक्षः ।

नियतं वाऽर्थवत्त्वात् स्यात् । २७ ॥

अविद्यमाने स्वीये धने सोमे च याचना क्रयश्च स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । याचना क्रयणं च नियतं नित्यं स्यात् । अर्थवत्त्वात् अदृष्टार्थत्वात् । तदकरणे क्रतोर्वैगुण्यं स्यात् । तस्मात् विद्यमानेऽपि कर्तव्यम् । के.

● याजकत्वम् गुणभूतः अध्यापकः । रत्न. ६। १।६।२४ वर्णक २.

● याजनाध्यापनादीनां धनार्जनार्थं विषयो नियमार्थः । अनेनैवोपायेन धनमर्जनीयं नान्येनेति । वि. ६।१।८.

● याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः स्मृत्युक्ताः । भा. १२।४।१५।४३.

● याजमानं अध्वर्युपठ्यमानकरणमन्त्रोक्तं फलम् । याजमानफलकामना ऋत्विजा कर्तव्या । वि. ३।८।१४.
● याजमानमिति समाख्यानात् कर्मणा पत्नीकर्तृकत्वाभावः । ६।१।६।२४. मीको. पृ. १४८९ 'पैतृमेधु-

सम्प्रदायात् वेदार्थाश्रयेऽपि, निरोवे न्यायागमविधि-शब्दशक्त्यनुसारेणैव याज्ञिकैरपि व्याख्येयम् । सु. पृ. १००७. * 'वेदाहतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिका' । वा. १।३।६।११ पृ. २३२. * याज्ञिकैः केश्चित् पात्रात् उद्धृत्य सोमभक्षणमुक्तम्, तत् यजन्य-(३।५।८) भाष्यकारैरभिप्रेतं नाभ्युपेतम् । सोम. ३।५।६. * याज्ञिकैः निर्जिकपर्यन्तता मघा' पुरस्तात्ता इत्युक्तम् । वा. ६।८।२।५. * याज्ञिकानां अन्वारम्भणादिरूपे प्रथमपदार्थे दर्शपूर्णमासारम्भशब्दः प्रसिद्धिः । भाट्ट. ५।१।११. * याज्ञिकानां अहःशब्द-स्यापि महाव्रताद्यारम्भ हारियोजनग्रहान्तपर्यन्ते प्रयोगे लक्षणया प्रसिद्धः । ९।१।९. * याज्ञिकानां गुणशब्देषु द्वयी प्रतिपत्तिः । केषाञ्चित् मीमांसकवदेव गुणत्वम् । अपरेषां तु गुण कर्मणः एव सहस्तु फलो. फलान्तरसम्बन्धः । वा. २।२।१२।२७ पृ. ५६१, * याज्ञिकानां व्यवहारेषु 'सोमः' इति 'ज्योतिष्टोमः' इति नामद्वयमुपलभामहे । २।३।६।१७ पृ. ५११.

* याज्ञिकाचारविरोधापत्तेरपि व्यतिरिक्तस्य निरासो न युक्तः । सु ३।७ पृ. ३१

* याज्ञिकप्रयोगरूपाचारप्रामाण्याक्षेपसमाधानार्थत्वेन गुणविधिनामधेयविचारः । कौ. १।४।१।१ पृ. १५२.

* याज्य° । ऋग्भिर्याज्यायोश्च अनभिधाने धर्मः । भा. ११।४।२।५.

* अध्याप्य एव तु माणवकः प्रधानम्, याज्यवत् । अध्यापकस्तु याजकवत् गुणभूतः । रत्न ९।१।६।२४ वर्णक २.

* याज्या देवतोपलक्षणार्था । भा. १२।३।१५। ३५, * याज्या पात्नीवतग्रहस्य 'एभिरग्ने सरथं याह्यर्वाङ्' इति । २।१।१५।३७, * याज्या प्रदानार्था । ५।१।२।२. * याज्या । यया हूयते सा याज्या । वा ३।२।५।१२ पृ. ७६०, * प्राग्यस्य यागस्य प्रयाणित तस्य साधन पश्चाद्योऽस्मान याज्या इत्यवगम्यते । वा. ३।२।५।१२ पृ. ७६१. * याज्यां चानुवाक्यां चान्तरा न व्यपवदेत् यद्व्यपवदेत्, यज्ञं विच्छिन्द्यात् पुरोऽनुवाक्यामन्वाह । भा. १०।८।२०।६१. * याज्यया यजति । संकर्ष. ४।३।३. * 'याज्यायाः अधिवषट्करोति' इति याज्याधर्मः । वा ३।२।५।१२ पृ. ७६०.

* याज्यानुवाक्ये आज्यभागयोः, 'वार्त्रघ्नी पौर्णमास्यामनूच्येते', 'वृधन्वती अमावास्यायाम्' । वा. २।२।३।३ पृ. ८७५. * याज्यानुवाक्ये विपर्ययेणाम्नाते विपर्ययेण कर्तव्ये (पूर्वमनुवाक्या पश्चात् याज्या इति आर्थः क्रम.) । भा. ७।१।२।२. * याज्यानुवाक्या. । ऐन्द्राग्न पशुयाग. याज्या, अनुवाक्यायुगले तु द्वे आम्नाते । तत्र आद्ययागस्य आद्य युगलं अन्त्यप्रयाणस्य तु अन्त्य युगल इति स्वस्थानविवृद्धिः इमं स्थापितं न्याशत् । संकर्ष. १।२।३, * याज्यानुवाक्ययोः गायत्रीत्रिष्टुप्स्थानादिपर्यायाणां निवृत्ती यथायथं समुच्चयः । ४।३।१२. * याज्यानुवाक्यानां वाक्यानां अन्ययागाङ्गता । वि ३।२.७.

ॐ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् । १२।४।२।३ ॥

ऐन्द्राग्नदर्शपूर्णमासे कर्मणि अनेक याज्यानुवाक्यायुगलमाम्नातम् । तासु याज्यानुवाक्यासु याज्यानुवाक्यायुगलेषु विकल्प स्यात् । देवतोपलक्षणार्थत्वात् देवताया उपलक्षण– स्मरण अर्थः– प्रयोजन यासां याज्यानुवाक्यानाम् । तत्र एकेन युगलेन कृते अपर व्यर्थम् । अपर युगलं तु प्रयोगान्तरे भविष्यति । तस्मात् विकल्पः ।

लिङ्गदर्शनाच्च । ४ ॥

'ऊरू वै देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति तामधस्तात् अथान त्रिशः कार्या ' इति पिनष्टि याज्यानुवाक्यान्यविधानपरं वाक्ये तयोर्द्वित्वं वचित दर्शयति । तस्माद्विकल्पः । याज्यानुवाक्ययोस्तु समुच्चय एव । के.

* याज्यानुवाक्यादीनां तानेन (एकश्रुत्या) प्रयोगः । वि. ९।२।८.

* याज्यानुवाक्यादिमन्त्रपाठक्रमात् आग्नेयस्य प्रथमानुष्ठान पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य, न तु ब्राह्मणपाठात् अग्नीषोमीयस्य प्रथम पश्चादुपांशुयाजोत्तरमाग्नेयस्य दर्शपूर्णमासयोः । भाट्ट. ५।१।१.

पूर्वपक्षी सूत्रेण ब्रूते । याज्याऽपनये यजमानयाज्यायाः होतुः सकाशात् अपनये सति भक्षः होतुः सकाशात् अपनीतो न भवति । किन्तु होतर्येव अवतिष्ठते । प्रवरवत् । यथा याज्याया होतुः सकाशाद् अपनीतायामपि प्रवरो नापनीतो भवति तद्वत् । तथा च यजमानस्य स्वयं याज्यापाठपक्षे याज्यामात्रं यजमानेन पठनीयम्, वषट्कारः होत्रा पठनीयः, वषट्कारनिमित्तो भक्षश्च होत्रैव भक्षणीयः इति । याज्याकाले नापनीतः इति पाठे तु याज्यापनयेन भक्षः अपनीतो न भवति इत्येवार्थः ।

यष्टुर्वा कारणाऽऽगमात् । ४५ ॥

ज्योतिष्टोमे प्रातःसवने ऐन्द्राग्नग्रहप्रचारात् प्राक् ऋतुग्रहयागा भवन्ति । तत्र ऋतुयाज्यासु अन्त्या यजमानयाज्या । तां यजमानः स्वयं वा पठति 'होतरेतद् यज' इति होत्रे वा प्रयच्छति । तत्र यदा यजमानः स्वयं पठति तदा यजमानयाज्या होतुः सकाशात् अपनीता भवति । परन्तु तदा सोमभक्षः होतुः सकाशात् अपनीतो न भवति, याज्यापाठे यजमानेन पठितेऽपि वषट्कारश्च सोमभक्षश्च होत्रैव कर्तव्यौ इति यः पूर्वपक्षः तन्निवृत्त्यर्थं वा-शब्दः । सिद्धान्तसूत्रमिदम् । याज्याया होतुः सकाशादपनीतायां तदविनाभूतो वषट्कारोऽपि होतुः सकाशादपनीतो भवति, वषट्कारनिमित्तो भक्षोऽपि होतुः सकाशात् अपनीत एव भवति । तदेतदाह सूत्रम्– यष्टुर्वा भक्ष इति । यो यष्टा वषट्कारादिविशिष्टयाज्यापाठकः तस्यैव भक्षोऽपि । कारणागमात् कारणस्य भक्षकारणस्य वषट्कारस्य होतुः सकाशात् यजमानं प्रति आगमात् आगमनात् । यजमानेन याज्यापाठे वषट्कारोऽपि यजमानेनैव पठनीयः, भक्षोऽपि तेनैव भक्षणीयः इति सिद्धान्तः ।

प्रवृत्तत्वात् प्रवरस्यानपायः । ४६ ॥

पूर्वपक्षोक्तदृष्टान्तनिरासार्थं सिद्धान्तपक्षगतं सूत्रमिदम् । यथा प्रवरो नापनीयते होतुः सकाशात् तथा याज्यापनयेऽपि भक्षो नापनीयेत इति यदुक्तं पूर्वपक्षिणा, तन्न । प्रवरस्य प्रवृत्तत्वात् अनपायः न अपायः, न अपनयः । भक्षस्य तु प्रवृत्तत्वाभावात् अपनय एव । प्रवृत्तः प्रागेव प्रवृत्तः अतिक्रान्तः । तस्य ऋतुयाज्यापाठकाले कथं अपायः स्यात् ? तस्मात् भूतकालिकत्वात् प्रवरदृष्टान्तः अनुपयुक्तः । भक्षस्तु यजमानयाज्यायाः सकाशात् याज्यान्तरार्थं तस्याप्रवृत्तत्वात् न तथा यजमानयाज्यापनयेन अपनयः सम्भवति इति सूत्रार्थः, वार्तिकानुसारी । के.

● याज्यापनये भक्षस्याप्यपनयः । ( यजमानस्य ) ऋतुयाजेषु ज्योतिष्टोमे । ३।५।१८।४४–४६.

● याज्यार्थवान्ग्यः एकः वसाहोमे याज्यापत्नाना वसना एकप्रदानत्वात् अभेदं । भा. ११।२।५।१४, ● याज्यार्थवान्ताः भिन्नाः ऐकादशिनेषु । तत्र वसाहोमः तन्त्रं न । ११।२।६।२५, ● याज्यार्थवान्ते 'वसां जुहोति' इति श्रुत प्रकृतौ । सर्वेयाज्यार्थवान्तेषु होमः ऐकादशिनेषु । ११।४।१०।११–३६.

● याज्यादीनां देवताबोधकता कास्त्यपि गात्रकम° । भाट्ट. ७।१।४.

● याज्योत्तरमेव वषट्कारः, न तु ऐन्द्राग्नहोत्रम् । संकर्ष ४।१।८.

● याज्यात्वं त्यज्यमानहविर्द्रव्यदेवतोद्देशार्थविहितमन्त्रत्वम् । वा ३।१।८।१६ पृ ७६१, ● देवता यागकाले येन मन्त्रेण उद्दिश्यते तस्य याज्यात्वम् । सु. पृ. ११०१ । प्रसिद्धत्वप्रसिद्ध्या यागकालीनदेवतोद्देशार्थतया विहितस्य, भक्षणप्रसिद्ध्या च यागार्थतया विहितस्य मन्त्रस्य याज्यात्वम् । यागार्थविहितमन्त्रत्वम् । पृ. ११०२, ● 'निगदाना च याज्याधर्माहृत्य प्रतिषिध्यते' । वा ३।२।८।१२ पृ ७६२, ● 'येन मन्त्रेण यागाद् होता भवति देवताम् । प्रसिद्धैवास्य याज्यात्वं सूक्तवाको हि नेदृशः ॥' ३।२।५।१२ पृ. ७६०. ● होतृप्रवचनविहितेज्यमानद्रव्यसम्बन्धदेवताभूतदेवताप्रकाशकमन्त्रत्वं याज्यात्वं याज्ञिकप्रसिद्धम् । ३।२।५।१२ पृ. ७६१ ( टिप्पणम् ), ● 'होमाङ्गत्वं च याज्यात्वं न कस्यचिदपीष्यते । निगदत्वादिशेषेण भक्षणार्थे निषिध्यते ॥' ३।२।८।१२ पृ ७६१

☞ यादृशी शीतला देवी तादृशो गर्दभवाहनमिति न्यायः । अयं तुल्यस्वरूपनिरूपणायामवतरतीति । साहस्री १४५.

☞ यावत् तैलं तावद्व्याख्यानमिति न्यायः । साहस्री ८०७.

● 'यावद्यावद्द्विर्यादाय मुक्तकं धीयते मनः । अनवस्थादिदोषेण तावत्तावद्द्विहन्यते ॥' इत्यनेन न्यायेन विनिगमनाविरहादिदोषसत्त्वात् मुक्तकस्य अप्रतिष्ठितत्वेन निराकृतस्यापि पुनः पुनरुत्थानेन समाधानासम्भवात् । सु. पृ. ३५०

☞ यावन्ति दृश्यन्ते तावती शिरोव्यथेति न्यायः । साहस्री. २७९.

☞ यावत्तनानं तावत्पुण्यमिति न्यायः । साहस्री ४०८.

● यावद्यावज्जीवं न शक्नोति कश्चिदपि कर्तुमिति कृत्वा यावत् शक्नुयात् इत्युपनिबध्यते । शा. ६।३।१।७.

● यावन्ति काम्यकर्माणि सौर्यचिमादीन्यनुतिष्ठति तावत् फलं प्राप्नोति । वि. ११।१।१. ● यावन्ति नाना-मन्त्राम्नुपदानानि, तावत्संख्यानामेव दानमधीनः श्राव-णस्य नाधिकानाम् । 'गायत्रीषु स्तुवते' इत्यादौ स्तोम-परिमितानामेव ऋचां आगमनस्य दर्शनात् । आगम-नस्य कार्यार्थत्वेन, कार्यस्य अधिकाना प्रयोजना-भावात् । इति प्राप्ते, सर्वेषामपि आम्नानां 'यज्ञीयां' इत्युद्देश्यकोटौ निवेशेन विनियोगात् सर्वेषामेवागमन 'सर्वं तु वेदसंयोगात् कारणादेकदेशस्य' (जैसू. ३।५।८) इति न्यायात् । संकर्ष. २।१।३८. ● 'यावतो-ऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणान् चतुष्कपालान्, निर्वपेत्' अत्र वाक्यार्थस्य अन्यथाकल्पने (प्रति-गृह्णीयात्—प्रतिग्राहयेत इति) व्याख्यानकल्पनादोषः । बाल पृ. ८ ● 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इत्यत्र प्रतिगृह्णीयादित्यस्य निहितदानलक्षणार्थत्वे निर्वपेदित्यस्य च यागविध्यर्थत्व भेदोपादानात् युक्तम् । सु. पृ. ९२८. ● 'यावतो-ऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति इष्टि. प्रतिग्रहीतुः दातुर्वा इति संशये, दातुरिति सिद्धान्तः । अश्वप्रतिग्रहेष्ट्यधिकरणम् । मीको. पृ. ७३६। ३।४।११।३०–३१. ■ 'यावतोऽश्वान् प्रति-गृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति इष्टि. लौकिके अश्वप्रतिग्रहे वैदिके वेति संशये, वैदिके इति सिद्धान्तः । अश्वदानन्याय. । मीको. पृ. ७३० । ३।४।१०।२८–२९. ● यावन्तः दुग्धाः स्युः, तावन्ति दारुपात्राणि उपात्तानि स्युः, तावन्तो ब्राह्मणाः दक्षिणत उपवीतिनः उदीचीषु अस्थीनि उदकुम्भेषु अप्स्वीनि वृषुः । साम्परायीये इदम् । संकर्ष. ४।३।७

● यावदुक्तं आश्व. प्रस्तरे च तथैव पत्न्या अधिकारः । भा. ६।१।६।२४, ● यावदुक्तं कर्म (वाजु-र्मास्येषु) गृहमेधीये, स्विष्टकृदादिप्रयाजपुनम् । १०।७। १०।२४.

● 'यावज्जीवमग्निहोत्रं जुहुयात्' अयं नियत-निमित्तक नैमित्तिकपुरुषार्थाधिकारविधि । बाल पृ. १४. ● 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र किं कर्म-धर्मः अभ्यासः यावज्जीविकता, उत कर्तृधर्मो नियम-श्रोच्यते यावज्जीविकता । किं जुहोतिरनुवादः, यावज्जीवं इति विधिः उत जुहोति इति विधिः यावज्जीवमिति अनु-वादः इति विचारे, कर्तृधर्मो नियमश्रोच्यते जुहोति इति च विधिः इति निर्णयः । शा २।४।१।१–७. ● 'याव-ज्जीवमग्निहोत्रं जुहोति' इति वाक्येन निमित्तीकृत्य जीवनमग्निहोत्रप्रयोगो विधीयते न तु काम्ये कालरूपगुणः । वि २।४।१, ● 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यनेन दर्शपूर्णमासकर्मणा सह निमित्तसम्बन्धो विधीयते । २।१।१३. ● यावज्जीवं यज्ञपात्राणां धारणीयम । भा ११।३।११।३८–४२, ४५ । तत्र च अग्न्याधेयप्रभृति । ११।३।१२।४३–४४.

■ यावज्जीवाधिकरणम् । यावज्जीविकाधिकरणम् । यावज्जीविकता कर्तृधर्मो न कर्मधर्मः ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् । २।४।१।१ ॥

भाष्यम्— बह्वृचब्राह्मणे श्रूयते 'यावज्जीवमग्निहोत्रं जुहोति' इति । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । तत्र सन्देहः, किं कर्मधर्मोऽभ्यासो यावज्जीविकता

न तत्रापि दोष एव, नत्वशो वा विशेष । उच्यते । 'मम प्रतिदिन सर्वश्चोदनार्थं समाप्यते । काम्यवच्च पृथक्त्वेष्टा नव त्वन्ते समाप्यते ॥ ' मम जीवनमद्दितसायप्रातःकालोपजने हि सकृत् कर्म कृत्वा निराकाङ्क्षे पुरुषे सति, पुनरपि तादृङ्निमित्तसमवायात् द्वितीयादिष्वह्स्वनुष्ठानम् । अत्र च प्रतिदिनं कर्मसमाप्ते नाभ्यास इति शक्यं वदितुम् । तथा काम्ये च फलभूमार्थी पुनःपुनः प्रवर्तते न तस्य अभ्यस्तस्यैव कर्म इत्येवं बुद्धिर्जायते, तथाऽत्रेति । तत्र पुनर्जीवित परिमितकालविधानात् कर्मणोऽपरिसमाप्तस्यैव ऐन्द्रवाय वादिग्रहाभ्यासवदुत्तरमनुष्ठानम् । तथैव यावज्जीवचोदना फलमित्यापत्तमभ्यासविधानम् । ननु अथादभ्यास इति, सत्यमेतत्तेनैव तु लक्षणा अन्यथा श्रुतिरेव स्यात् । तदु-भयन श्रुत्यनुरोधेन प्रकरणं बाधित्वा जीवनमुद्दिश्य होमयागविधानात् कर्तृकर्मविधिरित्युपपन्नम् ।

लिङ्गदर्शनाच्च, कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत् स्यात् । ३ ॥

भाष्यम्—लिङ्गं च भवति 'अपि ह वा एष स्वर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी पौर्णमासीममा वास्यां वाऽतिपादयेत्' इति । कथं लिङ्गम् ? कर्मधर्मे हि प्रक्रान्त सत्र यावज्जीवनकालेन परिसमाप्येत, न चा कालातिपात स्यात् । तत्र चानर्थकम् एतत् स्यात् प्राय श्चित्तादि विधीयमानम् ।

वा— अतिपत्तिरिति स्वधर्मातिक्रमोऽभिधीयते । जीवनपरिमितश्च दर्शपूर्णमासयोः कालः । न च तदति क्रम कथंचिदपि सम्भवति । प्रक्रमेण हि कर्मकाल सम्भृतात् ( जीवन ) अनतिक्रान्तमित्यभिधीयते । न च कश्चि दपि दर्शपूर्णमासयाजी सन् अप्रक्रममाण एव जीवन-मतिलङ्घयति । नहि असौ दर्शपूर्णमासयाजी स्यात् । अथ स्वकालापरिसमापन उच्येत, तदा मृतस्य तत् भवति, इत्यनर्थकमेव प्रायश्चित्तविधानम् । मत्पक्षे हि प्रतिमास दर्शपूर्णमासप्रक्रमसमाप्त्योः जीवन निमित्ते विधानात् समयातिक्रमे, तदुत्तरकालस्य प्रायश्चित्तविषयत्वेन । ननु पूर्वपक्षेऽपि प्रतिमासमभ्या साभ्युपगमात् तदतिक्रमनिमित्तप्रायश्चित्तविधान मति ध्यति । न शक्यमेव वदितुम् । यत्र हि निमित्ते यत् चोदितम्, तेन तत्र भवितव्यम्, न यथेष्टम् । इह च पौर्णमास्यमावास्यातिपत्तिनिमित्तत्वेन श्रुता, न चाभ्यासस्तच्छब्दवाच्य । यथा न महाभ्यास ज्योतिष्टोमशब्दवाच्य । तेन जीवितपरिमिताभ्या समनुष्ठयोरेव पौर्णमास्यमावास्याशब्दवाच्यत्वमिष्टम्, इति तादृग्यागानामतिपातन निमित्तं स्यात् । ननु च पौर्ण मास्यमावास्याशब्देनात्र कालोऽभिधीयते, स चावयव त्रिपद एवैतस्यायथातिक्रमो निमित्तं स्यात् । नैतदेवम् । अतिपातन नाम अतिपद्यमानस्य भवति । न च काल-स्यातिपतत्त्व धर्म अनतिपत्तव्यविधानात् । यस्य हि यागात् विषयोऽनतिक्रमणीयत्वेन चोदितस्तस्य तदति लङ्घनमतिपत्तिरित्युच्यते । न च कालस्य कर्म अनति क्रमणीयत्वेन चोदितम्, किं तर्हि, कर्मणः काल । तस्य हि सोऽङ्गम् न तस्य कर्म । तेनैव च तत्काला सद्भावयोः सगुण निर्गुणं च भवति, न काल । तेन चानुष्ठानाभावात्तदतिक्रमानतिक्रमौ प्रतिपद्यते, न काल तस्य स्वभावसिद्धत्वात् । तस्मात् य पौर्णमासी च कालमभिपद्यमानामतिपातयेदित्यवधारणात् कर्मण एव निमित्तत्वम् । न च अभ्यासस्तच्छब्दवाच्य इत्युक्तम् ।

व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेद स्यात् । ४ ॥

भाष्यम्— व्यपवर्गस्य समापनस्य दर्शनं भवति 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति । यदि दर्शपूर्णमासाभ्यामिष्ट्वा सोमस्य कालोऽस्ति, तत्र च यावज्जीवनकालेन तौ परिसमाप्येते । अथ जीवन निमित्तम्, उपपद्यते कर्मभेद । दर्शपूर्णमासौ परि समाप्य सोमं कर्मान्तरं कुर्यादिति । अपि च, 'आहि ताग्निर्वा एष योऽग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजेत, या आहुतिभाजो देवतास्ता अनुध्यायिनी करोति' इत्यनुध्यायिनीवचनं भवति । नियतो य आहुतिभाग स्तस्मिन् अदीयमाने अनुध्यायिनीवचनं भवति, यस्त्व नियत आहुतिभागो न तमनुध्यायन्ति इद मे भविष्य तीति । नियतश्च भागो नियमपक्षे भवति, न काम्य-पक्ष । कर्मधर्मे च काम्यमग्निहोत्रं च दर्शपूर्णमासौ च ।

व्यतिरेकानुविधायकस्यानुष्ठानं यत्र स्नानस्य तद्वदुपपद्यते। अत्र च व्यतिरेकानुविधानस्य सर्वथा प्रापकप्रमाणाभावादेव विद्वदन्वयानुविधाने एव विधेस्तात्पर्यम्। अतश्च निमित्तसत्त्वे नैमित्तिकस्याभ्यस्यानुष्ठानबोधनात् प्रकरणे प्रत्यवायोऽनुमीयते। कर्मणे च 'धर्मेण पापमपनुदति' इत्यादिवाक्यपर्यालोचनात्, 'गतिसमन्वयेन' (८।२।८) पापक्षयः एवानुपाधिको नित्यनैमित्तिकस्यैव फलम्। यत्र तु रथन्तरसामतादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिमत्त्वेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिः, तत्र व्यतिरेकानुविधाने एव विधेस्तात्पर्यम्। अत एव स्थपत्यभावे पैतृकयागस्य नस्याभावः। अतश्च यावज्जीवपदे लक्षणयानुरोधेन जीवनस्य निमित्तत्वावगतेः तदनुरोधेन पापक्षयाय विनियोगान्तरमेवेदमिति सिद्धम्।

मण्डन— 'न निहित इति यावज्जीवाग्निहोत्रे।'

शंकर— 'यावज्जीवे कर्मविधिः।'

■ यावज्जीवाधिकरणे नियतनिमित्तकं नैमित्तकं कर्म उक्तं अग्निहोत्रादि। बाल पृ. ८५. ● यावज्जीवाधिकरणे यावज्जीविको नियमः सन् पुरुषार्थः, न तु अभ्यासः सन् क्रत्वर्थः इति स्थितम्। सोम. ८।१।१३, ● जीवनस्य निमित्तत्वं यावज्जीवाधिकरणे उक्तम्। ६।२।७. ● नित्यनैमित्तिकानां पापक्षयहेतुत्वं न्यायसुधाकृतः न सम्मतम्। यथोक्तं यावज्जीवाधिकरणे तेन— 'सन्ध्योपासनमाद्यादि सर्वपापक्षये सति। अग्निहोत्राद्यनुष्ठाने च प्रवर्तेत बुद्धिमान्॥' इत्यादि। भाट्टालंकार १२ ● निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन अत्र (अभ्युदयेष्टौ चन्द्रस्य) प्रयोगान्वयित्वाभावेन आजिनादेव तद्वेदानुपपत्तेः। इह पूर्वपक्षे उक्तम्। भाट्ट. ६।५।१, ● यथा नैमित्तिकस्थले पापक्षयमात्रफलकं तथा यावज्जीवाधिकरणे निरूपितम्। ८।१।१. 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति ज्योतिष्टोमस्य नित्यप्रयोगविधिः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति काम्यप्रयोगविधिः इति द्वितीयस्य चतुर्थे यावज्जीवाधिकरणे निरूपितम्। कु. ३।३।१८।१७.

● निमित्तद्वयसत्त्वेऽपि यावज्जीवाधिकरणन्यायेन निमित्तस्य फलद्वयाक्षेपकत्वात् वाक्यभेदापत्तिर्दुष्टा। भाट्ट. २।१।७

● यावज्जीवाधिकरणपूर्वपक्षन्यायेन तावन्तं कालं (पञ्चदशवर्षपर्यन्तं) दर्शपूर्णमासावृत्तिरेव धर्मान्तरत्वेन विधीयते इति चेन्न। कौ. २।३।४।९.

● फलापेक्षाया यावज्जीवाधिकरणवक्ष्यमाणरीत्या पापक्षयार्थं विनियोगः कल्प्यते। कौ. २।१।१३।२६.

● यावज्जीवाधिकरणसिद्धान्तन्यायेन निमित्तपरत्वस्यैवोपपत्तेः नावृत्तेः धर्मान्तरत्वेन विधिः। कौ. २।३।४।९.

● यावज्जीवादिप्रयोगविधेः निमित्तभूतजीवनावच्छिन्नकर्तव्यत्वानुरोधेन शक्यमानविषयतया सङ्कोचकल्पना युक्ता। सु. पृ. ५३२.

● यावज्जीवकर्मणां अग्निहोत्रादीनां स्वकालमात्रकर्तव्यता। वि. ६।२।७, ● यावज्जीवकर्मणामग्निहोत्रादीनां स्वकालगृहीता आवृत्तिः। ६।२।८.

● यावज्जीवकालः न महत्त्वे। [illegible], कर्तृधर्मोऽसौ इत्युक्तं 'कर्तुर्वा श्रुतिसंयोगात्' (२।८।१।२) इत्यत्र। भा. १२।२।६।२०.

● यावज्जीवदर्शपूर्णमासयोरारम्भणीयायाः सकृदेवानुष्ठानम्। बिन्दु. ९।१।१०.

● यावज्जीवपक्षोऽपि चातुर्मास्येषु विद्यते। संकर्ष ३।१।२०, मीको पृ. १६९१ 'चातुर्मास्येषु यावज्जीवत्वपक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

¶ यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्। २।४।१।१॥

बह्वृचब्राह्मणे श्रूयते— 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र सन्देहः किं कर्मधर्मोऽभ्यासो यावज्जीवकता, उत कर्तृधर्मो नियमो वा यावज्जीविकेति। अग्न्यामपर्यं— 'अग्निहोत्रं जुहोति' इत्युपक्रम्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति फले विनियोगः श्रूयते। पुनरपि 'यावज्जीवमग्निहोत्रं जुहोति'

व्याहृतक्रियासंबन्धमात्रमभिहितम्, तथापि क्रियान्वयार्थं व्यक्त्युच्चारणस्य क्रियान्वयस्य च निमित्ततान्यतिरेकेणासंभवात् निमित्ततारूपसंबन्धविशेषप्रतिपादनार्थमेव पुनः समुच्चारणेऽप्यवनविशेषस्तात्पर्यमुन्नीयते। तेन यथा 'गोर्गच्छति' इत्यत्र गवादिशब्दानामाकृत्यभिधानेऽपि गाभिधानस्य क्रियासंबन्धार्थत्वात् क्रियासंबन्धस्य च व्यक्तिव्यतिरेकेणासंभवादभिधानस्य व्यक्तिपर्यन्तत्वाद्व्यक्तेरपि श्रौतत्वम्, तथा अत्रापि संबन्धमात्राभिधानस्य निमित्तपर्यन्तत्वान्निमित्तमपि श्रौतमेव। एतच्चाकृत्यधिकरणे विस्तरेण प्रतिपादितम्। काम्यस्य तु मतिशब्दाभिधेयसामान्यव्यक्तिपरताभावात् अर्थान्तरत्वेन लक्षणयैवावगम्यमेवेति लक्षणादोषो दुष्परिहर एव। तथा जुहोतिशब्दे चाभ्यासलक्षणा प्रागुक्तैवेति। निमित्तपक्षे तु प्रतिनिमित्तं कृत्स्नशास्त्रार्थसमाप्तेः प्रयोगभेदादभ्यासाभावेन नाभ्यासलक्षणादोषः। किं तर्हि? इयमेव श्रुतिवृत्तत्वमिति। तदुक्तम्। 'यावज्जीवपदात्स्यात् श्रुतिवृत्तत्वसंभवः। मत्पक्षे भवतस्त्वत्र लक्षणावृत्तता भवेत्॥' इति (वा पृ. ६२४)।

तेन 'अग्निकामं जुहोति' इत्यादिषु तत्कालान्तरप्रतिक्षेपकस्य यावज्जीवसंबन्धस्याभावादिति साध्यसाधनलक्षणोऽपि संबन्धोऽविरुद्ध एव। ननु यावज्जीवोपबन्धोऽपि पञ्चमी निमित्तार्थेन व्यभिचरत्येव। यथा 'यावज्जीवं सुहृदस्य' इति। सत्यमेतत्, किन्तु विध्याख्यातसमभिव्याहृतस्य यावदुपबन्धस्य पञ्चम्या निमित्तत्वाव्यभिचारित्वोक्तत्वात् तथाभूतस्यैव निमित्तार्थत्वम्। तत्र निमित्तत्वं न धात्वर्थे, न च भावनायाम्, नापि फले, मानान्तरविरोधेन तेषु निमित्तत्वाद्यभावात्। निमित्ते सत्यपि तेषामनिष्पत्तेः। किन्तु विधेः शब्दव्यापारात्मनः कर्तव्यतायाश्च धात्वर्थसंबन्धे सति, तस्यैवावश्यकर्तव्यतावगमात्। न चैवं सत्याहारविरोधादावश्यानुष्ठेयत्वम्, 'सायं जुहोति प्रातर्जुहोति' इति सायंप्रातःकालावच्छिन्नस्यैव जीवनस्यापेक्षायत्वेन निमित्तत्वाभ्युपगमात्। तदुक्तमाचार्येण। 'जीवनादेर्निमित्तस्य साम्यात् कालो विशेषकः। निमित्तार्थस्तत्र जातिकर्मणोऽवश्यकर्तव्यता॥' इति।

तेनायं वाक्यार्थः — यावत्प्रातर्जीवनवानग्निहोत्रं जुहुयादेवेत्यवश्यकर्तव्यता होमस्य प्रतीयते। तदेवावश्यकर्तव्यं लोकेऽवगतम्, यस्याकरणे प्रत्यवायो भवति। तत्राप्यभावस्य भावोत्पत्तिहेतुत्वाभावात् तत्कालीनान्यक्रियाकरणस्यैव प्रत्यवायोत्पत्तिहेतुत्वम्। च प्रत्यवायनिवृत्तिः फलम्, प्रागभावरूपत्वेन साध्यत्वाभावात्। किन्तु प्रयोजनमात्र तु अत्र विध्यवरुद्धमानताः पुरुषसमीहितसाध्याकाङ्क्षाया बुभुक्षुमुमुक्षुसाधारण्यात् नैमित्तिकविधेः उभयसाधारणमुपात्तदुरितक्षयरूपमङ्गीक्रियते।

न चैवं काम्यभेदाद्भावनाभेद इति वाच्यम्। अग्निहोत्रस्य काम्यप्रयोगे स्वर्गः फलम्, इह दुरितक्षय इति। 'सन्निधौ त्वविभागात्' इत्यनेन न्यायेनोत्पत्तिशिष्टत्वाभावात् पुनःश्रुतेस्तु प्रयोगान्तरविधानेनैवार्थवत्त्वात्। ...

... स्येत्यग्निहोत्रस्य दर्शपूर्णमासयोश्च काम्यप्रयोगः। अपरस्तु यावज्जीवमवश्यानुष्ठेयः। अत एव किञ्चिदङ्गहानेऽपि वैगुण्यम्। यावज्जीवमनुष्ठेयं कर्तव्यं सर्वाङ्गोपेतं च इति नियोगेन किञ्चिदङ्गाभावस्यापि विध्यनुमतत्वात्। तेन श्रुत्यनुरोधेन जीवननिमित्तः प्रयोगभेदोऽत्र विधीयते इति सिद्धम्।

प्रयोजनम् — पूर्वपक्षे जीवनलक्षितकाम्यापूर्वेऽग्निहोत्रदर्शपूर्णमासविकृतावतिदेशः। सिद्धान्ते तन्नेति।

सूत्र तु — कर्तृधर्म प्रयोगो विधीयते 'यावज्जीवं जुहोति' इति श्रुतिसंयोगात् श्रुतिवृत्तत्वादिस्वर्थः। नौता.

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्। २।४।१।१॥

'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति श्रूयते। इह यावज्जीविकत्व कर्मधर्मः अभ्यासः, जुहोतिस्तद्वाचः, यावज्जीवमिति विधिः, प्रकरणात्। एवं सति प्रकरणमनुगृह्यते। इति पूर्वपक्षः।

कर्तुर्वा श्रुतिसंयोगात्। २॥

'यावज्जीवमग्निहोत्रं जुहोति' इति यावज्जीविकः अभ्यासः कर्तृधर्मः, न तु कर्मणो धर्मः। जीवने

अथवा । ननु एवं अग्निहोत्रस्य दर्शपूर्णमासयोश्च नित्यत्वसिद्धावपि पशुचातुर्मास्यज्योतिष्टोमेषु का गतिः ? तत्र यावज्जीवनवाक्याभावात् इत्यत आह– कर्तुः धर्मनियमात् काम्यप्रयोगादन्यस्य प्रयोगस्य ज्योतिष्टोमादौ पुरुषार्थतया नियमेन विधानात् 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्सायुक्त कालश्रवणात् वसन्तस्य निमित्तार्थं निमित्तनाशेघनार्थं स्यात् । इति सिद्धो ज्योतिष्टोमादेः नैमित्तिकः प्रयोगः । तस्मात् न काम्यप्रयोगस्य एकस्य यावज्जीवकाल अभ्यासो विधीयते, किंतु जीवने निमित्ते अग्निहोत्रादेः बहूना प्रयोगाणां विधिः इति सिद्धान्तः । के.

* 'यावज्जीविकोऽभ्यास..' । (२।४।१।१) इत्यत्र कालाभ्यासयोः अन्योन्यविधिहेतुत्वं यावज्जीवम् । वा. २।४।१।६. * यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वात् नातिदिश्यते । टुप्. ८।१।१।२०. * यावज्जीविके प्रयोगे एकदेशोपसंहारसमर्थोऽपि पुरुषोऽधिक्रियते । यथा सत्त्र्यधिकरणम् । ६।२।२।१–७.

* यावन्निमित्तं नैमित्तिकस्य अनुष्ठेयत्वम् । सु. पृ ९६९.

꣸ यावद्वचन वाचनिकमिति न्यायः । यथा– महर्षोत्सातभयोः कण्ठदघ्नपर्यन्त निक्षेपरूपेऽपि यावद्वचनं सुखता न इयत्ता आपस्तम्बेदित्युक्त नत्रैवेति । अन्यत्रापि– यथा च धर्माऽधर्मयोर्मनुष्याधिकारत्वेन काशीखण्डे पिशाचमोचनाख्याने पिशाचस्यापि तत्स्नानात्पिशाचत्वनाशोक्तिर्निपादस्थपतीष्टिसमर्थन्यायेन तन्मात्रविषयत्वेनेति बोध्यमिति । साहस्री. ५७७. * यावद्वचन वाचनिकं न तत्र न्यायः क्रमते । भा. ५।४।४।११, * यावद्वचनं वाचनिकं न सहमानुपसङ्क्रामति । ५। ३।४।१२, * यावद्वचनं वाचनिकं भवत्येव । ३।५।१८। ४४, * यावद्वचनं वाचनिकम्, 'यावन्ति वचनं तावन्त्येव तद् भवितुमर्हति' । १०।२।१७।४८.

* यावच्छब्दो व्याप्तिवाची । सु पृ ९६८.

꣸ यावत्संपातमुपिन्वेति न्यायः । यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्यन्तं स्वर्गभोगाननुभवन्ति पुरुर्मिण इति । साहस्री ५४२.

* यावत्स्थं खानाग्ने उत्तरासु गोदोहनम् । ११।१। ४।८७–९३. मीको. पृ. १०९८ 'उत्तरगोदोहाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* युक्तिशास्त्रेऽर्थे पुरुषविशेषस्य अनादरणीयत्वात् युक्तियुक्त यद् वृत्तिकारादिभिः उक्तम्, तत् 'सूत्रकारानुपात्तत्वात् न ग्राह्यम्' इति असद्ग्रहो न कार्यः । एवमेव वार्तिककारानुक्तमपि वृत्तिकारानुक्तत्वमात्रेण अग्राह्यं न भवति । एवं सूत्रकारानुक्तस्यापि अर्थस्य वृत्तिकारोक्तस्य ग्रहणम् । सु पृ. ७३२.

* युगादिकालपरिमाणं ज्योतिःशास्त्रे यज्ञकालसिद्ध्यर्थं गणितविषयप्रत्यक्षानुमानपूर्वकम् । सु पृ १२८.

꣸ युगपदेव विशेष्ये विशेषणं सर्वेषु च विशेषणान्तरमिति न्यायः । यथा– 'तरति शोकमात्मवित्' इत्यादौ प्राचीनतार्किकमतमाश्रित्याऽखिलपदार्थस्मरणात् यद्वक्ष्यन्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति संक्षेपः । साहस्री. १८७.

* युगपदधिकरणवचने द्वन्द्वो भवति । अधिकरण शब्दप्रतिपाद्योऽर्थः, स यत्र अनेको युगपदेकेन पदेन प्रोच्यते तत्र द्वंद्वः यथा च धवखदिरौ इत्यत्र धवपद लक्षणया खदिरसहितधवपरम्, इतरसहितघवपरं वा । इतरस्तु खदिरपदान्निर्णीयते । एवं खदिरपदमपि । सेयं युगपदधिकरणता । भाट्ट ६।१.५.

* युगपदधिकरणवचनता । अधिकरण द्रव्य अभिधेयमिति यावत् । तस्य युगपदभिधानम् । सोम. ६।६।१. * युगपदधिकरणवचनतायां द्वन्द्वस्मृतेर्द्विवचनबहुवचनोपपत्तेश्च । 'प्रभिन्नयोर्वरुणयोः' इति दर्शनात् यथैव अग्निर्श्च पवी चेति निर्दर्शनं क्रियते । भा. ६।१।२।२७ * युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः । यत्र द्वौ बहवो वा युगपदभिधातुं इष्यन्ते, तत्र द्वन्द्वसमासो भवति । वा. ३।१।६।२४ पृ १३७२.

* युगपदनेककर्मोपदेशने कर्मभेदं मन्त्रावृत्तिर्न कार्या किंतु सकृदेव मन्त्रपाठः । भा ११।४।१७।५०.

* युगपदनेककपालभेदने होमतन्त्रस्य चावशेषस्तन्त्रप्रसक्ति . . । भाट्ट. ५।२।२.

'त्वं यामः' इत्यत्र 'स च अहं च त्वं च यामः' इत्याद्येकशेषात् अन्यतात्पर्यकेऽपि मतेषु आरोपित स्वातन्त्र्यप्रतीतिः। मणि पृ. १६२.

■ युष्मत्पदार्थः। सनिहितप्रत्यभिमुख्यस्य युष्मदर्थत्वात्। प्र. पृ. ११९९.

* युष्मत्पदशक्यतावच्छेदकं मद्युष्मच्छब्दबोधाश्रयत्वप्रकारकत्वमुमितविशेष्यकत्वनिरूपित-विषयीभूतशाब्दज्ञानत्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितत्वमुमितनिष्ठप्रकृतिष्ठाविषयताकत्वं वा। रहस्य. पृ ५८

* यूथः। भवति हि बहूनां एकवचनान्तः शब्दः समुदायापेक्षः। यथा यूथ वनं कुलं परिषत् इति। भा ७।२।१।३ पृ ४८० अपेक्षामात्रमेव समुदायस्य ब्रवीति, नाभिधेयत्वम्। यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ। यदा तु समुदायमेव ब्रूतः, तदा तन्निमित्तैकवचनम्बात्रेण दृष्टान्तत्वम्। वा.

🙞 यूकाभिया कन्थाऽनाश्रयणन्यायः। उक्तं च 'काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद्गुणो भवति यद्यपि सन्तीह। कुर्मो तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात्॥' इति। माहली. ३४६.

* यूप अग्नीषोमीये पशौ नैष्ठः. अहापवर्गसन्नामेन कर्तव्यः। भा ३।६।३।१०, * यूपः उपशय. नाम एकादशिन्याम्। तत्र गोपणादयः संस्कारा न क्रियन्ते। छेदनादयस्तु तूष्णीं क्रियन्ते, नात्र पशुर्बध्यते। दक्षिणतस्तु भूमौ उपशेते। ७।३।१२।२२-२८, * यूपः ऐकादशिनेषु प्रतिपशु भिन्नः। ८।१।८।१५. * यूपः नलेवाली नाम शाखस्कंधेषु। स्वके कृपीकर्मत्सीमर्दयथा नाम निराली भेदि., स एव यूपत्वेन ग्राह्य.। वि. १०।२।१५, * यूपः नलेवाली शाखस्कंधे। तत्र छेदनद्रव्यलोपात् यूपाहुतिर्लुप्यते। १०।२।५, * यूपः नलेवाली शाखस्कंधे। तत्र पर्यूहण परिव्ययण परिवेषः अञ्जनं प्रोक्षणं इत्यादयो धर्माः कर्तव्याः, सार्थकत्वात्, अविरुद्धत्वात्, अदृष्टार्थत्वाच्च। ओपण-तक्षण-उच्छ्रयणानि तु न कर्तव्यानि। १०।२।२२-२३, * यूपः नलेवाली मानस्के, तत्र स्वयंपाहुतिर्नास्ति, अयूपत्वमत्वात् यूपीयाग्रभ्रशनस्याणोरभावात्। १०।२।६, * यूपः नलेवाली शाखस्के। ■ च न खादिर एव, किन्तु यस्मिन्कस्मिन्श्चिद्वृक्षजन्य.। १०।२।३१. * यूपः खादिर एव वाजपेये। भा १०।७।१६।५१, १२।३।८।१८, * यूपः खादिरः नित्यश्च नैमित्तिकश्च अग्नीषोमीये पशौ। ४।३।३।५-७, * यूपः खादिरः पालाशो रौहितको वा ज्योतिष्टोमे पशुबन्धार्थं कर्तव्यः। ११।३।१।११, * 'यूप खादिरो वीर्यकामस्य' इति फलविधिः। ४।३।१।१, * यूपः 'खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' एकार्थाः मन्त्रो विकल्पन्ते न्यायादित्यादयः। २।२।६।१७.

🙞 यूपश्चाकर्मकालत्वात्। ११।३।३।३॥

(ज्योतिष्टोमे पशुबन्धार्थं किं भिन्ना यूपाः उत एक एवेति विचारे) सिद्धान्तमाह। यूपः तन्त्रेण पशुबन्धार्थं एक एव स्यात्। अकर्मकालत्वात् पशुकर्मणः काले नासौ भवति, 'दीक्षासु यूपं छिनत्ति, क्रीते वा राजनि' इति अन्यस्मिन्नेव काले विधानात्। तस्मात् ज्योतिष्टोमे पशुबन्धार्थं यूप एक एव।

एकयूपं च दर्शयति। ४॥

ज्योतिष्टोमे पशुबन्धार्थं एकयूपं एकत्वेन यूप दर्शयति। सवनीये पशौ 'निवृक्ष यूपं परिवीय' इति परिव्याणं विदधाति। यूपभेदे तु चोदकेनैव परिव्याणस्य प्राप्तत्वात् न विधातव्यम्। के.

* यूपः छेदनस्य प्रयोजकः, स्वरुस्तु अनुनिष्पादी। 'यूपस्य स्वरुं करोति'। वि ४।२।१. * यूपस्त्वेक ज्योतिष्टोमे पशुबन्धार्थम्। अग्नीषोमीय-सवनीय-अनुबन्ध्या पशवः। यूपन्याय.। ११।३।३।३-८, * यूपः 'दृष्टादृष्टसम्भावनाय.' इति साम्प्रदायिकाः। अत एव खादिरस्य सदर प्रतिनिधिः सम्भवति। भाट्ट. १०।२।५., * यूपः न केवलेन छेदनेन भवति, किन्तु प्रोक्षणादिभि. संस्कारैर्भवति। 'यूप छिनत्ति' इति तु छेदनग्रहणं च मुख्यत्वात् प्रदर्शनार्थम्। भा. ११।३।४।६. * यूप. परिधिरूपः पशुमत्सु चातुर्मास्येषु 'परिधौ पशु नियुञ्जीत'। वि. ५।३।१२, १०।१।२. * यूपः

अनुवादे च गौणी न दोषः । प्रतिषेधश्च यूपसामान्यस्यैव । अप्राकृतो वा यूपो विधीयते इति न यूपशरीरघटकातिरिक्ता धर्मा भवन्ति । इति प्राप्ते, यदशायित्यशेन नियेवस्यैव कत्र मिलुशादित्यशेन विशेषेऽपि प्रतीचे- मीवाभावयोरेकस्मिन् प्रयोगे असंभवाच्चदुभयसमाधिन्त्यैव प्रवर्तमानो विधिस्तावेव यूपानुद्दिश्य सकलमात्र यिकृतं विदधाति । ' एका सामिधेनीमन्वाह ' इतिवत् । अत एव नैनमिति मानयदने नोभयस्यमाभिर्युज्यते । संकर्ष. १।४।१६

* यूपे– एकयूपे एकादश पशवो यदा नियुज्यन्ते तदा एकस्यैव पशोः, समग्रन पूर्वस्मिन् पक्षे, सर्वेषां सिद्धान्ते । भा. ४।४।१०।२८, * यूपे नियोजन पशुधर्मः । ३।६।७।१८, * यूपे परिविल्पे, ' परिवौ पशुं नियुञ्जीत ' इति गुणविधिरयं न कर्मान्तरम् । वि. १०।३।१, * यूपे परिधिरूपे परिधिधर्मा अविरुद्धा यूपधर्माश्च कर्तव्याः न केवलं परिधिधर्मा एव । १२।१।१०–११, * यूपे परिधिरूपे पशुनियोजन पशुमत्सु चातुर्मास्येषु । १।२।१२, * यूपे परिधिरूपे ' यूपायाज्यमानाय ' इत्यत्राज्ञप्तैषे ' परिधयेऽज्यमानाय ' इत्यूहो न कर्तव्यः । १।२।१३, * यूपे परिधिरूपे, स्वरूपविरुद्धा वृक्षणोच्छ्रयादयो न कर्तव्याः । अञ्जनादयश्च कर्तव्याः । १।२।११.

**यूपे विशाखेऽपि यूपधर्मा शाखयोर्भेदेन कार्याः ॥**

शाखायामेव नियोजनाम्नानात् गलेबाल्वीवत् तस्या अयूपत्वात्र तत्र यूपधर्माः कर्तव्याः । इति प्राप्ते, धर्माणां पशुनियोजनरूपकार्यार्थत्वात् गलेबाल्या अपि स्वरूपाविरुद्धतदीनधर्मवत् अस्यैव धर्माः । संकर्ष. १।४।५

**यूपे विशाखे ' दिवमग्रेण ' इत्यत्र ' दिवमग्राभ्यां ' इत्यूहः कार्यः ॥**

' दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसी ' इति मन्त्रस्य युक्तेऽन्तरिक्षादिवयोरभावेन असमवेतार्थत्वात विधाने ऊहः । इति प्राप्ते, अग्रमध्यशब्दयोरसमवेतार्थत्वाभावाद् अप्राप्तमित्यादिरूहः कार्य एव । संकर्ष. १।४।७.

**यूपे विशाखे नियोजनस्थानस्यैव भेदः ॥**

' मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च समागच्छकामः ' इति प्रकृत्य श्रुते ' विशाखो यूपो भवति ' इति वाक्ये विशाखत्वस्य श्लक्ष्णत्वादिवद् दृष्टार्थत्वादग्रभागे द्वे शाखे यूपस्य स्याताम् । इति प्राप्ते, नारुणप्राशित्वनिहाद्भवतान् कार्यार्थत्वे संभवत्यदृष्टार्थतायोगात् पशुनियोजनस्थाने एव शाखाभावात् यूपः स्यात् । अत एव ' द्वे मेते देवते समृद्ध्यै ' इति वाक्यशेषे देवताभेदेन यूपद्विशाखतोक्तिः कार्यार्थत्वे एव युज्यते । ' विशाखे यूपे मैत्रा आलभ्यन्ते ' इत्येतद्वाक्यशेषे ' मैत्रावरुणा प्रथममाश्विनं कालाय मध्यम ' इत्यादिना शाखाभये पशुबन्धनोक्तिरपि युज्यते । संकर्ष. १।४।४.

**यूपे विशाखता उपरावूर्ध्वं कतिपयाङ्गुलपरिमितभागे एव न तु नाभिदघ्नादूर्ध्वम् ॥**

स्नानापरिव्याणार्थं नाभिदघ्नं स्थलमवशोष्य तदूर्ध्वमेव शाखाभेदः कार्यः । इति प्राप्ते, शाखास्वेन परिव्याणस्यावश्यकत्वात् उपरादूर्ध्वं कतिपयाङ्गुलोर्ध्वमेव विशाखता । संकर्ष. १।४।६

* यूपे स्वाणाहुतिः । अग्नीषोमीयपशुप्रकरणे ' स्वाणाहुतिं जुहोति ' ' वनस्पते शतवल्शो विरोह इत्या वृश्चने जुहोति ' । यूपे वृक्णे सति अवशिष्टे इह मूले स्थाणु तत्र आहुतिः । इयं यूपसंस्कारार्था स्थाणाहुतिः अयूपाहिमितया गलेबाल्वा न भवति । वि. १०।१।६

* यूपाङ्गं रशना ज्योतिष्टोमे । रशनाऽधिकरणम् । ४।४।९।२२–२४. * ' यूपाङ्गं वा तत्संस्कारात् ' ( ४।४।९।२३ )। नहि एषा ( रशना ) साक्षात् पशुसम्बन्धिनी, किं तर्हि ' यूपाङ्गं वा तत्संस्कारात् ' इति वक्ष्यति । वा. २।६।१०।३१. * यूपाङ्गस्य परिव्याणस्य अपि छेदनकालिकस्य पशुकाले अकर्षः । संकर्ष. १।४।२१.

* यूपाञ्जनं अग्नीषोमीयपशौ ' आज्येन यूपमनक्ति ' आज्यपदसंस्कृतपदम्, आज्यशब्दस्य जातिवाचक-

त्वात् । वि. १।४।८. ● यूपाञ्जने आज्ये संस्कारा न क्रियन्ते । टुप्. १०।१।२।४ पृ. १८०४.

● यूपाञ्जनाज्ये पशुगते दर्शपूर्णमासगताज्यधर्माणां नातिदेशः । सा. ७।३।७।१८.

● यूपाधिकरणम् ( दीक्षासु यूपमानापकर्षः ) । ५।१।१४।२७. ' यूपकर्मन्यायः ' इत्यत्र द्रष्टव्यम् । ● अग्नीषोमीयप्रगतपत्त् प्रयोगभेदाभावात् अभिनाव विचारस्य यूपाधिकरणेन अन्यथैव सूचितम् । सोम ५।२।१६.

● यूपावटबर्हिषि दार्शिकबर्हिर्धर्माभावः । अत. दर्शपूर्णमासगतबर्हिर्धर्माणां नातिदेशः । मा ३।८।१६।३१, ● यूपावटबर्हिषि पशुगते, दर्शपूर्णमासगतबर्हिःशब्दः धर्मानतिदिशति । ७।३।७।१८, ● यूपावटबर्हिषि प्राकृतबर्हिर्धर्माः ■ कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।८।१६।३१. ● यूपावटबर्हिषि प्रोक्षणस्य निवृत्तिः । टुप्. १०।१।१।७.

● यूपावटस्तरणं अप्राकृतेन बर्हिषा, ' बर्हिषा यूपावटमवस्तृणाति ' । अत्र बर्हिःशब्दो जातिवाची, न संस्कारवाची । तेन बर्हिःसंस्काराणां छेदनादीनां नात्र प्राप्तिः । वि. ३।८।८, ३।८।१७-१८, ७।३।७.

● यूपावटस्तरणन्यायः । यो यूपावटस्तरणन्यायः स इहापि । न ■ अनेन न्यायेन यूपावटस्तरणे अध्वर्युः कर्ता न प्राप्नोति । टुप्. १०।२।१५।८८.

● यूपावटस्तरणबर्हिः दर्शपूर्णमासगतबर्हिषो न विकृतिः, इति तद्धर्माणां नातिदेशः । वि. ७।३।७.

⌘ यूपावटस्तरणबर्हिर्न्यायः । अग्नीषोमीये पशौ यूपावटस्तरणबर्हिः यूपाञ्जनाज्य ■ लौकिकम् ॥

निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३।८।१६।३१ ॥

भाष्यम्— ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र श्रूयते ' बर्हिषा यूपावटमवस्तृणाति ' ' आज्येन यूपमनक्ति ' इति । तत्र संशयः, किं यूपावटबर्हिषो, आज्यबर्हिर्धर्माः प्राकृताः कर्तव्या उत नेति । किं प्राप्तम् ? कर्तव्या इति । कुतः ? वाक्यं हि बर्हिर्मात्रस्य आज्यमात्रस्य च धर्माणां विधायकम् । तदिहापि वाक्यं चोदकेन प्राप्तम् । ■ चैतत् बर्हिरादि निष्प्रयोजनम् । तस्मात् अत्र धर्माः क्रियेरन् इति । एवं प्राप्ते, ब्रूमः । निर्देशात् विकृतावपूर्वस्यानधिकारः । निर्दिष्टा एते धर्माः प्रकृतौ, यत्र प्रधानस्योपकुर्वन्ति प्राकृतयोर्वर्धयोः आज्यबर्हिषोः, ये च प्रधानस्योपकारिणो धर्माः ते इहातिदिश्यन्ते । प्रधानं हि चोदकोऽपेक्षते न धर्मान् । प्रधानस्य हि चोदकेन सामान्यम्, न धर्माणाम् । अपि च, तदर्थ इति शब्देन संनिहितेनापि एकवाक्यता भवति, अन्यसंबन्धोपपत्तौ सत्याम् । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । किमङ्ग पुनर्विप्रकृष्टेन । निराकाङ्क्षं खलु अङ्गत्वं प्रधानापेक्षायां भवति । कैवल्यमिहातिदेशः क्रियते । पदार्थापेक्षायां अङ्गत्वमपि यथार्थं तत्र स्यात् । धर्माश्चापेक्ष्यमाणाः साधारणा भवेयुः । तयोर्द्वो व्यवस्थेयाताम् । किञ्चित् विशेषदर्शनाच्च व्यवतिष्ठेरन् धर्माः । तत्र दर्शनं नोपपद्यते, ' उपांशु प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने ' इति, यथा ' न पिता वर्धते, न माता, न नाभिः, प्राणो दिव ' इति । तस्मात् यद्द्वारा प्रकृतौ कृताः, तद्द्वारैव विकृतौ, नान्यद्वारा । न च यूपावटस्तरणं प्रकृतावस्ति, यूपाञ्जनं वा । तस्मात् तत्र प्राकृता धर्मा भवेयुः अपूर्वत्वात् ।

भा — यत्रायं अङ्गोपदेश एव अनुपङ्गेण साधारणः स्यात्, यदि च शास्त्राणि अतिदिश्येरन् ततः शास्त्रार्थं प्रकृतिवत् विकृतिष्वपि कल्पयमानः सर्वोपदेशेनाप्यर्यते, कार्यप्राप्तिपुरःसरस्तु धर्मातिदेश अयं । तत्र सगुणेन व्यापारेण गृहीतेन आत्मसिद्ध्यर्थं नियमादृष्टद्वारभूतानि दृष्टानि, अदृष्टानि च प्रयोजनानि गृह्यन्ते । तानि च निर्ज्ञातपरिमाणान्येव प्राप्नुवन्ति । तैश्च आत्मसिद्ध्यर्थं पदार्थाः प्राप्यमाणाः स्वात्मनियता एव प्राप्यन्ते । न च यूपावटस्तरणं नाम बर्हिषः कार्यं प्रकृतौ विज्ञातम्, येन बर्हिः तद्धर्मा वा गृह्णीरन् । यैस्तु वेदिस्तरणादिभिः गृह्यन्ते न तेषां यूपावटस्तरणमन्तरेण किञ्चिन्नोपपद्यते इति न तदर्थं प्राप्यन्ते । तस्मादिह अपूर्वस्यानधिकार इति । शास्त्रानिर्देशश्च नात्र । शास्त्रापेक्षया हि सर्वमविनष्टं प्रकृतिवत् पुनः कल्पयितव्यं स्यात् । दृष्टस्यसंबन्धादि-

करेणश्च स्थित एव। नास्त्यतिदेशात् सामान्यविधानाच्च पशुधर्माणां मध्ये अग्नीषोमसंस्कारार्थं पशुपुरोडाशो देवतान्तरं न प्राप्नोति। तत्प्रोहस्य च दर्शनं विरुध्येत। तस्मादुपन्यासातिदेश इति।

शा— यस्मात् प्रकृतौ अङ्गप्रधानार्था बर्हिर्धर्मा, तस्मात् विकृतावपि यूपावटस्तरणबर्हिषि कर्तव्या। इति प्राप्ते सिद्धान्तसूत्रम् 'नहिर्देशात्तु विकृतावपूर्वस्यानधिकार' इति। प्रकृतौ यत् बर्हि सर्वे गतप्रयुक्ता बर्हिर्धर्मा सर्वद्वारेण विकृतिं गच्छन्ति, न स्वरूपत। तेन प्राकृतार्थसाधने एव धर्मा विकृतौ कर्तव्या। न च यूपावटस्तरणं प्राकृतबर्हि कार्यम्। अतो न तत्साधने बर्हिर्धर्मा।

सोम—अतिदेशविषयेय चिन्ता प्रसङ्गात् सङ्गता स्यात्। (प्रथमसूत्रे) प्रकृतौ अङ्गप्रधानार्थत्वमिह पूर्वपक्षहेतु, प्रकरणाविशेषात् इति हेतुश्च प्रकृतौ अङ्गप्रधानार्थत्वेन अचित। धर्माणां प्रकृतौ कार्यविशेषसाधनार्थत्वेन निर्देशात् अपूर्वस्य अप्राकृतकार्यस्य यूपावटस्तरणबर्हिर्यूपावटस्तरणार्थत्वाद्यादे अनधिकार धर्मसम्बन्ध इति द्वितीयसूत्रार्थ।

वि— 'धर्माणां प्रकृतिस्थानां विकृतावतिदेशत। प्राप्तिर्विशेषतो वा, ऽऽद्यो विशेषान्निरूपणात्॥, प्रकृतौ कार्यरूपेण विकृतौ स्फूर्ति नेतरे। यूपावटस्तृति कार्ये नहि प्राकृतबर्हिष॥'

भाट्ट-- बर्हिर्धर्माणां प्रकृतौ अङ्गप्रधानार्थत्वमुक्तम् (३।१।६)। अतश्च देशमात्रमपि 'बर्हिषा यूपावटमवस्तृणाति' इति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिका बर्हिर्धर्मा भवेयु। इति प्राप्ते, प्रकृतौ 'बर्हिषि हवींष्यासादयति' इति वचनात्, अङ्गप्रधानसाधारणहविरासादनार्था एव बर्हिषि धर्मा, न कार्यमात्रार्थं प्रयुक्तप्रयोजकत्वं च्यवते। यद्यपि वा परिमोजनीयादिवत् प्राकृतकार्यमात्रार्थत्वं स्यात्, तथापि न अप्राकृतार्थे यूपावटस्तरणार्थे बर्हिषि भवेयु। उपकारद्वारेणैव धर्माणामतिदेशेन विकृतौ अप्राकृतकार्यसाधित्वानुपपत्ते। न हि प्रकृतौ येन केनचित् सम्बन्धेन अपूर्वेणैव बर्हिष्ट्वं उद्देश्यतावच्छेदकम्, येन अप्राकृतस्यापि तत्सम्बन्धात् धर्मग्राहकत्वं शङ्क्येत। अत एव विशेषग्राहकप्रमाणत्वेन तावद्विशेषाणामेव प्रवेशेन अनुपस्थितत्वाभावस्य उद्देश्यतावच्छेदककोटौ अप्रवेशात्। न च तथापि यूपावटस्तरणभावनायां धर्माकाङ्क्षायामेव पञ्चमस्थायेन (३।७।१२) धर्मग्राहकत्वम्, लौकिकधर्मग्रहणेनापि आकाङ्क्षानिवृत्तौ, तत्र देशातिदेशयोरभावात्। पञ्चमके तु कथानायका मध्यानुवादस्य अतिदेशकल्पनमिति विशेष।

मण्डन — 'यूपावटार्थे न भवन्ति धर्मा।'

शंकर— 'न यूपावटबर्हिष।' (बर्हिर्धर्मा)।

८ आतिथ्यायां बर्हिः पुनः सन्नह्य उत्तरवेदिसमीपे स्तीर्यते। तदा च सन्नहनहरणमन्त्रयो अन्यकार्यत्वात् कार्यपुनरावृत्त्या न प्रसङ्ग। यूपावटस्तरणबर्हिर्न्यायेन इति भाव। शा ११।१।२१ * विकृतिविशेषे कानिचित् अप्राकृतानि स्तोत्राणि विहितानि, तेषु च यूपावटस्तरणबर्हिर्न्यायेन न प्राकृतानां एव तदादिमात्रा ऋचा वा प्राप्ति, प्राकृतस्तोत्रनिर्दिष्टेष्वेव तेषां निरूढत्वात्। भाट्ट ९।२।७, * वक्ष्यते सत्रे 'अग्ने वाजाद्याक्रमाम्०' इति। न च प्रकृतौ द्वादशाहे आर्त्विज्य एव यजमानविधे तस्य च तन्मात्रविषयत्वात् सत्रेऽप्यार्त्विज्ये तत्प्राप्त्यविरोध इति वाच्यम्, प्राकृतकर्तृसर्वपदार्थेषु यजमानकर्तृत्वप्राप्तावपि यूपावटस्तरणबर्हिर्न्यायेन अप्राकृतकार्यविधायकानां तत्प्राप्त्यनुपपत्ते। १०।२।१४

* यूपादौ अरत्न्यादिपरिमाणं यजमानगतमेव॥

पुरुषविशेषेणानियतत्वात् अनियमेन यस्य कस्यचिदरत्निग्रह प्रयोगसाधुत्वात्। इति प्राप्ते, 'यजमानेन संमित' इति वचनात् तैत्तिरीयकतया तत्तीयार्थाभिन्नस्य संमित इत्येव नियमनात् तथा। सरर्पे १२।७।९

* यूपादौ पञ्चारत्निरित्यादि परिमाणं उपरं वर्जयित्वा ज्ञेयम्॥

'पञ्चारत्निं यूपं वृश्चति' 'यजमानसंमितौदुम्बरी भवति' 'नाभिदघ्नं परिमिनोति' इत्यादौ वाक्यभाग

उपर्यन्तर्नियम्यते तावता सहैवैतानि परिमाणानि ' चतुर्हस्ता स्थूणा ' इत्यादिवाक्येषु तथा दर्शनात् । पुरुषस्य नाभिर्यथा मध्यभागस्तथा यूपमध्यभागस्य तेन बोधाच्च । इति प्राप्ते, खननादूर्ध्वमेवैतानि परिमाणानि । ' चतुर्हस्ता स्थूणा ' इत्यादिवाक्येषु तथा दर्शनात् पुरुषनियोजनादिकार्यार्थत्वात् । खातोपरिभाग एव नियोजनात् । परिमाणदृष्ट्या दक्षतस्याप्रकृततरेण स्थनाभिपरिमाणस्य तदूर्ध्वमेव समत्वात् । एकादशिनस्वरूस्यादिपरिमाणान्तरपक्षे मध्यभागे परिमाणासम्भवात् च । संकर्ष. ३।४।८.

● यूपाहुतिः अग्नीषोमीये पशौ, 'यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति ' इति । भा १०।१।५।१९, ११।२।७।२९, ● यूपाहुतिः एकादशिन्या तन्त्रं अनिकदेशत्वाविवक्षितत्वात् । १०।१।६।१०-११, ● यूपाहुतिः यूपैकादशिन्या तन्त्रम् । सा हि क्रियमाणा कस्यचिद्यूपस्यान्तिके भवति, सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात् तदेकस्य कस्यचित् यूपस्यान्तिके क्रियमाणा सर्वयूपार्थं भवति । ११।३।१२।२९, ● यूपाहुतिः साद्यस्के खलेवाल्या नास्ति । १०।१।५।१९. ● यूपमाप्तुं गमिष्यता पुरुषेण, स्रुवेण आहवनीये ' उरु विष्णो विक्रमस्व ' इत्यादिमन्त्रेणाहुतिर्होतव्या, सा यूपाहुतिर्नाम । ' यूपमच्छैष्यता होतव्य ' 'उरु विष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोति ' इति आपस्तम्बः । वि. १०।१।५. ● ' यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति ' । भा. ११।२।७।२९. ● यूपाहुतीनां यूपैकादशिन्या तन्त्रम् । ११।२।७।२७-३०. ' यूपैकादशिन्यां यूपाहुतीनां तन्त्रम् ' इत्यत्र द्रष्टव्यम् ।

☞ यूपाहुतिन्यायः । साद्यस्के खलेवाल्या यूपाहुतिर्न कर्तव्या ॥

' कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् । १०।१।५।१९॥

साध्यम् — तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः । ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र इदमाम्नायते " यूपमच्छैष्यता होतव्यम्, न हि दीक्षितस्याग्नौ जुहोति, आज्यं चारणि चादाय, यूपस्यान्तिकेऽग्निं मथित्वा, यूपाहुतिं जुहोति ' इति । साद्यस्के श्रूयते ' खलेवाली यूपो भवति ' इति । तत्रैषोऽर्थः सांशयिकः, किं साद्यस्के खलेवाल्या यूपाहुतिः कर्तव्या, नेति । किं प्राप्तम् ? कर्तव्या, विधे. प्रकरणान्तरे अतिदेशात् सर्वकर्म स्यात् इति ( १०।१।१।१ ) । एवं प्राप्ते, ब्रूमः । कर्म चेदम् द्रव्यसंयोगार्थं यूपे एवमादिभिः संस्कारैर्भविष्यतीति क्रियते । यूपं प्राप्तुमेष्यत एतत् श्रूयते । तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता । अच्छ-शब्दो हि आप्तुं इत्यस्यार्थे वर्तते । न चात्र यूपेन प्रयोजनम् । अयूपे हि खलेवाल्यां पशुर्बध्यते । तस्मात् तत्र यूपकरणार्थाः यूपाहुत्यादयः संस्काराः, अर्थलोपान्निवर्तितुमर्हन्तीति । तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति ।

ज्ञा— 'यूपमच्छैष्यता होतव्यं ' इति पाठ. ।

सोम— अच्छ इत्येतत् आप्तुं इत्यर्थे वर्तते । एतिस्तु गमने । आरम्भणीयावत् स्वविधिमध्ये प्रकृतप्रकरणेन अपकृष्टत्वात् अकर्तव्यत्वेऽपि यूपाहुतेः प्रकृतत्वात् इह कर्तव्यतां इत्युक्तेः संगतिः । सूत्रार्थस्तु— कर्म चेदं यूपाहुतिलक्षणं यूपसंस्कारार्थम् । तादर्थ्यं च ' यूपमच्छैष्यता ' इति श्रुतिसंयोगात् छेदनार्थगमनद्वारेति स्पष्टत्वात् न कर्तव्यमिति ।

वि— ' यूपाहुतिः खलेवाल्यां कार्या नो वा, ऽतिदेशतः । कार्या, होमश्छेदनार्थो नाच्छेद्यायां स युज्यते ॥ ' छेदनाभावाद्धोमस्याहुतिर्न विद्यते ।

भाट्ट— साद्यस्के ' खलेवाली यूपो भवति ' इति श्रुतम् । तत्र यदि तावत् तत्रास्यसंस्कारगण एव यूपः यदि वा तत्रान्यपदार्थान्तरम्, यदि वा शास्त्रनिषिद्धं सर्वथा तत्र न खलेवाल्याः अभेदान्वयः, यागात् छेदनादिसंस्काराभावेन शास्त्रात्तस्य खलेवाल्यामुत्पत्तौ प्रमाणाभावाच्च । अतस्तत्र खलेवाल्यां यूपपदे यूपकार्यं पशुनियोजनं लक्षयित्वा तत्र अयूप एव खलेवाली विधीयते । तदिह कार्यप्रयुक्तानां अञ्जनादीनां यूपधर्माणां प्राप्तौ, किं यूपाहुतिः कार्या न वेति चिन्तायाम्, छेदनार्थत्वाच्छेदनादीनां धर्माणां लोपेऽपि अञ्जनादिपकारकतया तस्याः पशुनियोजनद्वारा परमापूर्वोपकारात् अञ्जनादिवत् करणम् । न च ' यूपमच्छैष्यता होतव्यम् ' इति वचने अञ्जनादेः

• यूपैकादशिन्यां अञ्जनादिपदार्थेषु प्राप्तेषु अञ्जनादिना परिव्याणान्तेन अनुसमयः, न तु अञ्जनादी नामैकैकेन । ' अञ्जनादि यजमानो यूपं नावसृजेत् आपरिव्याणात् ' इति वचनात् । आ. ५।२।५।७-९.
• यूपैकादशिन्या अञ्जनादिपरिव्याणान्तानुसमयः कर्तव्यः । एकस्मिन् यूपे समुदायं कृत्वा द्वितीये यूपे समुदायः कर्तव्यः इति । वि. ५।२।५.

**यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम् ॥**

वैहायसरशन्येऽप्यपेक्षा विहितत्वात् परिवीयेरन् यथाऽनुक्रमम् । इति प्राप्ते, युगपद्रशनाभ्यां परिव्याणं प्रकृतिवत् । संकर्ष. १।४।१४

**यूपैकादशिन्यां उपराणां दैर्घ्येण साम्यम्, न तिर्यक्त्वेन ।**

' उपरसंमिता मिनुयात् पितृलोककामस्य, मध्येन संमिता रशनासंमिताः च मनुष्यलोककामस्य, चषालसंमितामिन्द्रियकामस्य ' इत्यादिभिर्वचनैः कामनाभेदेन एकादशानामुपरादीनां मिनीयमानं साम्यं परस्परमाप पाठात् एकविधमेव स्यात् । इति प्राप्ते, वचनसार्थक्याय प्रायपाठमनादृत्यापि, अन्योन्यानिरपेक्षणमेव स्वीकार्यम् । यूपपरिमाणगुणांशेन दैर्घ्यमुपरस्य विहितमस्ति । यूपस्य तु एकादिभिरत्रिंशदरत्नयो विकल्पिताः । तेन तद्भेदेन उपराणां परिमाणवैषम्ये प्राप्ते दैर्घ्येण साम्यं कृत्वा मिनीयते, न तिर्यक्त्वेन । अवटान्तर्निखेये यूपाधोभाग उपरम् । तस्य हि ' अतृणमुपरं भवति ' इति तत्रणनिषेधेन तदराभवात् । मध्यभागस्य निश्चयम्भावेन परिमितत्वेन दैर्घ्यतः ऐकरूप्यस्य सत्त्वादेव तस्य रशनया पृथुत्वेनैव साम्यविधिः । एवं चषालेऽपि । संकर्ष. १।४।२४.

• यूपैकादशिन्या एकादशो यूपः उपशयो नाम, नासौ उच्छ्रीयते, किंतु स भूमावेव शेते दक्षिणतः । अमन्त्रकच्छेदनादिभिर्विभिन्नयूपधर्मकत्वेन तत्र यूपशब्दो गौणः । चि. ७।३।१३.

**यूपैकादशिन्यां एकादशपशुयोजनं क्रमापेक्ष्या पद्धत्या अहीनेषु उच्यते, इतरा पद्धतिस्तु प्रकृतौ ॥**

आग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रामारुत — ऐन्द्राग्नसावित्रवारुणान् एकादश पशून् विधाय ' यामिमा प्रजा आपश्च चरन्ति सा वा एषैकादशिनी ' इत्युक्त्वा ततो व्यस्तसमस्तत्वम् प्रकम्य ' आग्नेयमग्निष्ठेऽभिहित ऐन्द्रमैन्द्राग्नं सारस्वतं सौम्यं वैश्वदेवं पौष्णं मारुतं बार्हस्पत्यं वारुणं च ' विधाय श्रुतं ' तामेतां कामेयां विद्वांस्तामेतामसितानवरम आलेत ? ' इति । अत्रातिदानवरमशब्दोऽहीनपर. । तस्यान्यतरतोऽतिरात्रत्वात् । न तूभयतोऽतिरात्रसत्रपरः । द्विविधामेकादशिनीं प्रकृत्य, ' तामेताम् ' इत्याम्नानात् उभयोरप्यहीन उत्कर्षः । इति प्राप्ते, यामिमामित्यनेन प्रकृतिगामित्वात् बहुकर्तृकत्वेन पूर्वस्या निर्देशानुसारस्याश्च कामेष्यत्वेन कतिपयक्रमनवस्थानेन, तामेतामित्यनेनापि सन्निहिताया एव वामदक्षिणात्र्या एवाहीनेषूत्कर्षः । यत्तु कल्पसूत्रं ' आग्नेयमभित ऐन्द्री ' इति, तदैन्द्राग्नोभयस्य नामैकदेशमेलनेन निर्देश इत्यनिवद्धम् । संकर्ष. १।४।२५.

• यूपैकादशिन्यां चोदकप्राप्ता यूपावृत्तिः ज्योतिष्टोमे तन्त्रम् । ११।२।७।२६-२९

**यूपैकादशिन्या दशमैकादशयोर्व्यत्ययः अग्निकोणे दशमः, ऐशानकोणे एकादश. इति ॥**

यूपेषूद्ग्रामपर्यासविधानादेवं. अग्नेयकोणमारभ्य ईशानान्तं यूपा अग्निष्ठवरे स्युः, तत्र अग्निष्ठभावदेशस्य मुख्यत्वेनैतद्व्यत्ययेऽपि तदानीं परित्यागे मानाभावात्, तदा तद्देशस्य प्रधानपशुकर्मणोऽपरिहार्यविरोधाय द्वितीयं यूपमग्निष्ठाद्दक्षिणतो नीत्वा, तृतीयमग्निष्ठादुत्तरतो मिनुयात् । एवं चतुर्थपञ्चमादियुगलानि दक्षिणोत्तरयोर्मातव्यानि । ' उदगपवर्गा यूपा भवन्ति ' इति वचनस्यैवमप्युपपत्तेः । एतेन ' यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितो भवतः ' इति लिङ्गमप्युपपद्यते । इति प्राप्ते, ' दक्षिणापवर्गाः पशवो भवन्ति ' इत्यादन्य विधानेनैशानाग्नेयान्तक्रमेण पशुनियोजने सिद्धे, तद्देशे यूपेष्वपि प्रधानसंनिकर्षक्रमेण तथैव संमाने प्रसक्ते,

प्रवर्तमानः उदगपवर्गं नविधिः संमाननिकर्षविशेषेणैव नेतव्यः । तथा च पशुक्रमेणैव नव यूपा नीता, दशमस्य स्थानमतिक्रम्य, पैशाचिकोणे दशमं नीत्वा, तदग्रभागे एकादशं मिनुयात् । एवं सति द्वयोरेवोत्तमोपोत्तमयोः क्रमोपरोधः स्यादिति भाष्यसारः । यद्यपि यूपसमानोत्तरत्वेन पशुनियोजनप्रवृत्तेः, उदगपवर्गतामाश्रित्य यादीशानान्तक्रमेणैव यूपेषु कृत्वा, पश्चात् यूपक्रमेणैव नव नियुज्य, दशमैकादशयोर्व्यत्यासेन नियोजनमपि संभवति, तथापि 'दशमोऽभिनाद्' इत्यादिलिङ्गदर्शनानुगुण्यात्तथोक्तम् । तदिदं लिङ्गदर्शनं न्यायोपोद्बलितमेव, दिङ्वचनाद्बलीयः संनिकर्षो मिमीयते, इत्यत्र निकृष्यर्थम् । आचार्यैस्तु वाचनिकत्वान्निर्दोषमाध्यन्तिकत्व एव पक्षो स्वीकृतः । संकर्षे. ३।८।२३

* यूपैकादशिन्याः परिव्याणे 'युवा सुवासाः' इति होममन्त्रः तन्त्रम् । संकर्षे. ३।४।१५. 'यूपमन्त्रः यूपैकादशिन्याः' इत्यत्र द्रष्टव्यम् । * यूपैकादशिन्या यूपानामन्तराल रथाक्षमात्रम्, न तु प्रमाणनियमः, नापि वेदिविभितपरिमाणेन निकर्षः, तत्र वेदेरेव वर्धनीयत्वात् । संकर्षे ३।८।२३-२४.

ॐ यूपैकादशिन्यां यूपाहुतीनां तन्त्रम् ॥

अन्ते यूपाहुतिस्तद्वत् । ११।२।७।२६ ॥

भाष्यम्— ज्योतिष्टोमे यूपैकादशिनी, 'एकादश यूपान् छिनत्ति' इत्याम्नाता । अस्ति तु प्रकृतावग्नीषोमीये पशौ यूपाहुतिः । सा किं भेदेन कर्तव्या, उत तन्त्रमिति । किं प्राप्तम् ? अन्ते यूपाहुतिस्तद्वत् । यद्वत् नानादैवतेषु पशुहोमो भेदेन, तद्वदियमपि भेदेन कर्तव्येत्यर्थः । कुतः ? 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति श्रूयते । बहूना च यूपाना भिन्नान्यन्तिकानि । यद्येकं यूपस्यान्तिके न हूयेत नस्यैव तेन गुणेन वर्जनं स्यात् । तस्माद्भेदेन कार्यम् ।

इतरप्रतिषेधो वा । २७ ॥

अथवा नैव भेदेन कर्तव्येति । किं तर्हि ? तन्त्रम् । कस्मात् ? इतरप्रतिषेधोऽयम् आहवनीयप्रतिषेधो नान्तिकविधिः । कथं ज्ञायते ? आहवनीये जुहोतीत्युपवर्णात् सर्वहोमेष्वाहवनीयः प्राप्तः । तत्र, अग्निं मथित्वेति वाच्यम् । यदपि मन्थनं प्राकृते कर्मणि प्रवृत्तत्वात् प्राप्तं प्राप्तम् । तेनेदमपि वक्तव्यं यूपस्यान्तिकेऽग्निं मथित्वेति । उभयस्मिंश्चापि विधीयमाने वाक्यभेदः । मन्थनस्य स्वार्थपरार्थत्वाभावात् । तस्मादन्यतरद्विवक्षितं मन्थनमन्तिकं वा । तत्र च मन्थनं विवक्षितमविवक्षितमन्तिकमिति ब्रूमः । कुतः ? मन्थनविधिपरत्वाद्वाक्यस्य । एवं ह्याह, 'यूपमाहुत्यैतस्य होतव्य' न हि दीक्षितस्याग्नौ जुहोतीति, दीक्षितस्याग्नौ होमे दोषं मन्यते इति । तत्परिहारार्थं रूपान्तरमुक्तम्, वैष्णवीमनूच्याहुत्यतीति । तथाप्यहोमे दोषमिव मन्यमानः पुनराह, 'होतव्यमिति' गुणस्यैव जुहोत्यायतन इति । तदुभयमपि तत्र न शक्यमिति प्रतिनिधिष्य तृतीयं कल्पमाह । यूपस्यैवान्तिकेऽग्निं मथित्वा तथा होतव्यम् । तदुभयमपि शक्यम्, जुहोत्यपि न दीक्षितस्याग्नौ जुहोतीति ।

तत्र यदि यूपस्यान्तिके जुहोतीत्येतद्विवक्षितं न मन्थनम्, तत आहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति । आहवनीये जुहोतीति नियमात् । तथ, न दीक्षितस्याग्नौ जुहोतीत्येतन्न सम्पद्यते । अथ तु, अग्निं मथित्वेत्येतद्विधीयते तत्र आहवनीयप्रतिषेधो भवति । अन्योऽयमाहवनीयाद्यो मथ्यते । तत्रैतत्समर्थितं भवति, जुहोति च, न चाऽऽहवनीये जुहोतीति । तस्मान्मन्थनं विधीयते, नान्तिकम् ।

अनुवादमात्रमन्तिकस्य । २८ ॥

कुतः प्राप्तेऽनुवादः । सौकर्यात् । इहाग्निना यूपार्थेन दुष्करम् । यूपान्तिके ह्यग्निं मथित्वा सुकरो होमः । न्यायप्राप्तस्यानुवादः । एवं सति यत्रान्तिके जुहोति, न दोषः । अथ कस्मात् मन्थनमात्रं कृत्वाऽऽहवनीय एव न हूयते । अदृष्टं कल्पितं भवति । तस्मात्तन्त्रं यूपाहुतिः ।

अशक्यत्वाच्च देशानाम् । २९ ॥

न चान्तिकदेशाः शक्याः प्राप्तुम्, आवेदितत्वादन्तिकस्य । अथ परमान्तिकं विवक्षितम्, तदा एक उपदेशेन । तत्र प्रतिषिद्धम् । न च शक्यं परमान्तिकेऽग्निमन्थनं कर्तुम् । तस्मादप्यविवक्षितमन्तिकम् ।

ना— यूपाहुतिः यूपैकादशिन्या भेदेन कर्तव्या उतान्येन हवी भेदेदे तदन्तिकदेशाना भेदात् तन्त्रहोमत्व

आहुतिः । मैवम् ; आपेक्षिके हि अन्तिकदेशे मन्थन सम्भवति, तेन च देश प्राप्तः यूपसमीपं प्राप्तोऽस्मीति मन्यते, यत्र यूपो दृष्टिपथं आपद्यते, तत्र मथनं होमश्च, स च सर्वेषां एकदेशः सम्भवति इति अप्रमाणविशेष- त्वात् तन्त्रम् ।

सोम--'यदाहीयमानम्' इत्यनेन सगतिसूत्रार्थौ सूचितौ ।

वि--'यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रता । समीपभेदाद्भेदोऽन्त्यः सामीप्यं दृष्टिगं यतः ॥'

भाट्ट--द्वैते पक्षौ सन्ति यूपाहुतिविषयाः । एकस्मा- यत् 'यूपमच्छेप्यता होतव्यम्' इत्यनेन यूपप्रतिगमन गमनोद्देशेन, ततः पूर्वेण चरं आहवनीये होतव्यमिति । अपरस्तु 'न हि दीक्षितस्याग्नौ जुहोति' इति । तत्र कोर्ध- पन्यासपूर्वकं 'गैरगनीमूर्ध्नमनूप्यागच्छति' इति होमा- भावत उक्तः । अच्छेत्यति यूपं प्राप्य गच्छतीत्यर्थः । तृतीयस्तु 'गमनोत्तर यूपदेशे यूपस्यान्तिके अग्नि मथित्वा जुहोति' इति होमस्य उक्तः । तत्र यूपैका- दशिन्यामाद्ययोः पक्षयोः भेदेन होमकल्पनाः । तृतीये तु अन्तिकरूपदेशसंबन्धात् यूपाहुतिभेदः । इति प्राप्ते--

नामान्तिकदेशविधि, प्रातरनुवादेन देशस्य, मथनोत्तरकालस्य च विधाने वाक्यभेदात् । यूपाहुते- र्यूपप्राप्त्यर्थत्वेन अग्निमथनोत्तरदेशान्तरेण अन्तिकदेशस्य प्राप्त्यात् ।

वस्तुतस्तु-- अन्तिकदेशविध्यभावे मथनस्याहव- नीयेन सह विकल्पेन सह एव होमाधारोऽनुमतोऽवगतविधान- र्थमन्तिकदेशस्यावश्यकत्वात् । देशकालविशिष्ट- होमविधानेन च वाक्यभेदाभावादन्तिकविधानेऽपि परस्य विग्रहस्य दाह्यस्य दर्शनाभावात्, यावता सामीप्येन यूपदेश मह प्राप्तोऽस्मीति व्यवहारस्तावत एव सामीप्यस्यान्तिक पदेन विधित्वात् तस्य चैकत्वे तन्त्रत्वेन । भेदे तु भेद इति ध्येयम् ।

मण्डन--'यूपान्तिकाऽऽहुतिस्तन्त्रम् ।'

शंकर--'अन्ते' यूपाहुतिमदन्' तन्त्रेणेत्यर्थः ।

• यूपैकादशिन्यां यूपोपराणां यावन्तस्तिर्यग्देशाः तावत्प्रागेवेदिः वर्धनीया । संकर्ष १।८।२४.

यूपैकादशिन्यां 'वेदिसंमितान् विमिनोति' इत्यस्य रथाक्षमानेन न विकल्पः ॥

तुल्यन्यायेन 'वेदिसमितान् विमिनोति' इति वचना- न्तरस्याप्यन्तराऽन्यपरत्वानवगमात् उभयोः परिमाणयो- र्विकल्पः । इति प्राप्ते, यूपोपराणां यावन्तस्तिर्यग्देशास्ता- वद्भागैर्वेदिरभिवर्धनीयेत्यभिप्रायेण वचनान्तरस्योपपत्तेः विरोधाभावाद्विकल्पः । संकर्ष, १।८।२२.

यूपैकादशिन्यादौ अग्निष्ठभिन्ना यूपाः उद- ग्दक्षिणा मातव्याः ॥

'अर्धमन्तर्वेद्यर्धं बहिर्वेदि' इति लक्षितस्य देश- स्याग्निष्ठेन यूपेनाक्रान्तत्वादन्ये दश यूपा अनियमेन यत्र क्वापि निखेयाः । 'पुरस्तान्मिनोति' इति वचनाद्वा अग्निष्ठात्प्राग्देशे प्राक्संस्थत्वेष समातव्याः । इति प्राप्ते, उदग्दक्षिणाविस्तृताया वेदेः प्रान्तेऽपि लक्षितदेश- स्यानपायात् 'विरश्मीर्मिनोति' इत्याद्यभिधानाच्च अग्निष्ठोदग्दक्षिणपार्श्वयोरेव मातव्याः । सर्वेषामपि वेदि- प्राग्भागवर्तित्वात् 'पुरस्तान्मिनोति' इत्यप्यविरुद्धम् । संकर्ष १।८।२०.

यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरा- लानि ॥

यूपानामन्तरालमानाद्यपेक्षे समपरिमाणतायाः 'सम स्यात्' इति न्यायेन लाभेऽपि परिमाणविशेषे प्रमाणा- भावादनियमे प्राप्ते, 'रथाक्षेण विमिमीते' इत्यस्यान्तराल- परत्वेन सार्थक्यात् रथाक्षमात्राणि यूपान्तरालानि कार्या- णीति । संकर्ष १।४।२१.

• यूपैकादशिनीगते अन्तरे यूपनाम्ना यूपग- तसंख्या नानिर्देशः । आ ७।१।१२।१३-१४.

यूपैकादशिनीसंमानमुत्कृष्टं सत् तन्त्रमेव ।

तेन एकादशिनी येषा पूर्वेद्युरेव समानतन्त्रेणाम्नाता, तेषामहर्गणेऽन्यकाम्यत्वात् तन्त्रेणोपकारकत्वेऽपि तुल्या- र्थत्वाभावस्य प्रधानभेदात् प्रतीयमानीयसंमार्जन- वदावृत्तिः स्यात् । इति प्राप्ते, प्रकृतौ सर्वपशु- साधारणस्य छेदनादेस्त्वसाधारणेन संमानस्यापि छेदन- काल एव प्राप्तौ, वचनात्तत्कालेऽवदानमात्रोत्कर्षेऽपि

न त्वस्य छेदनादेरिव निरुध्यते । विकृतावपि तथैवोत्कृष्ट समान त्वमेव । संकर्ष. १।४।१८

○ यूपकरणार्थाः यूपाहुत्यादयः संस्काराः, अर्थस्यैवाग्निवर्तितुमर्हन्ति प्रत्येकत्वात् । भा. १०।१।५।९.

■ यूपकर्मन्यायः । अग्नीषोमीये पशौ दीक्षासु आकृष्यमाणं यूपच्छेदनं अग्नीषोमप्रणयनादीनि नाप कर्षति ॥

असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत । ५।१। १४।२७ ॥

भाष्यम्— अस्ति दर्शपूर्णमासप्रकृतिके पशौ अग्नीषोमीये वैकृतं यूपकर्म । तत् प्रतिकृष्यते 'दीक्षासु यूपं छिनत्ति' इति । तत् प्रतिकृष्यमाणं अर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि प्रतिकर्षति उत नेति संशये, प्रतिकर्षति संबन्धादिति । तथा प्राप्ते, ब्रूमः । विकृतौ अन्यधिक यत्, तत् प्रतिकृष्यमाणं ततोऽर्वाचीनान्यपि अग्नीषोमप्रणयनादीनि न प्रतिकर्षुमर्हति । कथम् ? असंयोगात् । पाशुकं यूपकर्म । ततः प्राचीनं सौमिकम् । न तयोः परस्परेण सम्बन्धः । न सौमिकः पश्वर्थः पाशुकस्योपकारकः पश्वर्थो वा । यदि हि तयोरुपकारकः स्यात्, ततः तस्योपकुर्वत क्रमोऽप्यस्य साद्गुण्यं कुर्वन् गुणभूतः स्यात् । न त्वेतदस्ति । तस्मान्नैषां परस्परेण क्रमे नियमः । अतो यूपमात्रं प्रतिकृष्यते । अपि च यूपमात्रे प्रतिकृष्य कृतार्थे शब्दे शेषकाला समभ्यासो न भविष्यति इति ।

टुप्— अग्नीषोमप्रणयनोत्तरकाले यूपस्य छेदनादयः पठ्यमानाः यद्यनेनापकृष्यमाणाः सौमिकान् नापकर्षन्ति । कुतः ? भिन्नप्रयोगवचनपरिगृहीतत्वात् । अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आश्रीयते । तस्माच्च पूर्वं पदार्थं उत्तरमुपसर्पयति । तस्मात् पूर्वः पदार्थः योऽपकृष्यते सोऽनन्तरमपकर्षति । पठ्यमानक्रमत्वात् ।

शा— यूपच्छेदनं दीक्षासु अपकृष्यमाणं प्रयाजवत् प्रणयनादीन् आकर्षति । इति प्राप्ते, उच्यते । 'सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः । अतः तदपकर्षेण सौमिको नापकृष्यते ॥' इति ।

सोम— पूर्वत्रेहापि पूर्वपदार्थस्य उत्तरपदार्थोपस्थापकस्य पाठतः क्रमे सति तद्क्रमत्वाविशेषात् इति प्रत्यवस्थानात् संगतिः ।

वि— ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशगतो वह्निः आग्नीध्रीये प्रणेतव्य । सोमश्च प्राचीनवंशे पूर्वमवस्थापितः इदानीं हविर्धाने प्रणेतव्य । तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः । तदेतत् सर्वं सुत्यादिनात् प्राचीने औपवसथ्ये दिने प्राप्तम् । तत्र यूपच्छेदः दिनत्रयात् पूर्वं दीक्षाकाले अपकृष्टः । तस्मिन् अपकृष्टे प्रयाजन्यायेन (५।१।१२) तदन्तात्तत्पूर्वस्य अपकर्षणात्, प्रणयनमपि अपकृष्यता इति पूर्वः पक्षः । 'यूपच्छेदापकर्षे किं तदन्तं युत एव वा । प्रायाजवत् तदन्तत्वाप्रयन चापकृष्यताम् ॥ अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा । प्रयोगभेदवैषम्यात् श्रुतमात्रापकर्षणम् ॥'

भाट्ट— सौमिकाग्नीषोमप्रणयनानन्तरं 'पश्चात् यूपं छिनत्ति' इत्युत्पन्नं यूपच्छेदनं 'दीक्षासु यूपं छिनत्ति' इत्यनेनापकृष्य प्रयाजन्यायेन (५।१।१२) प्राचोऽपि पदार्थान् आग्नीषोमप्रणयनादीन् अपकर्षति । इति प्राप्ते, भिन्नप्रयोगविधिपरिगृहीतत्वेन अत्र पाठस्य क्रमानियामकत्वात् सहप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिगतया प्रयोगवचनगम्येन क्रमानापादकत्वात् पाठस्य क्रमापादकत्वेन तद्क्रमत्वाभावात् दीक्षाकालविधिवाक्ये च प्रयोगवचनगम्येन तत्रैव क्रमापेक्षया भिन्नप्रयोगविधिपरिगृहीतेऽपि सोमाङ्गदीक्षाकालीनत्वार्थपाठेन क्रमकल्पनात् तत्रैव सप्तहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपीयत्वस्य ... वा अपकृष्य कार्यम् । न तु तदन्तापकर्षः । एतेन यूपच्छेदनस्य दीक्षान्ते करणं इति शेषाधिवृक्क अपास्तम् । 'दीक्षासु यूपं छिनत्ति' इत्यस्य सप्तहोतृहोमानन्तरं पठितत्वात् ।

मण्डन— 'यूप एवापकृष्यते ।' १६.

शंकर— 'यूपे श्रुतापकर्षः स्यात् ।' १८.

● यूपकर्ममात्रं दीक्षासु 'यूपं छिनत्ति' इति प्रतिकर्षविधानात् प्रतिकृष्यते, न तु अग्नीषोमीयप्रणयनादीनि । भा. ५।१।१४।२७.

शा-- ज्योतिष्टोमे अग्नीषोमीये पशौ उपदिष्टो यूप, सवनीयानुबन्ध्ययोस्तु अनिदिष्ट । स किं तयोरपि पश्वोः तन्त्रम्, उत प्रतिपशु भेदेन यूप इति । तदर्थमिदं विचार्यते, 'दीक्षासु यूपं छिनत्ति' इति किं अग्नीषोमीययूपस्यापकर्षं, उत सर्वयूपानामिति । तत्र 'यथैवाध्वरकल्पायामाज्यस्यैवापकर्षणम् । निर्वापस्य तथा यूपोऽप्यासां एवापकृष्यते ॥ अग्नीषोमीयपश्वायामतोऽस्मादपकृष्यते । भेदेन सवनीयाद्यौ स्वकाले यूपसंग्रह ॥ न तदस्त्यविशेषेण सर्वयूपापकर्षणात् । न चेहाध्वरकल्पावत् युक्तमाज्यापकर्षणम् ॥ प्रधानकालबाधोऽत्र तथैवाभ्यासचोदना । आज्यापकर्षणेऽप्यस्ति तस्मात् सर्वापकर्षणम् ॥' अ ध्वरकल्पाया हि प्रथमनिर्वापापकर्षे सति प्रधानकालबाधो नियमविधानं च कल्प्यते, इति तस्यैवापकर्षं समाश्रितः । अत्र तु अग्नीषोमीययूपापकर्षेऽपि अस्ति प्रधानकालबाध अभ्यासविधिश्च । तस्मात् अविशेषात् सर्वयूपापकर्षे इति अवगम्यमानत्वात् अवक्ष्यमाणविशेषो यूप सर्वेषां तन्त्रम् ।

सोम-- आज्यानवत् विशेषग्रहणाभावात् इह न तन्त्रं इत्युदिष्टं स्यादिति । सूत्रे तन्त्रमिति शेष ।

वि--'अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ।, उपदेशातिदेशाभ्यां भिन्नो, नो कालभेदन ॥'

भाट्ट-- ज्योतिष्टोमेऽग्नीषोमीये उपदिष्टो यूप सवनीयानुबन्ध्ययोश्चातिदिष्ट । ■ किं सर्वार्थमपि तत्र उत भेदेनेति चिन्तायाम्, 'दीक्षासु यूपं छिनत्ति' इत्यनेन विहितस्य दीक्षाकालस्य गुणत्वेनोद्देशेन विधानादुद्देश्यस्य च प्रकृतिविकृतिसाधारण्येन ग्रहण उपदेशातिदेशयो अविशेषेण, उत्पन्न प्रातिस्विकत्वेऽपि अग्नीषोमीययूपच्छेदनस्यैव दीक्षाकालविधि, विशेषतश्चाध्वरकल्पान्यायेन (५।१।१०) तस्यैवोपस्थितत्वात् तस्यैव दीक्षाकाले अपकर्ष इति तस्याग्नीषोमीयान्ते अपवर्गात् सवनीयादौ यूपान्तरकरणम् । इति प्राप्ते, दीक्षाकालस्य न देशपूर्वप्रयुक्त तदुपस्थापकानुष्ठानसादेश्याभावात्, अपि तु प्रकरणात् ज्योतिष्टोमापूर्वप्रयुक्त सत् तस्मिन् साक्षाद्विधेययोगात् तदीययूपं विधीयते । तदीयत्व च सर्वेषाम् विशिष्टमिति सर्वार्थत्वसिद्धि । वस्तुतस्तु यूपोद्देशेन विहितस्य कालस्य द्विरुक्तत्वप्रसङ्गात् व्यभिचरितक्रतुसम्बन्धादेव देशार्थलक्षणे कारणाभावात् ज्योतिष्टोमार्थत्वानुपपत्तेर्दीक्षे एवोपदेशोऽपि सवनीयादावतिदेशेन तत्प्राप्तिसमत्वात् कालान्तरत्वादेन यूपतन्त्रत्वम् । अवश्यं हि सर्वेषामुद्देश्यत्वादिनाऽपि कालान्तरत्वादेव यूपतन्त्रत्वम्, अन्यथा एकस्मिन्नपि काले यूपत्रयापत्ते । वायव्यादिपशौ तु परप्रयुक्तदीक्षाभावादेव कालोप । यूपच्छेदनादिकं तु 'गुणलोपेऽपि मुख्यस्य क्रिया स्यात्' (१०।२।२७।६४) इति न्यायात् कार्यमेव ।

मण्डन-- 'सत्र यूपः स्यात् पशूनां त्रयाणाम् ।'

शङ्कर-- 'सोमाङ्गपशुयूपैक्यम् ।'

● ब्राह्मणेषु उपसत्कालीनं सुब्रह्मण्याह्वान प्रधानभेदाद् भिद्यते । इति नेत, पूर्वकालीनतया यूपन्यायेन तन्त्रत्वात् । वि ११।३।१०

● यूपपदस्य, तदर्थस्य च अलौकिकत्वेऽपि, प्रसिद्धपदसमभिव्याहारेण व्युत्पत्ति सम्भवति । वि १।३।१०

● यूपपरिव्ययणप्रभृतीनामविद्यमानपरिधानप्रधान प्रायश्चित्तानुमार्गेषु । भा १२।२।१०।२६

● यूपपरिमाणप्रसङ्गेन दैर्घ्यमुपगम्य । सङ्कर्ष १।४।२६

● यूपपरिव्याणे अन्वारम्भ नियमाय होता 'युवा सुवासा' इति मन्त्रमनुवदति । वि ३।८।११, ● यूपपरिव्याणे 'परिवीरसि' इति मन्त्रमाध्वर्यु करोति । ३।८।११, ● यूपपरिव्याणं यूपधर्मो न पशुधर्म । ३।८।११, ४।१।९ ५।२।५, ● यूपपरिव्याणं स्थानाध्या यूपस्य वाह्यम् । यूपपरिव्याणकरणम् न होता पत्नीयं कोण्ड प्रायिताम्यने अग्नीषोमीये पशौ । ३।८।११ ● यूपपरिव्याणे कुण्डपायिनामयने आध्वर्यव करणमन्त होता कुर्यात् । होता तु कश्चिद् होतृपुरुष कुर्यात् । बहिरङ्गो वा कश्चिन् । भा ३।८।१०।२१ । कुण्डपायिनामयने होतृपुरुषाणां अन्यानामपि चमसात् कार्यान्तरयागेन दर्शेन । टिप्पण्याम्

तदङ्गतया यावद्यूपं वेदेरुद्धननादिकं न कर्तव्यं सिद्धान्ते । पूर्वपक्षे तु वेदङ्गतया वेदेः यूपमानाङ्गत्वात् यावद्यूपं उद्धननादिकं कर्तव्यमिति । सूत्रार्थस्तु यथा दीक्षादक्षिणं वचनात् प्रधानार्थं तथा वेदिरपि वचनात् यूपार्था इति । एवं च पूर्ववत् प्रत्युदाहरणात् संगतिर्बोध्या ।

वि— ' अन्तर्वेदि मिनोत्यर्धं यूपाद्यमुत लक्षयेत् । वेदौ यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥, बहिर्वेद्यर्ध-मित्येतद् वाक्यं भिन्नेन तद्विधौ । मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते ॥ '

भाट्ट-- दर्शपूर्णमासयो. ' होतुः अन्तर्वेद्येकः पादो भवति बहिर्वेद्येकः ' इति श्रुतम् । तथा सोमे अग्नीषोमीयपशुप्रकरणे श्रुतम् ' अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि ' इति । तत्र अन्तर्वेदिदेश. एव तत्तच्छब्देन विधीयते, उत अन्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वा इति चिन्तायाम्, लक्षणायां प्रमाणाभावात् अन्तर्वेदिदेश एव एकपादोद्देशेन यूपार्धोद्देशेन च विधीयते, तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेश. प्राप्त एवानूद्यते । इति प्राप्ते, आद्योदाहरणे तावद्वितानाद्यनाधारा दार्शिकया वेदे. एक पादोद्देशेन विधौ एकस्यान्योद्देश्यविशेषणस्याविवक्षाऽऽपत्तेः । ' बहिर्वेद्येक. ' इत्यस्यानुवादायोगात् विधाने वाक्यभेदापत्तेश्च या देशविशेष एव लक्षणया होतृस्थानोद्देशेन विधीयते । न च देशविशेषलक्षणापेक्षया लाघवादन्तर्वेदित्वविशिष्टबहिर्वेदित्वस्यैव लक्षणया विधानमिति वाच्यम्, विशिष्टविशेषणभावे विनिगमनाविरहात् । द्वितीयोदाहरणेऽपि सौमिक्या वेदेर्दर्शनेनाङ्गप्रधानार्थत्वस्य स्थापितत्वात् ( ३।७।१ ) यूपार्धद्वयेऽपि वेदेः प्राप्तत्वादर्धोद्देशेन तद्विधाने परिसंख्यापत्तिः । न च अग्नीषोमीयादिपश्वङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमानाङ्गत्वे प्रमाणाभाव., प्रयोगविधिना अङ्गानामेवाङ्गाना प्रयोगविधानात् । अन्यथा तदङ्गप्रवर्ग्यपुरोडाशादिहविरासादनादौ वेद्यादेरनापत्तेः । न च वाक्येन वेदेर्यूपार्थाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसंख्यानापत्तिः, पर्युग्निकरणसमर्थाग्न्याधानार्थवादस्य ' इति वक्ष्यामहे ' इत्यस्य सर्वमात्रार्थत्वे अनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः । न चैवमपि फलतः परिसंख्यानात् त्रैदोष्या-



नापत्तिः, प्राकरणप्रमाणप्रतिबन्धाभावेन शाब्दपरिसंख्यानापत्त्या त्रैदोष्यावश्यकत्वात् । अतो वर देशविशेषलक्षणैव युक्ता । न च अर्धोद्देशेन बहिर्वेदिमात्रविधानात्, अर्धान्तरे च अन्तर्वेदेः प्राप्तत्वेन अनुवादोपपत्तेर्न लक्षणाऽपेति वाच्यम् । अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्, तथापि अन्तर्वेदिपदे एव लक्षणाङ्गीकारात् बहिर्वेदेरपि विशेषणत्वेन वाक्यभेदापत्ते. । ' अर्धमन्तर्वेदि अर्धं बहिर्वेदि ' इति पदैर्लक्षितदेशविशिष्टमानस्यैव यूपोद्देशेन विधानम् । तत्प्रयोजनं तु यूपैकादशिन्या वेदेरवृद्धि. । वस्तुतस्तु देशविशेषलक्षणायामपि सामान्यतः प्राप्ते विहिताया वेदेर्विशेषेण अर्धप्राप्त्युपपत्तेः यूपैकादशिन्यामपि तदर्थं वेदिवृद्धिरावश्यकी । अत एव ' यावद्यूपं वेदिमुद्धन्ति ' इति कल्पसूत्रकारवचनमपि संगच्छते । अतोऽन्यथोक्त मृग्यम् । देशविशेषलक्षणैव वा आश्रीयतेति ध्येयम् ।

मण्डन-- ' वेदिर्यूपगुणो नहि । '

शंकर— ' वेदेर्यूपाङ्गता न च । '

* यूपशब्द. एकादशिनीगते उपशये सम्प्रदायविदेशो न भाति । भा. ७।३।१२।३१–३४. * यूपशब्दः कर्मविशेषवचन' । शा. १।२।१।२२ पृ १३६. * यूपशब्द. ओपणादिक्रियानिमित्त. । स यत्र श्रूयते तत्र ओपणाद्य. क्रिया प्राप्यन्ते । भा. ७।३।११।२८. * यूपशब्दस्य पश्चात् श्रुतत्वेन वाजपेयशब्दं प्रति गुणत्वमुपवर्ण्यते । सु पृ. १०४९. * यूपशब्दस्य शास्त्रीयच्छेदनादिक्रिया प्रवृत्तिनिमित्तम् । वि. ७।३।११. * यूपशब्दे तु ( ओपणादि ) क्रियानाशोत्तर प्रयोगेऽपि तत्कृतादृष्टविशिष्टकाष्ठवाचित्वात् न शुद्धजातिवाचित्वं इति युक्त एव तत्र संस्कारातिदेश. । वस्तुतस्तु यूपकार्ये स्वरुस्थाने विधानात् यूपशब्दस्य न संस्काराद्यतिदेशम् । भाट्ट ७।३।९.

* यूपसंस्कार. अथ ' अग्निष्टे ऐकादशिना रशना परिवीय वासयति ' इति वाक्योक्त., इति पूर्वपक्ष । अग्निष्ठाधिकरणत्वेन परिव्याणकरणेन वाससा रशना. संस्कुर्यात् इति वाक्यार्थ. येन रशनासंस्कारोऽयम् । संकर्ष. १।४।१२, १७ * यूपसंस्कार' । तत्र पशुसमुच्चये

ज्योतिष्टोमे । भा. ११।३।८।५–७, * यूपसंस्काराः प्रोक्षण अञ्जन उच्छ्रयणं परिव्याण च । ११।३।८।५, * यूपसंस्काराणां यूपनाम्ना यूपैकादशिनीगते अपवादे नातिदेश. । ७।३।१३।३३–३४.

* यूपसंस्कारकर्म गत्तेगतस्य न कर्तव्यम् । भा. १०।३।६।१३.

* यूपस्तुत्यर्थः आदित्यशब्दः 'आदित्यो यूपः' इति । वि. ११।८।१५, * यूपस्तुत्यर्थः यजमानशब्दः 'यजमानो यूप.' इति । ११।८।१५.

* यूपस्थापने अग्नीषोमीयपशौ 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति लौकिकवेदेत एव विधीयते न तु संस्कृतवेदिमानो विधीयते । वि. ३।७।६ .

* यूपस्पर्शे लौकिके अग्नीषोमीये पशौ यागसमाप्त्युत्तर प्रायश्चित्तम् । ९।३।३।१९. मीको. पृ ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तर०' इत्यत्र अधिकरण द्रष्टव्यम् ।

*'यूपहस्तिनो दानमाचरन्ति' इति स्मृति प्रमाणम्, इति प्राप्ते, अप्रमाणं स्मृतिः, (हेतुदर्शनात्) अशक्य न्मूलत्. । लोभादाचरितमन्त. वे चित्, तत एषा स्मृति.। भा. १।३।३।४ । 'यूपहस्तिशब्देन यूपपरिमाणगादर्क (उच्यते)' । वा पृ. १८६

* यूपीयवृक्षधर्माः 'समे जातमजाप्यास बहुपर्ण शाखमप्रतिशुष्कानममुषिरं' इत्यापस्तम्ब । वि १०।३। ३३.

* येयजामहं विशिरित्वमानं अनूत्, पर्युदासार्थो विधीयते । नानुयाजेषु इति । अथवा येयजामह शमाव्येन प्राप्यमाण एव अनुयाजप्रस्यये विशेष्यते, अनुयाजवर्जं येयजामहं करोति इति । टुप्. १०।८।३।४. * येयजामहस्य नानुयाजेषु इति पर्युदास. । येयजामहन्याय. । १०।८।३।१–८ मीको पृ. २४०४ 'पर्युदासन्याय ' इत्यत्र द्रष्टव्यम् ।

* 'योक्त्रेण पत्नीं सनह्यति' दर्शपूर्णमासयोः । तत् ज्योतिष्टोमे सौमिकेन प्राप्तमिदम् । भा. १२।१। १३।२६.

* योगः अग्निचयने । 'अग्निं युनज्मि शवसा घृतेनेति जुहोति । अग्निमेवैतद्युनक्ति' इति मन्त्रेण होमो योगः । स च सर्वान्ते वार्तिककारमतेन, प्रधानान्ते भाष्यमतेन । वि. ११।३।९. * योग. वस्तुतः रूढा बाध्यते । यथा रथकार इति । वाल. पृ. १४५. * योग रूढिः । कल्प्साऽवयवार्थपदमिलाने समुदायशक्तिकल्पनाऽयोग । सु. पृ. १२००. * योगेन अबलत्वा रूढि. बाध्यते । यथा प्रोक्षणीशब्दे । बाल. पृ. १४५

* योगाद्रूढिर्बलीयसीति न्यायः । योगाद्दिलम्य यौगिकात्प्रकृतिप्रत्ययोगलभ्यार्थबाधकादित्यर्थः । रूढिस्तु प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकशक्तिमा इति । माह्ली ९५९.

* योगजधर्मपरत्वमपि तुरीयामाहुः न्यायविद' । तत् योगिषु मानाभावेन असुन्दरम् । न च इतिहास पुराणादि मानम्, तस्य अन्यथासिद्धत्वात् । मणि. पृ. २९

* योगजन्यानिमानसाद्गुणे अर्थवत्वानि वर्णितानि । न तन्न्यायेवादत्वम् । वा १।३।८।२७ पृ. २८८.

* योगरूढः निर्मन्थ्यशब्दः, पङ्कजादिशब्दवत् । अग्निचयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । वि. ३।४।१०. * योगरूढानां पङ्कजादिशब्दानां नियतः पद्मादिः अर्थ । वा. ३।४।११३ पृ ९३३ टिप्पण्याम ।

* योगरूढत्वं (पदस्य) समुदायशक्त्या अवयवशक्त्या च एकार्थप्रत्यायकत्व पङ्कज इत्यादौ । मणि पृ २८

* योगविमोकौ (होमविशेषौ) अग्निचयने प्रधानादौ प्रधानापवर्गे च, न तु सर्वादौ सर्वान्ते चेति । भा. ११।३।९।१८ । (योगविमोकौ प्रधानार्थौ इति प्रधानार्थे विमोक इति भाष्यमतम् । अङ्गप्रधानार्थौ योगविमोकौ इति वर्तान्ते विमोकः इति वार्तिककारमतम्)। * योगविमोकौ द्वादशाहे अहर्गणे प्रत्यहं दर्शयति 'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति । भा. ११।३। ९।२०. * योगविमोकौ सौमिकौ अङ्गप्रधानार्थौ । रत्न. ११।३।९।१८.

* योगसिद्धिः नाम पर्यायः 'पर्यायो योगसिद्धिः' । भा. ४।३।११।२८. ० 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसं-(त्पत्त्यसं)योगित्वात्' (४।३।११।२८) । अत्र 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यविशेषश्रुतेः, एकस्मिन् प्रयोगे सर्वफलोत्पत्तिः पूर्वपक्षयित्वा, अर्थस्य फलरूपस्य कस्यचित् प्रयोगे सोपादानलक्षणयोगाभावात् (अनेन उत्पत्त्यसंयोगात् इति पाठः सूत्रे सिध्यति) अनुपादेयस्य चानिर्धारितसाहित्यत्वात्, सर्वशब्दस्य च प्रकृतार्थत्वात्, प्रकृताना च इष्टिसाध्याना पशुग्रामादीना अन्योन्यनिरपेक्षणाभ्यावगतेः, एकमेव फलं एकस्मिन् प्रयोगे भवति इति योगेन पर्यायेण फलसिद्धिः इति सिद्धान्तयिष्यते । सु. पृ. ८७३. ० 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' (४।३।११।२८) यान्यपि यथा विकल्पेन एतानि (द्वीपादीनि) अस्य फलानि भवन्तीति । वा. २।२।११।२८ पृ ५६३.

टु योगसिद्ध्यधिकरणम् । दर्शपूर्णमासादीना सर्वफलत्वेऽपि प्रतिफल पृथगनुष्ठानम् ॥

तत्र सर्वेऽविशेषात् । ४।३।११।२७ ॥

भाष्यम्— एवं काम्यप्रयोगोदाहरणेषु एतदुक्तम्, प्रधाने सर्वकामाना विधिरिति । इदमिदानीं संदिह्यते । किं सकृत्प्रयोगे सर्वे कामाः, उत पर्यायेणेति । किं प्राप्तम् ? सकृत्प्रयोगे सर्वे कामा इति । कथम् ? सर्वेषा कामाना दर्शपूर्णमासौ निमित्तम्, ज्योतिष्टोमश्चेति । निमित्त चेत् सर्वेषा कामानाम्, कोऽत्र तस्य कामो न भविष्यतीति । तस्मात् यौगपद्येन सर्वे कामा इति ।

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । २८ ॥

भाष्यम्— न चैतदस्ति सर्वे युगपत्कामा इति । पर्यायो योगसिद्धिः । पर्यायेण भवेयुः कामा इति । कुतः ? अर्थस्य उत्पत्त्यसंयोगित्वात् । अर्थो ह्यो कामा नाम, न सर्वे एव युगपदुत्पद्यन्ते । अशक्यो युगपदुत्पत्तेः सर्वेषाम्, निरोधात् । अथवा, उत्पत्त्यसंयोगित्वादिति । न कामानामेतदुत्पत्तिवचनम् । उत्पाना लक्षणत्वेन वचनम् । ये सर्वे कामास्तेभ्यो दर्शपूर्णमासौ ज्योतिष्टोमश्चेति । न सर्वे कामा कर्मणः श्रूयन्ते, ये सर्वे कामास्तेभ्यो हि कर्म विधीयते । तस्मात्र कामाना साहित्य गम्यत इति ।

टुप्— कामानामुद्दिश्यमानत्वात् इतरेतरयोगाविवक्षा । तदुद्देशेन ज्योतिष्टोमो विधीयमानः एकमेव फलमेकस्मिन् प्रयोगे साधयति । न तु यौगपद्येन सर्वाणि, अनुपादेयत्वाच्चैषाम् । न चाप्यप्राप्तविशेषणत्वम्, कामनया विनैव गमनात् । यद्यपि कामना अनेकविषया उत्पन्ना तथाऽप्येकैकोद्देशेन कर्मानुष्ठानम्, कर्मणस्तथा सामर्थ्यात् । अथवा कामोत्पत्तौ निमित्ते ज्योतिष्टोमो विधीयते । कामाश्च भेदेनैवोत्पद्यन्ते । अतो निमित्तभेदान्नैमित्तिकस्याप्यावृत्तिः ।

शा— किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति, उत प्रयोगभेदेन इति संशये 'सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः । यादृक् निमित्तमेकस्य तादृगेवापरस्य हि ॥' कामनावशात् विशेषः, यदेव यदा काम्यते तदेव तदा भवति, नान्यत्, इति चेत्, न, असङ्गत्वात् । नहि कामना कर्मणः फलस्य वा अङ्गम्, येन तदभावे फलानुत्पत्तिः स्यात् । ननु उपादेयस्य कर्तुः विशेषणभूता कामना कर्माङ्गमेव, न कामिन उपादानम् । उद्दिश्य हि कामिनं कर्म उपदिश्यते इति षष्ठे वक्ष्यते । अत एव लिङ्गस्याविवक्षा ।

[ प्राभाकरास्तु, यद्यपि कर्मणि उपादेयस्य कर्तुः कामना न विशेषणम्, तथापि नियोज्यस्य विशेषण कामना । नियोगश्च नियोज्यगमनावी, नियोज्यो नियोग प्रति गुणभूतः । ततश्च नियोज्यविशेषण कामनाऽपि नियोगाङ्गम्, इति कामनाविरहे तत्कामनियोज्यरत्नाभावात् नियोगस्य तत्फलसाधनत्वमेव न स्यात् । नहि नियोगस्य स्वयं फलापेक्षया स्वर्गादेर्नियोगफलत्वम्, किन्तु तत्साधनत्वं विना तत्कामनियोज्यत्वानुपपत्त्या स्वर्गादेर्नियोगफलत्वम् । ततश्च कामनाविरहे तत्फलकनियोगासिद्धेः सर्व( फल- )यौगपद्यं दुर्घटम् । तदयुक्तम् । स्वर्गकामस्य नियोगं प्रति गुणत्वे तद्विशेषणलिङ्गविवक्षाऽऽपत्ते । अतः कामनायाः तद्विशेषणत्वमादाय फलानामयौगपद्यं दुर्वचं इत्याह ] योऽपि कर्मणि अनुपादेयस्यापि कामिनः अपूर्वं प्रति गुणभूत-

न च तत्र पदार्थस्मरणमात्रम्, न शाब्दबोधः इति वाच्यम् । 'पयसा सिञ्च' इत्यादावपि तथा वक्तुं शक्यतया शाब्दबोधमात्रोच्छेदापत्तिः । किंतु बाधनिश्चयस्य शाब्दभिन्नमेव प्रतिबन्धत्वम् । न चैवं प्रवृत्त्याद्यापत्तिः । प्राक्तनबाधेन प्रामाण्यशङ्कया एव ( अप्रामाण्यनिश्चयस्य वा—भे. ) जायमानमाने जननात्, अप्रामाण्यशङ्काकुलज्ञानस्य प्रवृत्तिं प्रति हेतुतया तदभावेन प्रवृत्त्यापादनासमर्थात् । तदुक्तं खण्डने 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति । इत्याहुः ।

वस्तुतस्तु एवं सति अयोग्यवाक्योच्छेदापत्तिः । 'वह्निना सिञ्च' इत्यादिवाक्येन पामराणां बोधानुदयात्, आलंकारिकाणामेव बोधोदयाच्च ( मीमांसकानां नैव वा भवति । —भे. ) वासनाविशेष एव उद्बोधको वाच्यः । एवं च उद्बोधकाभावविशिष्टबाधनिश्चयाभावस्य शाब्दबोधे हेतुत्वं युक्तं इति अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं युक्तमुत्पश्यामः । मणि. पृ. ६६–६८. * योग्यता न धर्मैव द्विपक्षया दोषापनयेन, गुणान्तरयोगजननेन वा भवति । [illegible] संस्काराः गुणान्तरमुपजनयन्ति । तदथ दोषनिर्घात करोति । शा. ३।८।३।९ पृ. ११६५. * योग्यता स्वार्थप्रतिपादने वाक्यस्य सहकारिणी । वि. १।१।७. * योग्यतायाः शाब्दबोधकारणत्वनिरासः । भाट्ट ३।२।६.

* योग्यताज्ञानं न शाब्दबोधहेतुः, अपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वमात्रम् । भाट्ट ३।१।६ पृ. १९०.

* योग्यत्वं समानप्रकरणे एकवाक्यत्वं च महाप्रकरणात् बलीयांसि विनियोजकानि । शा. ३।१।१४।२४

§ योग्यप्रयुक्तं साधनं कार्यसाधकमिति न्यायः । यथा—नाहं कर्म करोमीत्यभिमानशून्यतानुकूलत्वात्संन्यासस्य, तदपेक्षया परमेश्वराराधनार्थं करिष्यामीतीश्वरार्पणबुद्ध्या निरभिमानिना मुमुक्षुणा क्रियमाणत्वात् कर्म ज्यायः इति भावः । अत्र एतोक्तं भगवता 'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः' इति । भाट्टसी ५२८.

* 'योजनं तच्चतुष्टयम्' क्रोशचतुष्टयम् । ( 'हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् । तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥' ) । सु. पृ. १२८

§ योजनमात्रायां कावेर्यां मल्लबन्धनन्यायः । यथा कावेर्याख्याया नद्या योजनेन योजनपर्यन्तेन मात्राया मल्लस्य कैवर्तकस्य बन्धनं न युज्यते, तथा प्रकृतेऽपीत्यर्थः इति केचित् । अन्ये तु— मल्लो बाहुयुद्धकुशलस्तत्रत्यघोषभिमतयाऽयुद्धा मल्लो बन्धनं यथा योजनमात्राया तन्नामकनद्याः तथेत्याहुरिति । भाट्टसी. ५९.

* योनेः स्नायाः उत्तरयोश्च प्रथमेन संपादितत्वकुमरेव बृहद्रथन्तरयोर्गान ज्योतिष्टोमे । भा. ९।२।६।२५–२८.

* योनिग्रन्थः । योनिः साम्नामाधारभूता प्रथमा ऋक्, तत्प्रतिपादको ग्रन्थः । अयमेव 'छन्दोग्रन्थः' इत्युच्यते 'छन्दोग्रन्थः' इति च । वि. ९।२।१ वर्णकं २.

* योनिगतानां स्तोमानां उत्तरयोर्गानातिदेशः । ९।२।१०।३३–३७ 'स्तोमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* योनिसाम्नः उत्तरयोर्ग्रहणेन उत्तरयोर्गानोत्पत्तिकम् । ९।२।९।३१–३२. 'गानोत्पत्त्ययः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यौगपद्ये अपच्छेदयोः अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः । ६।५।१८।५१–५३. मीको. पृ. ४९७ 'अपच्छेदयौगपद्ये अदाक्षिण्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । * यौगपद्येऽपच्छेदयोः प्रायश्चित्तम् । ६।५।१७।४६–५०. मीको. पृ. ४९८ 'अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* यौगिकं नामधेयं नातिदेशकम् । कथम् ? येनैव हि योगेन द्वादशाहे प्रायणीयशब्दः तेनैव गवामयनेऽपि । टुप्. ७।१।१।१२ पृ. १५३४. * यौगिकानि नामपदानि अनिरुद्धानि तेषां चिन्ता तत्प्रख्याधिकरणे । चा. १।४।३।४ पृ. ३३२, सु. पृ. ६३०. * यौगिकानि प्रायणीयादिपदानि न धर्मातिदेशकानि इति सप्तमे

( ७।३।२ ) वश्यम्. । तन्त्र. ५।३।९।२१–२५. ● यौगिको निर्मन्थ्यशब्द । वि. ३।४।१०, ● यौगिकः प्रोक्षणीशब्दः । ११०।९. ● यौगिकाः । अवयवार्थसमन्वितयत्किंचिन्मात्रवचनाः यौगिकाः, न सन्निहितवचनाः । प्रमाणान्तरेण तु विशेष्यमाणाः कचिद् व्याप्रियन्ते । यथा वैश्वदेव्यामिक्षा इति वदिस सन्निहितामामिक्षामेव अभिधत्ते । शा. ३।२।८ पृ. २२०. ● यौगिकाः शब्दाः प्रोक्षणीत्यादयः । जि. १।४।१०. ● यौगिके ( पदे. ) न सम्बन्धोऽभिधीयते इत्युक्तम् । समासस्यान्यथानुपपत्त्यानुमीयते । वा. ३।३। ७।१८ पृ ८१४, ● यौगिके शब्दे. द्रव्यमभिधीयते । 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । नहि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात् ॥' यदि एकहायन्यादिभि शब्दै सम्बन्धोऽभिधीयेत, ततो नोद्राक्षिरन् । न तु एतैः सम्बन्धोऽभिधीयते । कथम् ? अतिगौरवात् । इह हि सम्बध्यमान वा अभिधेय कल्प्येत, तद्विशेषो वा । यदि तावत् सम्बध्यमानम्, तत सर्वयौगिकानां एकविषयोपनिपातात् पर्यायत्वप्रसङ्ग । अथ सम्बन्धविशेष तत्तस्य स्यात् विशेषाभावात् अवश्य सम्बन्धिद्वय एव भेदोऽभ्युपगन्तव्य । सम्बन्धोऽपि च अनभिधीयमानो न शक्नोति अभिधीयमान सम्बन्धिनं व्यवच्छेत्तु इत्यवश्य सोऽपि अभिधातव्य । न चैकस्मिन् सम्बन्धिनि सम्बन्धोऽवतिष्ठते । न च तस्मादेव अन्यस्मात् व्यवच्छिन्न प्रतीयते इति उभावपि ( अनुयोगिप्रतियोगिनौ ) अभिधातव्यौ । तत्र गोमान् इत्येक सम्बन्धी गोशब्देनाभिधीयते । द्वितीयस्य न कश्चिदभिधाता दृश्यते । तेन मतुपा विशिष्ट सम्बन्धमभिदधता वक्तव्य अन्य सम्बन्धिन एवमनुक्त्वा अभिधातु ( तद्विषयविशिष्ट सम्बन्ध ) अशक्नुवता, नियोगत सोऽप्यभिधातव्य. । तत्रश्च तदभिधाय सम्बन्धाभिधाने अतिगौरवं स्यात् । ३।१।६।१२ पृ. ६७५ ● यौगिकानां अवयवार्थविशिष्टयत्किंचिन्मात्रवाचित्वेन, सन्निहितवाचित्वे प्रमाणाभावात् । भाट्ट. ३।२।८. ● यौगिकानां वाचिवाचित्वाभाव. । सु पृ. ११००. ● यौगिकानां द्रव्यवचनत्वं वार्तिके ( ३।१।६ ) साधितम् । सोम. ३।२।६. ● यौगिकानां पदानां सन्निहितमात्रवाचकत्वं आग्नेय्यधिकरणे निराकृतम् । ( पार्थसारथिना ) । शा. ३।२।६. ● यौगिकानां शब्दानां अवयवयोगवतीषु सर्वासु व्यक्तिषु साधारण्येन प्रवृत्तानां लक्षणभूत-प्रयोग यवस्थापक-धर्मानपेक्षात् प्रयोगमात्रात् व्यवस्थितविषयत्वावधारणाशक्तिः । सु पृ ११००. ● यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात् । ( मीन्या. समाख्यानिरूपणावसरे ) 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात् ॥' वा. ३।१।६।१२ पृ. ६७५, ● यौगिकानां शब्दानां सम्बन्धाभिधायित्वम् । ३।१।६।१२ पृ ६७४. ● यौगिकानां सम्बन्धिमात्राद्यादिनैव सन्निहितपरत्वम्, न स्वत । सोम ३।१।१८ पृ. ९१०. ● यौगिकी एव समाख्या विनियोगे प्रमाणम् । वा. ३।३।६।११ पृ ८३०.

● यौगिक-अयौगिकत्वम् । मकलश्च राजेतिशब्द' राज्ये अनुप्रविष्ट इति स यौगिको युक्त , न तु राज्य शब्दो राजनि अनुस्यूत शब्द इति अयौगिकत्वम् । वा २।३।२।३ पृ. ५८५.

● यौगिकत्वं ( पदस्य ) अवयवशक्त्या अर्थप्रत्यायकत्व चित्रगुः इत्यादौ । मणि पृ. ७८.

● यौगिकनामातिदेश । बाल पृ ११७-१९

● यौगिकरूढत्वं ( पदस्य ) समुदायशक्त्या, अवयवशक्त्या च विशिष्टार्थप्रत्यायकत्व पङ्कज इत्यादौ । मणि पृ ७८

● यौगिकशब्दस्य विनियोगहेतुत्व अस्वीकृते । सु पृ. ११९१, ● यौगिकशब्दानां व्यवस्थितविषयत्वम् । पृ ११२२ ● यौगिकशब्दानाम् । 'सर्वत्र यौगिकै शब्दैर्द्रव्यमेवाभिधीयते' इति वार्तिकात् ( वा. पृ. ६७५ ) सर्वेषा कृत्तद्धितसमासरूपयौगिकशब्दानां द्रव्ये शक्तिमाहु मीमांसकैकदेशिन । अनिर्ज्ञातशक्तिके देश-यौगिकपदप्रसिद्ध वार्तिक इति परे । मणि. पृ १४९. ● यौगिकशब्दानां स्वावयवार्थान्वयार्हवस्तुवाचित्वम् । सु पृ. ११२२.

* **यौगिकशब्दद्रव्यवचनतावादार्थः** 'अरुणान्यायः' इति भाष्यीयविवरणे मीको. पृ. ६०५ द्रष्टव्यम् ।

* यौगिकश्रुतिजनितविशेषप्रत्ययेन सन्निविष्टस्य लौकिकप्रकरणस्य बाध्यमानत्वम् । चा. ३।२।८।२१ पृ. ७७४.

* **यौधाजयं** साम बार्हते तृचे भवति पूर्वा बृहती 'पुनानः सोम धारयापो वसानो०' । उत्तरे विष्टारपङ्क्तिः 'दुहान ऊधर्दिव्यं०' । प्रग्रथनेन तिस्रो बृहत्यः । भा. ९।२।६।२५ वर्णकं २. * यौधाजयं साम माध्यंदिने गीयते । तदाधारश्च प्रगाथो बार्हतः । 'पुनानः सोम०' इति बृहती 'दुहान ऊधर्०' इति सतोबृहती । प्रग्रथनेन च तिस्रो बृहत्यो भवन्ति, तासु यौधाजयं गेयम् । वि. ९।२।६ वर्णकं २. * यौधाजयस्य रौरवस्य च साम्नोर्गानं बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे कार्यं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २. मीको. पृ. १८१९ 'ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव०' इत्यत्र द्रष्टव्यम् ।

* **यौप्यस्तु विरोधे स्यात् मुख्यानन्तर्यात् ।** १२।२।११।२७ ॥

पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जन्ति' इति श्रुतम् । अस्मिन् परिधौ परिधिधर्मा यूपधर्माश्च प्राप्ताः । तत्र विरोधे सति यौप्यः यूपधर्मः स्यात् कर्तव्यः मुख्यानन्तर्यात् । मुख्यः पशुः तस्यानन्तर्ये यूपः, सन्निपातित्वात् । परिधिस्तु बहिरङ्गः । तस्मात् धर्मविरोधे परिधौ यूपधर्म. तक्षणं उच्छ्रयण निखननं इति कर्तव्य. स्यात् इति पूर्व· पक्षः ।

**तुल्यो वा सस्य तत्र विधानात् । २८ ॥**

चातुर्मास्येषु पशुमत्सु 'परिधौ पशुं नियुञ्जन्ति' इति श्रुतम् । तेन परिधिरेव यूपार्थं भवति । तत्र परिधौ विरोधस्थले यूपधर्माः कर्तव्या इति पूर्वपक्षे सति सिद्धान्तसूत्रम् । वा–शब्दः पूर्वपक्षव्यावृत्त्यर्थः । इतरः परिधित्वेन सार्कं अविरोधी एव यूपधर्मः कर्तव्य, तस्य यूपकार्यत्व, तत्र परिधौ विधानात् 'परिधौ पशु नियुञ्जन्ति' इति । तस्मात् तत्र तक्षणं उच्छ्रयणं निखननं च न कर्तव्यम् ।

**उभयोश्चाङ्गसंयोग. । २९ ॥**

पशुमत्सु चातुर्मास्येषु 'परिधौ पशु नियुञ्जन्ति' इति श्रुतम् । परिधिधर्मा यूपधर्माश्च कर्तव्या । धर्मविरोधे तु परिधिधर्म एव कर्तव्यो न यूपधर्म. तक्षणादिः । यतः उभयो. धर्मयो· अङ्गेनैव धर्मस्य संबन्धो प्रधानेन । ततश्च नात्र अन्तरङ्गबहिरङ्गभावस्योपयोग. । तस्मात् धर्मविरोधे परिधिधर्म एव कर्तव्यो न यूपधर्म इति सिद्धान्त. । के.

र

* **रक्तपटन्याय.** । यदा तु निराकाङ्क्षेऽपि वाक्ये आकाङ्क्षामुत्पाद्य एकवाक्यता क्रियते, तदा रक्तपटन्यायप्रवृत्ति· । यथा ज्वरोऽस्तीति वाक्यस्य निराकाङ्क्षस्यापि कीदृशः इत्याकाङ्क्षामुत्थाप्य 'रक्त.' इत्यनेनैकवाक्यता क्रियते, तथा प्रकृतौ दर्शपूर्णमासादीनां स्वप्रकरणस्थाङ्गै. निवृत्तोपकाराकाङ्क्षाणामनारभ्याधीनाङ्गै. विकृतौ चातिदिष्टाङ्गैः परिपूर्णानां समभ्यासादिभि. सहोत्थिताकाङ्क्षाविरहेऽप्युत्थापिताकाङ्क्षयान्वयः, इत्येव विनियोगस्य प्रकारः । साहस्री ५०१. निर्णीतिन्याय. । मीको. पृ. ११८५ । भा १२।२। ५।१४.

* रक्षोघ्नीतिनिगदनाम 'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत्' 'अमावास्यया निशि यजेत' इति ।

* 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति उपरवमन्त्रः प्रत्युपरवं आवर्तते ज्योतिष्टोमे । 'उपरवन्याय' मीको. पृ ११६० । भा. ११।४।१९। ५२–५३.

* रक्षितवन्तौ आज्यभागौ स्वस्त्ययन्या इष्टौ 'अग्ने रक्षाणो अंहस.०' 'रक्षा नः सोम विभतः०' इति । आश्वश्रौ. २।१०।५.

* **रजस्वलाव्रतानां** भूमिशयन–अस्नान–अमांसभक्षण–अनभ्यङ्ग–अनञ्जन– अनिर्देशन अकर्तन-अदन्त-

पवन-अनसच्छेदन-अरज्जुसर्जनादीनां नियमविधयानां दर्शपूर्णमासप्रकरणातिरिक्तत्रीवर्णनम् । वा २।३।७।१९ पृ. २२१.

● रज्जू द्वे प्रेङ्खफलकधनुर्धमे महाव्रते । दार्भ्यौ त्रिगुणे स्यानाम् । पद्म व्यायामे । सव्यावृता एका दक्षिणावृता चान्या । ताभ्यां प्रेङ्खच्छिद्रेषु कुर्यात् दक्षिणावृतया दक्षिणतः, सव्यावृतया उत्तरतः, द्विगुणे प्रोते कुर्यात् रज्ज्वोः अन्ताश्च बीचपान्तयोः भिः प्रदक्षिण पर्यन्त ऊर्ध्वग्रन्थि निरुक्यं वतानि । ऐआ. ५।१।३ (सायणभाष्यम्).

🕮 रज्जुसर्पन्यायः । यथा रज्ज्वोरज्ञानतया, सर्पात्मना भानम्, ज्ञानात्तु स्वरूपेण, तथा ब्रह्मणोऽनवबुद्धस्य सप्रपञ्चत्वेन, बुद्धस्य च निष्प्रपञ्चत्वेन भान न मानान्तरविरुद्धमित्यर्थः । माहली. १६४.

● रत्नपरीक्षायाम् । 'यथा रत्नपरीक्षायां साध्वसाधुपरिज्ञानम् । तथा व्याकरणादिभिर्दं साधुशब्दनिरूपणम् ॥' भा. १।३।८।२७ पृ. २८१.

● रत्निनां हवींषि राजसूये इष्टिनिवृत्तिः । तैस. १।८।९ इत्यत्र एकादश हवींषि उक्तानि तैब्रा. १।७।३ इत्यत्र 'द्वादशैतानि हवींषि भवन्ति' इत्युक्तम्, 'त्रयोदश रत्निनां हवींषि' इति मन्त्रपाठः (१३।८।२)। नि. १०।३।१७, ● रत्निनां हवि:षु मैत्राबार्हस्पत्यं 'स्वयङ्कृता वेदिर्भवति, स्वयन्दिनं बर्हिः, स्वयङ्कृत इध्मः' (तैस. १।८।९) इति । तत्र दृष्टोपकाराणां अङ्गानां अननुष्ठानं अदृष्टोपकाराणां तु अनुष्ठानम्, तक्षणलावादीनि न कर्तव्यानि, यद्दि स्मरणादीनि कर्तव्यानि । १०।१।११.

● 'रथ गच्छति' इति वाक्यार्थविचारः मीको. पृ १००० 'अर्थी भावना' इति निन्दी, मीन्या. मपद्वे च द्रष्टव्यः । ● वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाति, ऋग्भियुक्तं होत्रे, सामभिर्युक्तमुद्गात्रे'। भा १०। ३।२१।५४, ● रथेन यजुर्युक्तेन वाजपेये विहितेन, अध्वर्योरन्यादिभिरुपस्थानस्य न निवृत्तिः । १०।३।२१। ५४-५५.

● रथाक्षमात्राणि अन्तरालानि यूपैकादशिन्यादौ । मंकपे. १।४।२१. मीको पृ. ३२६७ 'यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरालानि' इत्यत्र द्रष्टव्यम् ।

● रथाक्षमात्रान्तरालता च यत्रैकादशिनी विहिता तत्र भविष्यति । वा. २।४।२।१६,

● 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इत्यत्र समाहारद्वंद्वः पूर्वपक्षे, तत्पुरुषः सिद्धान्ते । बाल. पृ. १४३.

🕮 रथघोषाधिकरणम् । वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्भमन्त्रयोर्बाध. ॥

प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।११ ॥

भाष्यम्— एष वा । अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति । तत्र श्रूयते 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति, दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति । अस्ति च प्रकृतौ 'उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति' इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः किं रथघोषेण दुन्दुभिघोषेण (च) यो नादः, स मन्त्रस्य निवर्तकः, यत् द्रव्यं तत् दर्भयोः, उतोभयमुभयस्य निवर्तकमिति । किं प्राप्तम् ? शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः । ननु तत्पुरुषनिर्देशोऽयम् । तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणम्, न स्वार्थेन निर्देशः । अथोच्यते । द्वन्द्वनिर्देशोऽप्ययं भवति । तथा यमन्यथा., न रथः परार्थं उच्चारिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगश्च साम्येन । तस्मात् घोषो मन्त्रस्य निवर्तकः, द्रव्यं दर्भयोरिति ।

टुप्. — 'रथघोषेण' इति रथो दर्भयोर्निवर्तकः, घोषो मन्त्रस्य । कुतः ? एवम् (रथश्च घोषश्च इति द्वन्द्वसमासपक्षे) स्वार्थो रथशब्दो भविष्यति । इतरथा (रथस्य घोषः इति षष्ठीतत्पुरुषपक्षे) घोषविशेषणं इति लक्षणा भवति, श्रुतिः स्वार्थः । रथशब्दो रथमेव ब्रवीति, घोषशब्दोऽपि घोषमेव । तत्पुरुषे तु रथः परार्थं दर्शयेत् । तस्मात् द्वन्द्वोऽयम् । ननु द्वन्द्वे द्विवचनं प्राप्नोति । उच्यते ।

अनुशासनवैयर्थ्यापत्तेः । इतरथा कर्मान्तादीनामपि तत्त्वेन गौणापत्तेः । अतश्च रथस्य घोषः उभयोर्दर्भमन्त्रयोर्निवर्तकः । न च शब्दत्वसामान्यात् मन्त्रस्यैव निवर्तकोऽस्त्विति वाच्यम् । सादृश्यस्य हि नियामकापेक्षायामेव नियामकता, प्रकृते चोपक्रमसमन्वयाज्ञाज्ञापनरूपकार्यैक्यसाधर्म्येन विहितो रथघोषो धर्मवाचाभिधानद्वारा ज्ञापकस्य मन्त्रस्य निवर्तकः, तथैव करणत्वरत् ज्ञापकस्य दर्भस्यापि निवर्तकः ज्ञापकरूपस्य कार्यस्य औपदेशिकशब्दलाभे शब्दान्तरातिदेशस्यैव अनुपपत्तेः । अत एव 'धेनुर्दक्षिणा' इत्यादावपि न सादृश्यस्य नियामकता । तस्मादुभयस्य घोषेणोभयोर्बाधः ।

मण्डन— 'दर्भमन्त्रार्थघोषोऽपि. ।' भाट्ट. । ३.

शङ्कर— 'रथघोषात् मन्त्रदर्भौ ।' भाट्टं । १.

* यत्तु केचित् बहुव्रीहौ अन्यपदार्थे निरूढलक्षणाम्, पङ्कजपदेऽपि पद्मादौ निरूढलक्षणापरो. योगरूढिपक्षदोषोच्छेदापातान् बहुव्रीहावपि तद्देव अन्यपदार्थे शक्तिः इत्युपपादितम् ( अरुणान्याके ), तन्न पङ्कजपदप्रतिपन्नस्या शक्त्यङ्गीकारे समाहारद्वन्द्वेऽपि समाहारे शक्त्यङ्गीकारापत्तौ रथघोपाधिकरणसिद्धान्तानुपपत्तिप्रसङ्गात् सर्वोत्तमम् । मी ३।६।५।१९.

* रथमुखे 'सुजनस्य पते' इत्यादयः इत्याहुतयः स्तु । संकर्ष २।८।२८. मीको. पृ. ३०६१ "सुजनस्य पते' इत्यादयो दशाहुतयः रथमुखे स्तु. " इत्यत्र द्रष्टव्यम ।

☞ रथघटकपाम्याय: । यथा- स्वे नियुक्ते गच्छे, ते मिलित्वैव रथं वहतः, वियुक्ते तु न शक्नुतो वोढुम्, परस्परस्नेहातिशयात्स्वतश्च हेतुः तथा प्रकृतेऽपि । साहस्री. ३९३.

* रथवत् ( गुनःस्वमैतन्यदम ) । यथा 'यजुर्युक्त रथमध्वर्यवे ददाति' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अध्वर्युधानाय अध्वर्युमात्रे नियमः ( एवमिहापि ) । भा. १०।७।४।१३.

* रथकारः अनैवर्णिक त्रैवर्णिको वा इति मतभेदः । तत्र किंचित् त्रैवर्णिकेभ्यो भिन्न जात्यन्तरम्, न तु शूद्रा. न वैश्या अधिकारः । भा. ६।१।१२।४४-५०.

* रथकारः 'माहिष्येण करण्यां तु रथकारः प्रजायते' । क्षत्रियात् वैश्यायां जातो माहिष्य —माहिषो वा उच्यते । 'माहिषोऽर्या–क्षत्रिययोः' इत्यमरः । 'शूद्राविशोस्तु करण.' इत्यमरः । वैश्यात् शूद्रायां करण, करणी । वि ६।१।१२. * रथकारः सौधन्वनापरपर्यायः वर्णविशेषः । रूढेः प्राबल्यात् 'रथं करोति' इति योगस्य दौर्बल्यात् न द्विजातिः । 'वर्षासु रथकारोऽग्नीनादधीत' । मीन्या * रथकारस्यापि आर्षेयवरणमस्ति । संकर्ष. ३।८।६. मीको. पृ २३८८ 'निषादरथकारयोरपि आर्षेयवरणमस्ति' इत्यत्र द्रष्टव्यम । * रथकारस्य आधानमात्रेऽधिकारेऽपि नोत्तरकर्मसु अधिकारः, निषादस्यापि । नह्याधान च नाग्निसंस्कारार्थं किन्तु लौकिकाग्निगुणक स्वर्गफलं स्वतन्त्रमेव प्रधानकर्म । ( 'निषादरथकारयोराधानादग्निहोत्र दर्शपूर्णमासौ च नियम्येते ' इति सत्याषाढश्रौतसूत्रम् । ३।१।१९ ) । मीन्या. * रथकारस्य करणैः सौधन्वनस्य नाम अनैवर्णिकस्य आधाने अधिकारः । ६।१।१२।४४—५०. * रथकारस्य सङ्कीर्णजातिविशेषस्य आधानमात्रे पर्यन्तं. । वि. ६।१।१२.

☞ रथकाराधिकरणम् । रथकाराधानाधिकरणम् । रथकारस्य सौधन्वनापरपर्यायस्य आधाने अधिकारः ।।

**वचनाद् रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् । ६।१।१२।४४ ॥**

भाष्यम्— आधाने श्रूयते । 'वर्षासु रथकार आदधीत' इति । तत्र सन्देहः किं त्रैवर्णिकानां अन्यतमो रथकारः, आहोस्वित् अनैवर्णिक इति । किं प्राप्तम् ? रथकारस्य अनैवर्णिकस्य आधानमेवन् । कुतः ? वचनात् । वचनमिदं भवति 'वर्षासु रथकार आदधीत' इति । नहि वचनस्य किंचिदलभ्यं नाम । सर्वशेषश्च अनैवर्णिकस्याधाने । ब्राह्मणराजन्यविशां तत्समाधानम् । परिशेषात् अनैवर्णिको रथकारः स्यात् ।

**न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् । ४५ ॥**

भाष्यम्— न्याय्यो वा स्यात् त्रैवर्णिको रथकारः रथकर्मणा विशेषेणोच्यते । शूद्रो हि असमर्थत्वात् प्रतिषिद्धः । तस्मात् त्रैवर्णिको रथकारः स्यात् ।

**अकर्मत्वात्तु नैवं स्यात् । ४६ ॥**

भाष्यम्— नास्ति त्रैवर्णिको रथकारः । प्रतिषिद्धं हि तस्य विद्योपार्जनम् । अत्रैवर्णिकस्तु अस्ति । तस्मात् वचनप्रामाण्यात् स आधास्यति ।

**आनर्थक्यं च संयोगात् । ४७ ॥**

भाष्यम्— ब्राह्मणादिषु वसन्तादयो नियता । तान् प्रति यथा उच्यमाना अपि असम्पादानयत्य प्राप्नुयुः । तस्मात् अत्रैवर्णिको रथकार इति ।

**गुणार्थेनेति चेत् । ४८ ॥**

भाष्यम्— एवं चेत् पश्यसि, नास्ति त्रैवर्णिको रथकारः, प्रतिषिद्धत्वात् विद्योपार्जनस्येति । गुणार्थेन कश्चित् भविष्यति रथकारः । यावदि जीवनं चैतस्य । वाक्येन तस्य इदमाधानं विधाप्यते ।

**उक्तमनिमित्तत्वम् । ४९ ॥**

भाष्यम्— उक्तमेतदस्माभिः, न निमित्तार्थानि एतानि श्रवणानीति ( २।३।३।४ ) । किमतो यदि न निमित्तार्थानि ? इदमतो भवति, प्रापकाणीति । प्राप्तिवचनात् तेषामाधानस्य, पुनः प्रापणमनर्थकम् । तेन गम्याधानं तस्य भविष्यतीति । अथोच्येत एतदेव निमित्तार्थं भविष्यतीति । नैतदेवमवकल्पते । वसन्तादि संयुक्तं तत्, कथमिव पर्यायेण सम्बध्येत । अपिच प्रापकपक्षे आधानं विधीयते श्रुत्या । निमित्तपक्षे पुनः पर्यायं विधातव्यं वाक्येन । श्रुतिश्च वाक्याद्बलीयसी इति । तस्मात् अत्रैवर्णिकस्येदमाधानमिति ।

**सौधन्वनास्तु हीनत्वात् मन्त्रवर्णात् प्रतीयेरन् । ५० ॥**

भाष्यम्— न तु सर्व एव अत्रैवर्णिको रथकारः । सौधन्वना इत्येष जातिवचनः शब्दः । ( सूत्र १ ) सौधन्वना नाम जातिरभिधीयते । हीनास्तु किंचित् त्रैवर्णिकेभ्यो जात्यन्तरम्, न तु शूद्रा, न वैश्या, न क्षत्रिया । तेषामिदमाधानम् । कथमवगम्यते ? प्रसिद्धे मन्त्रवर्णाच्च । मन्त्रवर्णो भवति ' सौधन्वना ऋभवः सूरचक्षसः ' इति । ' ऋभूणां त्वा ' इति रथकारस्य आधानमन्त्रः । तस्मात् सौधन्वना ऋभव इति । ऋभवश्च रथकाराः । अपिच ' नेमिं नमन्ति ऋभवो यथा ' इति ये नेमिं नमन्ति ते ऋभव इत्युच्यते । रथकाराश्च नेमिं नमन्ति । तस्मात् अत्रैवर्णिकानां ऋभूणां एतदाधानमिति ।

शा— रूढिबलेन योगबाधात् वचनबलाच्च, अविद्योऽपि अधिकारप्रतीतेरविधातात्, ' ऋभूणां त्वा ' इति च मन्त्रवशात् ऋभुसौधन्वनपर्यायस्य जात्यन्तरवाचकस्य रथकारस्य इदमाधानं विधीयते ।

सोम— अध्ययनविध्यर्थम् अविद्योऽपि असामर्थ्यादनधिकार इति प्रत्यवस्थानात् सङ्गतिः । नहि प्रामाण्यवत् अस्माभिः रथकारस्य क्रत्वधिकारोऽङ्गीक्रियते । तस्मात् अविद्युषः अर्थकर्म इदमाधानम् । तत्र विश्वजिन्न्यायेन कल्प्यफलम् । सूत्रार्थस्तु— वचनात् रथकारस्येदमाधानम्, तथा अस्याधानस्य अत्रैवर्णिकाधानापेक्षया परिशिष्टत्वात् अत्रैवर्णिकरथकारस्येदम् ।

वि— ' त्रिवर्णेष्विव रथकृत्सौ वा, आद्योऽस्तु योगतः ।, रूढ्यर्णां तत् तस्याऽऽधाने चर्यतुरुच्यते ॥ ' वैश्यायां क्षत्रियादुत्पन्नो माहिष्य, शूद्रायां वैश्यादुत्पन्ना करणी तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः । तथा च याज्ञवल्क्यः ' माहिष्येण करण्यां तु रथकारः प्रजायते ' इति । तस्य च रथकारस्य आधानकालो वर्षर्तुः ।

भाट्ट— त्रयाणां वर्णानामाधानं विधाय ' वर्षासु रथकार आदधीत ' इति श्रवणं । तत्र निमित्तपदार्थकल्पने गौरवापत्ते, ब्राह्मणादीनामेव रथकरणे निमित्ते आधानोद्देशेन कालविधिः । इति प्राप्ते, रथकारशब्दस्य प्रसिद्धिबलेन सौधन्वनापरपर्याये जातिविशेषे रूढत्वात्, तस्यैव कालविशिष्टाधानविधिः । न च तत्रापि योगेनैवोपपत्तौ रूढिकल्पनाया प्रमाणाभावः । रथमनुर्वत्यपि सौधन्वने प्रयोगेण तद्बाधात् । न च श्येनवाजपेयवत् ( १।४। ९।११ ) योगप्रामाण्यस्त्वनुपपत्ति, योग्ये ब्राह्मणादौ अप्रयोगेण रूढिकल्पनाया आवश्यकत्वात् । रथकरणेऽप्यतिच्छेदत्मत्वस्य कादाचित्कत्वाभावेन निमित्तत्वानुपपत्त रथकारपदवैयर्थ्यप्रसङ्गाच्च । अतः प्रसिद्धिबलात् सौधन्वन एव रथकारः । सुधन्वा च ' शास्तु वा वैश्यात् सुधन्वाऽऽचार्य एव च ' इत्यादिना उक्तत्रैवर्णिकात् निनिन्यून वेदार्थाधिकृतो जातिविशेष, न तु

* रथकाराधान अदृष्टार्थम् । भाट्ट. ६।४।३

* रथकारशब्दस्य रथकारिणि अवयवप्रसिद्धिसम्भवात् 'माहिष्येण करिण्यां च रथकारः प्रजायते' इति स्मृतेश्च अनुलोमविशेष 'सौधन्वनास्तु हीनत्वात् मन्त्रवर्णात् प्रतीयेरन्' इत्यनेन वा न्यायेन (६।१।५०) 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्याऽदध्यात्' इत्याधानमन्त्रवर्णात् 'सौधन्वना ऋभवः' इति च सौधन्वनशब्दसमानाधिकरणस्य ऋभुशब्दस्य 'त नेमिमृभवो यथा' इति मन्त्रवर्णात् रथकारविषयत्वप्रसिद्धेः 'ब्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥' इति सौधन्वनापरपर्याये सौधन्वनाख्ये जातिविशेषे, समुदायप्रसिद्धिसम्भवात् 'रथकार आदधीत' इत्यत्र समुदायप्रसिद्धिबलीयस्त्वाभिधान युक्तम् । सु पृ ४६७

* 'रथंतरं उत्तरयोर्गायति' इत्यत्रोत्तराग्रन्थवशेन गानम् । बिन्दु ९।२।८ * रथंतरं पवमाने भवेति विश्वजिति सर्वपृष्ठे । भा १०।६।५।१४, * रथंतरं पृष्ठं पवमाने विश्वजिति सर्वपृष्ठे । ७।३।३।८ * रथंतरं साम 'अभि त्वा शूर नोनुमः०' इत्यस्यां ऋचि गानम् । 'अभि त्वा शूर' इति बृहती योनिः, 'न त्वावाँ अन्यो०' इति सतोबृहती, तयोः प्रग्रथनेन ऋक्त्रयं भवति तत्र रथंतरं गातव्यम् । वि ९।२।६, * रथंतरं साम 'अभि त्वा शूर नोनुम०' इत्यस्यां योनौ उत्पन्नम् । २।२।१, * रथंतरं साम 'अभि त्वा शूर नोनुम' इति ऋचि गीयते । परन्तु 'कवतीषु रथंतरं गायति' इति विधिना 'कया नश्चित्र आ भुवत्' इत्यादिषु कवतीषु ऋक्षु गीयते । ७।२।१, * रथंतरं साम 'अभि त्वा शूर नोनुम०' इति तृचे गीयते । ९।४।३, * रथंतरं साम एकच्छन्दस्कं न भवति । उत्तराग्रन्थे तदाधारस्य पाठात् (उत्तरा ६८०–८१) तत्र प्रथमा बृहती द्वितीया च सतोबृहती । इत्येव च प्रग्रथनेन ऋक्त्रित्वं संपाद्यते । तदानीं उत्तरे ककुभौ भवतः । न तु तत्र इमास्तथीरम उत्तरार्चिककुभौ समानेतव्ये । ९।२।६, * रथंतरं साम । 'कवतीषु रथंतरं गायति' ।

स्वरादिविशेषानुपूर्वीमात्रस्वरूपं ऋगक्षरव्यतिरिक्तं यद् गानम्, तस्यैव रथंतरशब्दार्थस्य अतिदेशः, न तु ऋचः अतिदेशः । ७।२।१, * रथंतरं साम ज्योतिष्टोमे पृष्ठस्तोत्रे बृहता सह विकल्पितम् । ७।३।३, * रथंतरं साम ज्योतिष्टोमे माध्यंदिने सवने पृष्ठस्तोत्रेषु प्रथमम् । ९।२।६ वर्णक २, * रथंतरं साम विश्वजिति षडहात् प्राप्तम् । ७।३।२, * रथंतरं साम षडहे प्रथमेऽह्नि पृष्ठनिष्पादकम् । ७।३।३ * नहि कण्वरथंतरादयो रथंतरं इति निर्भीयन्ते । वा २।२।८।२२ पृ ५३१

* रथंतरस्य बृहतश्च धर्माणां अविरुद्धानां समुच्चयो वैरूपस्तोत्रे कण्वरथंतरे । ९।२।१६।४७ मीको पृ २३०१ 'कण्वरथन्तरे अविरुद्धानां०' इत्यत्र द्रष्टव्यम् ।

* रथंतरस्य बृहतश्च धर्माणां व्यवस्था तत्तत्सामगानकालेऽनुष्ठानम् । ९।२।१५।४५–४६ मीको पृ २९७७ 'बृहद्रथंतरधर्माणां व्यवस्था०' इत्यत्र द्रष्टव्यम् ।

* रथंतरस्य बृहतश्च स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरेव गानं ज्योतिष्टोमे । ९।२।६।२५–२८ मीको पृ १८२२ 'ज्योतिष्टोमे बृहद्रथंतरयो०' इत्यत्र द्रष्टव्यम् । * रथंतरस्य योनिः बृहती, 'अभि त्वा शूर०' इति । उत्तरा पङ्क्तिः 'न त्वावाँ अन्यो०' इति । भा ९।२।६।१५ * रथंतरस्य साम्नो योनिः 'अभि त्वा शूर०' (योनि २३३, उत्तरा ६८०) इति ऋक् । वि १०।८।२४

* रथंतरे गीयमाने 'अभि त्वा शूर ... ईशानमस्य जगतः स्वर्दृशम्' इति स्वर्दृक्शब्दोच्चारणकाले एव मीलनम्, इतरभागोच्चारणकाले तु समीलनं कर्तव्यं इति पूर्वपक्षः । स्वर्दृश इति शब्दोच्चारणात् प्रागेव समीलनम्, न तु सर्वोरमस्तुचे समीलनम्, इति सिद्धान्तः । वि १०।६।२ * 'रथंतरं प्रस्तूयमाने समीलयेत्, बृहति समुद्रं मनसा ध्यायेत्' अत्र समीलनं वाचनिकं यत्नस्था विधिः श्रौत । बाल पृ १०. * 'रथंतरे प्रस्तूयमाने समीलयेत् । (उद्गाता) स्वर्दृशं प्रति वीक्षेत' । अत्र स्वर्दृशं प्रति वीक्षणं कालार्थं संयोगः । न तु स्वर्दृक्शब्दवीक्षणयोः अङ्गप्रधानसम्बन्धः । प्रस्तावकाले यच्चक्षुः समीलितं तत् स्वर्दृक्शब्दोच्चारणकाले उन्मीलयेत् । भा १०।६।२।३ * 'रथंतरे प्रस्तूयमाने संमीलयेत्,

स्वर्दृशं प्रति वीक्षेत '। स्वर्दृक्शब्दोच्चारणादपि समील-येत् इत्यर्थः। इदमेकं वाक्यम्। स्वर्दृशं प्रति तु वीक्षेत न समीलयेत् इत्यर्थः। स्वर्दृक्शब्दोच्चारणवीक्षणयोस्तु नान्तर्विभागः। 'अभि त्वा' इत्यारभ्य 'अस्य जगतः' इत्यस्योच्चारणपर्यन्तं समीलनं कार्यम्, 'स्वर्दृशं' इत्यु-च्चार्यमाणे तु वीक्षेत न संमीलयेत्। उत्तरोऽस्तु ऋचो-र्वास्येव समीलनम्। वि. १०।६।२.

*रथंतराधिकरणम् ( प्रथमम् )। ज्योतिष्टोमे 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णाति' इत्यादिना ग्रहाग्रता गुणविधिः॥

गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात्। २।२।११।१॥

भाष्यम्— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तं प्रकृत्य श्रूयते 'यदि रथं-तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णी-यात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति। तत्र संदिह्यते किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथंतरसाम्नो बृहत्साम्नश्चेति। यदि रथंतरसामग्रहणेन बृहत्सामग्रह-णेन च ज्योतिष्टोमोऽभिधीयते ततस्तस्य ग्रहाग्रताविशेषः। अथ नाभिधीयते, ततः कर्मान्तरस्येति। किं तावत्प्राप्तम्? प्रकरणात् ज्योतिष्टोमस्य। इति प्राप्ते, उच्यते। गुणस्तु क्रतुसंयोगादिति। तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति ज्योतिष्टोमस्य इति। कुतः? क्रतुसंयोगात्। कथं तर्हि? कर्मान्तरस्येति। ननु ज्योतिष्टोमकर्मैवैतदेवंजातीयकं स्यात्, रथंतर-सामा बृहत्सामेति। नेति ब्रूमः। यदि न कृत्स्न-क्रतुसंयोगो भवेत् ज्योतिष्टोमस्य स्यात्। कृत्स्नक्रतुसंयोग-स्तु एषः। कथं कृत्स्नक्रतुसंयोगो भवति, कथं वा न कृत्स्नक्रतुसंयोग इति? यदि रथंतरसत्ता वा, बृहत्सत्ता वा निमित्तं ग्रहाग्रताविशेषस्य ततो न कृत्स्नक्रतुसंयोगः। रथंतरं बृहद्वा यदि सामानि, ततः ऐन्द्रवायवाग्रता शुक्रा-ग्रता चेति, ततो ज्योतिष्टोमस्य गुणविधिः। अथ रथं-तरसामसत्ता बृहत्सामसत्ता वा न निमित्तम्, ततः कृत्स्नक्रतुसंयोगः। यदि रथंतरसामेति कोऽर्थः? अय-मर्थः, यदि रथंतरं नाम अस्य विशेषणं भवतीति। कुत एतत्? समासपदसामर्थ्यात्। समर्थानां हि पदानां समासो भवति। सामर्थ्यं च भवति विशेषणविशेष्यभावे। असाधारणं च भवति विशेषणम्। तत्रायमर्थः, यदि रथंतरमेव साम, बृहदेव वा, नान्यदिति। ज्योति-ष्टोमस्य च बहूनि सामानि गायत्रादीनि। तस्मान्न ज्योतिष्टोमस्य वाचकौ एतौ शब्दाविति। तेन यद्यपि प्रकरणात् ज्योतिष्टोमस्य गुणविधिरिति गम्यते, तथापि तत् बाधित्वा वाक्येन रथंतरसाम्नो बृहत्साम्नश्च भवितुमर्हति। ननु यथा ज्योतिष्टोमो न रथंतरसामा, एवमन्योऽपि न रथंतरसामा कश्चिदस्ति। उच्यते। कर्मान्तरं रथंतरसामकं कल्पयिष्यति एतद्वाक्यम्, यदि रथंतरसामा सोमः स्यात्, इति। ननु नास्त्यत्र विधा-यकः शब्दः। उच्यते। अस्ति य एव स्यात् इति। आह। नैव विधातुं शक्नोति, यदिशब्दसम्बन्धात्। निगमानस्य निमित्तार्थेन एवंजातीयकः शब्दो भवति, न विधानार्थेनेति। अत्र ब्रूमः। यदेतत्, यदीदं वाक्यम्, यदि रथंतरसामा सोमः स्यादिति, अथान्यदपि वाक्यमस्ति, रथंतरसामा सोमः स्यादिति। यदयमन्तरवाक्यं तस्य अयमर्थः, अन्यथा गतार्थकस्य। यद्यदिको न शक्नोति विधातुम्। यत्, अवान्तरवाक्यं तत् विधास्यति। न च रथंतरसाम्नो बृहत्साम्नो वा भावो निमित्तत्वेन श्रूयमाणोऽपि अर्थवान् भवति। तस्मादविवक्षितो यदि-शब्दः। तस्मिंश्च अविवक्षिते पदद्वयमिदं रथंतरसामा सोमः स्यादिति शक्नोति रथंतरसामानं क्रतुं विधातुम्, अर्थवत्त्वमर्थकम्। अथवा, यदि शेषेणैकवाक्यता। अथवा, यथैतद्भवति 'यस्मा व्रात्यकं भुञ्जीत, यदि शालिं भुञ्जीत, दधि उपसिञ्चेत्' इति। एवंजातीयकेन वाक्येन शालिभोजनं विहितं भवति, एवमत्रापि विहितं द्रष्टव्यम्। यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति। कथं पुनः शालिभोजनं तेन वाक्येन विहितं भवतीति। उच्यते। व्यत्यासेन वाक्यार्थः कल्प्येत, यदि दध्युपसेचनमिच्छेत् शालिं भुञ्जीतेति। ननु न खलु, इच्छतेः परा लिङ्विभक्तिः उपलभ्यते, भिन्द्यातेर्हि वा परा समामनन्ति इति। भिन्द्यतेः खलु

सन्निधिसामान्तरविरोधात् । इदं हि क्रतुसम्बन्धेन श्रुतम् 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेन स्तोत्रेष्वन्तरति, गायत्र्यादीनि तु स्तोत्रेषु साक्षात् विधीयन्ते तस्मात् बलवन्ति । प्रकरणान्तरे तु प्रत्यक्षशिष्टं रथंतरं तेभ्यः श्रोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यन्वेषः । एवं च सम्प्रदायार्थविधानात् तत्प्रधानो बहुव्रीहिरनुग्रहीष्यते । अन्यथा हि उत्तरकर्मणस्य लोहितोष्णीषादिवाक्यगतम् श्रवणा परित्यज्येत । यदि च महाव्रतविधानेन सह एकदेकं वाक्यम्, ततस्तत्रापि रथंतरविधानं च, शनैरस्ताद-पूर्वभागाविधिनैव निस्तीर्यते । सोमः स्यादिति च सामन्तर्यात् तत्कर्तव्यतैव विधायको, रथंतरसामपरत्वनैरन्तर्यता तु व्यवहितकल्पनपैव स्यात् । सोमशब्देन च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृतिरेवायं भविष्यति । तस्मात् कर्मविधिः । इदमेव भाष्यकारो दर्शयति—'यदि रथंतरसामेत्यस्य कोऽर्थः ?' इत्यादिना । महाव्रतविशेषश्च वस्य एव तयोः वाक्येन अनारभ्यत्वेन वा भविष्यति ।

यद्यपि महाव्रतेषु अवान्तरवाक्यानि अप्रमाणम्, तथापि अर्थसंभवात् अविशिष्टे महावाक्ये अवान्तरवाक्याश्रयणात् विधिसिद्धेः अबाध. । ( यदिशब्द ) परित्यागात् वर अध्याहृत्य पूरणम्, इति मत्वा 'अथवा यदि गेच्छेत' इति दर्शयति । तत्रैतमनाऽऽश्रिताया वचेः प्रमाणत्वेन अध्याहारः, इति न स्वमनीषिकामात्र अभिहितम् । अध्याहारादपि स्वपदश्रुतिरेव व्यवहितकल्पनया श्रेयसी धर्मानाश्रयणात् इति मत्वा 'यदि क्षत्रिं भुञ्जीत' इत्युदाहृत्य पक्षान्तरं कल्पयति । परस्तु दृष्टान्तस्यैव अविद्धे. 'कथं पुन.' इति पृच्छति । 'स्वयंमेव सकथ.' ( कल्प्येत यदि दध्युपसेचन इत्यादि भाष्यम् ) 'कामप्रवेदने हि' लिङ् इच्छां प्रत्याययति इति सिद्धान्तविकरणम् । तत एव वाक्यार्थो भवति 'यदि ऐन्द्रवायवाग्रान् ग्रहान् ग्रहीतुमिच्छेत्, रथंतरसामानं नतु कुर्यादिति ।' तत्र यदिशब्दरहितम् 'सोम स्यात्' इति पदद्वय विधायकम् । 'ग्रहान् गृह्णीयात्' इत्येतत्तु यद्यपि अविधायकम्, तथापि इच्छार्थत्वात् 'यो हि यदिच्छति, स तत् करोति' इत्येव निमित्त लभ्यते । अथवा इच्छामप्युद्ध उपात्तं महामत्वं 'स्यात्' इति एवैन लिङ् विधास्यति । किंतु व्यवहितकल्पनयाऽपि अयं पक्षो भवन् बलवत्तरः इति मन्वानः 'अथवाहेतुहेतुमतोर्लिङ्' इत्युपन्यस्यति । तत्र 'सोम. स्यात्' इति हेतौ लिङ्, 'गृह्णीयात्' इति विधानेन । तेन एतदुक्तं भवति, रथंतरसाम सोमहेतुकान् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति । न च अक्रियमाणोऽसौ हेतुत्वं प्रतिपद्यते, इति अर्थात् सिद्धो भविष्यति इति । अथवा हेतुमति 'गृह्णीयात्' इति लिङ् । 'सोम. स्यात्' इति विधौ अनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात् सन्निधेश्च भविष्यति । तथापि एषोऽर्थः 'महाव्रतविशेषकारणभूतः सोमयाग. कर्तव्य.' इति । 'यदिशब्दपरित्यागो, रूढ्यध्याहारकल्पना ।, व्यवधानेन संबन्धो, हेतुहेतुमतोश्च लिङ् ॥' इति पक्षविकल्पसंग्रहश्लोकः । सर्वं चैतत् अर्थेऽर्थाधिकरणसिद्धान्ते एव उपयोक्ष्यते इति अत्र प्रपञ्चितम् । 'निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभूयते । न रथंतरसत्ता च निमित्ता क्रतुमत्त्ववत् ॥' प्रातःसवने हि महाग्रहा भवन्ति, माध्यंदिने रथंतरम्, न चानिष्पन्नस्य निमित्तता युक्ता । कारणपर्यायत्वात् निमित्तशब्दस्य, मम तु नैव किञ्चित् निमित्तम् । अथवा ननु । स च आवित एव विद्यते । जगत्सामा च न ज्योतिष्टोमः, इति 'जगत्साम्नि सामाभावात्' इति वक्ष्यते । अतश्च 'तत्सामान्यादितरेषु तथात्वम्' इति कर्मैतत्सत्यमिति ।

एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं, गुणवाक्यत्वात् । २ ॥

भाष्यम्—गुणान्तरात् पक्षः अन्यथा भवति । नैतदस्ति यदुक्तं कर्मान्तरमिति । कथं तर्हि ? ज्योतिष्टोमस्यैव महाव्रतविशेष इति । कुतः ? प्रकरणसामर्थ्यात् । नन्वेतदुक्तं वाक्यसामर्थ्यात् कर्मान्तरस्य रथंतरसाम्नो बृहत्सामप्राप्तेति । परिहृतमेतत् ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति । पुनरुक्तिं अनेकसामत्वात् ज्योतिष्टोमस्य, विशेषण रथंतरेण बृहता वा न प्रकल्पते इति । तदुच्यते । प्रकल्पते विशेषणम् । बृहद्रथन्तरयोरेकस्मिन्स्यात् ।

त्वमेव न प्रतीतम्। तदभावे च नाप्रतीतग्रहणं युक्तम्। भूतभविष्यद्वर्तमानानां च अनियमेन लोके वेदे च निमित्तत्वं दृष्टम्, इति रथंतरभविष्यत्त्वमचोद्यम्। यदपि च यत् एकान्तेन अवधारितम्, तत् निष्फलमेव। ज्योतिष्टोमप्रक्रमे च अवधारितमेकान्तेन रथंतरं प्रयोज्येत, इति सर्वैकल्पिकत्वात् क्रतुप्रक्रमे एव अवधारणात् अनवद्यगुणविध्यवगमाभिः 'एवमिदं सर्वमस्तु' इत्यवधार्य प्रवर्तितव्यम्, तद्वशेन प्रयोगसौष्ठवव्यवस्थात्वादिसिद्धेः। न च निमित्तं नैमित्तिकस्य स्वरूपनिधानेन उपकरोति, कथं तर्हि? ज्ञायमानत्वेन। तस्मात् अप्रयुक्तमपि भविष्यत् रथंतरं निमित्तम्। यदा तु एकदेशान्येनापि तेन विशेषितः क्रतुः निमित्तम्, तदा अमी वर्तते एवेति अविरोधः। न च हि. कालविशेषसम्बन्धेन उत्पत्तिः, येन अन्यतरविशेषणमेव निमित्तं ब्रूयात्। सर्वथा हि शक्यं दर्शयितुम् 'यदि रथंतरसामा सोमः भूतो भवति भविष्यति च' इति। तत्र इह अर्थवादेन एव विधायते 'यदि रथंतरं भविष्यति' इति। यत्तु जगत्साम सामान्यतो दृष्टमुक्तम्, तदयुक्तम्, तस्य एवंजातीयकेषु अप्रमाणत्वात्। अथवा प्रकरणे क्लिप्तक्रतुसंयुक्तप्रतिपद्विधानादिव जगत्सामसंभवात् तत् इति वैषम्यम्। अपि च तत्रापि नैव अपूर्वकर्मोत्पत्तिः, किं तर्हि? अप्रकृतस्य निगुणतो निमित्तत्वेन ग्रहणम्। तस्मात् निमित्तार्थानि सर्वाणि श्रवणानीति।

शा— किं ज्योतिष्टोमात् कर्मान्तरं रथंतरसामा बृहत्सामा इति विधीयते, किंवा ज्योतिष्टोम एव रथंतरेण बृहता वा अवच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेन अनुकीर्त्यते इति। तत्रेदं चिन्त्यते किमयं कृत्स्नक्रतुसंयोगो रथंतरादेः, उत अकृत्स्नक्रतुसंयोगः इति। तदर्थमपि किं रथंतरविशिष्टः क्रतुः इह निमित्तम्, उत क्रतुविशिष्टं रथंतरमिति। 'तत्रान्यार्थप्रधानत्वाद् बहुव्रीहेर्निमित्तता। रथंतरविशिष्टस्य क्रतोरेवावगम्यते॥ विशेषणं व्यवच्छेत्तृ विशेष्यस्यापि चोच्यते। ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः॥ रथंतरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि। सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि॥' तस्मात् रथंतरसामत्वं गुणः कर्मान्तरं कल्पयति इति पूर्वः पक्षः। न कर्मान्तरमिति सिद्धान्तः।

सोम— पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः। अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वं आनन्तर्यं च (संगतिः विशेषा)। प्रयोजनम्— कर्मान्तरत्वे तस्य फलापेक्षत्वाभावेन ज्योतिष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलरथंतरसामकं कर्मान्तरमनुष्ठेयम्। सिद्धान्ते तु नैमित्तिकग्रहाग्रतामात्रानुष्ठानम्। 'यदि बृहत्सामा' इतिवाक्यविहितशुक्राग्रतायाः प्रकृतौ निवेशानिवेशादिकं च द्रष्टव्यम्। सूत्रार्थस्तु— रथंतरसामेति सामसंयोगस्य अंशेन कृत्स्नक्रतौ भूतत्वात् रथंतरसामेति शब्दस्य अपूर्वक्रतुसंयोगात् रथंतरसामादिगुणः कर्मान्तरमाश्रयेत् इति।

वि— 'रथंतरं साम सोमे भवेत् तद्वद् बृहज्जगत्। ऐन्द्रवायवशुक्राग्रयणाग्रा ग्रहाः श्रुताः॥ रथंतरादिसंयुक्तमन्यत् कर्माथवा गुणः।, वामनादियुतात् पूर्वान्यद्भ्राष्ट्रविनो गुणैः॥, सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके। ग्रहाग्रं गुणस्तत्र स्यादनित्यं परस्परम्॥' आग्रयणान्तवाक्यं न कर्मान्तरविधायकम्, किंतु अन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकम्, इत्येतावन्मात्रमत्र प्रतिपाद्यम्।

भाट्ट— ज्योतिष्टोमे 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति श्रुतम्। तत्र यदिशब्दोपात्तस्य निमित्तस्य न तावत् रथन्तरं बृहत् वा अन्वयः, तस्य विशेषणत्वेन गुणभूतत्वात्। नाप्यन्यपदार्थे, तस्य कादाचित्कत्वाभावात्। नापि विशिष्टे ज्योतिष्टोमे, सामान्तराणामपि नियमेन बृहद्रथन्तरयोरन्यथायोगव्यावृत्त्या विशेषणत्वासम्भवात्, ज्योतिष्टोमत्वावच्छेदेन अयोगस्यापि व्यावर्तयितुमशक्यत्वाच्च। अतः समासार्थस्य केवलरथंतरसामकत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगात् उभयविशिष्टं कर्मान्तरमेव विधीयते। यदिशब्दस्तु अविवक्षितार्थः। इति प्राप्ते, बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात् अयोगव्यावृत्त्या परस्परायोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः। न च ज्योतिष्टोमत्वावच्छेदेन तदभाव.,

नेऽपि न समवैति, पृथग्भावात् । नहि शब्दः शब्दे समवैति, पृथग्भावादितरेतरं अपि तु, क्रिया नः इति । क्रियायां हि गीतिक्रियायाः शब्देन अभिसम्बन्धो भवेत्, न शब्दस्य । तस्मात् अर्थवत्त्वेनापि नातिदेशः । अतो नार्थं कृतः प्रदेश इति ।

स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥

भाष्यम्— स्वार्थे वा प्रवर्तमाना अभिसत्य-कवतीना अङ्गभावेन उपदिश्येरन् । कथं पुनः 'कवतीषु गायति' इति अङ्गभावः यावत् उपदिष्टम्? उच्यते । यथा 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इति । किं पुनः प्रयोजनं कवतीना अभिगतो निर्वर्तयन्तीति । उच्यते । प्रयोजनमदृष्टं करणम् । कुतः? क्रियायाः । यस्मात् क्रिया श्रूयते, कवतीषु रथंतरं गायतीति । यथा प्रयाजादीना प्रयोजनं क्रियायाः । उच्यते । अथ अस्मिन् पक्षे दोषः, यत् प्रयोजनं क्रियायाः कल्पयितव्यम् । तस्मादयमपि पक्षो दुष्टः ।

शब्दमात्रमिति चेत् ॥ ४ ॥

भाष्यम्— इति चेत् पश्यसि शब्दमात्रेण अभिकवतीनामुपदेशो नु निमित्तः इति । तेन तर्हि शब्दमात्र प्रदिश्यताम्, रथंतरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथंतरशब्देन अभिदध्यात् इति । किं कारणम्? शब्दे उच्चारिते तत्र तावन्मुख्या प्रतिपत्तिः । शब्दे कार्यस्यासम्भवात् अर्थे कार्यं विज्ञायते, यथा ग्राममानय इति । इह तु शब्दे एव कार्यं सम्भवति, नार्थे । अतोऽत्र शब्द [illegible] ।

नौत्पत्तिकत्वात् ॥ ५ ॥

भाष्यम्— पूर्वस्मादेष वादः पापीयान् । कस्मात्? औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यः शब्दो यस्मिन्नर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धो न स ततोऽन्य प्रत्याययितुं शक्नोति । न हि गोशब्देन अश्वोऽभिधातुं शक्यते ।

शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥

भाष्यम्— एवं च सति अतिदेशशास्त्रमनर्थकं स्यात् । असमवायर्थत्वात् । तस्मात् शब्दस्यापि प्रदेशो युक्तः । वृत्तिकारस्तु मेने 'गानमात्रं औपदेशिक्य अनर्थकं स्यात्' इति । तस्यायमभिप्रायः, यथा गतो नैतावान् प्रयासः शिष्टानामफलोऽभ्युपगन्तु न्याय्य इति ।

स्वरस्येति चेत् ॥ ७ ॥

भाष्यम्— इति चेत् पश्यसि, नाम्नोऽतिदेशः अयुक्त इति । तेन तर्हि स्वरस्यातिदेशो भवतु । स्वरः सामशब्देन लोके अभिधीयते सुसामा देवदत्त इति— सुस्वरो देवदत्त इति । स्वरः, घोषः, नादः इति समानार्थाः । स सामशब्देनोच्यते । साम च रथंतरम्, तस्मात् तस्य अतिदेशः ।

नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ८ ॥

भाष्यम्— नैतदेवम्, स्वरस्यातिदेश इति । कुतः? अर्थाभावात् । अर्थस्य अभिरथंतरस्वरस्य कवतीषु अभावात् । ननु शक्येतासौ अतिदेशेन भाव्यते । उच्यते । भावयितुमपि न शक्यते । नहि अभिरथन्तरस्वराणां अभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः । यदि भाव्येत न कवत्यो भवेयुः । न चेत् भाव्यते, न भूतः । 'कवतीषु रथंतरं गायति' इत्येतस्याः श्रुतेः पदानां परस्परेण अभिसम्बन्धो न स्यात् । तस्मान्न स्वरस्यातिदेशः ।

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥

भाष्यम्— तुशब्दः पक्षान्तरपरिग्रहे । यदि अभिकवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु कवतीषु रथंतरं गायतीति । कथम्? तदुच्यते । इह 'कवतीषु रथंतरं गायति' इत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः । कवतीषु यदक्षरम्, तत् गायति इत्येका । रथंतरे यत्, तत् कवतीषु गायति इत्यपरा । तयोरेषा द्वितीया रथंतरे यत्, तत् कवतीषु गायतीति । सा स्वरस्य सामत्वे न समभवतीत्युक्तम् । न हि अभिकवतीस्वरः कवतीषु समावेशयितुं शक्य इति । पूर्वा तु सम्भवति, कवतीषु यदक्षरं तत् गायति इति । ननु साऽपि न सम्भवति, न हि कवतीषु रथंतरमस्ति । अतः पक्षमुच्यते, स्वरस्तु उत्पत्तिषु स्यात् । स्वरस्तु अभिकवतीस्वरः कवतीनां उत्पत्तिषु उच्चारणेषु स्यात् । कथम्? मात्रावर्णाविभक्तत्वात् । यदि मात्रा वर्णाश्च अभिकवतीना

ककुभीना च अविभक्ता अभिनतीश्वरी विद्यते कन्नीष्वपि । योऽसौ अभिनतीस्वर ककुभीषु साधारणतया समवेतो विद्यते । तस्यानुवादोऽयं क्रियते, ककुभीषु रथतरं गायतीति । तस्मात् स्वरस्यानुवाद ।

लिङ्गदर्शनाच्च । १० ॥

भाष्यम्— लिङ्गं च दृश्यते एतस्मिन्नर्थे अस्ति रथतरं उत्तरयोरिति । किं तत् लिङ्गं भवति ? एवमाह, 'रथतरमुत्तरयोर्न पश्यामि इति विश्वामित्रस्यास्य, बृहदुत्तरयोर्न पश्यामि' इति वसिष्ठ इति । यच्च विद्यमानं न दृश्यते तद्दर्शनाय यत्न क्रियते, यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति । तस्मादस्ति उत्तरयो रथतरं बृहच्च । तयोरनुवाद इति ।

अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति । ११ ॥

भाष्यम्— तुशब्द पक्षं व्यावर्तयति । नैतदेव स्वरस्यानुवाद इति । कुत ? एवं सति उत्तरासु विकारो न कश्चित् श्रुतो भवति । तदा उत्तरा यथाश्रुता प्रयोक्तव्या । यथा स्वाध्यायकाले श्रुता । तत्र 'रथतरमुत्तरयोर्गायति' इत्येतदनुवादमात्रं अप्रवृत्तिविशेषकरं अनर्थकमेव आपद्यते । अतो न स्वरस्यानुवादो युक्त ।

शब्दानां चासामञ्जस्यम् । १२ ॥

भाष्यम्— रथतरादीनां च सामशब्दानां असामञ्जस्यं स्यात् 'रथतरमुत्तरयो, बृहदुत्तरयो' इति । कथम् ? उच्यते । अत्र रथतरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या अवस्थिते स्वरविशेषे प्रयुक्त । स एकदेशो भिन्नानुपूर्व्ये न अत्र समस्तो भवति । तस्मान्नैतत् युक्तम्, स्वरश्च सामशब्द, तस्य चानुवाद इति । अथाह, एवं सत्यपि सर्वे पक्षा निरुद्धा, तत्र किं अप्रवृत्तिरेवेति । उच्यते । ऋच एव प्रदेशो भवतु । ननु उक्तं न शक्या ऋच ऋगन्तरे प्रदेष्टुं इति । बाढम्, देशलक्षणा भविष्यति । 'ककुभीषु रथतरं गायति' इत्युच्यते, न च शक्यते ककुभीषु रथतरं गातुम्, तत्र देशलक्षणा भवति, ककुभ्देशे इति । यथा अग्नौ तिष्ठति, कूपे तिष्ठति इति । धर्मलक्षणा वा स्यात् । रथतरधर्मो वा ककुभीषु रथतरशब्देन अतिदिश्यते । यथा 'रथतरं प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्' इत्येवमादय । यथा आचार्ये प्रोषिते आचार्यानी भवत्याचार्य इति आचार्यशुश्रूषा आचार्यायामतिदिश्यते ।

अपितु कर्मशब्द स्याद्भावोऽर्थे प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यै । १३ ॥

भाष्यम्— अपितु नैव स्यात् ऋच सामशब्दत्वस्य प्रदेश इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया । अगतिश्चैषा यत् लक्षणापरिग्रह । किं तर्हि ? कर्मशब्द स्यात् । रथतरादि गानाख्यस्य संस्कारकर्मणो वाचक । कुत ? उक्तो ह्यत्र 'गीतिषु सामाख्या' ( २।१।११।३६ ) इत्यत्र । तत्र गीतिविशिष्टाया ऋचि एष शब्दो दृष्ट । न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । तस्मात् विशेषणं तावत् अभिधीयते । विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्यय । अतो नास्ति ऋच शब्दस्य स्वरपर्श इति । तेनैव शब्देन गीतिनामधेयं इति ब्रूम । किंच प्रसिद्धग्रहणत्वात् । अपि च गायतीति शब्दो गानक्रियायां प्रसिद्ध । का पुनरसौ ? शब्दस्य उच्चारणविशेष, गायति गानं करोति इति । तद्ग्रहणं च रथतरादिशब्दं तद्वचनं इत्याह । नेतरु समुच्चारणात् द्वितीयासामर्थ्याच्च । यथा आसारितक गायतीति यथमानक गायति इति । ननु शब्दवचनेनापि समुच्चारणं भवति गाथां गायति, ऋचं गायति इति । सत्यम् । विपरिणम्य तु शब्दम्, गानेन ऋचं संस्करोति इति । यथा निपतितेन अर्थेन न तत्र गते गानं करोति ऋचमिति । तस्मात् गीतिवचन । इतश्च गीतिवचन । कुत ? विकारो हि अविशिष्ट अन्यै । विकारश्चात्र ऋग्ग्रहणस्य दृश्यते । ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम् । विवृतानां संवृतत्वम्, संवृतानां विवृतत्वम् । स अविशिष्ट अन्यै संस्कारकर्मभि । यथा अवहन्तिना व्रीहीणां तण्डुलीभाव, पिंषिना तण्डुलानां पिष्टीभाव । तस्मात् शब्दानां संस्कारो गानाख्यो रथतरादिभि शब्दै रुच्यते । तस्यायं प्रदेश 'रथतरमुत्तरयोर्गायति' इत्येवमादि ।

अद्रव्यं चापि दृश्यते । १४ ॥

भाष्यम्— अपि च अद्रव्य साम दृश्यते । इय

निरूप्येते । अत्र यद्यपि साक्षान्न रशना श्रूयते, किन्तु 'यूपं परिव्ययति' इति यूपपरिव्याणादेव लभ्यते, तथापि दर्भमय्यादिशब्दाना यौगिकत्वेन परिव्याणाश्रितरशनाविशेषवचनत्वात् भाष्ये रशना श्रूयते इत्युक्तम् । यूपपरिव्याणं 'यूपं परिव्ययति' इत्यनेन यथा अग्नीषोमीये विधीयते, तथा 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इत्यनेन सवनीयेऽपि विहितम् । तेन यूपपरिव्याणाक्षेपादेव उभयत्रैव रशनाया. प्राप्तत्वात् रशनाधर्माः श्रूयमाणाः किमग्नीषोमीयरशनार्था एव उत अग्नीषोमीयसवनीयरशनार्था इति भवति संदेहः ।

अत्राय पूर्वपक्षः— अग्नीषोमीयस्य क्रमे चतुर्दश्या रशनाधर्मा दर्भमय्यादयः श्रूयन्ते न सवनीयस्य । तेन पशुधर्मवत् अग्नीषोमीययूपपरिव्याणार्था एव रशनाधर्माः । ननु श्रुत्या रशनामात्रार्था प्रतीयन्ते । श्रुतिश्च वाक्यात् बलीयसी । सत्यम् । किन्तु यूपस्वरूपसंबन्धव्यानर्थक्यात् अपूर्वसाधनलक्षणया श्रुत्या विनियोगो वक्तव्यः । तेन यथा श्रुत्या प्रकरणसहायभूतया बर्हिर्धर्माः प्रकरणवर्तिबर्हिर्मात्रार्था., एवं श्रुतिसाधारण्येऽपि न पिण्डपितृयज्ञबर्हिरर्थाः तथा रशनाधर्मा अपि प्रकरणसहायया श्रुत्या क्रमोपस्थिताग्नीषोमीययूपपरिव्याणरशनार्था एवेति । एवं प्राप्ते, अभिधीयते । अभेदेन अग्नीषोमीयक्रमश्रुतस्य 'यूपं परिव्ययति' इति परिव्याणस्य श्रौतिकत्वेन यत् यूपद्वारेण प्रधानापूर्वनिरूपणाद्युपयोगो भवेत् । किन्तु यूपस्य अलौकिकत्वेन अनिर्ज्ञातोपायपरिमाणस्य साधनापेक्षाया 'यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपनिरूपणोपयोगित्वेनैव परिव्याणस्य यूपाङ्गत्वं क्रियते । एवं सवनीयेऽपि 'उपनिष्क्रम्य यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपाङ्गतया परिव्याणं श्रूयमाणं साधारणस्य यूपस्याग्नीषोमीय एव निष्पन्नत्वात् । यद्यपि न यूपस्वरूपनिरुक्तुपयुक्तम्, तथापि स्वरूपे कार्ये चोपयोग्यत्र भवतीति न्यायेन यूपकार्यानुनियोजनोपयुक्तत्वादर्थातिशयवचनेनैवात्र भाति । एतच यूपाङ्गं परिव्याणरशनात्वाविशेषात् उभयरशनासाधारणा एव भवन्ति । न चैव सति अग्नीषोमीययूपस्यैव क्रमेण अभिधारितत्वात् क्रमसहायया श्रुत्या तत्परिव्याणरशनार्था एव विधीयन्ते । प्रकरणसहाययैव श्रुत्या बर्हिर्धर्मा दर्शपूर्णमासीयबर्हिरर्था इति वाच्यम् । यतो य एव अग्नीषोमीयस्य यूपः, स एव सवनीयस्यापि । तेन अग्नीषोमीययूपपरिव्याणरशनाङ्गत्वेन विधीयमाना धर्माः सवनीये यूपपरिव्याणरशनाङ्गत्वेनापि विहिता भवन्ति । पिण्डपितृयज्ञबर्हिषो न दर्शपूर्णमासबर्हिष्ट्वमित्यन्यत्रानुक्रम् । यद्यसाधारणा धर्मा इति तथापि सवनीयोत्पत्तिवाक्ये 'त्रिवृता यूपं परिवीय' इत्यनुवादो रशनाधर्मसाधारण्याद्विनाऽनुपपद्यमानो लिङ्गं भवति । तेन लिङ्गदर्शनादपि साधारणा रशनाधर्मा इति सिद्धम् ।

प्रयोजनम्— पूर्वपक्षे सवनीयरशनाया दर्भमयादिनियमः । सिद्धान्तेऽग्नीषोमीय एव दर्भमयादिधर्मनियम इति । सूत्रं तु-रशनेति रशनाधर्मोपलक्षणार्थम् । तेनाय मर्थः, यद्वत् ग्रहधर्माः सवनयागाङ्गग्रहसाधारणाः, तद्वत् रशनाधर्मा अपि साधारणाः । लिङ्गदर्शनं चोपचयमेवेति । ठोका

* 'रशना च लिङ्गदर्शनात्' इत्यत्र सिद्धान्तवादिना उभयोः परिव्याणयोः साधारणी रशना इति परिहारो वक्तव्यः । था. ३।६।७।२२ पृ. १०४९. * 'रशना च लिङ्गदर्शनात्' । (अष्टावशात् सूत्रात् तुल्य-शब्दो ऽनुवर्तते) रशना च अग्नीषोमीयसवनीययोः पश्वोः तुल्या । लिङ्गस्य दर्शनात् । एवमाह 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति सवनीयपरिव्याणे रशनां दर्शयति । सा यदि साधारणी तत एतद्दर्शनमवकल्पते । भा ३।६।१०।२२. * रशना तद्धर्माश्चाग्नीषोमीयपशुगताः, सर्वेषु पशुषु अतिदिश्यन्ते । ३।६।१०।३१. * रशना तद्धर्माश्च क्रमात् अग्नीषोमीयाङ्गम् । इति प्राप्ते, श्रुत्या यूपाङ्ग इति सिध्यति । 'उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात् । अग्नीषोमीयशेषाः स्युः, श्रुत्या यूपाङ्गता गताः ॥ एवं परिव्याणशेषो हि रशना श्रुता । तद्धर्मैस्तु सा याति क्रमेण पशुशेषताम् ॥' श्रुतिः क्रमात् बलवती । था. ३।३।७।१४ पृ. ८३६. * रशना तद्धर्माश्च यूपधर्मा एव, न पशुधर्माः, 'त्रिवृता यूपं

परिवीय ' इति तृतीयाश्रुत्या वाक्येन च । वि. ३।६।१०. ● रशना ( द्वितीया ) न पशुबन्धनार्था किंतु यूपसंस्कारार्था । ना।४।१।२२–२४. ● रशना यूपपरिव्याणार्था, त्रिवृत् प्रपिष्टदर्भमयी । भा. ३।६।१०।२१. ● रशनाः । अग्निष्ठयूपे ( द्वे ) पशुयूपरशनाश्च, अहर्गणे तन्त्रेण एव उपकुर्वन्ति । संकर्ष. १।४।२१. ● रशनाः पेशादयः. ' अग्निष्ठे परिवीय वासयति ' इति रशनाद्यर्थस्य विशेषः । संकर्ष. १।४।१२. मीको. पृ. ७८ " अग्निष्ठे रशना वासयति ' इति रशनासंस्कार. " इत्यत्र द्रष्टव्यम् । ● रशनया यूपपरिव्याणं ( यूपपरिवेष्टनं ) ' परिवीरसि ' इत्यादिमन्त्रेण अध्वर्युः करोति । मि ३।८।११. ● रशनाया. यूपाङ्गत्वं ज्योतिष्टोमे । ४।१।१।२२–२४. ● रशनायाः यूपशेषता. भवति समुच्चयः । वा ४।४।१।२२ पृ. १२०१. ● अग्निष्ठे एकयूपे एकादशपशूनां नियोजने यूपसंस्कारार्थाया रशनायाः भेदहेत्वभावात् ऐकतन्त्र्यमेव । भा. ८।८।१। २२–२४.

रशनाधिकरणम् । अग्नीषोमीये पशौ रशनाधर्मा अग्नीषोमीय-उपनीयोमयसाधारणा ॥

रशना च लिङ्गदर्शनात् । ३।६।१०।२१ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र रशना श्रूयते रशनाधर्माश्च ' त्रिवृद् भवति, दर्भमयी भवति, प्रपिष्टाना कर्तव्या च ' इति । तत्र सन्देहः किमेते धर्माः अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणा, उत अग्नीषोमीयरशनाया एवेति । किं प्राप्तम् ? प्रकरणात् अग्नीषोमीयरशनाया इति । एवं प्राप्ते, ब्रूमः । उभयोः साधारणा इति । कुतः ? लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति सवनीयपरिव्याणे रशना दर्शयति । सा यदि साधारणी, ततः एतद्दर्शनमवकल्पते । यदि अग्नीषोमीयस्य, ततः अप्राकृतात् सवनीयपरिव्याणात् निवर्तेत । सवनीये च परिव्याणान्तरमप्राकृतम्, यत्र निवृत्तेन दृश्यते । कथम् ? ' स वै आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति ' इति । तत्र यदि न साधारणी रशना, वाससा परिव्याणं प्राप्नोति । रशना तु दर्शयति । तस्मात् साधारणी रशना । तत्साधारण्याच्च तद्धर्मा अपि साधारणाः । तदेतल्लिङ्गात् रशनासाधारण्यम् । कोऽत्र पुनर्न्याय इति ? उच्यते । प्रकरणादग्नीषोमीयस्य, वाक्यात् यूपमात्रस्येति ।

वा— अग्नीषोमीये यूपपरिव्याणमाम्नाय पुनः सवनीये ' स आश्विनं ग्रहं गृहीत्वा ' इत्याम्नातम्, तद्य निर्गुणपुनःश्रवणात् कर्मान्तरम् । उभयोश्च केनचित् द्रव्येण भवितव्यम् । यत्र परिव्याणद्रव्यम्, सा रशना लोके वेदे च प्रसिद्धा । तेन उभयत्र तादर्थ्यादेव रशना प्राप्ता । सा च किंमयी किंधर्मा च इत्यपेक्षिते अग्नीषोमीयस्य स्थानानुवृत्ते प्रकरणे ' त्रिवृत् दर्भमयी प्रपिष्टाना कर्तव्या ' इत्याम्नानात् विशेषः प्रतीयते, न सवनीयपरिव्याणस्य । तस्मात् इतरपशुधर्मवदेव रशनेतिकर्तव्यता अग्नीषोमीयार्थेति । तथा प्राप्ते, लिङ्गदर्शनात् साधारणी इत्याह । नहि सवनीयोत्तराम्नाये त्रिवृत्त्वानुवादो रशनाधर्मसाधारण्यादिना उपपद्यते । का प्राप्तिरिति चेत्तामाह— वाक्यसंयोगात् रशनामात्रस्य, स्थानादग्नीषोमीयस्य । वाक्यं च तस्मात् बलवत्तर इति । ननु ' न सद्वाक्यं हि तदर्थत्वात् ' ( ३।७।१।८ ) इत्युत्तरं वक्ष्यति । तेन अग्नीषोमीयापूर्वप्रयुक्तत्वात् व्यवस्था स्यादिति । नैतदेवम् । न ह्येषा साक्षात् पशुसन्निधानी । किं तर्हि ' यूपाङ्गं वा तत्संस्कारत्वात् ' ( ४।१।१।२३ ) इति वक्ष्यति । तेन ह्येतावदेव वाक्यान्तमेतत् । यूपपरिव्याणसाधारणसाधनस्य एते धर्मा इति । तथा च अग्नीषोमीयस्थ एतद् यूपपरिव्याणमेव च यूपैकत्वात् सवनीयस्य यूपपरिव्याणम् । इममपि च अपूर्वसाधनमिह प्रतीयते, न ■ दर्शपूर्णमासवर्हिरिव भिन्नपिण्डत्वे भविष्यति । तस्मात् बहिर्भूतत्वात् साधारणा रशनाधर्माः ।

शा— रशनाधर्माः क्रमात् अग्नीषोमीयार्थाः । इति प्राप्ते, ब्रूम । ( श्लोके ) ' श्रुत्यैतद्यूपसंबन्धिपरिव्याणाङ्गता गताः । नाग्नीषोमीयधर्माः स्युस्नायतेवार्थवत्त्वतः ॥ सवनीयपरिव्याणमप्येतद्यूपसंगतम् । तस्मात्तत्रापि रशना सहधर्मैः प्रपद्यते ॥ ' इति ।

देव । किं तर्हि ? आग्नेयरशनयोः सम्बन्धोऽनेन क्रियते, तत्र च प्रयोजनवत्त्वात् । आग्नेयस्य रशना तदर्था । तस्य हि सा अनपक्रमणद्वारेण उपकरोति । ननु पशोः अन्या अनपक्रमणार्थं विद्यते एव । उच्यते । यथा यूपार्थाया रशनायाश्च भवति समुच्चय, एवमिहापीति । ननु द्वितीयानिर्दिष्टत्वात् यूपस्य रशना तदर्थेति । उच्यते । इतरस्यापि आग्नेयमिति द्वितीया विद्यते एव । अथवा परिव्याणस्य यूपमिति द्वितीया तादर्थ्यमाह, न रशनायाः । आह । परिव्याणार्थत्वात् रशनाऽपि यूपार्था । उच्यते । रशनायाः पश्वनपक्रमणेन प्रयोजनवत्त्वात् परिव्याण भाव्यमानमपि तदर्थम्, सामर्थ्यं परिव्याणेन लभ्यते रशनायाः । ननु परिव्याणमपि यूपतादर्थ्येन अर्थात् रशना तदर्थेति । उच्यते । सम्प्रधार्यमेतत् । यदि वा परिव्याणार्था रशना यूपाय, अथवा भिन्नत्र तादर्थ्यम् । परिव्याण पश्वर्थम्, यूपश्च परिव्याणस्य आधारता प्रतिपद्यमान पश्वर्थं । तत्र किं युक्तमिति । रशना पश्वनपक्रमणेन प्रयोजनवती । परिव्याणमपि तदर्थम् । यूपोऽपि आधारता प्रतिपद्यमानो रशनार्थतां प्रतिपत्स्यते । अतो यूपे या द्वितीया, सा सप्तम्यर्थे लप्स्यते । आधारता च प्रतिपद्यमानस्य तादर्थ्यं प्रसङ्गान्निष्पत्स्यते ।

यूपाङ्ग वा, तत्संस्कारात् । २३ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'यूपस्य संस्कारः । रशना हि या च मार्ता च द्रढिम्नो माभ्यां यूपस्य संनमयति, द्रढिम्ना च प्रयोजन यूपस्य । तस्मात् यूपस्यैव प्रदिष्टं रशना स्यात् । द्वितीया च विभक्तिः तत्प्रत्यक्षे एव भवति । रशनायाश्च तृतीया । तृतीया च गुणत्वे तस्याः । तस्माद्यूपाङ्गम् । ननु तदागम विधानादि-श्रुतम्, तत्परिहर्तव्यम् । उच्यते । तदागमे विधान वाक्यात्, द्वितीया च विभक्तिः श्रुतिः प्रत्यक्षा च, वाक्य बाधेमानामिति । यत्तु उपस्थेति, श्रुत्यनपक्रमेऽपि पशोऽपि न्याय्यैव ।

टुप्— 'त्रिवृता यूपं परिवीय' इति ईप्सिततमत्वात् यूपस्य, तदर्थैव रशना । न तु परिव्याणस्य (यूपार्थत्वात्) यूपपद द्वितीया (विभक्तिः, परिव्याणस्य तादर्थ्यं प्रतिपादयति, न रशनायाः) । तथा (परिव्याण अर्थप्राप्त) अनूद्यते । (पशुमुपाकरोति इत्यत्र) पशौ अपि द्वितीया उपाकरणस्य (पश्वर्थत्व प्रतिपादयति) न रशनायाः । न च अर्थाक्षिप्तोपाकरणेन रशना (तस्य साधनत्वेन प्राप्नोति) । परिव्याणेन तु रशना आक्षिप्यते । तत्र यदि वा अनेन विहित तथानूद्यते, तेन वा (विहित) अत्र (अनूद्यते इत्यत्र) नाभिनिवेश । सर्वथा यूपार्था रशना । एकयूपे एकादश पशवो नियोज्या इति (तत्र) प्रतिपशु रशना कार्या यथा पूर्वपक्षे । सिद्धान्ते त्वेकस्यामेव इत्येतत् प्रयोजन (भाष्योक्त एकदेशिन अन्यथा पूर्वपक्ष मन्यमाना) नेच्छन्ति । (कथ ?) पश्वर्थाऽपि (सती रशना) असंनिपत्योपकारित्वात् (संनिपत्योप० ?) (साधारणे) यूपे क्रियमाणा (सर्वेषां पशूना) एकैव उपकरिष्यति । यथा प्रयाजा सकृत् कृता (सर्वेषामग्नीषोमीयादीनामुपकुर्वन्ति) । अत पक्षद्वयेऽपि ऐकरूप्यम् ।

(एव हि ते वर्णयन्ति । पूर्वपक्षेऽपि न परिव्याण रशनार्थं किंतु रशनैव परिव्याणार्था । परिव्याण तु न यूपाङ्ग किंतु (परिवीय इति—) क्त्वाप्रत्ययेन पशूपाकरणार्थम्, तद्द्वारेण च पश्वर्थम् । अतो रशनाऽपि तद्द्वारेण यूपे क्रियमाणाऽपि पश्वर्था इति पूर्वः पक्ष । सिद्धान्तस्तु, श्रुत्या यूपार्थमेव परिव्याणम्, न वाक्येन उपाकरणाङ्गम् । इति) ।

(प्रयोजननिराकरण समाधत्ते—) एतदयुक्तम् । पश्वर्थाऽपि सती (रशना) अनपक्रमण कुर्वती पशोः संनिपत्योपकरोति । यथा यूपे द्वितीया रशना समुच्चीयते (सिद्धान्ते), एव पशावपि समुच्चेष्यते (पूर्वपक्षे आभ्या रशनाभ्या पशुर्नियते) । तस्मात् युक्तमेवेद प्रयोजनम् ।

अर्थवादश्च तदर्थवत् । २४ ॥

भाष्यम्— एव च सत्यर्थवादोऽर्थवान् भविष्यति । 'युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमान । त धीरास कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त ॥' इति । तस्माद्यूपाङ्ग रशनेति । किं प्रयोजन चिन्ताया । अथो श्रूयते 'एकयूपे एकादश पशवो नियोज्या' इति । प्रतिपशु रशना कार्या यदि पूर्व.

पक्ष । सिद्धान्ते द्वैरशन्यमेव । श्लोकमप्युदाहरन्ति ‘ पश्वङ्गं रशना चेद्यद्येकस्मिन् बहून् नियुञ्जीत । प्रतिपशु रशना कार्या यूपे चेद् द्वैरशन्यं स्यात् ॥’ इति ।

शा-- ‘ यूपार्था सत्यदृष्टार्था, दृष्टार्था पशुबन्धनी । अनपनमक्षान्, तेन पश्वङ्ग रशना भवेत् ॥’ एव प्राप्ते, ब्रूम । ‘यद्यदृष्टार्थता यूपे स्यादेवं क्लिष्टकल्पना । यूपार्था सत्यपि ( सती अपि ) स्वेपा दृष्टार्था शाल्यजन्मन ॥ परिव्याण हि यूपार्थ द्वितीयातोऽवगम्यते । रशना च परिव्याणशेषभूता तृतीयया ॥ सर्व तद् विपरीतं स्यात पश्वर्था रशना यदि । यूपार्था रशना तस्माद् भवेत् न पशुबन्धनी ॥’

सोम-- त्रिवृद्वलस्य दर्शाद्गत्वे कल्पाचक्षाचन्द्रस्याम तत्, इह तस्यचित् बाधाभावात् पश्वङ्ग रशना इति प्रत्याख्यानात् संगतिः । सूत्रार्थस्तु--पश्वङ्ग रशना स्यात् पश्वागमे विधानात्, वाक्ये पशुकर्म धर्मागमस्य विधानात् इति याकन् इति ।

वि-- ‘रज्जुर्द्वितीया पदवया यूपाया वा, प्रत्यन् पशौ । पश्वर्था, त्रिवृता यूप परिवीतेति सूत्रम ॥’

भाट्ट-- मवनीयस्य कनिषो ‘ आश्विन ग्रह गृहीत्वोपनिष्क्रम्य यूप परि वयति ’ इति श्रुतेन वचनेन पशु मनप्रापणयूपपरिव्याणपे उत्र, यूपपरिव्याणस्यात सवनीयाद्गत्वा प्रकरणानुरूपायेन ( ७।३।११ ) आम्नायाद्वा यूपदाढर्यमयोजनक सिध्यति । आश्विनोत्तरकाला उपनिष्क्रमण च पाठादयाद श्रतमप्ययते भ्रुवमेव । अतश्च ‘ आश्विन ग्रह गृहीत्वा त्रिवृता यूप परिवीयाग्नेयं सवनीय पशुमुपाकरोति ’ इत्युत्पत्तिवाक्ये पुन भुन परिव्याण न यूपदृढमप्रार्थम्, वैयर्थ्यापत्ते । किंतु यूपमिति द्वितीया समर्थ्य । ‘ परिवीय ’ इत्यस्य कर्मापेक्षाया ‘ पशु ’ इत्यस्यानुषङ्ग , तथा च त्रिवृता रशनया यूपाधिकरणक-पशुसंस्कारकपरिव्याणस्य वाक्यविशिष्टार्थविधानात् पशु धर्मेण परिव्याण पशावरकत्वार्थम् । इति प्राप्ते, द्वितीयया परिव्याणस्य यूपशेषत्वे प्रतीयमाने यूपार्थत्वे संभवति, व्यवधानानुषङ्गो अन्याय्य । न च वैयर्थ्यम्,

रशनाधर्माणा दर्भमयीत्वादीना एतत्परिव्याणाधारत्व-सिद्ध्यर्थं अनुवादत्वस्य तृतीये ( ३।६।१० ) साधितत्वात् । अन्यथा रशनाधर्माणामौपवसथ्येऽहनि अग्नीषोमीयपशुपरिव्याणाङ्गत्वस्यैव अनुमानादेस्यादापत्तौ अप्राकृतकार्यत्वे तत्परिव्याणार्थत्वासिद्धेः । सति त्वस्मिन् त्रिवृत्त्वरशनायूपपरिव्याणानुवादे तदङ्गत्वेनैव प्रकृतावग्नीषोमीयपशुपरिव्याणमात्रस्यैव उद्देश्यत्वावगमात् माधारण्यसिद्धि । अस्तु वा निर्वपतिवदेव ग्रहणनिमित्तत्वेन प्राकृतपरिव्याणातिदेशसिद्ध्यर्थमस्मिन् परिव्याणे त्रिवृत्त्वानुवाद । सर्वथा न परिव्याणान्तर पशुसंस्कारार्थम् । प्रयोजनं यूपे द्वैरशन्यसत्त्वेऽपि पशावपि द्वैरशन्य पूर्वपक्षे प्रकृतौ विकृतौ च । सिद्धान्ते नेति ।

मण्डन- ‘ यूपगुणो रशना त्रिवृद्विधा । ’

शंकर- ‘ यूपाङ्गं रशना परा । ’ परा द्वितीया ।

● रशनाधिकरणन्याय’, ‘वाक्य प्रकरणात् बलीय ’ इति । ३।६।१०।११.

● रशनाऽऽदाने करणमन्त्र – ‘ इममगृभ्णन् रशनामृतस्य ’ इति । अग्निचयने रथे योजनार्थं अश्वरशनाया आदान अत्र रशनाऽऽदानम ) । वि. १२।१। १०

● रशनाद्वयं ऐकादशिनेषु पशुषु । ‘ द्वे द्वे रशने आदाय, द्वाभ्या द्वाभ्या रशनाभ्यामेकैक यूप परिव्ययति ’ इति रशनाद्वय मुख्यकालीनत्व च इति लिङ्गद्वयेन सवनीयपशोर्निव्यन्त. ऐकादशिनेष्वतिदिश्यते । वि ८।१।७, ● रशनाद्वय सवनीयपशावपि ज्योतिष्टोमे । रशनाभ्यां च परिव्याय पृथक् पृथक् । ४।४।९. ● रशनाद्वयेन युगपत्परिव्याण यूपैकादशिन्यामपि । संकर्ष. ४।४।१४. मीको. पृ ३२६- ‘ यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम् ’ इत्यत्र द्रष्टव्यम् ।

● रशनाधर्मा ‘ त्रिवृत्त्वमि, दर्भमयी भवि, प्रतिष्ठाना कार्या ’ इति । आ. ३।६।१०।११,

● रशनाधर्मा सर्वरशनानां , न तु अग्नीषोमीयायां एव ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।६।१०।११.

● रशनाधर्माणा दर्भमयीत्वादीना एतत्परिव्या-

-साधारणविद्यर्थमनुवाद्यं तृतीये चिन्तितम् । भाट्ट. ३।६।१०.

० रशनापरिव्याणं विधीयते यूपे आग्नेयोरेव । संकर्ष. २।८।८.

ꣳ रश्मितृणादिन्यायः । यथाऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि, सूर्यकान्तमण्यादिद्वारा दाहका भवन्ति, तथा प्रकृतेऽपि । साहस्री. ८०२. ० रश्मितृणादिन्याय । रश्मितृणयोः स्वभावतो विरोधाभावेऽपि सूर्यकान्तरश्मिभिः तृणं दाह्यते । इति औपाधिको विरोधः । के.

० रस. मधुर. स्निग्ध शीतो गुरुश्च इति । अत्र मधुररसस्य गुणत्वात् गुणान्तरैः शीतादिभिः सम्बन्धो नावकल्पते इति यत्प्रतिपादितं तत् न युज्यते । न च कथंचिदपि रसशब्दस्य द्रव्यवचनत्वम् । वा ३।४।४।१३ पृ ९४० .

० रसभोजनं (मधूत्सव) गवामयनादौ पृष्ठ्यषडहात्मको द्वावेव, न तु अभिप्लवषडहात्मकौ । २०। ६।१०।२१-२०. मीको. पृ १५५८ 'गवामयनादौ पृष्ठ्यषडहात्मको०' इत्यत्र द्रष्टव्यम् । ० रसभोजनस्य (मध्वशनादेः) गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ आवृत्ति कर्तव्या । १०।६। ११।३१. मीको. पृ. १५५१ 'गवामयने विजातीयषडहव्यवधानेन०' इत्यत्र द्रष्टव्यम् ।

० 'रसवीर्यविपाकानां भेदात् नैवेद्यादय. । निर्वाप्य स्वार्थकत्वेन, धर्मसिद्धचैव यत्मिरे. ॥ तस्माद् ये यागिनैर्यना वैद्यानां यां विरुद्धिता. । तेषां च यत्र सन्त्यर्था मुख्या हि नेतरं ॥' वा १।३।८।१ पृ. २१७.

० रसनं इन्द्रियं रसमात्राभिव्यञ्जकतया रसवत्त्वानुमानेन अप्-प्रकृतिकम् । मणि. पृ. १९.

० रसायन नायुर्हेतु, किंतु आरोग्यपुष्ट्यादिहेतु । रसायनं दीर्घायुर्हेतुरिति केचित् । वि. ६।७।१३. ० न रसायनानां एतावत् सामर्थ्यं दृष्टम्, येन सहस्रसंवत्सरं जीवेयुः । एतानि हि अरोगत्वकानि, वयःस्थितस्य स्थापकानि रक्तवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातृणि दृश्यन्ते । भा. ६।७।१९।३१.

० रसायनादि वैद्यके अतिशयायुर्हेतुत्वमङ्गीक्रियते । इति चेत्, श्रुतिविरोधात् तत्कीर्तनमर्थवादमात्रम् । सोम. ६।७।१३.

० रसायनवैगुण्येन इन्द्रियहीनत्वाख्यो दोषः समवैति । सु पृ. १५०७.

० रसालाशब्दः रूढोऽपि न जातिवचन. । किंतु 'सिता-चतुर्जातमधूषणाढ्य दधिप्रयुक्तं सरस रसाला' इति उपाधिपुरस्कारेण प्रयवचन । वाल पृ १७२.

० रक्षोघ्नन्याय । प्रयोगान्तरवैगुण्यात् सौर्यादौ च (आग्नमणीया) कार्या । न यागकीर्तनकाले प्रकल्प्यम् कर्तृधर्मत्वेन द्वितीये (२।८।१) निर्णीतत्वात् । अतो न उक्तप्रत्यवायः अत्र प्रसरति । वि. १२।२।२६

० राक्षोघ्नीष्टि. निमित्त. । 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात्' । इति विधाय 'अपारास्याया निशि यजेत' इत्याम्नातम् । अस्याः दर्शनमध्यपातित्वात् अनोसायन- अभिप्रायत- वेदवदनासम्बद्धे प्रसक्तसिद्धि. । यानि तु इध्माबर्हिः-प्रभृतीनि अशक्यप्रयाणि तानि तु आवर्तन्ते एव । वि. १२।४।५. ० राक्षोघ्नीष्टि. मन्यमानाग्न्यनुत्पत्ति-निमित्तकी । सु पृ. ८५५.

० राग. प्रीति. । सु पृ. १३०. ० नहीच्छामात्रं राग., अपितु चित्तभग्न., आत्मनो दर्शनावरणम्, अभूतगुणाभिनन्दनं रागमाचक्षते । कणिका. पृ ११३. ० रागाः गुडादयादिरसा काव्यगृहीता. आदिविरुद्धा । (हेमाद्रि) । बाल पृ १५८.

० रागाक्षिप्तप्रवृत्तिलाभ पुरुषार्थ फलत एव प्रवृत्ति सिद्धि. । ऋजु पृ. २९.

० 'रागद्वेषमदोन्मादप्रमादालस्यदुःखता. । यत्र या नोत्प्रेक्षितु पश्या. स्मृत्यप्रामाण्यकारण. ' ॥ वा. १।३।७।३ पृ १७१ .

० रागप्राप्तं न विधीयते, वाक्यिसर्ववत् । वि. ११।३।१० .

० रागप्राप्तपुरुषार्थमात्रविषयक कदर्थ. श्रौते निषेधो यथा- 'कृतुसमयमात्माशास्तिपुरुषार्थमपि स्थित ।

राज्ये निर्दिष्टे हि शास्त्रस्याविरोधिता । तदनुज्ञामनादाय राज्ञां वृत्तिर्विधीयते ॥ ' ३।११६।११२ पृ. ६१७.

**न्या. राजानुमृतनियाद्यनुगमनन्यायः** । यथा भृत्यस्य नियादृश्वरो हि राजाऽप्यनुगम्यते इति प्रसिद्धम् । माहसी. १२७.

• **राजोपेताः** आदयः ये क्षत्रियवृत्तिमाश्रिताः । तेषामपि व्यवहारीयवेन आर्त्विज्यम् । संकर्ष. ३।८।७, • **राजोपेतानां** अयाजोपेतानां या प्रत्युत्तरकर्मेणामपि न जानीमः । ३।८।७.

• **राजैकपुत्ररीता** । यदि च समुदायत्वमापन्नो, पुनः प्रत्येकं सम्बन्धः इति( चेत् तत )राजैकपुत्ररीता आपद्यते । (एकपुत्रस्य अन्यत्र विनियोगेन विनुत्त्यामनिराकरणात्, राजपुत्रकेन चान्येषामपि अनिवारणात् अत्यन्ताभ्यासया यथा, तंत्रप्रमाणि टिप्पणी) । भा. ३।१। ११।४८ पृ. ८५५, सु. ९१२.

• **राजधर्मे** किं पुनः ! क्षत्रपुरुषत्वे राजशब्दे (वा राजशब्दे )राजशब्दं आर्यावर्तनिवासिनः प्रयुञ्जते । भा. २।३।२।३.

• राजकुले सेवा क्रियते, वर्षा हि भूमौ । पा. ३।४।१।२६.

• **राजजातिविशिष्टः** कर्ता राजसूययागं निर्दिश्यते, राजत्वे वा तद्यत्नेन । राजशास्त्रिणं स्वयमेवापि यापनम् । एवं न स्वर्गः । तस्मात् स्वर्गेच्छाविशिष्टः कर्ता कर्मसंबन्धी । स्वर्गशब्दः पुरुषविशेषणत्वेनोपादीयमानत्, नान्येन संबन्धनमर्हति, यथा राजजाति• । भा. ६।१।१।१ पृ. १३४५, • **राजजातिविशिष्टेन** यथा राजसूयः कार्यः न अतद्विशिष्टेन, तथा स्वर्गेच्छाविशिष्टेन यागः कार्यः, नातद्विशिष्टेन । ६।१।१।१ पृ. १३४७.

• **राजपुत्रापराधवत्** । श्लोवा. । राजपुत्रस्यापराधे दण्डोऽल्पो भवति । रत्नाकरः संबन्धाक्षेपे ९६.

**न्या. राजपुत्रव्याधन्यायः** । यथा कश्चिद्राजपुत्रः स्वमातृप्रमादवशात् कयाचित् निर्विशिष्टो व्याधगृहे प्राप्तः । तेन च पुत्रत्वेन पालितः सः, व्याधमेवात्मानं मन्यते स्म, पश्चात्कस्यचिद्राजपुत्रनिश्चयवता मन्त्रिणा उपदेशात् ब्राह्मणमात्मानं मत्वा पैतृकसिंहासने प्रतिष्ठां प्रापेति । माहसी. ३५७.

**न्या. राजपुरप्रवेशन्यायः** । यथाऽत्र क्रमेणैव बहूनां पुरुषाणां प्रवेशो भवति न युगपत् । तथा– यथा विशृङ्खलया राजपुरप्रवेशो गजपुरस्थै राजद्वारादिकं क्रियते, इति भिन्ना श्रेणीभूततया तत्पुरप्रवेशः, एवं सुहृद्वर्गानाम् यत्र कार्यकरणस्य विना तत्रास्य प्रवृत्तिः । माहसी. १८०.

• **राजपुरप्रवेशन्यायेन** शाब्दबोधे पदार्थानामन्वयबोधः । यत्र नानावाक्यार्थबोधोत्तरं महावाक्यार्थबोधः, यत्र वा ' कर्णौ, कुण्डली, छत्री, चैत्रः ' इत्यादौ विशिष्टस्य वैशिष्ट्यबोधे तात्पर्यं तत्र । भमि. पृ. ७०.

• **राजपुरुषः** इति तत्पुरुषे पूर्वपदे लक्षणा । इति मणिः । राजपदेन राजसंबन्धी लक्ष्यते इति पक्षधरः । राजपदेन संबन्ध एव लक्ष्यते इति अन्ये । मणि. पृ. १५.१. • राजपुरुष. । राजपुरुष इत्यादिषु कश्चित् अप्राधान्यमतो विपरीतः स्यात् । तथाहि ' विशेषणतया राजा, पुरुषस्योपसर्जनम् । अर्थयोः लोकसिद्धे, तस्यैवैषा प्रधानता ॥ ' ...... राजपुरुषादिष्वपि शब्दार्थतुल्या राजादीनां गुणत्वमेव मानम्, प्रमाणान्तरेण तु विपरीतं कल्प्यते । तथा एकाधिकरणे दर्शितम् ( ७।१।४।१२ ) न चैतावता शब्दार्थतुल्यमेव । यथा यद्यप्यत्र राज्ञो गुणत्वम्, तथैवोपादान शब्दः प्रवर्तते । अहिंस्य चासौ । कथम् ? ' विधाय पुरुषं राजा गुणत्वं तावदिच्छति । स्वामित्वं भवति पश्चाद् विवक्षा तु यथारुचि ॥ ' तत्र यदा राजविशिष्टः पुरुषो विवक्षितः तदा शब्दार्थानुगुण्यात् एकान्तेन वस्तुगामपि तत्कारकरं विवक्षितं यत् । यदा पुनः तत्कार्यांतर विवक्ष्यते तदा तस्य विशेषणत्वप्रसक्तेः राजाज्ञासकत्वेन स्वस्वामिभूता. पुरुषाः विशेषणं भवन्ति इति पुरुषराजशब्द एव प्रयोक्तव्यः । प्रयोगद्वयस्य निष्पादनस्य तावत् व्यवस्थाहेतौ अर्थद्वये संभवति किमिति वक्ष्यमाणक्रियोपयोगापेक्षया विवक्षाभेदमात्रेण विलष्टां व्यवस्थामाश्रयिष्यामहे । तेन भूतं निमित्तमपेक्ष्य, शब्दे

ज्योतिष्टोमे ब्रह्मसाम पार्थुरश्मम् । नैमित्तिकमेव तत्, [illegible] नियम् । ९।३।२।४. ✱ राजन्यस्य ज्योतिष्टोमे यज्ञायज्ञीयं ब्रह्मसाम । ४।३।४।८–९. ✱ राजन्यस्य दीक्षितस्य यवागूः व्रतम् ( मोजनद्रव्यम् ) । ज्योतिष्टोमे । वि. ४।३।४, १०।४।१, ✱ राजन्यस्य ब्रह्मसाम्नि नमादिग्नगुणाय । सामान्तरम् सगणाः । ४।१।२ वर्णक ४. ✱ राजन्यस्य नित्याग्निष्टोमसंस्थायाः लोप एव । राजन्यस्य अग्निष्टोमे न्यूनमासक्तस्य षोडशिनो विधानात् । तत्र अग्निष्टोमगलोत्तर षोडशी एव कर्तव्यः । स एवात्यग्निष्टोम इत्युच्यते । एव उक्थ्य संस्थायामपि । तत्रापि राजन्यस्य षोडशिनो विधानात्, तदुक्थ्यसंस्थालोप एव सिध्यति । माऽस्तु वा काम्योक्थ्यसंस्थाया निवृत्तिः । भाट्ट १०।५।१९. ✱ राजन्यस्य पार्थुरश्मं ब्रह्मसाम कर्म । भा. ८।८।३।२७, ✱ राजन्यस्य वीर्यसंपन्नः फलेन सम्बन्धोऽनूद्यते । ६।६। २।१८, ✱ राजन्यानां नागवाशो द्वितीयः प्रयाजः । ६।८।१।१. ✱ राजन्यानां सत्राधिकारो नास्ति । वि. ६।६।३.

✱ राजन्यकर्तृका अवेष्टिः । ' यदि राजन्यः (यजेत) ऐन्द्रं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत् ' इति । भा. ११।४।३।८.

✱ राजन्यचमसं ब्राह्मणा एव प्रभक्षेयुः न राजन्याः, राजसूये दशपेये । ३।५।२०।५१–५३.

✱ राजन्यचमसभक्षणं ब्राह्मणानामेव राजसूये दशपेये । ३।५।२०।५१–५३. मीको. पृ २०८० ' दशपेयन्याय. ' इत्यत्र द्रष्टव्यम् ।

✱ राजन्यवैश्ययोः आर्त्विज्यं प्रतिषिद्धम् । भा. १२।४।२।१८. ✱ राजन्यवैश्ययोः आर्त्विज्यं नास्ति किंतु ब्राह्मणानामेव । १२।४।१५।४२–४७. मीको. पृ. २८४ ' अधिकार, आर्त्विज्ये ब्राह्मणस्यैव ' इत्यत्र द्रष्टव्यम् । ✱ राजन्यवैश्ययोः ज्योतिष्टोमे न्यग्रोधफलचमसः, न तु सोमभक्षः । [illegible] च सोमाधिकारः । वि. ३।५।१९, ✱ राजन्यवैश्ययोः विहिते फलचमसे यागद्रव्यसंस्कारविषयः ' श्रीणाति, अभिषुणोति ' इत्यादय न प्रवर्तन्ते, परन्तु चोदकेनातिदिश्यन्ते । ३।६।१३. ✱ राजन्यवैश्ययोः सान्नाय्यभक्षः प्रतिषिद्धः । ' न राजन्यो न वैश्यो वा सान्नाय्यं पिबेत् अपोमयीयो होपः ' । भा. १२।४।१५।४५, ✱ राजन्यवैश्यानां ज्योतिष्टोमे फलचमसो विधीयते ' स यदि राजन्यं वैश्यं वा याजयेत्० ' इत्यादिना । १२।४।१५।४४. ✱ राजन्यवैश्यानां प्रवरवरणे मनुवत् इति पूर्वपक्षः । न्यायेन मनुवत्पक्षो नैवर्णिकानां तुल्यतया विकल्पितो इति सिद्धान्तः । संकर्ष. १।८।५.

✱ राजन्यशब्दः पर्याय एव हि राजशब्दस्य । भा. १।३।२।३ पृ. ९८१.

✱ राजन्यस्तुत्यर्थः ऐन्द्रशब्द ' ऐन्द्रो राजन्यः ' । वि. १।४।१४.

ह राजसं तामसं चैव दूरतः परिवर्जयेदिति न्यायः । साहस्री. १०२.

✱ राजसूय. क्षत्रियमात्राधिकारः । मु पृ. ८९७. ✱ राजसूयः बहुयागात्मकः । वि. ३।१।१०. ✱ राजसूय. । राजा तत्र सूयते, राज्ञो वा यज्ञ. राजसूयः । भा. ४।४।१।१. ✱ राजत्वाविशिष्टेन राजसूयः कार्यो नातद्विशिष्टेन । वा. ५।१।१।२ पृ. १३४७. ✱ ' राजसूयेन स्वाराज्यकामो यजेत ' इति । अत्र अनुमत्यादीनामिष्टीनाम्, पवित्रादीनां सोमानाम्, केषांचित् होमानां च समुदितानां एकं फलं श्रूयते । भा. ११।२।३।१२. ✱ ' राजसूयाय होमा जुहुयात् ', ' राजसूयेनेजान सर्वमाप्नुयात् ' इत्यादिषु सर्वदा निष्ठितो महाप्रकरणम् । बाल. पृ ९. ✱ राजसूयात् भिन्नकर्तृका ब्राह्मणादिकर्तृकाया अवेष्टिः । ११।४।३।९–१२. मीको. पृ ७१२ ' अवेष्टि ब्राह्मणादिकर्तृकयाः० ' इत्यत्र द्रष्टव्यम् । ✱ राजसूयस्य कृत्स्नस्यैव विदेवनादय. अङ्गम्, न [illegible] अभिषेचनीयस्याङ्गम् । ' पष्ठौहीं दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते ' इत्यादयः । विदेवनाधिकरणम् । ४।४।२।२–४. ✱ राजसूये अङ्गानां कल्पना । ११।२।३।१३–१९. मीको. पृ. १०७० ' इष्टि-

तथा चान्यार्थदर्शनम् ॥ ३ ॥

भाष्यम्— अन्यार्थोऽप्येनमर्थं दर्शयति । पूर्वे निरुप्य उत्तरं निरुप्तमिति । तत्र भेदे हि पौर्वापर्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्यं भवेत् । नैवमेतत् । वाक्यशेषेण तु विज्ञायते, साङ्गयोः प्रधानयो रेतत्पौर्वापर्यमिति । एवं ह्याह यत्पूर्वं निरुप्तं वीरजननं तत्, यदुत्तरं निरुप्तं पशुजननं तदिति । यस्मान्तन्त्रं साङ्गयोर्भवति, न केवलयोः । तस्माद्दर्शनमेवैतत् ।

शा— ' देशकालफलभेदादङ्गानां तन्त्रता भवेत् । कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ उच्यते दक्षिणाभेदात् कर्तृत्वमपि भिद्यते । तद्दानतानां कर्तृत्वादानतेश्च पृथक्त्वतः ॥'

तस्मात् प्रतिदक्षिणं तन्त्रभेदः ।

सोम—सूत्रार्थस्तु— राजसूये अनुक्तदेशकालाना कर्मणा ' राजसूयेन यजेत ' इति चोदनैकत्वेन युगपत् प्रयोगप्रत्यात् तन्त्रमङ्गानि इति ।

वि— ' सौमापौष्णादिके तन्त्रमङ्गानामुत भिद्यता ।, तन्त्र फलैक्यतो, भेद दक्षिणाकर्तृभेदतः ॥'

भाट्ट—सर्वैकफलसाधनानामनेकेषा कर्मणा फले साहित्यावगमेऽपि देशकालकर्तृभेदे प्रयोगभेदात् अङ्गावृत्तिरित्युक्तम् । तदिह यत्र देशादिभेदो नाम्नातः, दक्षिणाभेदमात्रं श्रुतम्, यथा राजसूये ' आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणा ' इत्यादौ तत्र किं दक्षिणाभेदात् कर्तृभेदस्ततश्च प्रयोगभेदादावृत्तिः, किं वा नेति चिन्तायाम्, सत्यपि दक्षिणाभेदे, कर्तृभेदे प्रमाणाभावः । न ह्यत्र अभिधानभेदस्तनापीतः तदेकस्य तत्राधिकरणे स्थापयिष्यमाणत्वात् । कर्तृत्वभेदस्तु न दक्षिणाभेदव्यापकः, प्रमाणाभावात्, दर्शपूर्णमासे च अन्वाहार्यदक्षिणासत्त्वेऽपि कर्तृभेदाभावाच्च । 'दर्शपूर्णमासयोश्च चार ऋत्विजः ' इत्यनेन एषा साहित्यावगमो व्यापककर्तृप्रयोग ' सर्वे दर्शपूर्णमासाभ्या यजेत' इत्यत्र दैविकप्रयोग इव विधीयते । अतश्च सत्यपि कालिकप्रयोगभेदे कर्तृप्रयोगस्यैकत्वात् कर्त्रैक्यमवगम्यते । वस्तुतस्तु नात्र दक्षिणाभेदोऽपि, द्वादशाहवदेकफलसाधनत्वेनैकप्रयोगत्वावगमे वामनश्यामयोर्मिलितयोरेव दक्षिणात्वात् । अत एव ' अन्वहं द्वादशशतं ददाति ' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेद इत्युक्तम् । अतश्च तत्तत्प्रधानाङ्गत्वेन व्यवस्थितयोरपि वामनश्यामयोरेकप्रयोगत्वात् मिलितयोरेव दक्षिणात्वम् । आवश्यकश्चायं न्यायो ब्राह्मणकर्तृकावेष्टिप्रयोगे, व्रीहियवामाग्रयणयोः समानतन्त्रत्वे च । इति प्राप्ते, दक्षिणायाः कर्तृसंस्कारकतया तद्द्वारेण प्रयोगान्वयविरोधात् पुरुष तत्प्रेक्षकत्वम् । न ह्यन्यथा तत्प्रधानाना व्यवस्थितदक्षिणात्वान कथमपि मगच्छते । न चात्र द्वादशाहवद् मिलितयोर्दक्षिणात्वम्, प्रत्येकं दक्षिणापदश्रवणेन भेदावगते । द्वादशाहे तु प्रत्येकदक्षिणापदाश्रवणात् तदैक्यमिति विशेषः । न च दर्शे पूर्णमासे च दक्षिणाभेदसत्त्वेऽपि कर्तृत्वभेदाभाव, आध्वर्यवादिसमाख्यया तेषा तेषा कर्तृणा प्रतिशाखं भेदेनैव विहिततया ' दर्शपूर्णमासयोश्चत्वार ऋत्विज ' इत्यस्य ' सोमे सप्तदशर्त्विज. ' इत्येवद्विधस्यैकवाक्यतया तदर्थवादत्वेन कर्तृप्रयोगविधायकत्वाभावात् । अत एव दर्शे पूर्णमासे च पृथक्प्रयोगानुष्ठानं याज्ञिकानाम् । एवं च- दक्षिणाया कर्तृत्वभेदद्वारा प्रयोगभेदावश्यकत्वे राजसूयान्तर्गतावेष्ट्यादौ प्रयोगभेदेऽघाया अपि तस्या अप्राप्तप्रत्यासन्नाराणादिकर्तृकावेष्ट्यादिप्रयोगे दक्षिणापेक्षाया सति सम्भवे तत्तत्प्रधानाङ्गत्वेन यागतायास्तस्या प्रयोगनिश्चयत्वात् आग्नेयीन्यायेन ग्रहणम्, न तु अन्य क्रतुप्रयोगे बाधिताया अन्वाहार्यदक्षिणायाः इति वक्ष्यते । अस्तु वा तत्रापि सा । सर्वथा दक्षिणाभेदे प्रयोगभेद इति सिद्धम् ।

मण्डन— ' भृतिभेदे तन्त्रभेदः । '

शंकर— ' कर्तृदक्षिणया भेदः । '

* राजसूये प्रक्रमे ये कर्तारः, ते एव आसमाप्ते इति न नियमः दक्षिणाभेदात् इति पक्षः । कर्त्रैक्येऽपि दक्षिणाप्रयुक्तधर्मभेदः समर्थितः । पूर्वकर्तार एव वामनेन क्रीता आग्नावैष्णवादिकं किं कुर्युः । श्यामेन क्रीताः अभिषेचनीय इति धर्मभेदः । तथा च राजसूयस्यैकत्वात् कर्त्रैक्यनियमः । वि. ११।४।२, * राजसूये ब्राह्मणवैश्ययोरनधिकारः । ११।४।३ * राजसूये ' यः

धान्येन राजसूयस्य प्रचारे स्यादिति, तत्रोपसत्सु प्रतिदिनमालभ्य जुहुयात्' इति सोमसम्बन्धिन्युच्यते । भा. ११।२।१।१४. ● राजसूये यागाश्रयभूतानि सर्वाण्येव न स्वातन्त्र्येण फलन्ति किंतु यागा एव स्वातन्त्र्येण फलन्ति । मीम. ४।४।१, ● राजसूये यागायागरूपाणि कर्माणि सर्वाण्येव न समप्रधानानि किंतु यागा एव प्रधानं अयागास्तु अङ्गम् । ४।४।१, ● राजसूये नानाफलेन अनुमत्यादीनि कर्माणि कर्मप्रयोगारम्भे 'अस्मै फलाय इमानि कर्माणि करिष्ये' इति फलोद्देशेन सङ्कल्प्यानि न तु अयागरूपाणि । ४।४।१. ● राजसूये दविहोमा हवींषि दर्शपूर्णमासविकृतिरूपाणि । तेषु मैत्राबार्हस्पत्ये हविषि 'स्वयंकृता वेदिर्भवति, स्वयंदिनं बर्हिः, स्वयंकृत इध्मः' इति । तथा च प्रकृतौ वेदिकरणबर्हिर्लवनादीनां निवृत्तौ प्रयोजनं कुप्यते । तर्हि स्तरणाद्यवहिरासादनादयः वेदिधर्मा विकृतावपि कर्तव्याः । तस्मात् खननादीनि नानुष्ठेयानि । बर्हिस्तरणादीनि त्वनुष्ठेयानि । उत्तरकालीना अननुष्ठानम्, पूर्वोत्तरकालीना तु अनुष्ठानम् । वि. १०।१।१, ● राजसूये 'वल्मीकवपामुद्धृत्य जुहोति' इति श्रूयते । अनारभ्य 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतः' इति । अत्र आहवनीयवल्मीकवपयोः विकल्प इति पक्षः । वल्मीकवपया आहवनीयस्य बाध इति सिद्धान्तः । १०।८।८. ● राजसूये निरोध्याहोमाद्यानामभिषेकात् प्रागपकर्षः । भा. १२।१०।२१, 'निरोध्यादीनामभिषेकात् प्रागपकर्षः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● राजसूये विशेषविहितया वल्मीकवपया सामान्यविहितस्याहवनीयस्य बाधः । भा. १०।८।८।१६. ● राजसूये सतृप नाम इष्टयो दश । सप्तेषु हवींषि इति भाट्टाः, सप्तपादा हवींषि इति शा., सप्तपादभाष्य. इति विवरः । वि. ११।२।१४, ● राजसूये सप्त (प्) शब्दवाच्यानि आग्नेयाष्टाकपालादीनि दश हवींषि आम्नातानि । ● 'पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन' इति अष्टम-नवम-दशमहनिर्णये उक्तम् । अनेन वाक्येन उपसदां आभिमुख्यस्थानेषु सौम्यादीनां पशूनामनुष्ठानं विहितम् । तथापि सौम्यादयः नोपसदामङ्गानि किंतु प्रधानान्येव । कालविशेषसम्बन्धपरं तु वाक्यमस्य । ४।४।३, ● राजसूये सर्वारम्भार्थोऽग्निष्टोमः 'अग्निष्टोममग्रे ज्योतिष्टोममाहरति' । यथा दर्शपूर्णमासारम्भार्था आरम्भणीया तद्वत् राजसूये अग्निष्टोमः । १०।१।३. ● राजसूये 'सोमापौष्ण एकादशकपाल., ऐन्द्रापौष्णश्चरुः, पौष्णचरुः, श्यामो दक्षिणा' इत्येक त्रिकम् । 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा' इत्यन्यत् त्रिकम् । एतत्त्रैविक्रयेण तन्त्रेणानुष्ठान इति पक्षः । दक्षिणाभेदेन कर्मभेदात् अङ्गभेदः इति सिद्धान्तः । वि. ११।४।१. 'सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' । 'आग्नावैष्णव एकादशकपाल, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपाल, वामनो दक्षिणा' इति विस्तरे पाठः । द्वितीयत्रिकः आदौ, प्रथमः त्रिकः पश्चात् इति त्रिकद्वयस्य वैपरीत्येन पाठो भाष्ये । 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा' । 'सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणा' इति एतादृशः क्रमात् पाठः शास्त्रदीपिकायाम् । 'वामनानन्तरं हि पूर्वं कर्म कर्तव्यम्, श्यामानन्तरम्' इति च तत्र स्पष्टीकरणम् । शास्त्रदीपिकानुरोधेन वाक्यपाठो भाट्टदीपिकायाम् । तैत्तिरीयसंहितायां तु १।८।८ इत्यनेन पाठः 'आग्नावैष्णवमेकादशकपालं निर्वपति, ऐन्द्रावैष्णवमेकादशकपालम्, वैष्णवं त्रिकपालं वामनो वही दक्षिणा... सोमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुम्, पौष्णं चरुम्, श्यामो दक्षिणा' इति । परन्तु तै.संहितायां त्रिहविष्काणि त्रीणि कर्माण्युक्तानि, तथा चात्र न त्रिकद्वयं किंतु त्रिकत्रयम्, तत्र आग्नावैष्णवादित्रिकं प्रथमम्, 'अग्नीषोमीयमेकादशकपालं निर्वपति, इन्द्रासोमीयमेकादशकपालम्, सौम्यं चरुम्, बभ्रुर्दक्षिणा' इति द्वितीयं त्रिकं सोमापौष्णादि तृतीयं त्रिकं इति विशेषः । इति अत्र विषये भूयो वैचित्र्यम् । ● राजसूये सोमापौष्णादिचरौ द्विदैवत्ये न पेषणं किंतु पूर्वदेवत्ये एव । वि. ३।३।२०. ● राजसूये सौम्यपशवः नोपसदामङ्गं 'पुरस्ता-

**सोम—** पूर्वस्मिन् पादे फलश्रुतिः विचारिता, इदानीं फलश्रुत्यपवादः प्राधान्येन निरूप्यते इति पादान्तरम्, आनन्तर्यं च (संगतिः)। सूत्रार्थस्तु—प्रकरणे श्रूयमाणः राजसूयशब्दः प्रकरणशब्दः, तस्य साधारण्यात् चोद्यमानानां अनन्तरं सर्वेषां समप्राधान्यमिति।

**वि—** ' राजसूयेऽनुमत्यादि देवसूरित्यादि च ते उभे। सुएये स्तोत्रमुख्यार्थं, स्यादाद्य- प्रविवेक्यतः॥ यागत्वात् राजसूयस्यात् अङ्गिनः फलवत्ततः। देवताण्यस्य यत् तत् अङ्ग फलवतो यजेः॥ '

**भाट्ट—** राजसूयप्रकरणे इष्टिपशुसोमयागाः अयागाश्च होमाभिषेचनादयः सर्वे फलकाङ्क्षा अपि भूताः न स्वातन्त्र्येण फलेन संबध्यन्ते, प्रयाजादिवत् सर्वेषामेव फलभावनातस्तरत्वात् अयागानां तदङ्गत्वोपपत्तेः। राजसूयपदस्य यजिसामानाधिकरण्येन तन्नामधेयत्वात्। न च राजा सोमेन यजेत अभिषुणुयात् इति श्रुत्या राजसूयशब्दस्य सोमयागमात्रनामत्वात्, तेषामेव फलसम्बन्धोऽस्तु इति वाच्यम्। राजा क्षत्रियेण सूयते निष्पाद्यते इति व्युत्पत्त्या सर्वेषामपि उपपन्नत्वेन सोमयागेषु प्रमाणाभावात्। अत एव राजा क्षत्रिय सुनोति स्नाति वा इति व्युत्पत्त्या अभिषेचनीयस्यैव तत् माहेन्द्रस्तोत्रकालनियोगसम्बन्धेन राजसूयपदप्रसिद्धं, तस्यैव फलसम्बन्ध इत्यपि अपास्तम्। उक्तव्युत्पत्त्या सर्वपदार्थसंभवे यज्ञियोगे प्रमाणाभावात्। अतः सर्वे यागा एव फलयुक्ता इति विवेचनादीनां तदङ्गत्वेऽतिदेशः।

मण्डन— ' राजसूयस्य यजीतरदङ्गम्। '

शंकर— ' राजसूयं यजे. फलम्। '

● एकस्मिन्नेव यागत्वे गुणफलयोः, फलभेदश्चेति वाक्यभेदः। न च राजसूयन्याय (११।४।२) एकत्वे हि सर्वेषां तत्तद्देवताप्रधानादीनां तत्तत्रो अन्वयः देशकालकर्त्रादीनां च प्रयोगान्तरो वक्ष्यते। को. १।४।१।२ पृ. १८३. ● ' दध्नेन्द्रियकामस्य जुहुयात् ' अत्र द्वितीयस्तु पूर्वपक्ष—नात्र राजसूयन्यायः, कर्तुर्हि योगान्यथित्वात् फलस्य च विनियोगान्यथित्वात्



अप्रगतस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तेः। प्रकृते तु दध्नः उत्पत्त्यन्तरितेन अग्निहोत्रानुवादेन गुणविधिः, फलविशिष्टविनियोगविधिश्च इति वैशिष्ट्यासम्भवात् वाक्यभेदः। भाट्ट. २।३।११. ● अत्र (' एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ' इत्यत्र) गुणस्य कालादिकत्वात् राजसूयन्यायेन प्रयोगविधेरभावात्, (इत्येक पक्षः, द्वितीयस्तु—) नात्र राजसूयन्याय प्रयोगस्य वाक्यवाक्येनैव प्राप्तत्वात्, पञ्चान्तरश्रवणेऽपि च विविदिषावाक्यवत् विनियोगमात्रकरणेन प्रयोगान्तरस्याऽविधा (स्यापि विधा-) नोपपत्तिः। को. २।२।१३।२३ पृ. २८०. ● ' एतस्यैव रेवतीषु ' अत्र आद्य पूर्वपक्षः राजसूयन्यायेन तद्वारकविशिष्टाग्निष्टोमस्तोत्रसाधनाविशिष्टकृत्वा यथार्थभूत-कालकर्त्रादिरूप—प्रयोगान्तरगुणकत्वेन विनियोगविशिष्टप्रयोगविधिसंभवात्। द्वितीयस्तु पक्ष नात्र राजसूयन्यायः, प्रयोगस्य अग्निष्टोमस्तोत्रोत्तरकालस्य च वाक्यान्तरवाक्येनैव प्राप्तत्वात् तदनुवादेन रेवतीविधिः फलोद्देशेन अग्निष्टुद्विधिश्च इति वाक्यभेदः। भाट्ट. २।३।१२. ● ' तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत ' इति वाक्येन राजसूयन्यायेन अयं यमन्त्र-एकविंशस्तोमविशिष्टाग्निष्टोमस्तोत्रसाधनोत्तरकालादिविशिष्टो यागप्रयोगः फलोद्देशेन विधीयते। मी. ०।२।१२।२१ पृ. २७८. ● ' दर्शपूर्णमासयोः ' राजसूयन्यायेन नात्रोः प्रयोगचस्यानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः। भाट्ट. २।२।३. ● स्वर्गकामस्ये (' ज्योतिष्टोमेन स्वर्गकामो यजेत ') राजसूयन्यायेन इष्टिपशुयागानामेव फलसम्बन्धागतौ यागान्तरविधाने प्रमाणाभावात् (सोमेन यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत इ.)। २।२।१.

● ' दध्नेन्द्रियकामस्य ' इत्यत्र दधिरूपद्रव्यस्य उत्पत्तौ अन्वयेन राजसूयन्यायाविषयत्वात् वाक्यभेदावश्यकत्वेन गुणाद् भेद एव। को. २।२।११।२५ पृ. २७४.

● राजसूयपदं अप्रसिद्धार्थत्वेन आख्यातपरतन्त्रं

'राजसूयेन यजेत'। मीन्या. ● राजसूयपद अश्रुतस्य अश्वकर्णादिशब्दवत् इति साम्प्रदायिकाः। मीन्या.

● राजसूयप्रकरणे 'अवेष्टीः यति, राजन्य जिनाति' इति देवनादीना अभिषेचनीयप्रयोगान्तःपातित्वात् अभिषेचनीयाङ्गत्वम्, इति पूर्वः पक्ष.। सनिधेः, अत्रास्वप्रकरणाद्वा महाप्रकरणस्य प्रबलत्वात् राजसूयाङ्गत्वमेव देवनादीनाम्, अनुष्ठान तु अभिषेचनीयमाहेन्द्रस्तोत्रकाले इति विशेष.। वि ३।२।१०, ४।४।१२.

● राजसूयवत् राजसूये यथा यजिना (यागैः) फलसम्बन्ध तथा दर्शपूर्णमासयोः प्रयाजादिसाधारण्येनाप्यु फलसम्बन्ध इति पूर्वपक्ष.। भाट्ट ४।४।११, ● राजसूयवत् राजसूये सर्वेषा यागाना यथा फलसम्बन्धः प्राधान्य च तथा ज्योतिष्टोमेऽपि आग्नेयीयादीना सर्वेषा फलसम्बन्धात् सर्वेषा प्राधान्यम्। पूर्वपक्षः। ४।४।१२.

● प्राप्तानामपि कर्मणां राजकर्तृत्वविशिष्टाना फलोद्देशेन राजसूयवाक्ये विधानात् प्राप्तकर्मानुवादेन गुणसम्बन्धे फलसम्बन्धे चापि न वाक्यभेदः। भाट्ट. २।३।११.

● राजसूयशब्द. इष्टि–पशु –सोम– दर्विहोमरूपाणामनेकेषा प्रधानानां समुदाय नामधेयम्। वि. १०। १।३, ● राजसूयशब्दः यागनामधेयम्, अप्रसिद्धार्थत्वे सति यागसामानाधिकरण्यात्। ४।४।१, ● राजसूयशब्द. 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजसम्बन्धात् प्रवर्तमानो राजकर्तृकाणा एकप्रकरणपठिताना सर्वेषा यागाना नामधेय भवति। ४।४।११.

● राजसूयशब्दवाच्याना यागानामेव फलार्थत्व न तु अनिज्याभूताना विदेवनादीनाम्। ४।४।१।१–२

● राजसूयसंकल्पे एव सोमक्रयणादि. परिगणन (समुपामारम्भे वा) न तु उपसत्संकल्पे। सोम. ४।४।३

● राजसूयसंज्ञको याग स्वाराज्यकामस्य उपास्यत्वेन चोद्यते। 'राजसूयेन स्वाराज्यकामो यजेत' इति। टुप्. ११।४।२५.

● राज्यं चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात् सर्वे राजान'। ननु न क्षत्रियसम्बन्धेन राज्य विहितम्, अन्यायेन इदं कुर्वाणो न राजानो स्यात्। नैष दोष., सर्वेषा तावत् राज्यकरणात् तावतामपि राजत्वं लभ्यम्। वा. २।३।२।३ पृ. ५८०, ● जनपदरक्षण हि असाधारण राजकर्म तेन तत् राज्यं इत्युच्यते। २।३।२।३ पृ. ५८६, ● राज्ञः कर्म राज्यम्, न तु आर्यावर्तस्य राज्यस्य कर्ता राजा इति कल्पनीयम्, देशान्तरे विज्ञानत्वाद्वाक्यः (इविष्टेषु)। २।३।२।३ पृ. ५८५.

● राज्यशब्दः। नित्ययोरेव शब्दार्थयो. नित्य एव सम्बन्धे शास्त्रतः प्रतीयमाने, बाहुल्यप्रतिपत्तिवेलया राजशब्दमन्वाख्याय राजशब्दोऽन्वाख्यायमानो यौगिक. सनिमित्तश्चोच्यमानोऽपि नित्यनिमित्तत्वात् न आदिमत्त्व प्रतिपद्यते। वा. १।३।१९।१० पृ. ११०५. ● राज्यशब्दं जनपदपुरपरिरक्षणे, अश्वोद्धरणे (कष्ट काना) आर्यावर्तनिवासिनः प्रयुञ्जते। राज' कर्म राज्य इति च अभियुक्ता उपदिशन्ति। भा. २।३।२।३. ● राज्यशब्दस्यापि नहि आदिमती प्रवृत्ति' इत्युक्त (२।३।२) इत्यत्र। या ३।१।६।१३ पृ. ८२१.

● राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्य इति मन्वादयः स्मरन्ति। या २।३।२।३ पृ.५८४.

✱ 'रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति' इति न्यायः। यथा सूर्योदये दीपशिखा न शोभते, तथा गुणवत्तरसन्निधाने गुणवानाच्छिद्यते इत्यर्थविवक्षायामस्य प्रचार इति। साहस्री. ७९८.

● रात्र्यधिकरणम्। पौर्णमास्या' इष्टकारम्भे पूर्वेद्युरुपवास., परेद्युर्याग। परेद्युरपि रात्रौ एव याग इति पूर्वपक्ष। दिवसे एव इति सिद्धान्त'। संकर्ष. ३।१।३.

● रात्रिपर्यायेषु ग्रहचमसाना समुच्चय एव न विकल्प'। संकर्ष ३।३।१६.

● रात्रिविषये एकदेशवचन 'द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेत' इति। समस्तग्रहण यथा– 'द्वादशाहेन प्रजाकाम याजयेत्' इति। भा. १०।६।१।१.

● रात्रिशब्दः अहोरात्रवचनः, अहःशब्दोऽपि । द्विरात्रादयो अहीनाः । द्वादशाहः । भा. ८।१।१०।१७. ● रात्रिशब्दः द्विरात्रादिपदान्तर्गतः षष्टिघटिकात्मकदिनपरः । वि. ८।१।१० , ● रात्रिशब्दः 'सत्र ' इत्यस्मिन्नर्थे समुदायप्राधान्येन, ' अन्नोद्यरात्रः ' इत्येकवचनान्तेन प्रयुज्यते । क्वचित्तु प्रत्येकं रात्रिव्यक्तिप्राधान्येन ' य एता विंशतिं रात्रीरुपयन्' इति बहुवचनान्तोऽपि प्रयुज्यते । ४।३।१८ .

● रात्रिसत्रं नाम न कश्चित् सत्रविशेषः, किन्तु अपोदनरात्रचतुर्दशरात्रादीनि यानि सत्राणि तान्येव रात्रिशब्दान्वेन व्यवह्रियन्ते । वि. ४।३।८ . ● रात्रिसत्रे अर्थवादिकं प्रतिष्ठादिरूपं फलं ज्ञेयम्, न तत्र स्वर्गः कल्पनीयः । ' प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति, ब्रह्मवर्चस्विनोऽन्नादा भवन्ति य एता उपयन्ति ' इत्यर्थवादः । ४।३।८।१७-१९ . ● रात्रिसत्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता (तथा अत्रापि)। वि. ३।४।१२ .

रात्रिसत्रन्यायः । यत्र विधिवाक्ये फलं न श्रूयते, तत्र अर्थवादस्थमश्रोक्तं फलमतिदिश्यते इत्यर्थवादातिदेशः, अयमेव रात्रिसत्रन्यायस्य विषयः । अत एव रात्रिसत्राधिकरणे ' प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति ' इत्यत्र विध्युद्देशे फलाश्रवणात् फलान्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये ' आर्थवादिकं प्रतिष्ठाख्यं फलम् ' इत्युक्तमिति दिक् । साहस्री. ८५८.

रात्रिसत्रन्यायः ॥

क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः । ४।३।८।१७ ॥

भाष्यम्— रात्रीः प्रकृत्य श्रूयते ' प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति । ब्रह्मवर्चस्विनोऽन्नादा भवन्ति, य एता उपयन्ति ' इति । तत्र सन्देहः किं ते फलार्थवादा फलविधय इति । किं प्राप्तम् ? फलार्थवादा इति कार्ष्णाजिनिर्मेने । कुतः ? फलार्थवादवत्त्वा एते गम्यन्त इति । किं भाष्यम् ? विधिविभक्तेः अभावः । अङ्गवत् । यथा ' यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति ' इत्येवमादिषु ।

टुप्— रात्रीणां विधायकाभावादर्थवादोऽयम्, भवितव्यं च कर्मणः फलेन, तस्मात् स्वर्गः फलमिति । विधिविभक्तेरभाव इति कामशब्दाभाव इत्यर्थः । अथवा साध्यसाधनसम्बन्धाभाव इति ।

फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् । १८ ॥

भाष्यम्— आत्रेयः पुनराचार्यः एतं तार्तीयकेभ्यः फलमस्तीति मेने, न फलार्थवाद इति । कुतः ? अश्रुतफलत्वेऽपि अमीषां फलचोदनया वाक्यशेषभूतया भवितव्यम् । तस्मात् अन्या व्यवहिता सती, अव्यवहिता कल्पनीया । दूरव्यवहिता कल्प्यैव । प्रतिष्ठा ब्रह्मवर्चसत्वं च समभिव्याहार आसां प्रत्यक्षः । विधिविभक्तिरात्रमन्यतोऽपेक्ष्यम् । आह । कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति । यदनेन प्रतिष्ठादिना फलार्थेन गमन्स्यते इति । उच्यते । सह फलार्थेन भविष्यति, न केवलम् । तस्मात् अदोषः । अथवा रात्रीणां या विधायिका विभक्तिः, सा इममपि प्रतिष्ठादिविशेषं विधास्यति प्रयोगवचनेन । स्तुतिर्वा सह प्रतिष्ठादिभिर्विधायी भविष्यतीति ।

टुप्— कर्मणः फलेन भवितव्यम् । तत्र हि स्वर्गपदमध्याहृत्य तेन सहैकवाक्यता, उत प्रतिष्ठापदैकदेशविपरिणामः प्रतिष्ठादेः फलत्वम् । सन्निधानस्य फलत्वात् प्रतिष्ठादेरेवैकवाक्यता कल्प्या । स्वर्गाध्याहारे हि सन्निधानमेकवाक्यता चोभयं कल्प्यम् । तत्र गौरवम् । ' विधिविभक्तिमात्रमन्यतोऽपेक्ष्यमिति ' साधनमङ्गलय एव आदिश्यः । पूर्वेण प्रतिष्ठादि साधितं शाप्यम् । उत्तरेण तु ' उपयन्ति ' इति वर्तमानापदेशात् लिङध्याहियते साधनत्वप्रतिपत्तये । ' आह—कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति, यदनेन प्रतिष्ठादिना फलार्थेन गंमन्स्यते इति । प्रतिष्ठादिरित्यनेन उपयन्तीत्यस्य फलार्थो लभ्यते । एवं परिचोदित आह—फलाध्यवसायार्थत्वं समर्थं कर्तुं न्यायेनैव भावनाऽध्याहरिष्यत , दोषुरिति । अथवा रात्रीणां य उपचिप्रयोगवचनः स यथा इतिकर्तव्यता-

मत्र यदपेक्षते तथा स एव साध्यसाधनसम्बन्ध करिष्यति। यथा 'एकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते। सर्वेभ्यो ज्योतिष्टोम' इत्येतस्मात् वाक्यात् लिङोऽभावेऽपि ज्योतिष्टोमः सर्वकामाना साधन भवति। तथाहि, उपात्तो या लिङ् सा साधनत्वेन ज्योतिष्टोम विधास्यति, एवमिहापि। अथवाऽर्थवादोऽपि नामावाद्विधिं रक्षयति। स रक्षित साध्यसाधनसम्बन्ध प्रतिपादयिष्यति। तस्मादर्थवादेभ्यो विधि। विपरिवर्तमानाश्च त एव फलतः प्रतिपत्स्यते। तस्मात् 'न स्वर्ग स्यात्' इत्यस्यायमपवाद।

अङ्गेषु स्तुतिः परार्थत्वात्। १९॥

भाष्यम्— अथ यदुक्तं यथा 'यस्य खादिरः स्रुवो भवति' इत्येवमादिषु फलश्रुतिरर्थवादो भवति, एवमिहापि स्यादिति। युक्तं तत्र फलार्थवाद। फलनित्य सम्भवात्, फलार्थवादसम्भवाम। तदुक्तं 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति।

शा— 'अथापक्षोक्तवनत्र वर्तमानापदेशत। फलविध्यसमर्थत्वात्तद्देवार्थवादता॥ अनादिष्ट फलत्वेन तस्मात्स्वर्गफलार्थता। निर्देशात्तु प्रतिष्ठैव फलत्वेन विधास्यते॥ तुल्यत्वेनैव कर्मैतन्निराकाङ्क्षं फलं प्रति। कल्पनीयं फलं तत्र विनाप्यो ध्याहृतेर्वरम्॥' (विनाम विपरिणाम इत्यर्थ)।

सोम-- सूत्रार्थस्तु-- क्रतो राजिमभाविक फल श्रुतिं पर्णतादान्द्र इव फलार्थवाद कार्यानिनिराचार्यो मयते इति।

वि-- 'स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहाऽऽदिम। पूर्वपक्षात्प्रतिष्ठा श्रुता तेनाश्रुताद्वरम्॥'

भाट्ट-- 'योतिष्टोमरात्रु' इत्यादिवाक्योत्पादितानि सौत्यानि कर्माणि विधाय 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रुतम्। तत्र रात्रिसत्रादौ पूर्ववत् स्वर्गकल्पने स्वर्गोपस्थिति तद्वाचकपदोपस्थिति कल्पपदान्तरकल्पना चेति गौरवापत्ते, लाघवात् श्रुतप्रतिष्ठैव साध्यत्वकल्पनम्। तत्र त्रिविधव्यवस्था यत्र श्रुतानामेव पदाना लक्षणया फलपरत्वसम्भव, यथा उदाहृतवाक्ये निष्प्रपन्नत्व स्तुत्यर्थस्य फलयित्वा अपि व्यत्क्रान्तवृत्तिरेन साध्यत्वावगतौ प्रतिष्ठादिष्वाभाया दीप्तित्वसिद्धया साध्यत्वम्, धातोरेव वा यननं परिकल्प्य इच्छाविषयत्वावगतौ स्वर्गादिवदेव साध्यता कारी। तत्र प्राथमिकफलापेक्षाशा श्रुतवाक्यस्यैव लक्षणया फलपरत्वे प्रमिते कथात् स्तुत्यपेक्षायामगत्यर लक्षणविदेरेव स्तावकत्वम्। यत्र तु श्रुतेष्वर्थवादपदेषु न स्तावकत्वकल्पनं विना फलपरत्वमात्रेणोपपत्तिः 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादौ, तत्र तेषां स्तावकत्वमेव। फलापेक्षाया तु उपस्थितपदसमानजातीयपदान्तरस्यैव कामपदयुक्तस्य कल्पनेति सर्वदा न स्वर्गप्रयुक्तत्वम्।

मण्डन— 'रात्रिसत्रे फलं स्तुतौ।'

शंकर— 'फलं रात्रिष्वर्थवादात्।'

* **रात्रिसत्रन्यायेन** अर्थवादावगतानि पूतत्वादीनि (वैश्वानरेष्टौ) प्रवृत्तिबलकानि स्यु। तु पृ ४९०, * रात्रिसत्र न्यायेन अर्थवादस्थेनोपयुक्ताना पूतत्वादिफलवचनाना परावर्ते फलपरत्वकल्पनेऽपि अपूतवादीन् प्रति फल नास्ति। पृ ४९१ * रात्रिसत्र न्यायेन वाक्यशेषसम वनावगता देवतातृप्तिरेव फलमिति कल्पयितुं युक्तम् न त्वत्यन्ताप्रतीतापूर्वकल्पनम् (पूर्वपक्षे)। शा ९।१।४ * एतेन– 'सुम एवैनमिन्द्र प्रजया पशुभिश्च तर्पयति' इत्यर्थवादोपात्तस्य देवताप्रसादस्यैव रात्रिसत्रन्यायेन फलत्वोपपत्ते, न अनुपस्थितापूर्वकल्पनं युक्त–इति वेदाविमतमपि प्रत्युक्तम्। ततोऽपि उपस्थिततरत्वमफल कल्पनेन नैराकाङ्क्ष्ये रात्रिसत्र न्यायावतार। कौ ९।१। ३६ पृ ८७ * 'धर्मेण पापमपनुदति' इत्यादिवाक्य शेषात् रात्रिसत्रन्यायेन पापक्षय एव नित्यनैमित्तिकस्य फलम्। भाट्ट २।८।१ * 'नैवार श्चरुर्भवति' –'चरुमुपदधाति' तत्र पूर्वपक्षे नैवारवाक्ये चरुलक्षणस्य, आथर्वादिवाक्ये बृहस्पतिदेवताया रात्रिसत्र न्यायेन विधेयत्वम्। कौ २।३।७।१८ पृ ५२ * 'य एवं वेद ब्रह्मैव भवति' इति सिद्धवदर्थवादावगतस्यापि ब्रह्मभावस्य, नियोज्यविशेषाकाङ्क्षाया ब्रह्मबुभूषोर्नियोज्य विशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भ। भामती १।१।४ वर्णक १ * 'यदष्टाकपालो भवति, गायत्रियैवैनं पुनाति' अत्र

फलापेक्षया रात्रिसत्रन्यायेन पूर्णत्वादिकं फलत्वेन कल्प्यते । कौ. ३।४।१३।३१. ● लिङ्गविरोधिना प्रकरणेन पार्थ्यनिर्णयाभावे: फलसमर्पकत्वा रात्रिसत्रन्यायेन पूर्वपक्षयितु शक्या । [illegible] पृ. १४६५. ● 'वैश्वानर द्वादशकपाल०' इत्यत्र अष्टाकपालादिपदस्य नामधेयत्वाभावे, 'नामधेयेन' इत्यर्थवादस्याङ्गीकारात्, तस्य च रात्रिसत्रन्यायेन फलपदत्वाभ्युपगम । पूर्वपक्षे भाष्ये । कौ. ३।४।१३।१७. ● तत्पा फलवाद्‌न्याया 'स्नानेन पातयात्' इत्यादिवाक्यशेषेण रात्रिसत्रन्यायेन फललाभ. आवगोरणादेः । कु ३।४।१०।२३. ● 'स्वाध्यायोऽध्येतव्य' इति स्वाध्यायाध्ययनेन भावयेत् किमिति तत्र विश्वजिन्न्यायेन फलं न कल्प्यते । न च 'रात्रिसत्रन्यायेन' अर्थवादस्य फलम् । अविनाभाव फलेन । तस्मात् स्वाध्यायाध्ययनेन यदर्थो व्यक्ते तदेव फलम् । टुप्. ५।१।८।६.

● रात्रिसत्रन्यायाश्रय । 'भगौ फलार्थत्वादप्रधानं कर्माङ्गिति.' (४।३।८।१७) इति पूर्वपक्षसूत्रे, विषयतैत्तिरीये भतौ 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादावगतमेव फलमात्रेयो मन्यते । तस्य क्रियया सह गुणगुणिसंबन्धनिर्देशेन स्वत्वसामान्यसम्भवात् इति यक्ष्यति । गु पृ. १४८१.

● रात्रिसत्रप्रतिष्ठावत् । न च फलापेक्षया अन्यार्थस्यानुपात्तस्योपस्थितत्वात् रात्रिसत्रप्रतिष्ठावत् तदाचपदान्तरकल्पनया पौर्णमासीयागार्थत्व वैगुण्यमेति वाच्यम् । ( पूर्वपक्ष ) । भाट्ट. ४।३।१६.

● रात्रिसत्रस्थले ( ४।३।८।१७-१९ ) प्रकरणान्तरेण फलवादत्राया अप्राप्तेः, अगत्या स्तुतिसमर्पकस्यैवार्थवादस्य फलसमर्पकत्वम् । सोम. १।२।२.

● 'रामरावणयोः युद्धं रामरावणयोरिव' । अनन्वयेन सुधा स्तुतिर्भवति अनन्यसमानचरितत्वात् । भवति हि लोके स्वस्मिन्नेव आरोपितभेदमाश्रित्य एवमपि स्तुतिः । भेमसी भेदे न युक्ता । वा. १।४। ८।२ पृ. ३३६.

● रामवत् भर्तृशोक. सीतायाः अप्रतीतस्य धर्मस्येतिभाग. । वा. १।३।३।७ पृ. २०४ । सुधा–रामवत् इत्यनेन तस्यापि पत्नीत्यागेन एकाकिनः क्रतुप्रयोगात् धर्मं यत्किम. सूचित । पृ. १८५ । (अत्रोत्तरम्–) रामस्य स्नेहवशात् अपत्यकृतपिण्डनृष्ण्यस्य यागसिद्धिः, हिरण्मयसीताकरण च लोकापवादभिया त्यक्तसीतागतानुरागाभावाशङ्कानिवृत्त्यर्थम् । वा. पृ. २०८ । सुधा– रामेण सीतास्नेहात् भार्यान्तरागमनप्रतग्रहणात् । साक्षादपत्याभ्यां कुशलवाभ्यां कृतपिण्डनृष्यो राम । ननु रामस्य धर्मार्थदारान्तरसद्भावे 'यज्ञेयज्ञे प्रकुरुते सीता पत्नीं हिरण्मयीम्' इति हिरण्मयीसीताकरणमनर्थकं स्यादित्याशङ्क्याह–हिरण्मयीति । अपवादभीत्या त्यक्ता या सीता तद्गत रागविषय मदनुरागस्य अनैष्ठुर्यं तदभावाशङ्कानिवृत्त्यर्थमित्यर्थः । 'रावणापहारदूषिता सीता रामो भजते' इति लोकापवादभयमानेन रामो त्यक्ता, न सीताया दुष्टत्वात्, नापि रामस्य सीताया नैष्ठुर्यात् इति श्रोतृषु लोकापवादभीति प्रति त्यागस्य निश्चयापेक्षत्वादर्शनार्थं स्वकलत्रस्य सीताशब्देन सह सापेक्षसमास कृत. । वृ १९२.

● 'रागोवाजीयं वैश्यस्य ब्रह्मसाम कुर्यात्' इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम् । भा. ४।३।२।४, ● 'रागोवाजीय वैश्यस्य ब्रह्मसाम' इत्यादौ । ६।६।३।१७.

● राष्ट्रभृत नाम होमा दर्विहोमाः । वि. ८।४।४. [ एते होमाः अनेकफलार्थं विहिताः यथा-(तैत्ति. ३।४।८) अधिदेवने, अभिचरत:, आमोदकामस्य, उन्मादपरिहाराय, ओजस्कामस्य, ग्रामकामस्य ज्येष्ठस्यापरभूतस्य वत. इत्यादि ] । ● राष्ट्रभृता अग्निप्रकरणे उत्पन्नानां स्वाहादे स्वदेशः 'राष्ट्रभृतो जुहोति' इति । भा. ७।१।२।१२, ● राष्ट्रभृता उत्तरहोमेषु वचनादतिदेश । ८।४।५।२८.

● राष्ट्रभृद्धोमा अनारभ्यश्रुता. वैदिककर्माङ्गम् । वि. ३।८।१३. ● राष्ट्रभृद्धोमाः 'ऋताषाडृतधामाग्निर्गन्धर्वः' (तैत्ति. ३।४।७) इत्यादिभिर्मन्त्रैः क्रियमाणा होमा. । ते च वैदिकेष्वेव कर्मसु, न लौकिकेषु कृष्यादिषु । ३।८।१३.

※ राष्ट्रभृद्धोमेषु 'ताभ्यः स्वाहा' इत्येव द्वितीयो द्वितीयो मन्त्रः ॥

'ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु, ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा' इति मन्त्रे स्त्रीपुंलिङ्गकपदाना व्यतिषङ्गात् यथार्थं विनिकृष्य मन्त्रद्वयीकृत्य ('ऋताषाड् ऋतधामा गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा' इति प्रथमो मन्त्रः । 'ता इदं ब्रह्म क्षत्र पान्तु ताभ्यः स्वाहा' इति द्वितीय इति ) होमद्वये विनियोगः । 'या ते अग्ने' इति मन्त्रत्रये 'तनू:' इत्यावृत्तस्य सकृदाम्नातस्यापि आवृत्त्या विनियोगदर्शनात् । 'नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि' इति मन्त्रस्य होमे विनियोगे पृथिव्यन्तरिक्षद्युपदाना असमानपर्यायैः व्यतिषक्तानामपि विभजनदर्शनात् । इति प्राप्ते, स्वाहापदस्य सकृदाम्नाताननानाम्या मन्त्रान्तरयोराकाङ्क्षावत्त्वेन होमसंख्यावत्त्वेन च तत्तत्र विनिकर्षेऽपि विभक्तस्वाहाकतया 'ताभ्यः स्वाहा' इति मन्त्रस्य निराकाङ्क्षतया च तावानेव भिन्नो मन्त्रः । तच्छब्दबलेन 'ता इदं' इत्यादेरपकर्षे तत्तच्छब्दवत्त्वेन सर्वासामपकर्षापत्त्या 'तस्मै ताभ्यः स्वाहा' इति पाठेनैव तादृशमन्त्रद्वयसिद्धया स्वाहाकारान्तरेणैवर्थापत्त्यैव ताकमानस्य भिन्नमन्त्रत्वानुमानात् । ( केचित्याशिरास्तु नेतदीच्छन्ते ) । संकर्ष. २।४।२६.

※ रासभरतन्यायः । यथा गर्दभमल्ल. आदावत्युचैरुच्छ्रयते, पश्चात् मन्दता आप्नुवन् क्रमेण परिक्षीयते, तथा नीचशीलोऽपि पुरः वृद्धिं प्राप्य पश्चात्क्रमेण क्षीयते इति भावः । साहस्री ३३०

※ राहोः शिर इति न्यायः । अयं न्यायो भाष्यप्रदीपभाष्यप्रदीपोद्योतयोः कैयटनागोजिभट्टाभ्यामुदाहृत । अत्र कैयटः—'यथा राहोः शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदात् भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियाया करणरूपत्वमुच्यते । मुख्यशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते' इति । अत्र शब्दार्थभेदादिति प्रतीकमादाय नागेशः—'अनेकार्थत्वयुक्तं शिरो राहुशब्दार्थः, यदिविशिष्टदेशावस्थायुक्तं शिरःशब्दार्थः, तादृशराहुशब्दार्थस्य तादृशशिर पदार्थोऽवयव' इति पृथगर्थोपस्थितिरिति भावः । साहस्री. ४६०.

※ रुक्काम: 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत्' । भा. ३।२।७।२०.

※ रुक्कामेष्टिः— तेजस्कामेष्टिः– आग्नेयेष्टिः इत्येव । 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति । रुक्काम. तेजस्काम. । वि. २।३।१२.

※ रुक्मधारणं अग्निचयने । कण्ठे धृतः सन् रोचमानः सौवर्णः आभरणविशेषो रुक्मः नाम । उखारियतोऽग्निः शिक्येऽवस्थापितः, कण्ठे धार्यमाणः उरःप्रदेशं यथा न दहेत् तथा व्यवधायकत्वेन यद्धारण तत् रुक्मधारणम् । तच्च वपनादिसंस्कारोत्तरं कार्यम् । वि. ५।३।१२, ※ रुक्मधारण अग्निचयने दीक्षणीयादेरूर्ध्वमाम्नानम् । दीक्षणीयानन्तरभाविनश्च वपनादयः संस्काराः चोदकप्राप्ताः । तत्र आदौ संस्काराः पश्चात् रुक्मधारणं कार्यम् । ५।३।१२

※ रुक्मप्रतिमोचन चयने उत्थाने. शिक्ये आसक्त्य कण्ठे धारणे क्रियमाणे उरःप्रदेशदाहाभावार्थ व्यवधानार्थम् 'रुक्ममन्तरं प्रतिमुञ्चते' इति विहितं एकविंशतिनिर्बाधसौवर्णाभरणविशेषधारण रुक्मप्रतिमोचनशब्दार्थ. । सोम. ५।२।११.

※ रुक्मप्रतिमोचनादि अग्निचयने दीक्षितमरणेभ्यः परस्तात् कार्यम् । ५।२।१२।१३. मीको. पृ ४६ 'अग्निचयने रुक्मप्रतिमोचनादि०' इत्यत्र द्रष्टव्यम् ।

※ रुक्मिणीपरिणयनं सुभद्रापरिणयेन व्याख्यातम् । वा १।३।३।७ पृ. २१०.

※ रुचिः– तत्कस्य इच्छा । सोम. १।२।१ पृ. ७

※ रुद्रः अग्निः । 'त्वमग्ने रुद्रो असुरो महो दिवः' इत्यादौ अग्नौ प्रयोगदर्शनात् 'रुद्रो वा एष यदग्नि' इति चार्थवाददर्शनात्, 'रुद्रमग्नि द्विजाः प्राहुः' इति च आरण्यके पर्वणि कुमारसम्भवोपाख्याने दर्शनात् । मु. पृ. ५६–५७. ※ रुद्र. इति रोदननिमित्तस्य शब्दस्य दर्शनात् 'यदरोदीत्तत्' इत्युच्यते । भा. १।२।१।१०.

※ 'रुद्रायैकां गा दद्यात्' इत्यादौ यथा– गवानुवादेन

तत्संख्यामात्रविधिः, एवं 'चतुरो मुष्टीन् निर्वपति' इत्यत्र मुष्ट्यनुवादेन संख्याया विधानं संख्यानुवादेन मुष्टेर्वा विधान इति पूर्वः पक्षः । सोम. ५।२।२.

* रुद्र-शब्दः रोदितेः रोदनार्थत्वात्, रक्प्रत्ययस्य च कर्त्रर्थत्वात्, रोदनकर्तृवाची व्याकरणादवगम्यते । सु. पृ. ५६.

* रूढ शब्दः – पुराणः, प्रवीणः, असवर्णः, अपरिमितः । भा. ६।७।१०।२२.

* रूढत्वं (पदस्य) समुदायशक्त्या अर्थप्रकाशकत्वम् । यथा 'घट.' इत्यादौ । मणि. पृ. ७८.

* रूढिः अवयवयोगेन बाध्यते । यथा प्रोक्षणीशब्दे । बाल. पृ. १४९.

☞ रूढिर्योगमपहरतीति न्यायः । यथा– यत्राऽन्यनातिप्रसक्ताऽवयवार्थालोचने सत्यपेक्षाया योगात्समुदायार्थः प्रागेव निवर्तते, तत्राय प्रवर्तते । यथा गौरित्यादावन्यथाऽतिप्रसक्तगमृधातुप्रत्ययार्थालोचनसापेक्षात् गमनकर्तृत्वादिरूपयोगार्थयोगेन रूढ्या सास्नालाङ्गूलककुदखुरविषाणादिमती व्यक्तिर्गृह्यते, तथा– 'वर्षासु रथकारोऽग्नीनादधीत' इत्यत्र रथकारशब्देन जात्यन्तरयोत्पन्नो वर्णविशेष उच्यते, न तु रथं करोतीति व्युत्पत्त्या द्विजातिरिति संक्षेपः । रूढिस्तु– स्वरूपेण, जात्या, गुणेन वा निर्देशार्हे वस्तुनि शक्तिसम्बन्धेन प्रवर्तते । यथा–डित्थः, डवित्थः, गौः, शुक्ल इति । 'डित्थः काष्ठमयो हस्ती डवित्थः काष्ठमयो मृगः' इति । योगस्तु प्रकृतिप्रत्यययोगात्स्वार्थं वाचके– यौगिक इत्यवसमर्थशब्दे । यथा– आदित्यादिशब्दा यौगिका इति । अदित्या अपत्यमिति 'कृदिकारादक्तिनः' इति ङीषन्तात् 'स्त्रीभ्यो ढक्' इति ढक्प्रत्ययेन केवलं योगार्थ एवेति । साहस्री. २३३.

* 'रूढिर्योगमपहरति' इति न्यायात् एक एव उद्गाता तेन च बहुवचनोपपत्तये प्रस्तोत्राद्या उपलक्ष्यन्ते । वि ३।५।८. * रूढिः योगाद्बलवती, योगस्यावयवार्थालोचनसापेक्षत्वात् । मीन्या. * रूढिः योगाच्छीघ्रबुद्धिहेतुः । वि. ३।२।१३. * रूढ्या रूढ्या योगो बाध्यते, यथा रथकारः । बाल. पृ. १४५.

* रूढि–योग–विचारः । रूढ्यावयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगः । सु. पृ. १२००.

* रूढिशब्दानां सर्वत्र जातिवचनत्वम् । भा. ३।१।६।१२ पृ. ६७८.

* रूढिशब्दलक्षणायाः समाख्यायाः विनियोजकत्वं नाभ्युपगम्यते । सु. पृ. ११९३.

* रूढिसादृश्यहेतुकस्य उपस्थापनस्य आतिदेशिकधर्मान्वयासमर्थता । सु. पृ. १२०२.

* 'रूपं वाऽशेषभूतत्वात्' । (७।३।११।१९) इति (जामनी) यथाकथंचिदुत्सन्नं येनकेनचिद्गुणादाय शक्त्या अनुष्ठानम् । बा. ३।३।१०।२३, 'रूपं वा०' इत्याहवनीयादिस्वरूप अभिनिदिश्यते न दृष्टः । ३।६।६।१७. * 'रूपं वाऽशेषभूतत्वात् ...' यथा कर्मणे अनसि शकटे वा अनोशकटरूपमेव प्राप्यते न तदुत्पादकं कर्म, अनोशकटशब्दयोः संस्कारनिमित्तत्वाभावेन कर्मणि अशेषत्वात् (शेषत्वाभावात्) तथा आहवनीयादिशब्दानां संस्कारकस्य आधानस्य अग्निहोत्राद्यशेषत्वात् आहवनीयादिश्रुत्या कर्मजेऽपि आहवनीयादौ विहिते, तस्य आहवनीयादिरूपमेव प्राप्यते नोत्पादकमाधानम् । इति न्यायसारम् । सु. पृ ९१७, * केवलेनापि स्रुवेण द्रव्यप्रदानोपपत्तेः आयसस्य अनुग्राहकत्वकल्पनाऽयोगात् स्वधितेश्च 'रूपं वा०' इत्यनेन न्यायेन वासीवत् लोकसिद्धस्य नोपादेयत्वात् कोटरकरणेन (स्वधितौ) सामर्थ्याधीनकल्पनानुपपत्तेः, सामर्थ्यात् व्यवस्थितविकल्पकल्पना युक्ता । पृ ५३०. * तथा तु (अग्निहोत्रादिकर्मणि) 'रूपं वा०' इत्यनेनैव न्यायेन आहवनीयादिग्रहणमात्रपर्यवसानात् न कश्चिदपि आधानाङ्गत्वप्रतिपादने हेतुरस्ति । बा ३।३।३।८ पृ. ५९०. * 'रूपादुत्तरकाले हि विनियोगप्रयोजने' इत्यनेन न्यायेन अदृष्टप्रयोजनभेदाभेदयोर्मन्त्रभेदाभेदपूर्वकत्ववत् कर्मभेदाभेदपूर्वकत्वावगतेः, नापूर्वैक्येन एकार्थेऽपि एकवाक्यत्वकल्पना युक्ता । सु. पृ ७०५. * 'रूपात् प्रायात्' (१।३।१।११) इति अर्थवादनिमित्तं कथितम् । बा. १।८।१२।२३-१ पृ. ३५४ । यथासंभव गुणवादनिमित्तत्वाभिधानम् ।

पृ. ४९२, रूपप्रयेति पच्ये विभक्तिनिर्देशः प्रदेशविशेषज्ञापनार्थं । पृ. ४९३.

* ' रूपाभेदेऽपि हिंसादेर्भेद अज्ञानज्ञकारिन '। रूपभेदाभावेऽपि चोदिताचोदितत्वाद्युपाधिभेदसद्भावात् ' रूपा० ' इति न्यायेन निमित्तत्वव्यवस्था युक्ता । सु पृ. १५०३.

* न च रूपादिप्रत्ययेन न द्रव्य प्रत्याय्यते । गम्यते हि धूमादिनेव अग्नि, अविनाभावाद् द्रव्यम् । वा ३।१।६।१२ पृ ६८४.

* रूपग्रहणशक्ति चक्षुषो न विरुध्यते सामान्यमनित्यत्वमगृह्णतोऽपि । वा ३।४।४।१३ पृ. ९४०.

* रूपस्य विशेषग्रहण – ( द्रव्यदेवतास्वरूपस्य ) पृथगाज्यग्रहणैरुपांशुत्वैः येनाज्यहव्यग्रहणामनूयाजाना पौरोडाशिकानां प्रसङ्गसिद्धौ । बाल. पृ १४७

* रूपभेदात् द्रव्यदेवतालक्षणात् आमिक्षावाजिनयागयोर्भेद । भा २।३।९।२३

* रूपरसादिशब्दा येऽन्यगुणवचनाः । यदा तेषां द्रव्येषु प्रयोग, तदा न मत्वर्थीयेन विना प्रवर्तन्ते । वा ३।१।६।१२ पृ ६८१.

* रूपवता सन्निधौ अन्य दीप्यमान प्रकृतमाह । टुप् ७।१।१।२

* ०रूपशब्दाविभागाच्च० (६।३।३।१२) । नहि कर्मणा रूपमुपलभामहे न्यग्रुत ' रूप० ' इत्यत्र प्रत्यक्षोपलब्ध्यभिधानात् । वा. २।१।२।० पृ ४००

रूपसामान्यन्याय । तद्यथा– तानेव शाटका नाच्छादयामो ये मथुरायाम्, तानेव शालीन् भुञ्ज्महे ये मगधेषु, तदेवेदं भवत कार्षापण यन्मथुराया गृहीतमित्यादि । अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात्तदेवेदमिति भवतीति ' अइउण् ' इति सूत्रमहाभाष्ये उक्त. । साहस्री. ६०२.

* ' रूपस्पर्शादयो येऽमी महाभूतगुणा स्थिता । प्रत्येकमात्मना तेऽपि देहा. समोगदेव ॥ ' वा. ३।१ ७।१३ पृ ७०२–०३

रेणागवयन्याय. । यथा केनचित् ग्रामीणेन पृष्टो वन्यो हि कीदृशो गवय इति । स ... लिखित्वा दर्शयामास, अय गवयो भवतीति । स च कज्जुजितत्वात् रेखागवयमेव गवय मेने । पश्चाद्वने गत्वा गवय दृष्ट्वा रेखाया. तद्बुद्धि तत्याजेति लौकिकी गाथा । तथा ' एष पुरुष ' इत्यादिश्रुते पूर्वोक्तकार्यनिमित्तोऽनात्मानमेवात्मतया जानीते, श्रीसद्गुरुशास्त्रोपदेशेन आत्मनि ज्ञाने तदात्मबुद्धिमपनयतीति । साहस्री. ४८

* रेखागवयन्याय ( अयमेव लेखागवयन्याय )। रेखागवयन्यायेन अनुशासनाय कल्पिते प्रक्रियावाक्ये एव विभक्तिलोप इति समासे एतन्निमित्तरेखाभानाच्च तथा सम्बन्धोपस्थापकत्वम् । सोम. ६।१।१३

* रेवतीषु वारवन्तीयम् । भावनावच्छेदकधात्वर्थान्वय विना रेवतीवारवन्तीयान्वयस्य भावनाविशेषणत्वायोगात् साम्नश्च यागसाधनत्वाभावात्, प्रधानभूतया यागस्य भावनात्वर्थान्वयायोगात् ' रेवतीषु वारवन्तीय यागसाधन कृत्वा ' इति यागस्य कृत्वाशब्दोक्तभावनावच्छेदकत्वानुपपत्ते, तदवच्छेदकधात्वर्थविशेषणतया वारवन्तीयस्य अतिदेशत अग्निष्टोमस्तोत्रभावनाविशेषणत्वावगते, वारवन्तीयान्विताना रेवतीनामपि नाङ्गत्वोपगत्वावगमात् रेवत्या धारस्य वारवन्तीयस्यापि अग्निष्टोमसामत्वानुवादोपपत्ति । सु पृ ८६०–६१.

रेवत्यधिकरणम् । रेवतीवारवन्तीयाधिकरणम् । वारवन्तीयाधिकरणम् ॥

समेषु कर्मयुक्त स्यात् । २।२।१२।२७ ॥

भाष्यम्— ' त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ' इति । अत्रायमर्थ. सांशयिक किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणाद्वारवन्तीयात् पशव फलम् । एतेन यजेतेत्यनुवाद । अथ किम् । एतेन यजेतेति कर्मान्तरमिति । किं प्राप्तम् ? न कर्मान्तर गुणात्फलमिति । कुत ? एतेन यजेतेति विदितस्य पुनर्वचनम्, नाविदितस्य । अतो न विध्यन्तरम् । पशुकाम एव यजेतेत्युच्यते, न यजेतेति । कथ कृत्वा ? वारवन्तीय कृत्वेति । अपि च एतस्यैवेति निस्पष्टकर्मान्तरवचनम् । तस्मात् गुणात् फलमित्येव प्राप्तम् । एवं प्राप्ते,

ब्रूमः । समेष्वेवञ्जातीयकेषु भिन्नवाक्येषु कर्मसु उक्तं फलं भवेत् । एतस्यैव रेवतीषु वारवन्तीयं कृत्वेति । न ह्येतस्य रेवत्यः सन्ति, यासु अस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेतेति वाक्यं भिद्येत । अथोच्येत—अस्य पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा, एतेन यजेतेत्यनुवदतीति । तथाऽग्निष्टोमसामेति वाक्यस्योच्येत । अथ अग्निष्टोमसामकार्ये भवति इत्युच्यते । एतस्यैवैतस्यैतदपि विधिन स्यात् । कथमस्मिन् विरुध्यमाने भिद्येत वाक्यम् । तस्मात् कर्मान्तरम् । अथ कर्मान्तरे कथमवाक्यभेदः । रेवतीषु कृत्सु वारवन्तीयं साम कृत्वा पशुकामो यजेतेत्यपूर्वो यागः सर्वैर्विशेषणैर्विशिष्टो विधीयते । तेन एवमर्थत्वम्, विभागे च साकाङ्क्षत्वमित्येकवाक्यत्वमुपपद्यते । ननु अयं भेदो यागश्चैवं ह्यपूर्वः कर्तव्यः । रेवतीषु वारवन्तीयमपूर्वमिति । नेति ब्रूमः । निर्वृत्तवारवन्तीयरेवतीगुणको यागो विधीयते, न वारवन्तीयनिर्वृत्तिः ।

अर्थात् रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यति । शक्यते च तन्निर्वर्तयितुम् । उच्यते । रेवतीनां वारवन्तीयस्य च सम्बन्धो न विहितः स्यात् । तत्र च रेवतीषु अन्यान्यपि सामानि गायेयुः । वारवन्तीयं चान्यास्वपि ऋक्षु । नैष दोषः । ऋग्भिरभिनिर्वृत्तं वारवन्तीयं यागाय उच्यते तेन सम्बन्धो गम्यते । श्रावयेतानयोः ऋग्भिरेव शब्दः शक्नोति वदितुम् अभिनिर्वृत्तिं पूर्वकालतां च । यथा 'शोणमानय' इति रक्तगुणसम्बन्धोऽश्व. शब्देनैवाऽऽनयनौ विधीयते इति न वाक्यभेदो भवति, एवमत्रापि द्रष्टव्यम् । ननु एवमपि बहवोऽर्था रेवत्यो वारवन्तीयं तत्सम्बन्धो यागः पशुकामश्चेति । नैष दोषः । बहवः श्रूयन्ते । एकोऽत्र विधीयते यागो विशिष्टः । ननु रेवत्योऽपि विधीयन्ते वारवन्तीयमपि । यदि न विधीयेरन् नैव तद्विशिष्टो यागः प्रतीयेत । न ह्यविधाय विशेषणं शक्यते विशिष्टं विधातुम् । तस्मात् बहुषु विधीयमानेषु नैरर्थ्यम् । नोच्यते । अर्थ इति प्रयोजनमभिधीयते । सन्ति पदानेक प्रयोजनमभिनिर्वर्तयन्ति, तावदेकं वाक्यम् । न चात्र बहूनि प्रयोजनानि । इह अनेकस्य अभिप्रेतस्य अनेकं पदं विधायकमस्ति । रेवतीष्विति नैकमेवैतत् रेवतीनां विधायकम् । रेवतीषु वारवन्तीयमित्यत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः । तस्मात् सम्बन्धोऽभिप्रेतो गम्यते । प्रातिपदिकार्थेऽस्य व्यतिरेकात् । कृत्वेत्यपि करोतिर्न सम्बन्धमात्रे पर्यवसितः परप्रयोजनसम्बन्धमाह । एवं विशिष्टस्तु यजतिर्न परार्थः । तदेकमेषां पदार्थानां प्रयोजनम् । तस्मात् एकवाक्यत्वम् । गुणे पुनः फले प्रकल्प्यमानेऽग्निष्टोमसाम्नः कार्ये वारवन्तीयम् । एतस्य च यदग्निष्टोमसाम्नेति वाक्यभेदः स्यात् । अथोच्येत, रेवत्यादिसर्वविशेषणविशिष्टो याग एतस्माच्छ्रुतो विधीयेत । तथाऽपि पशुकामसम्बन्धात् भिद्येत वाक्यम् । अथ एवमुच्येत । रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति । नैवं शक्यम् । श्रुत्यन्तरप्रमाणाद्विशेषणानादैगुण्यं स्यात् । ननु इदानीमेवोच्च शक्यते किं रेवतीषु वारवन्तीयं कर्तुमिति । सति वचने शक्यम् । असति वचने न वारवन्तीयग्रहणेन गम्यते । वचनं तर्हि भविष्यति । पशुकामो रेवतीषु वारवन्तीयमभिनिर्वर्तयेत् । तेन यजेतेति यजतिरनुवादः । यदि वचनं रेवतीषु वारवन्तीयसम्बन्धस्य, सिद्धं कर्मान्तरम्, नाग्निष्टुतो गुणविधिः । ननु तेन यजेतेति यागानुवादात् यागेनास्याप्रयोजनसम्बन्धो भविष्यति । नैव शक्यम् । यागपशुकामे विधीयमाने पशुकाम सत्यसम्बन्धः । उभयसम्बन्धे वाक्यं भिद्येत । अथ यत्नसंबन्धोऽनुवादः प्रकरणेन बाध्यतां । नेदमुपपद्यते । प्रकरणाद्धि वाक्यं बलवत्तरम् । तस्मात् कर्मान्तरं यागगुणको वा रेवतीषु वारवन्तीयम्, तद्गुणको वा यागः । तत्र यागपशुकामयोः सम्बन्धस्य विधाने वचनेऽपरितने विभक्तिमुपलभामहे लिङम् । न तु रेवतीवारवन्तीयसम्बन्धस्य विधायकं साक्षात् किञ्चिदुपलभ्यते । तस्मात् सर्वविशेषणविशिष्टो यागः पशुकामस्य विधीयते इति सिद्धम् । अथ पुनः विशिष्टे यागे विधीयमाने तद्रेवतीषु वारवन्तीयं प्रथममग्निष्टोमसाम भवतीति । उच्यते । वचनादग्निष्टोमसाम्नः कार्ये भविष्यतीति । किमिव हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । अथ यदुक्तमेतस्यैवेति । अनन्तरापेक्षं वचनमिति । तथापि अविशेषादेतद्धर्मक-

न्यायेन अङ्गभूतस्तोत्रद्वारेण आश्रयाश्रयिसंबन्धः सेत्स्यतीति । तदनुपपन्नम् । उक्तं ह्येतत् । ‘ तन्त्राद्यङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम् । प्राधान्यादाश्रितं यत्तु तदङ्गं नोपसर्पति ॥ ’ ‘ सप्तदशारत्निर्वाजपेयस्य यूप ’ इति सप्तदशारत्नित्वं गुणत्वेन चोद्यमानं साक्षात् वाजपेयस्यासंभवात् यथा शक्नोति तदुपकारिष्वतीत्यध्यवसानात् तदङ्गपशुयूपाङ्गत्वेनाश्रयाणे । यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत ततस्तदसंभवात् तदङ्गानि स्तोत्राण्युपसर्पेत् । इह पुनः क्रतो विहितं गुणभूता क्रियामाश्रयत्वेनापेक्षमाणं यदि योग्या लभते ततो गृह्णाति । अथ न लभते ततो वाक्यादर्थान्तरस्य प्रतिपद्यते । न च एतदन्यथाऽनर्थकं भवति । कर्मान्तरविधाने सुतरामर्थवत्त्वात् । अत्यन्तभेदाच्च यागस्तोत्रयोः न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुम् । तत्र यथैव क्रत्वन्तरे श्रुतम्, क्रत्वन्तरे क्रियेत तादृगेव एतत्स्यात् । वाजपेयस्येति तु सामान्यसंबन्धमात्रवाचिनी षष्ठी पारम्पर्याश्रयेऽप्यविरुद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात् तथापि सर्वस्तोत्रेषु प्रसज्यमानेऽग्निष्टोमसामेत्यनर्थकं भवेत् । तत्र अग्निष्टोमसाम्नि वाक्येनैव आश्रये लभ्यमाने वाक्यभेदः, पुनरपि च वाक्येन अग्निष्टोमनामसामसंबन्धेऽवगम्यमाने यदैतदेवेति विशेष्यते सोऽपि वाक्यभेदः । एतस्यैवेति च पूर्वं संबन्धे तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात् स एव वाक्यभेदः । क्रतुनामसंबन्धकरणकृतं चातिगौरवं स्थितमेव । ननु चास्मिन् अग्निष्टुत्प्रभवत्वेन स्थिते पूर्वविधिनैव सोमयागाश्रयस्ते । वारवन्तीयं हि क्रतुमात्रसंबन्धात् स्थाने स्थितं बाधवत् इह न सोऽन्यत्र भविष्यति । क्रतुरपि च नान्यस्तोत्रगामित्वेनापेक्षिष्यते । प्रकृतक्रतुरग्निष्टोमसामसंबन्धि वारवन्तीयानि कर्मकारणाभावाच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । नैतदेवम् । यदि हि वारवन्तीयाग्निष्टोमसामविधिवाक्यं रैवतीवाक्येन अपेक्ष्येत ततः एवं विज्ञायेत । न तु तदपेक्षाऽस्ति । गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोः वारवन्तीयेन संबन्धो न तत्कल्पितस्थानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यैतत्कल्पमग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वात् वेदस्तावन्न तदेव स्थानं कल्पयति । सामान्यतो दृष्टकल्पनायाश्चैकजातीयकेष्वप्रमाणत्वमुक्तम् । आह च । ‘फलाय विहितं साम स्वतन्त्रं रूपमात्रतः । वेदस्याध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥ ’ इति वारवन्तीयमग्निष्टुत्येव प्रथममुत्पन्नेन ततो गत्यन्तराभावादनुक्तमपि तादृगेव विज्ञायेत । [redacted] पुनः समाम्नायमात्राधीनोत्पत्ति तत एव गृहीतस्य फलस्य चोद्यते । तत्र क्रत्वन्तरस्तोत्रान्तरैः एतत्कल्पाग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि च वारवन्तीयमसंस्कारः कश्चित् विधीयेत, ततः कथंचिद्व्रीहिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्नाग्निष्टोमक्रमसंबन्धसिद्धिः । ननु च पुरुषार्थमपि सदेवं क्रतुमसाधयन्न शक्नोति पुरुषार्थं भवितुमिति प्राप्तक्रियया क्रतुसिद्धौ पूर्ववत्तत् स्थानं लभ्यते । यथेज्यार्थे दधिपयसी प्रणीताधर्मानुपलभेते । तत्र एतद्भवति यत्र गुणभूता धर्मा भवन्ति । न चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः । प्रकरणग्रहणे हि यानि गुणत्वमपि स्यात् । यदेव तु अत्यन्तविप्रकृष्टम् । यदि तु केनचित् प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्येत, ततस्तद्धर्मान् तस्य प्रणीताधर्मवत्नैव कश्चित् वारयिष्यति । तस्मात् नैषोऽपि परिहारो भवतीत्यपूर्वकर्मविधिनैव एकवाक्यत्वमुपपादनीयम् । तथा सति हि यद्यपि सर्वमप्राप्तं तथाऽपि विशिष्टविधिना शक्यं विधातुम् । किं पुनर्यदा निकामित्वात् पूर्वविधिप्रयोगेषु अनादिश्यमानेषु बहेव प्राप्तम् । एतच्छन्दस्तावत् धर्मलक्षणया अनुवादो भविष्यति । न चानुवादे लक्षणादोषः । प्रकृत्यमानकर्मवचनत्वेन वा ‘अथैष ज्योतिः’ इत्यादिवत् मुख्यत्वेनैव वर्तिष्यते । तदा वारवन्तीयं क्रत्वर्थभूतमतिदेशेनैव प्राप्नोतीति तदनुवदिष्यते । कृत्स्नासंबन्धकल्पितं तु वारवन्तीयसंबन्धविशिष्टयागमात्रविधानात् लघवः विधिः । ननु अग्निष्टोमसाम्नो रैवतीवारवन्तीयसंबन्धो यागश्चात्र विधीयते इत्यनेकविशिष्टविधिभिर्गौरवं विधायकस्य स्यात् । तथाहि । ‘नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे । तेन क्रियां विधायान्यस्तत्र कार्यः पुनर्विधिः ॥ ’ यानि एकक्रियाविशेषणानि भवन्ति तानि तथा विधीयमानया

तथात्वेऽपि तृतीयान्तैतच्छन्दस्य धात्वर्थपारार्थ्यमयेन याग-परामर्शित्वस्यैवोपपत्तौ रैवत्यादिपरामर्शकत्व एव प्रमाणाभावात्। अतः तदपेक्षया लघुभूतकर्मान्तरविधानमेव ज्यायः। तदा हि निवार्यत्वेनाग्निष्टोमयागविकारत्वात् वारवन्तीय साम्नोऽनूद्यते केवल रैवतीविशिष्टस्तोत्र-भावनोत्तरकालविशिष्टरेवतीकरणकयागान्तरमात्रेणैव फलो-द्देशेन विधीयते। एतच्छन्दः प्रकृतिविकारभावानु वादकः। तृतीयान्तैतच्छन्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति। उत्तरकालत्वलक्षणो गुणश्च प्रयोगान्वयित्वात् अवैदिकस्यापि संबन्धमेवापादयेत्। तथाऽपि काल-स्यात्र सम्भवप्राप्तिकत्वस्य वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या याणे परस्परान्वयेन विधेयस्य रैवत्याख्यस्य गुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदबोधकत्वाविघातः।

मण्डन– 'मिश्रे पशौ फलविधि. सह रैवतीभिः।'

शंकर– 'कर्मान्यदेवतीश्रुतौ।'

● रैवत्यधिकरणस्य (२।२।१२।२७) अपवादः सौभर्याधिकरण (२।२।१३।२८–२९)। कौ. २।२।१२।१७, ● इन्द्रियकामाधिकरण–(२।२।११) रैवत्यधिकरणयोरपवादः सौभर्याधिकरणम्। २।२।१३।२७ पृ. २९४. ● रैवत्यधिकरणे वारवन्तीयस्य रैवती सम्बन्धे, अग्निष्टोमसम्बन्धे, पशुसम्बन्धे च विधीयमाने वाक्यभेदात् मानसोपलक्षेन भावनान्तर विधीयते इत्युक्तम्। मीन्या. ● विशिष्टविधेः, विशेष्यविशेषणोभयपरत्वे, वाक्यभेदापत्त्या विशिष्टमात्रपरत्व, विशेषणांशेऽपि प्रामाण्यमिष्यते एव इति रैवत्यधिकरणे वक्ष्यते। कु. १।१।८।१२.

● न चैवं प्रकरणाभावे तासां (सामिधेनीनां) आश्रयत्वानुपपत्तेः कथं कामयमानये तदाश्रितस्य गुणस्य फलार्थत्वेन विधानोपपत्तिरिति वाच्यम्। आश्रयाभावेन तदनुपात्तकर्मान्तरस्यैव रात्र्यादिविशिष्टस्य रैवत्यधिकरणन्यायेन गुणात् भिन्नस्य, फले विध्यङ्गीकारात्। भा १।१।३।२१ पृ. २०१, ● 'हीष् इति वृष्टिकामाय निधनं कुर्यात्' (अत्र) निधनानुवादोपपत्तेः रैवत्यधिकरणन्यायेन हीषादिविशिष्ट-निधनान्तरविध्याशङ्कानुपपत्तेः। २।२।१३।२७ पृ. २१५. ● सौभरे–' हीष् इति वृष्टिकामाय निधनं कुर्यात्' इति। रैवत्यधिकरणन्यायेन हीषादिविशिष्टनिधनान्तर फलाय विधीयते। यदि तु प्रकरणात् सौभरस्याश्रयतया अन्वयसम्भवात् रैवत्यधिकरणन्यायासंभवः, तदा इन्द्रियकामाधिकरणन्यायेन सौभरसम्बन्धिनिधनसम्बन्धिहीषादेः फलसंयोग आस्ताम्। इति पूर्वपक्षः। वाक्यार्थ २।२।१३।२७–२८

● रैवत्यधिकरणसिद्धान्तः 'वाक्यभेदप्रसङ्गेन प्रकृते अग्निष्टुति फलाय गुणविध्यसम्भवात्, गुणविशिष्ट कर्मान्तरविधि' इति। सोम १।२।२.

● रेवतीवारवन्तीयाभ्यामेव विशेषितायां कृत्स्नाग्न्दोक्तायां भावनायां करणरूपयोर्नियमः। पृ. ८६७. ● रेवतीवारवन्तीयान्वयस्य विधेययागभावनाविशेषणान्तर्भावाभ्युपगमेन विधेय विधेयत्वम्। पृ. ८६९, ● द्वयस्य अविशेषितकस्यापि स्वरूपमात्रेण विशेष्यत्वोपपत्तेः तद्विशेषणस्यानन्तर्भावात् अविधेयत्वेऽपि फलोद्देश्यस्याविशेषितस्य निरूपणाकाङ्क्षेः विशेषणसंयोगात् विधेयविशेषणान्तर्गतत्वात् रेवतीवारवन्तीयान्वयस्य विशेषणविशेषणत्वेऽपि विधेयता युक्ता। पृ ८६९

● रेवतीवारवन्तीयादिवाक्येन विशिष्टं कर्म विधीयते। भा. ३।१।१२।२१ पृ. ७३५.

● रेवतीवारवन्तीयत्वसंबन्धयागपशुभिर्यागा यक्ष्यमानःस्यात्पारयागभावनान्तरत्वाद्यपारम्पर्यवस्थानात् ततः प्राक् विधेयपर्यवसानापत्तेः, नानेकस्य प्राधान्येन विधिः सम्भवति। सु. पृ. ८६८.

● योऽपि अदाभ्यवाक्ये ('योऽदाभ्यं गृहीत्वा सोमाय यजते') यजतिः, सोऽपि रेवतीवारवन्तीय-पूर्वपक्षन्यायेन यागान्तरविधायकेन प्रत्ययेन विधीयते। वा २।३।१।२० पृ ६१०.

● रैवतं अच्छावाकसाम विश्वजिति सर्वपृष्ठे। मा. १०।६।५।१४, ● रैवत अच्छावाकमहिनः साम पृष्ठ

विश्वजिति । ७।३।३।८. ● रैवतं साम षष्ठे षष्ठेऽहनि पृष्ठनिष्पादकं विश्वजिति च षष्ठहात् प्राप्तम् । वि. ७।३।३.

● **रोगाः** । नियतकाला अपि रोगा भवन्ति । यथा तृतीयकश्चातुर्थकश्चेति । भा. ६।१।२।५. ● रोगेण अङ्गविकलस्यापि, औषधादिना वैकल्ये परिहृते अधिकारोऽस्त्येव । वि. ६।१।९

● रोगवत्वात् भवनं अपजीवन: रौद्रम् । भा. ३।४।३।११.

● '**रोगी हीनातिरिक्ताङ्गः** काण. पौनर्भवस्तथा ।' विवाहे वर्ज्यः । अयं प्रत्ययं. व्यक्तिविषयकः स्मृतिकल्प्यः प्रतिषेधः । व्याल. पृ. ११.

■ **रोगिन्यायः** । यथा रोगिणो रोगभ्याऽपि नाशसत्तया मङ्गलेऽपि । माहसी. ३१५.

● **रोदनम्** । इष्टवियोगेन अभिघातेन वा यत् बाष्पनिर्मोचनम्, तत् रोदनमित्युच्यते । न च तदिच्छातो भवति । भा. १।२।१।१२ पृ. १०७. ● रोदनस्य मङ्गलाचारशास्त्रविरोधः । सु. पृ ४.

● निरवृत्तेऽपि वियोगध्यानादिना रोदनादिसम्भवात्० । सु. पृ. ४.

● **रोहिणी** नक्षत्रम् । वा. ३।४।२।९.

● **रोहिणिकाशब्दस्य** गौरीकार्यस्थानाविरकात्यान्तरजातिवाचिता । सु. पृ. १८१०.

● '**रौहितके** वसन्ति, ग्रामे वसन्ति, पाटली वसन्ति' । एकार्था. सन्तो विकल्प्यन्ते रोहितादयः । भा. २।२।६।१७.

● **रौद्र**. चरु. रौद्रीष्टिः । 'वास्तुमय रौद्रं चरुं निर्वपेत्' इति प्रकृत्य 'एतया निषादस्थपतिं याजयेत्' इत्युक्तम् । अस्मिन् रौद्रयागे निषादजातीयस्थपतेरप्य अधिकारोऽस्ति । वि. ६।१।१२. ● रौद्रे गावीधुके चरौ चयने समाप्ते, उपचेये इत्याकार्षा न कर्तव्याः । संकर्ष २।१।१०.

● **रौद्रेष्टि**. 'एतया निषादस्थपतिं याजयेत्' इति वाक्येन निषादस्थपतेर्विहिता । सा लौकिकेऽग्नौ ( लौकिकेषु अग्निषु—इति भाष्यम् ) । वि. ६।८।३. ● रौद्रेष्ट्यां निषादस्य अधिकारः । ६।१।१३।५१—५२. मीको. पृ. २३९१ 'निषादस्थपतिन्याय.' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ **रौमकभाषा** । भा. १।३।५।१० पृ. २२६. ( यदा द्राविडादिभाषाया ईदृशी स्वच्छन्दकल्पना तदा पारसी-बर्बर-यवन-रौमकादिभाषासु किं निरूप्य किं प्रतिपत्स्यन्त इति न विद्मः । )

● **रौरवं** नाम बार्हते तृचे भवति । 'पुनानः सोम धारयापो वसानो०' इति बृहती । उत्तरा विष्टारपङ्क्तिः 'दुहान ऊधर्दिव्यं०' । प्रगाथनेन तिस्रो बृहत्यः । भा. ९।२।६।२५ वर्णकं २.

● '**रौरवयौधाजये** बार्हते तृचे भवतः' इति श्रूयते । उत्तराग्रन्थे तु रौरवयौधाजययोराधारः एकः प्रगाथः । तत्र ■ प्रथमा 'पुनानः सोम०' इति बृहती 'दुहान ऊधर्०' इति द्वितीया सतोबृहती । तत्र प्रगथनविशेषेण द्वे बृहत्यौ उत्तरे निष्पादितव्ये. न तु अन्यत्र. क्वाचिद्बृहत्यौ आनेतव्ये । वि ९।२।६ वर्णकं २, ● रौरवयौधाजये सामनी माध्यंदिने सवने गीयेते । ९।२।६ वर्णकं २.

● **रौरवयौधाजयसाम्नोः**स्थान बृहतीविष्टारपङ्क्त्योरेव प्रगथनेन सम्पादिते बार्हते तृचे कार्यं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २. मीको. पृ. १८१९ 'ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● **रौहितकः** । ग्रामादिः पाटलो रौहितको वा वृक्षः तन्नाम, ज्योतिष्टोमे पशुनयार्थम् । भा. ११।३।३।१.

यत्तुशब्दः' २।१।१२।२० इति सूत्रे द्रष्टव्यम् । ● लक्षणं यागस्य– 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' ४।२।१२।२७ इति सूत्रे द्रष्टव्यम् । ● लक्षण लक्षणस्य– तन्नाम लक्षणमुच्यते येन तद्व्यतिरिक्तेभ्यः तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । वा. २।१।१।१ पृ. ३७०, ● लक्षणं विधे.– अप्राप्तप्रापणम् । 'अप्राप्तप्रापणं सर्वं विधित्वं प्रतिपद्यते' । २।१।२।१ पृ. १८७. ● लक्षणं विशेषातिदेशस्य– 'अथ विशेषलक्षणम्' ८।१।१।१ इति सूत्रे द्रष्टव्यम् । ● लक्षणं शास्त्रस्य– शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम् । भा. १।१।५।५ पृ. ३७ 'शास्त्रस्य लक्षणं' इति टिप्पणी च द्रष्टव्यम् । ● लक्षणं शेषत्वस्य– परार्थत्वम् । 'शेषः परार्थत्वात्' ३।१।२।२ इति सूत्रे उक्तम् । ● लक्षण सकर्मकाकर्मकयोः– 'धात्वर्थव्यभिचारेण धात्वर्थो यत्र कर्मभाक् । सकर्मकः स धातुः स्यात्, धात्वर्थे त्वकर्मकः ॥' पचिगम्यादयः, आसनशयनादयः । वा. २।१।१।१ पृ. ३८५. ● लक्षणं सत्रस्य– 'बहूनामग्न्याधानोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिधानयोगात्' १०।६।१६।६० इति सूत्रे उक्तम् । ● लक्षणं सत्रस्य– आसनचोदनात्वं उपायिचोदनात्वं यजमानबहुत्वं वा । भा. १०।६।१६।६०. ● लक्षण साम्नः– 'गीतिषु सामाख्या' २।१।११।३६. इति सूत्रे द्रष्टव्यम् । ● लक्षण स्तोमस्य– 'अधिकं च विवर्णं च०' (९।२।१०।२९) इति सूत्रे द्रष्टव्यम् । ● लक्षण होमस्य– 'तदुक्ते श्रवणात् जुहोतिरासेचनाधिकः स्यात्' ४।२।११।२८ । तदुक्ते यजतिना उक्तेऽर्थे, जुहोतेः श्रवणात् आसेचनाधिकः यजत्यर्थः जुहोतिः स्यात् । ● 'ज्ञान च लक्षणं भो लक्ष्य लक्षयितुं धनम्' । वा. ३।१।८।२ पृ. ६५७, ● न शक्य प्रकारेणैव तत्तत्पदार्थनिर्णयः लक्षणमुक्तम् । 'कश्योऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । (कल्पकोटि हि लक्ष्याणा– इति वार्तिके) लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥' भा. २।१।७।३२ ● 'निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम्' । वा. ३।१।८।२४ पृ. ६६२ ● लक्ष्यते येन तत् लक्षणम्, धूमो लक्षणमग्नेः इति हि वदन्ति । भा. १।१।२।२ पृ. १२. ● 'सर्वथा लक्षणं नाम यदव्यवच्छेदकारणम्' । वा. ३।२।१।१ पृ. ७४६. ● लक्षणेन लक्ष्ये वस्तुनि सम्भावनाबुद्धिर्जन्यते । वि. १।१।२. ● लक्षणेन लघीयसी प्रतिपत्तिः । भा. २।१।७।३२. ● सर्वलक्षणेषु प्रतीतिमात्रोपयिकत्वादनुष्ठानानङ्गत्वम् । यथा 'योऽयं शुक्लवासाः दृश्यते तमानय' इत्यादिषु वासःप्रभृतीनाम् । वा. ३।१।७।१४ पृ. ७२३.

☞ लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्येति न्यायः । साहस्री. ६८८.

● लक्षणोपयोगः गुर्वाचार्यैर्दर्शितः– 'कल्पकोटि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥' इति । वि. २।१।७.

● लक्षणकर्मणि प्रयोजनं प्रसिद्धत्वात् न वक्तव्यम् । लघीयसी प्रतिपत्तिर्लक्षणेन । भा. २।१।७।३२, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । ज्ञानमेवात्र प्रयोजनमिति । ४।२।१२।२७, लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । लक्षणकर्मणो हि तदेव प्रयोजनं यत् लक्षितो भविष्यतीति । ९।२।११।३९.

● लक्षणक्रियानाम ज्ञानक्रिया । सोम. ३।२।५.

● लक्षणत्वं उदासीनस्य न सम्भवति । सोम. ६।५।३. ● लक्षणत्वं व्यापिनो धर्मस्य अन्यतो व्यावर्तकत्वम् । सु. पृ. १०८०

☞ लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायः । लक्ष्यते ज्ञायते पदार्थोऽनेन 'लक्ष दर्शनाङ्कनयोः' करणे ल्युट् । असाधारणो धर्मः । तद्द्विविधम्– इतरभेदानुमापकं व्यवहारप्रयोजकं चेति नैयायिकाः । सजातीयविजातीयव्यावर्तको लक्षणस्तुगतः । कश्चिल्लोके वेदे वा प्रसिद्धो धर्मो लक्षणमिति मीमांसकाः । प्रमाता येनार्थं प्रमिणोति तत्प्रमाणम् । येन लक्ष्ये वस्तुनि सम्भावनाया जाताया प्रमातुमुत्सुकः प्रमाणेन तत्त्वं गच्छति । तथा च– यथा गन्धवत्त्वादिलक्षणेन प्रत्यक्षादिप्रमाणेन च पृथिव्यादिसिद्धिस्तथा यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । एवं च क्षीरोदादिन्यायवादे नत्तद्वाक्याः

२।१।८।१२ पृ. ४११, * न चैकत्र लक्षणाश्रयणं इति सर्वत्रैव सा आश्रयितव्या इति। २।३।१०।२३ पृ. ६१२.

* लक्षणातः वाक्यभेदः अतिदुष्टः, लक्षणायाः पद दोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात्। मीन्या.

* लक्षणातः श्रुतिर्न्याय्या। भा. १२।२।१०।२४

* लक्षणादोषः। अधिकस्य सतः न्यूनत्वे यथा 'चतुरवत्तं जुहोति' इति। अत्र जुहोतिः देवतोद्देशत्याग-विशिष्टप्रक्षेपवचनस्य आग्नेयादिचोदनयैव इतरयोः अंशयोः (देवतोद्देशत्यागयोः) प्राप्तेः, प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा। बाल. पृ. ४. * लक्षणादोषः अनुवादे नास्ति। वा. २।२।१२।२७ पृ ५५५.

* लक्षणापरिग्रहः अगतिकगतिः। भा. ७।२।१।१३.

* लक्षणाप्रयोगो न शब्दार्थशङ्का भवति। भा. ११।१।८।४९.

* 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने। लक्षणावाक्यभेदादिदोषो नानुमिते क्रमे॥' वा. १।८।२।१ पृ. १२९.

* (लौमे समासे) अत्रापि च एकशेषः 'पुमान् स्त्रिया' इति असत्यपि लक्षणाशब्दे' एव। भा ३।३।१।१९, * अस्रुपादाने अदृष्टं कल्पयितव्य इति लक्षणा-मात्रः परिकल्प्यते। यथा वारिनेषु शाल्यो शुष्यन्ते (तण्डुलाः) गावः (पयः) पीयन्ते इति। भा. १।१।१५।१९.

* लक्षणासिद्धि' तात्पर्यात्। भा १।२।१ पृ. ६.

* लक्षितलक्षणा मार्यलक्षणातो दुर्बलतरा। वा. १।४।३।३ पृ. ३२७, सु. पृ. ८११. * लक्षितलक्षणया लक्षणया बाध्यते। बाल पृ. १५६ * यत्रैतस्यामनि अभ्यासीयमाने शब्दा फलं लभ्यते, पदेन साम। सैषा लक्षितलक्षणा। भा १०।५।१५।५८ वर्णक १, * शब्द' अर्थप्रयाकार्थमुच्चारित'। स चार्थः पुनः शब्दं प्रत्याययेत इति लक्षितलक्षणा हि तथा स्यात्। १०।४।१२।२३. * लक्षितलक्षणया द्विरेफशब्देन भ्रमर-पदं लभ्यते, तेन मनस्या भ्रमरबोधः इति केचित्।

मणि. पृ. ७६ * दीक्षणीया आत्मीयमपूर्वं लक्षयति, तेन धर्मोणा सम्बन्धः। अस्मिन् पक्षे लक्षणा। यदा तु दीक्षणीयापूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्मोणा सम्बन्धः। टुप्. ९।१।२।३ वर्णक २.

* लक्षितलक्षणापेक्षया लक्षणा बलवती। टुप्. ९।१।२।३ वर्णक २ पृ. १६८६

* लक्ष्यानपायन्याय. । मीको. पृ. ११९४ 'उपलक्षणापायेऽपि उपलक्ष्यानपाय.' इतिन्यायं द्रष्टव्यम्। * लक्ष्यानपायन्याय.। उपलक्ष्यानपायन्यायः। लक्षणापायेऽपि लक्ष्यस्य नापायः। यथा 'नागवेलायामागन्तव्यम्, शङ्खवेलायामागन्तव्यम्, पक्षवेलायामागन्तव्यं इति। यस्मिन् ग्रामे न नागाः, न शङ्खाः, न पक्षस्तस्मिन्नपि स एव कालः, तत्र आगमनं क्रियते'। इति १०।८।१८।७० सूत्रे भाष्यम्। ग्रामे नागादिरूपस्य काल-लक्षणस्याभावेऽपि कालस्य लक्ष्यस्यापायो न भवति यद्वत्। के. न्यायपरिमाण रमायने पृ. २२.

* लक्ष्यार्थता न न्याय्या, मुख्यार्थता च न्याय्या। भा. ३।२।९।२६.

ऍ लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्त-राभावादिति न्याय। साहस्री ६८५

* लक्ष्यलक्षणयोः अनुष्ठीयमानयोः संबन्धः नहि अवगम्यते। भा १०।६।७।३ पृ. १९८७.

* लक्ष्यलक्षणाभावः साध्यसाधनभावाद्भवति। सोम. ३।२।५.

* लक्ष्यतावच्छेदके न लक्षणा इति प्राञ्चः। तद्वि-शिष्टशाब्दे तद्विनिष्ठप्रविशालस्य हेतुत्वात् तत्रापि लक्षणा युक्ता इति नव्याः। मणि पृ ७६.

* 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति वार्तिके लक्ष्यमाणशब्दस्य लक्षणामूलमनीतिविषयत्वा-र्थकत्वेन उपपत्तिः। सोम. १।४।१६।४६.

* लट्। लडर्थस्तु अनद्यतनभूतत्वम्। 'अपचत्' इत्यत्र 'भूते' इत्यनुवृत्तौ (पा ३।२।८४) 'अनद्य-तने लङ्' (पा ३।२।१११) इति सूत्रात्। रहस्य. ६४, मणि. पृ ११७.

* लवने प्रयोजनं वेदिस्तरणोपयुक्तस्य बर्हिष उपमादनम् । भा. ११।८।१४।४४.

* लवनादेः प्रकृतावपि न सर्वार्थता । भा. ३।८।१७।३२, था. पृ. ११३५.

* लवनप्रकाशकमन्त्रस्य मुख्ये बर्हिषि विनियोगः । भा. ३।२।१।१-२.

* लवनमन्त्रस्य दर्शपूर्णमासे प्रतिलवनं आवृत्तिः दर्शपूर्णमासयोः । भा. ११।४।१६।५४-५५.

* लशुनं न भक्षयितव्यम् । भा. १।३।५।१९.

* लाक्षणिकानि सर्वाणि पदानि यत्र, तद्वाक्यं मूकमेव । मणि पृ. ७३. * लाक्षणिकं शब्दं नेदं ज्ञापयति । 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणा । बाल. पृ. ११४. * लाक्षणिकस्य पदस्य शक्यपदस्मृतिहेतुसंस्कारोद्बोधकतया स्वार्थोपस्थितिद्वारा शाब्दबोधकता । मणि. पृ. ७३.

* लाक्षणिकपदस्य अनुभावकत्वाभावात् तत्स्मृतशक्यपदस्यैव शाब्दबोधहेतुत्वं इति केचित् । लाक्षणिकस्यापि अनुभावकत्वं युक्तम् । मणि. पृ. ७३.

* लाक्षणिकशब्दप्रवृत्तिः, तात्पर्यावधारणं विना न युक्ता । [redacted]. पृ. ७३७.

※ लाक्षारसावसिक्तकार्पासबीजन्यायः । यथा लाक्षारसावसिक्तकार्पासबीजानां अङ्कुरादिपरम्परयैव कार्पासादौ रक्तिमनियम इति । यथोक्तम्– 'यस्मिन्नेव हि संताने आहिता कर्मवासना । फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥' इत्यादि सर्वदर्शनसंग्रहे आर्हतदर्शने । साहस्री ७००.

* लाक्षारसोपसिक्तात् बीजपूरकुसुमात् तद्रूपत्पादनात् फलं तदाश्रितमित्युच्यते । रत्नाकरः पृ. २६२.

* लाघवं अपि निश्चयकारणम् । सु. पृ २२.

* लाघवमपि प्राधान्यविरोधित्वे अप्रयोजकम् । मणि. पृ. ११४.

* लाघवन्यायः ( अथवेत आग्नेयीन्यायः ३।२।८।२१-२४ ) । लाघवाख्यन्यायस्य नियामकता युक्ता । स हि प्रकृतिः परपद्धतिष्ठेनैकादशास्वासामन्त्रणं एकं प्रापयति । यद्यपि क्वचिद्गुरुत्वस्य विशिष्टेऽप्यन्वयो दृष्टचो भवेत् तथापि विशेष्यमात्रेऽपि अन्वयदर्शनात् उभयथाव्युत्पत्तिमत्त्वे, पूर्वोक्तविधया अन्योन्यमप्युपपत्तौ लाघवस्यैव नियामकत्वात् युक्त एवायमवकल्पनम् । कौ. २।२।७।२० पृ. २३८, * द्रव्यदेवतासम्बन्धस्य एकत्वे लाघवन्यायस्य एव नियामकत्वात् युक्तं यागैकत्वम् । २।२।७।२० पृ. २४०. * दवनीयपक्षादिषु आतिदेशिकप्रमाणा आम्नानवैयर्थ्यभयेनौपासत्येन लाघवन्यायस्याप्यभावात् नात्र प्रसङ्गसिद्धिः । भाट्ट. १९।१।८.

※ लाङ्गलं जीवनमिति न्यायः । लाङ्गलं हि जीवनस्य निमित्तमिति गम्यते । साहस्री.१९२.

* लिखितपाठेनापि अध्ययनं अर्थज्ञानं च सम्भवति तथापि न तदपूर्वजनकं इति व्यर्थम् । वि. २।१।१

* लिङ् प्रतिषेधे श्रौतो यथा– न चतुष्किमवदिति ब्रूयात् । बाल. पृ ४०. * लिङ् विधायी श्रुतिः । था. ३।१।७।१२ पृ. ७००. * लिङ् विधौ स्मार्तो यथा– मनुः 'अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ।' (मस्मृ.) । बाल. पृ. ४०. * लिङ् शब्दभावनावाचको लिङ्त्वेन । वि २।१।१ वर्णकं २. * लिङा तावत् धात्वर्थविधानं स्वपदेनोपात्तत्वात् श्रौतम् । था. २।३।१।८ पृ. ५१३. * लिङः प्रवर्तनायां शक्तिग्रहः न्यायसुधायां अन्यथा उक्तः । बुभुक्षितस्य बालस्य रोदनेन स्तनपाने प्रवर्तना ज्ञात्वा स्तनदाने माता प्रवर्तते । तदा असौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्तनायाः कारणत्वं प्रकल्प्य, गामानय इति वाक्यश्रवणानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यामपि प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणजिज्ञासायां क्रियादिशब्दश्रवणानन्तर्यात् तस्यैव शब्दस्य अन्वयव्यतिरेकाभ्यां प्रवर्तनाभिधानशक्तिं कल्पयति इति । बाल पृ. ७६.

* लिङर्थः इष्टसाधनत्वं इति मतम् । लिङर्थेष्टसाधनताप्रकारको धात्वर्थविशेष्यको बोधः इति च मतम् । मीन्या. * लिङर्थः प्रवर्तना इति केचित् । इष्टसाधनत्वं इत्यन्ये । मीन्या. * लिङर्थः । विध्यादिकं लिङर्थः । 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' ( पा.

समन्वेऽपि प्रेरणाख्यापनेन लिङादेः वेदे प्रवर्तकत्वं सिद्धम् । मु. पृ ३०—३१. ● लिङादेः कार्याभिधायकत्वं अपौरुषेये वेदे आस्थीयते । ऋजु. पृ. ३५. ● लिङादेः कल्पदनिष्टाननुबन्धित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे च प्रत्येकं नास्ति. । इति वार्तिकम् । तत्खण्डनं 'विध्यर्थः (रहस्यम्)' इति विध्यौ द्रष्टव्यम् । ● लिङादीनां विभायकानां प्रयोज्यगतचेतनद्वारेण प्रयोजकता । वा. १।२।१।७ पृ. ११८.

● लिङाद्यर्थः लोके पुरुषाशयः । वेदे च तदभावात् लिङादिनिष्ठ एव कश्चिद्धर्मः । वाक्यतात्पर्येऽङ्क च समयवलाधायी व्यापारत्वम् । न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि, तस्य अन्यथासिद्धत्वात् । तत्र तत्र, अभावे आप्तवाक्यार्थप्रवृत्तिप्रयोजनत्वम्, तदभावे तु तदर्थप्रवृत्त्य भावप्रयोजकत्वं धर्मः, इति विवेक । प्रयोजकत्वं चात्र प्रवृत्तिप्रभावकत्वीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । भावनात्मकता च योगक्षेमसाधारणी । तत्र च प्रवृत्तिवामर्शीनियतकत्वं इत्यत्र विस्तर. ।

स च लिङाद्यर्थः विधिवाक्ये प्रवर्तना-प्रेरणा विध्यपरपर्यायः । निषेधवाक्ये निवर्तना-निवारणा-निषेध-प्रतिषेधापरपर्यायः । इयं च द्विविधाऽपि शाब्दी भावना । तत्पाश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती । शब्दभावनाज्ञानं करणम् । इष्टत्वं चात्र भावनाया अनिष्टाद्ररत्वम् । इतिकर्तव्यता च यथायोग स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकत्वं नान्यत्र दृष्टमनुपपा-दकतया लोकसिद्धम् । स्तुतिनिन्दावचनाभ्ये अर्थवादा प्राशस्त्यापरपर्याये इष्टानिष्टाननुबन्धित्वानुबन्धित्वयोग्य रूपे । तं यथायोग विधिनिषेधापेक्षितत्वात् तदर्थत्वमपि अर्थवादानामितिकर्तव्यतया प्रतिपाद्यते । भाट्ट. १।२।१. ● उपनिषदादिप्रमाणगम्यमीश्वरमङ्गीकृत्य वदिष्यते तत्तदाकाङ्क्ष वेदे लिङाद्यर्थं तात्पर्यरूपा च । रहस्य. पृ १५. ● प्रवर्तना-प्रेरणा-विधि-अपरपर्याया भावना नत्वद्दिताख्ये लिङाद्यर्थः । पृ. १९.

● लिङादिप्रत्ययाः प्रवर्तनायां विहिताः । प्रवर्तयितुर्व्यापार. प्रेरणाख्यः प्रवर्तना । आचार्यो हि 'ग्राममानयतु देवदत्त.' इति वदति । ततो ग्राममानयन् देवदत्तो ब्रवीति 'आचार्यप्रेरितोऽहं ग्राममानयामि' इति । स च प्रेरणाख्यो व्यापारः नियोजयितृपुरुषनिष्ठः अभिप्रायविशेषो लोके । वेदे तु अपौरुषेयवादे लिङादिनिष्ठ. धर्मविशेषः कल्प्यः । सेश्वरवादे तु ईश्वरेच्छैव प्रवर्तना । सा च लिङादिशब्दनिष्ठत्वाद्वा ततः प्राधान्येन गम्यमानत्वाद्वा शब्दभावना इत्युच्यते । तया च किं केन कथं इत्येवं भावनी पुरुषप्रवृत्तिर्भाव्यते । सेयं प्रवृत्तिः शब्दभावनाभाव्यत्वात् फलोत्पादनव्यापारात्मकत्वाच्च अर्थभावना इत्युच्यते फलभावना इति च । इमां च अर्थभावना प्रति गृहीतलिङादिशक्तिको शब्दभावना प्रयोजिका । तत्र लिङादिशक्तिग्रहः शब्दभावनाज्ञानद्वारा शब्दभावनाया अर्थभावनानिर्वर्तकत्वात् शब्दभावना प्रति करणम् । इष्टसाधनताज्ञानमपि करणम्, तस्य शब्दभावनायाः प्रवृत्ति प्रति कारणत्वात् । अर्थवादलभ्यप्राशस्त्यं तु तत्र अङ्गत्वेन अन्वेति । तथाहि, लोके इष्टसाधनत्वज्ञानम्, प्रेरणाया प्रवृत्तेरभावात् इष्टनिसाधनेऽपि विप्रकृष्टतरसमये प्रवृत्तेरभावात् अनिष्टाननुबन्धीष्टसाधनतामपि अर्थात् विधिप्रत्ययो गमयति तज्ज्ञानस्य प्रवर्तकत्वात् । यतेरपि लौकिकवैदिककर्मणि, किंचिद्बाधाबाधयत्नसाध्ये अनिष्टसाधनताया अपि सत्त्वात्, प्रवृत्तिनिवृत्त्योः औदासीन्यापत्तेः बलवत्त्वेन अनिष्ट विशेषणीयम् । बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानं प्रवर्तकमिति । मोक्षनासाधकस्य च अनिष्टस्य इष्टत्वपरानपेक्षया न प्रवर्तकत्वम् । तृप्त्यादिफलोत्कर्षस्य तत्र अनुभवसिद्धत्वात् । कु. १।२।१।४.

● लिङादियुक्तवाक्यश्रवणानन्तरं तज्ज्ञानमात्रेणैव प्रयोज्यवृद्धस्य प्रवृत्तिं मध्यस्थ अनुमाय पार्श्वस्थः प्रवृत्तिहेतुभूतोऽर्थः अनेन वाक्यशब्दात् प्रतीतः इति कल्पयति । प्रवृत्तिहेतुभावश्च कार्यतायत्तोऽयं. । सर्वो हि यावत् ममेदं कार्यं इति नावगच्छति, तावन्न प्रवर्तते ।

ननु अपेक्षितोपायावगमात् प्रवृत्ति. । नैवम् । अपेक्षितोपायोऽपि यावत् कार्यतया नावधीयते तावन्न प्रवर्तते ।

ननु अपेक्षितोपायतैव कार्यता । न । कार्यता कृतिसाध्यता, उपायता तु साधनता । अन्या हि साधनता

अन्या शाप्यता । किंतु लोके श्रेयसाधनतया कार्यावगम । तेन च रूपेण कार्याभिधायका लिङादय । यदि पर पौरुषेये वाक्ये सापेक्षकार्यावबोधकत्वम्, प्रमाणान्तरावगम्या च श्रेय साधनभूताया क्रियाया एव कार्यता । तेन लोके क्रियैव कार्यतया शब्देनाभिधीयते । वेदे स्वर्गकामपदपर्यालोचनया स्वर्गसाधनानुगुणकालान्तरस्थायि कार्याभिधानसामर्थ्यं अवधार्यते । च तत् प्रमाणान्तरावगम्य इति कार्यार्थेन अनपेक्षत्वम् । न च प्रमाणान्तरावगम्यमाना कार्यार्थेन प्रतीयमाना त्यागमर्हति । अन पेक्षितार्थाभिधायकत्वेऽपि लोके सापेक्षत्वोपपत्ते ।

ननु एव तर्हि वृद्धव्यवहारप्रसिद्धार्थग्रहण वेदे न स्यात् । नैवम् । व्यवहारप्रसिद्ध एवार्थ । स तु प्रमाणान्तरनिरपेक्ष इति विपत्न। ऋजु पृ १०-१६

* लिङादिरूपशब्दधर्मत्वात् शब्दभावनेत्युच्यते, स एव विधि, नियोग, प्रेरणा च । बाल पृ ७५

* लिङादिघटितशब्दनिष्ठव्यापारस्य इष्टसाधनत्वे न काचित् क्षति । रहस्य पृ १५.

* लिङादिशब्दस्तावत् प्रमाणान्तराविषय कार्यं अर्थं अवबोधयति । शब्दान्तराण्यपि च कार्यसमानाधिकरणत्वात् स्वार्थान् अभिदधति । तदन्वितश्च तेऽन्यथा प्रमाणान्तरस्य विषयभूता । तेन अर्थसमानाधिकरणतया पर न सापेक्षता । ऋजु पृ ३५.

* लिङ्त्वं नियतरूपेण विना नास्ति । प्रभु पृ २५२

* लिङ्-लोट्-तव्य – प्रत्ययानां विधिसामर्थ्यम् । वा. ३।१।७।१४ पृ ७००

* लिङ्विधि श्रौतो यथा– 'ज्योतिष्टोमेन स्वर्गकामो यजेत' । बाल पृ ३०

* लिङ्ग अध्याय अर्थात् न्याये । भा ४।४।१।७.

* लिङ्ग अतिदेशे प्रमाणम् । मणि पृ १३ * लिङ्ग 'अर्थाभिधानसामर्थ्यात् मन्त्रेषु शेषभाव स्यात्' (३।१।१।१) इत्यत्र सामर्थ्यशब्दात् मन्त्रविनियोगविशेष कारणत्वेन सूचितम् । प्रभु पृ ११९१ * लिङ्गमवगम्य पश्चात् लिङ्ग्यनुमानेन भवितव्यम् । न तु लिङ्ग्यवगमसमये एव लिङ्गावगम । शा १।१।० पृ ७८

* लिङ्गमेव व्याप्यत्वेन दृष्ट सपक्षे, व्यापकस्य अन्यत्र साध्यभूतस्य गमकत्वाभिमानतया शक्यमाण कारणम् । वा २।२।११।२९ पृ ५४४, * लिङ्गं केवल मन्त्रगतमेव अवगन्तव्यम् । सामर्थ्यं तु सर्ववस्तुविषय अवगन्तव्यम् । ३।३।७।१४ पृ ८४१. * लिङ्ग क्रम समाख्या च शक्नोति बाधितुम् । भा ३।२।७।१० * लिङ्ग क्रमात् बलवत् । वा ३।३।७।१४ पृ ८३६ * लिङ्ग चोदनागत अन्तरङ्ग भवति । भा ८।२।६।३१, * लिङ्ग चोदनागत प्रापकम्, मन्त्रगत प्राप्तस्य योतकम् । ८।१।१६।३१. * लिङ्ग द्विविध शब्दसामर्थ्यं अर्थसामर्थ्यं चेति । बाल. पृ ९ * लिङ्ग द्विविध शब्दगत अर्थगत च । क्रियाभिधानादिगतेषु शाद शाब्दिको विभक्त प्रवर्तते । तत्र शब्दगत लिङ्ग अह शब्दो रात्रिवाचकश्च । अह शब्दोऽपि अहोरात्रवचन रात्रिवाचकोऽपि । अर्थगत लिङ्ग गणत्वम्, गण एव समाव धर्मेणानुग्रहीतुं समर्थ । भा. ८।१।१०।१७ * लिङ्ग द्विविधम्, सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्ष तदनपेक्ष च । 'बर्हिर्देवसदन दामि' इति मन्त्रस्य लवना दृत्व इति प्रथमोदाहरणम् । अर्थज्ञानस्य कर्मोद्बोधनाद्युत्थान द्वितीयम् । मीन्या. * लिङ्ग द्विविध लौकिक शास्त्रीय च इत्यादिविचार मीको पृ २८५९ 'प्रातिपदिकार्थ' इति किन्दी द्रष्टव्य ।

* लिङ्ग धर्माङ्गताबोधक प्रमाणम् । मणि. पृ १२

* लिङ्गम् । न न तत्त्वस्य प्रपञ्चस्य सत्त्वरजस्तमोगुणात्मकत्वमाश्रित्य शाब्दिके सत्त्वरजस्तमोगुणानां तत्तत्कार्यभूतशब्दस्पर्शरूपरसगन्धानां च आविर्भाव पुंलिङ्गम्, तेषां तिरोभाव स्त्रीलिङ्गम्, तेषां साम्य नपुंसकम् । इद च लिङ्गत्रय सर्वेषामपि वस्तूनामस्ति, तथापि केनचित् शब्देन किंचित् लिङ्गमभिधीयते इत्युक्तत्वात् तथापि पुंलिङ्गादेर्विवक्षितत्वात् वृक्षादौ न्यपि पुंलिङ्गादे विद्यमानत्वात् इद अयुक्त इति वाच्यम् । लोकप्रसिद्ध्यनुसारेण 'स्तनकेशवती स्त्री स्यात् लोमश पुरुष स्मृत । उभयोरन्तर यच्च तदभावे नपुंसकम् ॥' इति स्तनकेशादीनां, 'हस्तिन्या वडवाया न स्त्रीत्विद्दे श्रम न्य । अतस्ता जातिमिच्छन्ति' इति स्तनकेशाद्यभिव्यङ्ग्यजातिविशेषस्य वा लिङ्गत्वात् आविर्भावादेस्तु

प्रयाजशेषीयप्रतिपत्त्याकाङ्क्षयैव प्रतिपत्तिविधेः कल्पनात् तस्य लिङ्गकल्प्यत्वाभावेन लैङ्गिकत्वाभावः । अभिघारणनियोगरूपतया विधिकल्पनायाः आकाङ्क्षायाः सहकारित्वेन लिङ्गस्यैव तत्र अभिघारणनियमप्रयाजशेषाङ्गतायां प्रमाणत्वात् । तत्र आकाङ्क्षायाः प्रमाणत्वे अङ्गत्वप्रमाणविभागव्याकोपात् पाके समर्थस्यापि देवदत्तस्य पाकाकाङ्क्षाऽभावे पाके नियोगासम्भवात् आकाङ्क्षां विना लिङ्गस्य क्वापि अविनियोजकत्वात् सर्वत्र आकाङ्क्षाया एव अङ्गत्वप्रमाणत्वापत्तौ लिङ्गप्रामाण्यानापत्तेश्च ।

अथ श्रुतिविहिता प्रयाजशेषकरणकाभिघारणस्य इति रूपेण विधौ अभिघारणे प्रयाजशेषस्य विनियुक्तत्वेन प्रतिपत्त्याकाङ्क्षाया अभावात् आर्थिकविधिकल्पनाऽनुपपत्तिः । न च यथा 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्यत्र उत्तरार्धस्य अवदानतया श्रुत्यैव विनियुक्तस्यापि आर्थिकविधिकल्पनया प्रतिपाद्यत्वं तथा इहापि इति वाच्यम् । तत्र स्विष्टकृतं प्रति विनियुक्तस्यापि उत्तरार्धस्य प्रक्षेपार्थीयप्रयोजनाकाङ्क्षया आर्थिकविधिकल्पनया प्रक्षेपं प्रति प्रतिपाद्यत्वोपपत्तावपि प्रकृते आकाङ्क्षाभावेन तदनुपपत्तेः । एतेन (यथा) 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र दण्डकरणकदानस्य मैत्रावरुणोद्देशेन विधिः इति सिद्धान्ते दीक्षितदण्डस्य दीक्षाभिन्नकालप्रयोजनावियुक्तस्य तथाऽपि विनियोगसम्भवात् श्रुतविधौ दण्डस्य तत्प्रयोजनवत्त्वनिवृत्त्यनापत्तिपरिहाराय आर्थिकप्रतिपत्तिविधिकल्पनया दण्डस्य दानप्रतिपाद्यत्वम् । प्रतिपत्तेश्च सांस्कारिकत्वस्य कृष्णविषाणादौ क्लृप्तत्वात् कार्यान्तरोपेण दीक्षितदण्डविनियोगसिद्धिः इति न चैतत् । तथा इह अभिघारणे विनियुक्तस्य श्रुतविधौ धारणाख्यप्रतिपत्तिकल्पनागौरवपरिहाराय तदर्थप्रतिपत्त्याकाङ्क्षया आर्थिकप्रतिपत्तिविधिं कल्पयित्वा प्रतिपाद्यत्वमस्तु 'दोषो नानुमिते लभ्यो' इति न्यायेन आर्थिके प्रतिपत्तिविधौ धारणप्रयोजनकल्पनाप्रसक्तिलक्षणस्य अभावात् इति निरस्तम् । तत्र समर्पणमात्रेण मैत्रावरुणोपकारसिद्धेः दानेन दण्डप्रतिपत्तिलक्षणया नयैव उक्तत्वात् प्रकृते तदभावात् । किंच प्रयाजशेषविशिष्टाभिघारणविधौ विशेषणविधेः आवश्यकत्वात् तस्यैव धारणाक्षेपशक्तिकल्पनोपपत्तौ न श्रुतविधौ तत्कल्पनप्रयुक्तगौरवावकाशः । मैत्रावरुणाय इत्यत्र तु न विशेषणविधिकल्पनं लभ्यम् इति वैषम्यम् । तैत्तिरीयशाखायां 'यत् दीक्षितदण्डं प्रयच्छति' इति प्रतिपत्तिविधेः श्रुतत्वेन तत्र तदकल्पनाच्च । इति चेन्न । श्रुतविधौ प्रयाजशेषकरणत्वस्य भावनायामन्वयेऽपि यागार्थताबोधस्य तत्र गौणविशेषणविध्यधीनत्वात् तत्र पूर्वं प्रयाजशेषीयप्रतिपत्त्याकाङ्क्षाया अनिवृत्त्या विशेषणविधेरिव प्रतिपत्तिविधेरपि प्रतिपत्त्याकाङ्क्षानिवर्तकलिङ्गरूपप्रमाणसत्त्वेन कल्पनोपपत्तेः । न च एवं विशेषणविधेरपि कल्प्यत्वात् विशेषणविनिगमनाविरहात् धारणाक्षेपशक्तिकल्पनाऽप्यस्तु देवेहविरभिघारणार्थम् आज्यस्य प्राणापस्थानस्याऽभिघारणार्थं च शेषस्य धारणीयत्वापत्तिः । तथा च प्रतिपत्तिरूप धारणप्रयोजनत्वेन सन्निहितहविर्गुण च शेष समर्पयतीति चतुर्थोक्ता ( प्रयाजशेषाभिघारणार्थ ४।१।१४ भाष्ट ) विरुध्येत इति वाच्यम् । नानातन्त्राय हविरभिघारणार्थं यागान्तरीयत्वादनौरसत्वैव विनिगमकत्वेन प्रतिपत्तिविधेरेव धारणाक्षेपशक्तिकल्पनेन अविशेष न्यायेन नानाहविरभिघारणसम्भवात् ।

इदं च लिङ्गं द्विविधम् । सामान्यसम्बन्धबोधकप्रमाणसापेक्षम्, तदनपेक्षं चेति । स्वप्रमेयोद्देशेनाऽन्यच्छेदकव्यापकधर्मावच्छिन्नविरूपितस्वप्रमेयाङ्गत्वविधायकबोधकप्रमाणसापेक्षं सामान्यसम्बन्धबोधकप्रमाणापेक्षम् । अस्ति चेदं 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रलिङ्गे । अत्र मन्त्रलिङ्गकल्प्यश्रुतौ न लवनत्वेन लवनस्य उद्देश्यता, किन्त्वपि मन्त्रप्रकाशत्वेन स्मृत्या (स्मृतेः) क्रतुसम्बन्धानवगमात्, अपि तु अपूर्वीयत्वेन । न च तेन रूपेण मन्त्रात् बोधः सम्भवति, तस्य लवनत्वमात्रेण बोधकत्वात् । न च अपूर्वीयत्वेन बोधं विना अन्यत्र मन्त्रस्य अपूर्वीयलवनं प्रकाशयेत्' इति निरुक्तोद्देश्यतावच्छेदकावच्छिन्नमन्त्रप्रकाश्यत्वविधिश्रुतिकल्पनं सम्भवति । अतः अपूर्वीयलवनत्वेन बोधार्थं प्रकरणादिरूपप्रमाणान्तरमपेक्षणीयम् । तत्र दर्शपूर्णमासप्रकरणे अस्य मन्त्रस्य पाठात् 'दर्श

पूर्णमाससम्बन्धि किंचित् अनेन प्रकाशयेत्' इत्युच्यते 'किं तत्' इत्यपेक्षाया 'सदनं' इति मन्त्रलिङ्गतः अवगम्यते। अतो मन्त्रलिङ्गप्रमेयदर्शपूर्णमासापूर्वसम्बन्धित्वनदप्रकाशकदर्शपूर्णमासापूर्वसम्बन्धितावच्छिन्ननिरूपितमन्त्रनिष्ठसम्बन्धबोधकप्रमाणसापेक्षत्वात् अस्य लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणसापेक्षत्वम्। एवं पूषानुमन्त्रणमन्त्रे यागानुमन्त्रणमिति सामान्यया 'यागसामान्यापूर्वसम्बन्धि किंचित् अनेन मन्त्रेण प्रकाशयेत्' इत्युच्यते 'किं तत्' इति अपेक्षाया 'पूषा' इति मन्त्रलिङ्गादवगम्यते। अतो लिङ्गप्रमेयपूषनिष्ठद्वितीयायागापूर्वसाधनत्व–रूपोद्देश्यताऽवच्छेदक–यागसामान्यापूर्वसाधनत्वावच्छिन्ननिरूपितमन्त्रनिष्ठ–सम्बन्धबोधकप्रमाणसापेक्षत्वात् लिङ्गस्य निरुक्तप्रमाणसापेक्षत्वम्। यत्र तु उद्देश्यस्वरूपे आनर्थक्याभावेन अपूर्वसाधनत्वादिबोधार्थं न प्रकरणाद्यपेक्षा यथा अर्थज्ञानस्य सामर्थ्यात् कर्मानुष्ठानाङ्गत्वे, तत्र लिङ्गस्य सामान्यसम्बन्धबोधकप्रमाणानपेक्षत्वम्।

लिङ्गस्य च अशब्दत्वेन अविधायकत्वात् विधिकल्पपठितनिरुक्ताङ्गत्वे साक्षात्प्रमाणत्वाभावेन विधायकश्रुतिकल्पनाऽन्तरितप्रामाण्यस्य अनन्तरितप्रामाण्यश्रुतितो दौर्बल्यम्। अत एव 'कदाचन स्तरीरसि' इति इन्द्रप्रकाशिकायाः ऋचः यावत् लिङ्गात् इन्द्रोपस्थानार्थत्वं कल्प्यते, तावत् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानार्थत्वं ऐन्द्र्यधिकरणे (३।२।२) निरूपितम्। न च उपक्रमस्थवादिश्रुत्या इन्द्राङ्गत्वावगमात् न गार्हपत्योपस्थानाङ्गत्वं इति वाच्यम्। साधनात् स्वप्रधानप्रत्ययोद्देश्यत्व–समभिव्याहृतपदोपाधिरूपदेवतात्व शक्तस्य तद्धितस्य प्राधान्येन प्रतिपाद्यत्वरूपगतत्वोपाधिरूपदेवतात्वे लक्षणाऽङ्गीकारेण प्रकृते तद्धितस्य श्रुतित्वाभावात् इन्द्रोद्देशेन विधौ एकप्रसरताभङ्गापत्तेश्च, चयनप्रकरणपठितेन 'ऐन्द्र्या' इति वचनेन चयनानुपयोगीन्द्रप्रकाशकत्वेन विधानानुपपत्तेश्च। गार्हपत्यस्य तु साधनत्वेन चयनाङ्गत्वात् चयनसंस्कार्यत्वोपपत्तिः। अतश्च शक्त्या उप-(अपरवृत-) इन्द्रप्रकाशनस्यापि 'ऐन्द्र्या' इति गजसुखाय गौणसामर्थ्यसहकृततृतीयाश्रुत्या गार्हपत्यप्रकाशकत्वमेव अस्या ऋचः इति ध्येयम्। मुख्यसामर्थ्यरूपलिङ्गविरोधिगौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतो विनियोजकत्वम्। अत एव दर्शपूर्णमासप्रकरणपठितस्य 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य शक्त्या बर्हिर्लवनाङ्गत्वम्, न तु गौण्या उलपराजिस्तरणाङ्गत्वं इत्युक्तं तृतीये (लिङ्गाधिकरणे ३।१।१)। इति लिङ्गनिरूपणम्। **मुरारि.** पृ. ११७१–७५.

* लिङ्गं प्रकरणं वा अनुपलभ्य इति न तत्परिच्छेदे प्रवृत्तिर्भवति। यद्याम्नातो 'एतत् फलवत्' इति तत्र प्रवर्तते। भा. ३।२।८।२२ पृ ७७८. * लिङ्गं प्रकरणात् बलवत्। भा. ३।३।७।१४ पृ ८३६. * लिङ्गं प्रकरणाद् बलवत्। पूषानुमन्त्रणमन्त्रस्य प्रकरणात् प्राप्तं दर्शपूर्णमासार्थत्वं लैङ्गिकेन पूषाङ्गत्वेन बाध्यते। मीन्या. * लिङ्गं प्रमाणं भवति, (यत्र) प्रकरणवतोऽर्थस्य संनिधाने समर्थमामनन्ति, 'स तस्य साधनभूतः' इत्येव गम्यते। कथं नाम उपकरिष्यति इति भविष्यमाणे सामर्थ्यात् परिनिश्चयः। यथाऽयं समर्थः तत्र अस्यो विनियोक्तुमिति। भा. ३।३।७।१४ पृ. ८४३. * लिङ्गं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थस्य विनियोजकम्। मीन्या. * लिङ्गं मन्त्रेषु वचनसामर्थ्यं 'बर्हिर्देवसदनं दामि' इति विनियोगकारणमुक्तम्। भा. ३।३।८।११. * लिङ्गं मन्त्रविनियोजकम्, मुख्ये एवार्थे विनियोजकं न गौणे। 'बर्हिर्देवसदनं दामि' इति मन्त्रः कुशच्छेदनाङ्गं न उलपराजि-लवनाङ्गम्। मीन्या. * लिङ्गं वाक्यात् बलवत् तेन 'स्योनं ते०' इति मन्त्रार्धयोः क्रमेण सदने सादने चाङ्गत्वं दर्शपूर्णमासयोः। भा. ३।१।७।१८, वि. ३।३।८. * लिङ्गं वाक्यात् बलवत्। वाक्यस्य लिङ्गं श्रुतिं च कल्पयित्वा विनियोजकत्वात् लिङ्गस्य च श्रुतिमात्रकल्पनेन विनियोजकत्वात्। 'स्योनं ते सदनं०' इति पूर्वार्धस्य लिङ्गात् सदनाङ्गत्वं न तु वाक्यात् सादनाङ्गत्वम्। मीन्या. * लिङ्गं विनियोगविधायकस्य सामर्थ्यम्। मु. पृ. ११९१ * लिङ्गं विलम्बितत्वात् श्रुत्यपेक्षया दुर्बलम्। वि. १०।८।१८. * लिङ्गं विवक्षित 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभेत' इत्यादौ 'गर्भिण्यो

भूतः । प्रकरणी अपि मन्त्र इति । तथा सति प्रकरणाम्नातस्य अन्यथाप्युपपन्नमानत्वात् न इन्द्राभिधानश्रुतिकल्पनाया अर्थापत्ति. प्रभवति, न च श्रुतिमन्तरेण विनियोगः सिध्यति । तस्मात् श्रुतिर्बलीयसी । वा ३।३।७।१४ पृ. ८३०. ● लिङ्गस्य उहः यथा– 'अग्नये त्वा जुष्टं निर्वपामि' इति एकहायन्याम् । माण्डे च 'चमुरसि, स्तोऽसि' इति । बाल. पृ. १२६ ● लिङ्गस्य दाक्षादिप्रत्ययार्थ. (भवति) । सु पृ ७३९. ● लिङ्गस्य दुर्बलप्रमाणोपजीवित्वम् (अत्र अधिकरणार्थः) । भा. ३।२।७।२०. ● लिङ्गस्य पदमात्रे पर्यवसानायोगात् वाक्यविनियोगपर्यन्तत्वम् । सु पृ. ११६२. ● लिङ्गस्य प्राप्ति. अनन्तबार्धमत्वः इत्यादि । वा. ३।३।७।१४ पृ. ८८१. ● लिङ्गस्य वाक्येन बाध. । बाल पृ. १८६. ● लिङ्गस्य वाक्यात् बलीयस्त्वम् । तथा च मन्त्रानुवाके (३।२।११।२१–२६) दर्शितम् । वा ३।३।७।१४ पृ ८३३. ● लिङ्गस्य विनियोगसामर्थ्यापेक्षस्य ऐकपद्यप्रयोगाभावात् पदान्तरसंनिधे. अनन्तरभावित्वात् वाक्यं प्रत्यन्तर्गभावगमेन । ३।३।७।१४ पृ. ८१७, ● लिङ्गस्य श्रुतिमात्रानुमानान्तरित प्रत्ययः । वाक्यस्य पुनः लिङ्गश्रुत्यनुमानव्यवहित । ३।३।७।१४ पृ. ८२१ ● लिङ्गस्य श्रुतिवाक्यप्रकरणैर्विरोध. । इडोपाह्वानमन्त्रे 'य इम यजमानान् ये च यजमानपशूनिति' इत्यतः पृथक् कर्तव्यः अभिव्यक्त्यर्थे यथे विनियोक्तव्य इति पक्ष । श्रुत्या, एकवाक्यत्वेन, इडाप्रकरणेन च लिङ्गस्य बाधात् तथा कर्तुं न शक्यते । इति सिद्धान्तः । वि. ३।३।१४. ● लिङ्गस्य श्रुतिविरोधात् क्वचित् बाधेऽपि न सर्वत्र बाधो युक्तः । सु ३।८।१२ पृ. ५.४, ● लिङ्गस्य सामर्थ्यात्मकत्व सामर्थ्यस्य च सन्दिग्धार्थनिर्णयमात्रे व्यापाराभिधानम् । पृ ११६७. ● लिङ्गानां नानुमानविषया निश्चयकरत्वं किंतु लिङ्गस्याधिकरणोक्तरीत्या (७।४।२) इत्यमानविषय । सोम. ८।१।१. ● लिङ्गयो विरोधे अर्थाभिधानशक्तिमत्त्व लिङ्गम्, परस्परैकवाक्यतायाः सामर्थ्यापेक्षत्वात् लिङ्गात् बलीयः । वा. ३।३।७।१४ पृ. ८४०. ● लिङ्गयोर्विरोधे मन्त्रस्य गौणसामर्थ्येन गौणपाठस्य प्रमते, मुख्यसामर्थ्येन मुख्यार्थाङ्गत्वम् । शेषत्वेऽपि तु एकस्मिन् शेषिणि गौणमुख्यसामर्थ्येन मन्त्रद्वयमुदाहार्यम् । वो. ३।३।७।१४ पृ ३५७.

● लिङ्गातिदेशात् नामातिदेशः प्रबल., शीघ्रबुद्धिहेतुत्वात् । लिङ्गातिदेशश्च धर्ममात्रातिदेशात् प्रबल । वि. १२।१।६ .

● लिङ्गानुमिता श्रुतिः आकाङ्क्षावशेन विधाप्रकाशनमात्रविनियोगार्थैव ज्ञायते । वा. १।२।४।१५ पृ १५३ .

■ लिङ्गाधिकरणम् । षष्ठी पुस्त्वादि लिङ्ग विवक्षितम् ॥

तथा च लिङ्गम् । ४।१।६।१७ ॥

भाष्यम्— अधिकरणान्तर वा । तथा च लिङ्गमिति । ग्रहाधिकरणे लिङ्गाधिकरणे अतिदिश्यते । लिङ्गमविवक्षितम्, श्रुत्या वाक्यस्य बाधितत्वात् । न च विराजनमिव श्रूयते इति भवति लिङ्गम् । 'स्त्री गौ सोमक्रयणी' इति स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते । ननु कथं 'मृगीमानय' इति न मृगा आनीयन्ते ? नैषम् । अशब्द तु तत् । 'पूर्वे धावन्ति' इति यथा । लिङ्ग विवक्षितम्, वाक्यार्थस्य श्रुत्या अप्रतिषिद्धत्वात् । तथा च लिङ्ग 'गर्भिण्यो भवन्ति' इति । तथा च 'मुष्का भवन्ति' इति । यदुक्तं 'स्त्री गौ सोमक्रयणी' इति । तत्र स्त्री इत्यविवक्षितम् । तथा 'प्रजापतये पुरुषान् हस्तिन आलभते' इति पुरुषग्रहणमविवक्षितम् । निरपेक्षे हि स्यात्. इतो लिङ्गविवक्षायाम् । तस्मात् विवक्षित लिङ्गमिति ।

शा— लिङ्गं तु अलिङ्गो निर्धारितलिङ्गो दृषदो अक्षिकादौ च शब्दप्रयोगात् अशब्दार्थ इति अविवक्षितत्वाशङ्का । लिङ्गः लिङ्गी इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयति इति शब्दार्थत्वात् लिङ्गं विवक्षितम् ।

वि— 'न पुल्लिङ्गे विवक्षा वा विवक्षा, ऽशुभयोगत. । आद्यो, ऽनुपस्थितेरपेक्षत्वात् सङ्ख्यावद् विवक्षणाम् ॥'

भाट्ट— अस्तु सङ्ख्या शब्दार्थत्वात् विवक्षिता। लिङ्गं तु उपादेयगतमपि अशब्दार्थत्वादविवक्षितम्। नहि तत् प्रातिपदिकार्थः, शिखादिपदात् तदप्रतीतेः, तस्य लिङ्गत्रयसाधारण्येन लिङ्गविशेषव्यभिचारात्। नापि प्रत्ययार्थः व्यभिचारादेव। नापि टाबादीनाम्, सुप्विकाराणां ' तस्माच्छसो नः पुंसि ' इत्यादीनाम्, विलिङ्गे कुड्यादौ विपरीतलिङ्गे भक्तिवादौ च प्रयोगेण व्यभिचारादेव। अतः शब्दानुशासनमात्रमेवेदम्, न लिङ्गं नाम कस्यचित् शब्दस्य अर्थः, इति अविवक्षितम्। इति प्राप्ते, सिंहः सिंही इत्यादौ अनन्यथासिद्धलिङ्गप्रतीतेः लिङ्गमपि क्वचित् टाबादीनां सुप्विकाराणां च क्वचिच्च निमित्तत्वादिप्रातिपदिकविकाराणां वाच्यम्। अतश्च तत् क्वचित् लक्षणया कथिञ्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाध. तत्र साधुत्वार्थं तच्छब्दप्रयोगः।

मण्डन— ' पशोर्लिङ्गं विवक्ष्यते। '

शंकर— ' लिङ्गमप्येवमिष्यते। ' एव सन्त्याज्यम्।

* लिङ्गाधिकरणम् ( लिङ्गेन बर्हिर्लवनमन्त्रस्य मुख्ये विनियोगः )। ३।२।१।१–२. मीको. पृ. २११३ ' बर्हिन्यायः. ' इत्यत्र द्रष्टव्यम्।

* लिङ्गानुसारेण मन्त्रानुवाकस्य ग्रहणादौ विभज्य विनियोगो ज्योतिष्टोमे। वि. ३।२।९.

* ' लिङ्गाभावाच्च नित्यस्य ' ( १।३।८।१८ )। श्यामादिविहविशेषणाच्छुणपदानुमानाभावार्थं एतत् सूत्रम्। नियतस्य स्मृतिशिष्टाचारात् नियतस्य कर्तुः उपलक्षणभूतस्य लिङ्गस्य अभावात् ( कर्तुः उपलक्षणभूतं यत् लिङ्गं तस्य अभावात् ) तद्वाच्छुणपदानुमानानुपपत्तेः सर्वधर्मता। तु. पृ. २५१.

* लिङ्गादिभि. प्रत्यक्ष• आनुमानिकाना श्रुत्यादीना बाध.— यथा कृष्णलेषु सामर्थ्येन ब्रीहीनवहन्ति इत्यतिदेशानुमितश्रुते.। बाल पृ. १४६, वा. ३।३।७।१४ पृ. ८४१. * लिङ्गादेः श्रुतिमनपेक्षिणा स्वतन्त्र्येण प्रामाण्यं नास्ति। वा. १।२।८।३४. * लिङ्गादीनां श्रुत्यादिभिर्बाधयोग्यता। वि. ३।३।१२. * ' प्रमाणत्वाप्रमाणत्वे लिङ्गादीनां व्यवस्थिते। पूर्वं. सह विरुद्धत्वाविरुद्धत्वनिबन्धने॥ ' वा. ३।३।२।३ पृ १८०.

* लिङ्गादिप्रभवा अर्थवादप्रभवा च स्मृतिः श्रुतिप्रभवया स्मृत्या बाध्यते। अप्रामाण्यः। वा. ३।३।७।१४ पृ ८६०.

* ' लिङ्गोपदेशश्च तदर्थवत् '। ( १।२।४ ) तेषां मन्त्राणां अर्थः यथा अस्ति तथा लिङ्गोपदेशो भवति इति सूत्रव्याख्यानम्। शु पृ. ११२.

* लिङ्गक्रमयोः उपदेशप्रमाणत्वात् अत्यन्तानर्थक्य प्रसङ्गाच्च चोदकात् प्राबल्यम्। सोम. १०।७।२५. * लिङ्गक्रमयोः विरोधे स्तुतशस्त्राधिकरणे बाधितः ' अर्थेन त्वपकृष्येत ' इति। विपरीतोदाहरणमपि यथा अभ्यनुज्ञापनाभ्यनुज्ञयोः प्रश्नप्रतिवचनयोः ' उपहूत उपह्वयस्व ' इत्येव मन्त्रौ आम्नातौ। तौ देवतासामान्यात् तथैव अन्वयतः प्राप्तुतः ' उपहूतः ' इत्यनुज्ञापने ' उपह्वयस्व ' इत्यनुज्ञायाम्। न तु तथा सामर्थ्यमस्ति इति विपरीत क्षेपत्वम्। यावद्धि स्थानेन प्रकरणमुत्पाद्य एकवाक्यत्वं कल्प्यते तावल्लिङ्गेन श्रुतिं कल्पयित्वा साधितो विनियोगः इत्यकल्पितलिङ्गश्रुतिपदस्यैव क्रमस्य बाधः। तथा परिधानकरणभ्रियमाणानुवादिनोः ' परिवीरसि ' ' युवा सुवासाः ' इति वा अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गाद्बलीयस्त्वाद्वितीयपरिव्याणाङ्गत्वमपि। कथं न मनोताग्नीषोमीयमनभिधानसमर्थेन लिङ्गेन आग्नेयपशुप्रयोगात् इति चेत्। न। ' वचनात्त्वयथार्थमैन्द्री स्यात् ' इतिवत् तत्त्वान्तरश्रुतिकृतविनियोगकल्पितकल्पनाद्वारेण अग्नीषोमीयाङ्गत्वात्। अत्र हि आह ' यत्राऽन्यदेवत्यः पशुराग्नेय्येन मनोता कार्या ' इति। अन्यथा हि अत्र लिङ्गेन उह्यमाना मनोता बाधिता। द्विदेवत्येऽपि एकदेवत्यैव न भेवाग्निदेवत्यत्वेन अग्नीषोमीयवद् उत्तरणीयेत्यर्थः। यद्वा एवकार स्वयमादप्रतीय यथाक्रम कार्या एव इत्यत्र यथोक्तम् कार्या इति अवधार्यते। वा. ३।३।७।१४ पृ. ८३६–८३७. * लिङ्गक्रमयोर्विरोधे ' " उपहूतः उपह्वयस्व ' इत्यनयोः यथाक्रमं पाठात् प्रश्नप्रतिवचनशेषत्वे क्रमेण अवगते लिङ्गात् वैपरीत्यम्। एवं क्रमान्तरविरोधेऽपि द्रष्टव्यम्। शेषानेकत्वे तु अन्यदेवत्यनिवृत्तिर्नियो

अयदेवत्यानुमन्त्रणस्य आम्नातस्य तद्देवत्यानुमन्त्रणेन बाधः । कौ ३।३।७।१८ पृ ३६०

* लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्' इत्यत्र इन्द्राग्नीनां कर्मणो बहिरपि सद्भावः प्रतिपादितः । फु ३।३।१८।२१

सू लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् । ३।२।७।२०॥

इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम् । ' इन्द्राग्नी रोचना दिवः ' ' प्रचर्षणिभ्यः ' ' इन्द्राग्नी नवतिं पुरः ' ' श्नथद्वृत्रम् ' इत्याद्या पठ्यन्ते । ब्राह्मणे च काम्या इष्टयः श्रूयन्ते– ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः ' ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् भ्रातृव्यवान्' ' अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्ग्रामकामः ' 'अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् अपरुद्धमभिचरन्' इत्येवमादयः । तदेता याज्यानुवाक्याः प्रति संदेहः, किं यास्ति काश्चिदैन्द्राग्नं कर्म तत्र सर्वत्रानेन ऐन्द्राग्नेन याज्यानुवाक्यायुगलेन भवितव्यम्, उत एतस्मिन्नेव ऐन्द्राग्न्यामिष्टौ काम्यायामिति । एवं वैश्वानर्यौ याज्यानुवाक्ये । एवं सर्वकर्मोपकारिण्यावाम्नाये लिङ्गस्य विनियोजकत्वं निरूप्य इदानीं लिङ्गस्यैव विनियोजकत्वमनुप्रमाणान्तरमापन्नस्येति तद्गत एव विशेषो विचार्यते ।

अत्राय पूर्वपक्षः — यद्यपि येनैव क्रमेण ऐन्द्राग्न्यादीनि कर्माणि समाम्नातानि तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलानि अपि श्रूयन्ते । तथा च श्रुतिक्रमेण समाख्यया च तद्द्वारकत्वेनैव याज्यानुवाक्याविनियोगो युक्तः । तथापि लिङ्गस्य प्रमात् समाख्यातश्च प्रबलत्वात् इन्द्राग्न्यादिप्रकाशनसामर्थ्यात्मकेन लिङ्गेन क्रमसमाख्ययोर्बाधितत्वात् इन्द्राग्न्यादिदेवताककर्ममात्राङ्गत्वमेव याज्यानुवाक्यानां युक्तमिति । एवं प्राप्ते, अभिधीयते । सत्यमेव यदि सामान्यमनपेक्ष्य लिङ्गं विनियोजकं भवेत् । अन्यादिप्रकाशनसामर्थ्यं हि लिङ्गम् । न चाग्न्यादिस्वरूपे विनियोगः सम्भवति, वैयर्थ्यप्रसङ्गात् । सम्भवति तु तेषां यागपूर्वीयरूपे । न च सामान्यसंबन्धमन्तरेण यागपूर्वीयत्वं लभ्यते । तेन तत्र सामान्यसंबन्धापादकं वाक्यं प्रकरणं वा समस्ति, तत्र तदपेक्षयैव लिङ्गस्य विनियोजकत्वम् । अत्र तु वाक्यप्रकरणयोरभावात् क्रमसमाख्यापेक्षा न भवेत्, तदा लिङ्गस्य विनियोजकत्वमेव न स्यात् । तेनात्र क्रमेण या याज्यानुवाक्या ऐन्द्राग्न्यादिकाम्येष्टिभिः साम्यान्नाता सैव तत्र । तत्र किं कुर्वतोऽभ्यासादिति विशेषापेक्षायां स्वाभिधेयसमवेतार्थप्रकाशने विनियुज्यते । यत्र पुनः क्रमेण समाख्ययार्थैवासेऽन्यापेक्षा, कार्यद्वयसाधारणं हि लिङ्गं सन्निधानात् केवलं न विनियोगसमर्थम्, तत्र विनिगमनासिद्ध्यर्थं समाख्याऽप्याश्रीयते । यथा केवलाग्निदेवत्यस्य कर्मणः क्रमः आग्नेयी ऋक् गम्यते । तस्याश्च लिङ्गेन कार्यद्वयमवगम्यते समिध्यमानाग्निप्रकाशनं इध्यमानाग्निप्रकाशनं च । तत्र यदि याज्यासमाख्या नाश्रीयेत, तदा प्राप्नुयात् समिध्यमानाग्निप्रकाशनार्थत्वमेव स्यात् । या या समाख्यया तु इष्यते अनया इज्यमानदेवताप्रकाशनसामर्थ्यं मन्त्रस्य कल्प्यते । यद्यपि अभिधानसामर्थ्यं न देवतार्थं, किंतु यागयागसाधारणाग्निस्वरूपमात्रे । तथापि, समाख्याकल्पितयागविषयसामर्थ्यानुरोधेन इज्यमानदेवताप्रकाशन एव लिङ्गेन विनियुज्यते । तदुक्तम्– ' नास्ति क्रतुसंबन्धे सामर्थ्यं विनियोजकम् । येन च क्रतुसंबन्धस्तेन काम्यार्थता स्फुटा ॥ ' इति ( वा पृ ७७१ ) । अतः सर्वत्र साधारण्यपूर्वक एव लिङ्गविनियोग इति । प्रयोजनम्–पूर्वोक्तः । सूत्रं तु लिङ्गक्रमसमाख्याभिः काम्येष्टिसंबद्धमेव मन्त्रसमाम्नानं न सर्वत्र यागीयमित्यर्थः । तौता

सू लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् । ३।२।७।२० ॥

' ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ' ' ऐन्द्राग्नमेकादशकपालं निर्वपेद् यस्य सजाता वीयुः ' इत्याद्याः काम्येष्टयो विहिताः । एवं काम्ययाज्यानुवाक्याकाण्डे ' इन्द्राग्नी रोचना दिवः० श्नथद्वृत्र०' इति ऐन्द्राग्नं याज्यापुरोनुवाक्यायुगलं चाम्नातम् । तत्र किं यावत् किंचित् ऐन्द्राग्नं कर्म तत्र सर्वत्र अनेनैव याज्यानुवाक्यायुगलेन ऐन्द्राग्नं भवितव्यम् उत उक्तायां प्रथमायामेव ऐन्द्राग्न्यां इदं युगलं अन्यत्र तु अन्यत् इति

* लिङ्गस्य अनन्यगतिकत्वात् अन्यार्थदर्शनाना अभिधास्यते। वा. ३।३।७।१४ पृ. ८४१.

* लिङ्गदर्शनाच्च। ३।४।१३।४०॥

सोमभक्षणस्य पुरोडाशादिभक्षणवत् ऋत्विक्षु अवशिष्टकर्मानुष्ठानसामर्थ्याधानार्थत्वे. तद्वैगुण्येऽपि च दक्षिणालाभार्थत्वस्य प्रतिघातात् स्वामिन एव पानात् प्रधानफलभोक्तृत्वस्य कर्त्रा धानाख्या समृद्धिः तद्वैगुण्याच्च भोक्तृस्वशक्तिलाहारथा व्यृद्धिः। तस्मात् तस्यैव यजमानस्य [illegible] पृ. १५१४.

* लिङ्गप्रकरणाभ्यां क्रमबाध.। यथा– दर्शपूर्णमासप्रकरणे 'हस्तावनेनिक्ते' 'उलपराजिं स्तृणाति'। अत्र क्रमेण आस्तरणमन्त्रस्य हस्तावनेजनम्, लिङ्गप्रकरणाभ्यां तु स्तरणेऽवन एवविनियोग.। वि. ३।१।१४.

* लिङ्गप्रकरणविरोधे यूपानुमन्त्रणानि उदाहर्तव्यानि। दोषनैकत्वे इदम्। नैपानैकत्वे तु निर्वापादिषु लिङ्गेन 'देवस्य त्वा' इत्यादिना प्रकरणाम्नातमन्त्रान्तरबाध.। वा. ३।३।७।१४ पृ ८३९, * लिङ्गप्रकरणविरोधे दोषनैकत्वे यूपानुमन्त्रणमन्त्रस्य प्रकरणेन दर्शपूर्णमासयोर्विनियोगे प्राप्ते समाख्यावशकृतलिङ्गात् पूर्वदैवत्यकर्माङ्गत्वम्। समुदायेन च सिद्धरूपत्वात् मन्त्रस्य अविनाशात्प्रकरणविरोधे ज्ञेयम्। मुख्यप्रकरणविरोधे तु अन्यथाक्रम। दोषानेकत्वे तु यूपानुमन्त्रणमन्त्रे प्रकरणात् आग्नेये प्राप्ते मुख्यलिङ्गेन मतुमन्त्रणेन बाध.। कौ. ३।३।७।१४ पृ ३६०.

* लिङ्गबलेन आनागश्रुतेरन्यथानयन 'आकाशस्तल्लिङ्गात्' इत्यत्र। परानन्द.. ६२।१–२ * लिङ्गबलेन सूक्तवाकमन्त्र दर्शे पूर्णमासे च विभज्य विनियोक्तव्य। चि. ३।२।६.

* लिङ्गबाधः प्रकरणाद्बीन न युक्त। टुप्. ५।१।३।४

* लिङ्गसामान्य ऊह यथा– 'यस्त्वमसि स्वाति' इति प्रकृत्यामन्त्राम्, माण्डे च 'धनुरसि स्वेदोऽसि' इति। भाट्ट पृ १२६.

* लिङ्गवचनयोरेव ऊह क्वचित्– यथा 'अग्निं मरुत' इत्यत्र अग्नये इति पदं पुलिङ्गैकवचनम् (प्रकृतौ)। 'मह्या आलभेत' इत्यादिषु (विकृतौ) 'प्राग्य:' इत्येवं स्त्रीलिङ्गबहुवचनरूपेण 'प्राग्योऽग्नि मरुत' इति ऊहः। भाट्ट पृ. १२७.

* 'स्वर्गकामः' इत्यत्र लिङ्गवत् सङ्ख्याया अपि उद्देश्यविशेषणत्वेन अविवक्षितत्वम्। सोम. ३।१।४.

* लिङ्गवाक्ययोः लिङ्ग बलीय.। कुतः ? अर्थविप्रकर्षात्। यत् 'स्योन ते' इत्यस्य मन्त्रार्धस्य सदनकरणे अभिधानसामर्थ्यं तत्प्रत्यक्षम्, 'तस्मिन् सीद' इत्यस्य पुनः पूर्वेण सह एकवाक्यतानुमानस्य भवति जघन्यम्। ततश्च पूर्वस्य मन्त्रस्याभिधानसामर्थ्यात् उपस्तरणे विनियोगः उक्तो भवति इति संनिकृष्टो लिङ्गस्य श्रुत्यर्थ.। उत्तरस्य तु सादनिवे अभिधानसामर्थ्ये सत्र. श्रुत्यर्थः इति लिङ्गान्तरित. विप्रकृष्टो भवति इति। भा. ३।३।७।१४ पृ. ८४९–५०. * लिङ्गवाक्ययोर्विरोधे दोषानैकत्वे 'स्योनादेरपि दोषस्य वाक्येन सदन प्रति। सीदेत्यस्यैव लिङ्गेन तेनास्य पूर्वबाधन॥' वा. ३।३।७।१४ पृ. ८३८ * लिङ्गवाक्ययो.– समुदायावयवविनियोगाय वाक्यसामर्थ्ययो. सह्प्रसिद्धयो असमर्थविनियोगासम्भवात् यावत् वाक्येन पूर्वो भाग. उत्तरार्थाभिधानसमर्थ, (स्योन ते सदन.) उत्तरो वा पूर्वसमर्थ (तस्मिन् सीद.) इत्यनुमीयते, तावत् प्रत्येकभागवर्तिना सामर्थ्येन पूर्वस्यापि स्वार्थे परस्यापि स्वार्थे श्रुतिकल्पिता। ततश्च यावत् इतरत्र विनियोगकश्रुत्यनुमानाय प्रवर्तते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य न कश्चिदपि हेतु श्रुत्यनुमाने इत्यनुपजातमूले विनियोगो बाध्यते। मन्त्रस्यापि हि पूर्वस्य पूर्वत्रार्थे शीघ्र विनियोगः उत्तरस्य चिरेण। तथोत्तरीचरस्य शीघ्र पूर्वस्य तत्र चिरेण। शीघ्रविनियुक्तश्च मन्त्र चिरविनियोग नाद्रियते। तथा अर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतर गृह्णाति। स्वप्राधान्ये च संभवति न परोपसर्जनतां प्रतिपद्यते। तस्मात् लिङ्ग बलीय. इति मिश्रा वाक्य विनियोग इति। वा. ३।३।७।१४ पृ. ८३२.

पितः येन प्रयाजनाम्नैवैकवाक्यतयाऽन्वियात्। तेन दर्शपूर्णमासप्रयाजवाक्ययोः एकवाक्यतायां गुणप्रधानभावेन निष्पन्नायां पश्चाद्वैशेषिकोपकारनिर्वृत्तिः। आह च। दर्शपूर्णमासयोः उपकारमपेक्षमाणयोः प्रयाजादिषु वा उपकारमपेक्षमाणेष्वनिष्पन्नस्य एकोपकारे प्रकरणात् तावत् तादर्थ्यं प्रतीयते। तदन्यथानुपपत्त्या करणोपकारः कल्प्यते। तेन उपकारापेक्षामात्रमिह तादर्थ्यप्रमाणानुमाने व्याप्रियते। नोपकारादेव शेषित्वं तादर्थ्यं चेति। अत एव पदार्थपूर्वक प्रकृताद्ध्वर इति तन्त्रज्ञाः। विनियुक्तेषु पदार्थेषु कल्पिते चोपकारे लिङ्गविशेषावगमात् प्रथमं उपकारमेव गृह्णातीति तत्रैवोपकारपूर्वकत्वम्। तदेवं प्रकरणं प्रयाजादीनां विनियोजकम्। तच्च द्विविधं महाप्रकरणमवान्तरप्रकरणं चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्। तदन्तराले कथंभावनायाः प्रकरणं तदवान्तरप्रकरणम्। तत्राभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। भवति हि अङ्गभावनानामपि अवान्तरा पूर्वसिद्धये कथंभावाकाङ्क्षा। अन्यथा चातिदेशस्य दीक्षणीयापूर्वप्रयुक्तिर्न स्यात्।

कश्चिदाह। नावान्तरप्रकरणं नाम प्रमाणमस्ति, प्रमेयस्याभावात्। प्रतिकथंभावमवान्तरा हि भावना कथंभावमपेक्षते। तत्र यावदेवाङ्गभावना प्रयोजनापेक्षा प्रकरणेन फलभावनाङ्गं भवति तावदेवाऽसौ प्रधानभावनयैव ग्रहीष्यते इति सर्वेषां प्रधानभावनान्वितानां नान्योन्याकाङ्क्षाभावः सम्भवतीति नावान्तरप्रकरणविनियोगस्यावसरः। अभिक्रमणं तु वाक्येनैव प्रयाजादिषु विधीयते इति तदर्थं नावान्तरप्रकरणादिति। स नूनं वार्तिके 'यत् प्रकरणसामान्यं श्रुत्यादिभिरविधिः। शक्ते पुनश्च तेनैव संदेशेन गमिष्यते ॥' इत्यस्मिन् अश्रुतपूर्वी। यत्र यदङ्गोद्देशेनैव श्रुत्यादिभिः किञ्चित् विनियुज्यते तत्र अवश्यमङ्गस्य कथंभावापेक्षोत्थापयितव्या। सा च यदि परस्तादपि किञ्चिदुद्देशेनैव विधीयते तावदनुवर्तत एव। तयोः सम्प्रयुक्तयोरङ्गयोर्मध्ये यदङ्गं असंयुक्तं विहितं तत्तदाकाङ्क्षानुवृत्तेः सन्निधिविशेषाच्च तेनैव संबध्यते।

योऽप्यङ्गापूर्वाणामनुप्रवेशनात्र स्वारसिकीं कथंभावाकाङ्क्षामिच्छति तेनापि कारणान्तरसमुत्था सा अभ्युपेतव्यैव। अन्यथा दीक्षणीयादिषु अतिदेशानवकल्पनात्। तेन प्रयाजानुद्देशेन युक्तादिभिः किञ्चिदङ्गमुक्त्वा मध्ये किञ्चिदसंयुक्तं विधाय पुनरन्ते प्रयाजानुद्देशेन अङ्गे विहिते मध्यस्थस्य असंयुक्तस्याङ्गस्य अवान्तरप्रकरणात् प्रयाजाङ्गता भवति।

यत्त्वेतत् सूचयति तस्य सामिधेनीनां निविद्भिर्व्यवधानाभावेन मध्यसि सन्निधाने अनीषत् प्रकरणेन उपनीतस्य प्रयाजाङ्गत्वसिद्धेः निविद्भिः सामिधेनीनां विच्छेदप्रतिपादनमनर्थकं स्यात्। अथोच्येत उपन्यस्त इत्येकपदप्रकरणादभिन्नाभिधानसिद्ध्यर्थमर्थान्तरापेक्षया सन्निहितासु सामिधेनीष्वभिन्नाभिधानं भवति सन्निधानाभावे तु सम्बन्धाभावात् प्रकृतेन प्रधानेनान्वयः साध्यते इति। तदयुक्तम्। प्रकृतिप्रत्ययार्थयोरेव मिथस्तत्सिद्धेः प्रत्ययेन हि प्रधानापूर्वमनूद्य तदङ्गत्वेन उपाख्यानं विधीयते, तर्हि कर्तृसंस्कारत्वात् प्रधानापूर्वविषयमनपातादिवदनुपपद्यत इति। श्रुतिपदानि च 'निवीतं मनुष्याणाम्' इत्येवमादीनि सन्ति येषु यागमन्वितमभिधीयते इति नान्विताभिधानसिद्ध्यर्थमर्थान्तरापेक्षा। तस्मात् अङ्गानामपि भवत्येव कथमिति प्रकारविशेषाकाङ्क्षा तदाह भगवान् भाष्यकारः। 'भवति हि सामिधेनीरनुब्रूयात् कथमिति विशेषाकाङ्क्षावचनमिति' कथमेव न्यायो परकार्यरूपत्वे सत्यपि निरधिकाराणामपूर्वाणां स्यादेव, कथंभावापेक्षा नास्ति अधिकाराणां तु विद्यते इति वार्तिके हि तदपेक्षया निमित्तं साकिल्यं निरधिकारमिति तु विशेषमात्रं उक्तम्, अन्यथैवाङ्गानामपेक्षा। नन्वेवं कथं तर्हि प्रयाजादिषु अचोदकचोदितेषु औत्सर्गिकधर्मातिदेशः कथं वा दीक्षणीयादिषु ऐष्टिकधर्मातिदेशः। यथा तथा श्रूयताम्। स्वारसिकी हि निरधिकाराणामाकाङ्क्षा नास्ति, कारणान्तरसमुत्था तु नापह्नोतुं शक्यते। तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेन इतिकर्तव्यताकाङ्क्षा कल्प्यते तस्याश्च सामान्यातिदेशसिद्धिः। प्रयाजादिषु तु न किञ्चिदाकाङ्क्षोत्थापकमस्तीति नातिदेश इति। अत्राभिधीयते। इदमत्र विवेचनीयं किं येन प्रयाजादिनाऽऽकाङ्क्षा कल्प्यते तेन तदेव प्रति सा कल्प्यते उत तद्दर्शनादेव सामान्यविशेषेण इतिकर्तव्यताकाङ्क्षा कल्प्यते इति। यदि

साहित्येनेति मन्त्राधिकरणे वाक्यार्थप्रत्ययसमर्थनार्थे इत्यादिना दर्शितम् ।

संविदन्ति तु ये कार्यमपूर्वं वाक्यगोचरम् ।
न दर्शाद्यङ्गता तेषां प्रयाजादेः प्रसिध्यति ॥' ४ ॥ कार्यभूतं प्रधानं अपूर्वं लिङादिभिरेव उपसर्जनीभूतसकलेतरपदार्थकं वाक्येन प्रतिपाद्यते इति ये मन्यन्ते तेषां मते प्रयाजादीनां दर्शाद्यङ्गता न स्यात् कथम् ।
' आकाङ्क्षति प्रधानं हि न प्रधानान्तरान्वयम् ।
अङ्गापूर्वस्य येन स्यात्प्रधानापूर्वसंगतिः ॥' ५ ॥ न कार्यमन्यार्थं भवतीति न्यायात् प्रयाजापूर्वं स्वप्रधानभूतं न प्रयोजनान्तरमपेक्षते । अनपेक्षं च सांनिध्येनापि दर्शपूर्णमासापूर्वेण संगन्तुं नार्हति ।

यदपि केनचिदुक्तं प्राकरणिकापूर्वसंनिधिसमाम्नातानि प्रयाजादिवाक्यानि न प्राथम्यापूर्वान्तरमवगमयन्ति अवघातादिवत् अनुवादकत्वप्रसङ्गात् । किन्तु प्रधानस्यैव स्वकारकनिविष्टमुपस्थापयन्ति । तत्र भवत्यपि स्वयं चाप्रयोजनीभूतं प्रयोजनरूपाधिकारविषयान्वययोग्यमित्यधिकारवाक्यगत एव लिङ्शब्देन गुणभूतेनाभिहितं स्वार्थमभिधत्ते तेषां च तद्द्वारं कारकोपकारद्वारं स च प्रभूतं सर्वैरेव गम्यते । न च अनधिकाररूपा तेषां स्वरूपेण संभवः संभवतीत्यनन्तरं यागस्वरूपाणामपूर्वाणामनुपाश्रयणीयत्वात् । योऽसौ लिङ्शब्दः प्रागनुपमानार्थतया शक्तिः स इदानीं अपूर्वान्तरव्याहरणप्रसङ्गादिना प्रधानापूर्वेदमर्थ्यावगतिपरतया निहतशक्त्यमभिधानाद्गुणेनैव अभिधत्ते न स्वप्रधानं विषयविनियोगविशेषात् । एतदेवापूर्वमभिप्रेत्य भाष्यकारेणोक्तं ' न चानिष्ठितमङ्गं भवति ' इति विधिश्रुत्या कर्मणा सङ्गतत्वात् नाङ्गत्वं संभवतीत्यर्थः । ननु एवं सति यस्तु पुरुषप्रयत्नः सोऽनुवादः इत्यपि भाष्यमस्ति सन्निपातिनि नैमित्तिके अङ्गप्रधानसम्बन्धे तदुक्तं तत्र हि कारकद्वारेणैव अङ्गत्वं नित्योऽप्यपूर्वाचरणात् संभवतीत्यनुवाद एव लिङ्शब्दः तदिदं प्रयाजादीनामङ्गत्वमिति । ' तदेतद्दर्शनियामानं श्रद्दालुभ्योऽभिरोचते । प्रमाणपरतन्त्रेभ्यो नैतद्रोचितुमर्हति ॥ ' ६ ॥ तथा च
' श्रूयमाणं श्रुतं कार्यं तदभावे विनिश्चिते ।
वाक्यान्तरेण संबन्धो न बाधे नापि संशये ॥७॥
द्वयोः सद्भावसंदेहाप्रश्नौ यजमानयोः । मा युवं हि स्थ इत्येषा प्रतिपत्प्रकृति गमत् ॥' ८॥ नाधिकारवाक्येषु तावत् अमी लिङादयो विदितनिरपेक्षकार्याभिधानशक्तयो न समिदादिवाक्येषु अन्यनिष्ठं कार्यमभिधातुमीशते । लक्षणयाऽभिदधतीति चेत् । न लक्षणायां प्रमाणमस्ति । विनियुक्तविषयत्व प्रमाणमिति चेत्, न, मिथ्याभिनिवेशस्यैवासंभावनीयत्वात् । न ह्यत्र स्वपदावगतप्रधानकार्यंशब्देन ग्राहकग्रहणसंभव । प्रत्यभिज्ञाशङ्कया न प्राथम्यापूर्वान्तरं प्रतीयते इति चेत् । एतदेव तर्हि प्रथमं निरूपयितव्यं अनेन तावत्कार्यमभिधीयते तत्किं प्रकृतमेवाधिकारापूर्वं उत अन्यदिति, तत्र यदि कारकद्वारेण तद्विषयानुप्रवेशः संभाव्येत् तत प्रत्यभिज्ञानसामर्थ्यात् नियमस्य विनियोगप्रसङ्गात् तदनुमन्यते । अथ तु प्रयत्नेन मृग्यमाणो न तद्विषयानुप्रवेशद्वारं पश्यति तत प्रत्यभिज्ञाभावेन नियोगान्तरमेव प्रधानभूतं समिदादिविषयमध्यवस्यति । इतरथा श्रुतिबाधप्रसङ्गात् परिहृत्य हि श्रुतिनाथ न ग्राहको गृह्णाति न तद्भावेनापि निरोधाशङ्कायाम् । अत्र च श्रुत्या प्रथमं तावद् ग्राहकस्य निरोध आक्रम्यते । विषयानुप्रवेशासंभवे श्रुतिग्राहकयोरविरोधः असंभवे तु श्रुत्या ग्राहकस्य निरोध स्यात्, लक्षणाप्रसङ्गात् । न चैव विरोधे शङ्क्यमाने ग्राहको ग्रहीतुमीष्टे मा यातिह ज्योतिष्टोमो यजमानद्वययुक्तः ' युवं हि स्थ ' इत्येतां प्रतिपद् तथापि हि प्रथम तावदस्त्येव सन्देहः । किं कथंचिदग्रहणेनैव यजमानद्वयं संभवति तत्राविरोध श्रुतिप्रकरणयोः । अथवा असंभवान् विरोध इति तदेव यदि ' समिधो यजति ' इत्यत्र प्रधानापूर्वग्रहणे निषेधसम्बन्धनिश्चयात् प्रकृतसम्बन्ध एव भवति तस्मिंश्च सति उल्लेखेनैव लिङ्शब्दस्य लक्षणाश्रयणमित्युच्यते, ततो यजमानद्वित्वसम्भवाशङ्कया श्रुतिविरोधस्यानिश्चयात् ग्रहणे प्रतिपद् भज्यते तद्द्वैनैव द्वित्वश्रुते लक्षणैकत्वप्रतिपादकत्वं प्रत्यभिज्ञायत्वं वा प्रकल्पेत ।

विरोध एव तत्र निश्चितो न शङ्क्यमानमिति चेत् । तथा तर्हि अधिकरणारम्भः । न हि निर्णीते न्यायेन

पुरोडाशादियागप्रणालिकया अपूर्वसाधनत्वम् । तथाविधाभोद्दिश्य विधीयमानं प्रोक्षणं सर्वस्य द्वारद्वारिभावावस्थितत्वाद् भवति । कथं चोपादानेन फलार्थत्वं प्रोक्षणादेः ? यदि मतं नियोगैकसमर्थ्ये तावद् ग्राहकग्रहणेनैव प्रोक्षणादेरङ्गत्वं तस्य करणतया न सम्भवति पारिशेष्यात् करणोपकारकत्वेनैव तादर्थ्यं निर्धारयतीति नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकता कल्पयन् करणैकसमर्थ्यमाक्षिपतीति । यथैवं प्रकरणमेवेदमभिधानान्तरेणोक्तम् । तस्यापि हेतुत्वेन स्वयं प्रयत्नपक्षे प्रयाजादीनां ग्राहकग्रहणापादितपूर्वैकसमर्थ्यनिर्वाहार्थे करणतदमभवात् करणोपकारद्वारकल्पनमिति उपकारस्वरूपमेव प्राकरणिकम् । तन्नकर्त्वं तु प्रयाजादीनामपि औपादानिकमेवेति चेत् । तर्हि प्रयाजादेः विनियोगः प्राकरणिकः स्यात् । न हि प्रकरणकल्पितोपकारजननमात्रेण प्रकरणविनियोगः सिध्यति । सर्वेषामेव सन्निपातिनामनारभ्याधीतानां च अङ्गानां तज्जनकत्वेन प्रकरणविनियोगप्रसङ्गात् । अतः प्राकरणिकमेव प्रोक्षणादेरङ्गत्वम् । ननु असंयुक्तं प्रकरणेन विनियुज्यते, संयुक्तं च प्रोक्षणमिति । नैष दोषः । संयुक्तानामपि द्वारापेक्षत्वात् तन्निबन्धनत्वाच्च करणोपकारद्वारपरिकल्पनस्य प्रयाजादिष्विव । तदेवं प्रमाणशरीराविशेषेऽपि संयुक्तानां द्वारपरिकल्पकमुपादानम् । असंयुक्तानां च प्रकरणमिति समधानम् । एवमेवस्वादीनामपि श्रुत्यैव विनियोगो ज्योतिष्टोमादीनामपि फलार्थत्वं वाक्यादिभिरिति प्रागेव चर्चितम् । तस्मादुक्तान्येवाङ्गत्वे प्रमाणानीति । रत्नमाला. ( अङ्गनिर्णयपरिच्छेदः ) ।

● लिङ्गवाक्यविरोधाधिकरणम् । अत्र मान्त्रहृत्ता मन्त्रस्य एकवाक्यतोपगमनसामर्थ्यस्य शब्दसामर्थ्यरूपलिङ्गे व्यवहृत पूर्वलिङ्गसाध्यता च अस्मोक्ता । बाल.पृ ९.

● लिङ्गवाक्यविरोधोदाहरणे 'स्योनं ते सदनं०' इत्यत्र सदा उत्पमानैकवाक्यतयोर्मन्त्रयो. पृथक् पृथक् प्रकाशयितव्यार्थौ कर्मसमवेतौ दृश्येते तदा उभयोरपि भेदेन प्रकाशकापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणात् विनियोगाय प्रतिज्ञे सति यस्य यत्र कल्पनं सामर्थ्यं स तत्र हीभवन् प्राप्नुवन् नान्यत्र एकवाक्यतया नेतुं शक्यते, नापि अन्येभ्यस्तत्रागच्छद्भ्यः सोऽवकाशं ददाति । शा. ३।३।७।१४ पृ. ८३२.

● लिङ्गविनियोग. इदानीं प्रस्तूयते तृतीयस्य द्वितीये पादे । वा. ३।२।१।१ पृ. ७४५, ● लिङ्गविनियोगः तृतीयस्य द्वितीये अवर्णितः । ३।३।१।१ पृ. ८०३.

● लिङ्गविनियोगाधिकरणम् । ३।२।१।१-२. मीको. पृ. २९१३ 'बर्हिर्न्यायः' इत्यत्र द्रष्टव्यम् ।

● लिङ्गविनियोज्यत्वं नास्ति वैदिकस्य मन्त्रव्यतिरिक्तस्य शब्दस्य । सु. पृ. १२०९ .

● लिङ्गविनियोज्यमन्त्रप्रकाश्यस्य यज्ञपतिप्रथनस्य पुरोडाशप्रथनफलत्वं निराकृतं मन्त्राधिकरणे भाष्ये । पराक्रमः . ४८।२.

## ● लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः । ६।१।३।६ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ लिङ्गविशेषस्य पुंलिङ्गरूपस्य निर्देशात् पुंयुक्तं यजमानत्वं ऐतिशायनः इतिनामा पूर्वपक्षं आचार्यः मेने । पुंस एव कर्माधिकारो न स्त्रियाः इति ऐतिशायनस्य मतम् । इति पूर्वः पक्षः ।

तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते । ७ ॥

पुंस एव कर्माधिकारो न स्त्रियाः इति पूर्वपक्षे हेत्वन्तरार्थं सूत्रम् । तदुक्तित्वात्, पुंस्त्वस्य उक्तेः, पुंस्त्वस्य विवक्षितत्वादित्यर्थः । पुंस्त्वस्य विवक्षितत्वादेव अविज्ञाते गर्भे हते दोषश्रुतिः उपपद्यते । पुंस्त्वस्य अविवक्षितत्वे तु नोपपद्येत । 'गर्भेणाविज्ञातेन हतेन भ्रूणहा भवति' इति श्रुतिः । पुंस्त्वेन विशिष्य अनिर्धारिते गर्भे हते सति हन्ता भ्रूणहा भवति । भ्रूणो यज्ञः । पुमांश्च यज्ञकर्ता । पुंसो वधे यज्ञनाश एव भवति इति अविज्ञातगर्भहन्तुः भ्रूणहत्यादोषः श्रूयते । यदि स्त्रिया अपि यज्ञाधिकारः स्यात् तदा स्त्रीगर्भे हतेऽपि भ्रूणहत्या स्यात् । तत्र अविज्ञानग्रहणमनर्थकं स्यात् । तस्मात् 'स्वर्गकामः' इत्यत्र पुंस्त्वं विवक्षितम् । पुंस एव च कर्माधिकारः । इति पूर्वः पक्षः ।

**जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत, जात्यर्थस्य अविशिष्टत्वात् । ८ ॥**

पुंस एव शास्त्राधिकारो न स्त्रिया इति पूर्वपक्ष सूत्राभ्यां प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । बादरायण आचार्य जातिं कर्मणि अधिकृतां मन्यते स्म । अविशेषात् मनुष्यत्वजाते पुंसीव स्त्रियामपि विशेषाभावात् । तस्मात् स्वर्गकामपदेन पुमानिव स्त्री अपि प्रतीयेत । जाते मनुष्यत्वजाते अर्थं अभिलष्यमाणं स्वर्गं स्वर्गेच्छा वा । तस्य जात्यर्थस्य पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकामनायाः उभयोर् विशिष्टत्वात् च स्त्री अपि प्रतीयेत । तस्मात् स्त्रिया अपि कर्माधिकार इति सिद्धान्त ।

**चोदितत्वाद्यथाश्रुति । ९॥**

'तद्युक्तित्वाच्च दोषश्रुतिरविज्ञाते' इति सूत्रोक्तस्य हेतोर्निरासार्थं सूत्रम् । चोदितत्वात् स्त्रीपुंससाधारण्येन कर्मणा विहितत्वात् यथाश्रुति स्वर्गकामपदानुसारेण स्त्रीत्वेन पुंस्त्वेन वा अविज्ञाते गर्भे हते यथाभिप्रायं स्त्री पुंवधात् भ्रूणहत्या भवति इति अनुवाद निन्दार्थ यथार्थ । 'गर्भो न हन्तव्य' इति यो वधो । तस्मात् स्त्री अपि कर्माधिकारिणी । इति कुतूहलानुसारी सूत्रार्थ ।

अथ भाष्यानुसारी । ननु 'पशुमालभेत' इत्यत्र यथा पुंस्त्वं एकत्वं च विवक्ष्यते तथा 'स्वर्गकामो यजेत' इत्यत्रापि पुंस्त्वं विवक्षितं स्यात् इति चेत्, उच्यते 'पशु' इत्यत्र यथाश्रुति श्रुतिमनतिक्रम्य पुंस्त्वादि विवक्ष्येत चोदितत्वात् उपादेयत्वेन विहितत्वात् । प्रकृते तु मनुष्यत्वजाते स्वर्गकामनायाश्च पुंसीव स्त्रियामपि अविशिष्टत्वात् स्वर्गकाम इत्यत्र पुंस्त्वं विवक्षितुं न शक्यते । अविज्ञातगर्भहननदोषश्रुतिस्तु यथार्थोऽनुवाद इति उत्सूत्रमेव पूर्वपक्षनिरास । इति ।

वृत्तौ तु 'विभक्त्येति चेत्' ६।१।३।८ इति पूर्वपक्षिण शङ्कासूत्रम् । 'पशुना यजेत' इत्यत्र तृतीयया यथा एकत्वस्य पुंस्त्वस्य च विवक्षितत्वं तथा स्वर्गकामपदेऽपि पुंस्त्वं विवक्षणीयं इति । तत्रोत्तरं सिद्धान्तिन 'चोदितत्वाद्यथाश्रुति' इति । अवशिष्टार्थस्तु भाष्यवदेव । इति ।

**द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात् । १० ॥**

कर्मणां द्रव्यसाध्यत्वात् स्त्रीणां च द्रव्यशून्यत्वात् न तासां कर्माधिकार, इति पुन पूर्वपक्षोपन्यासार्थं सूत्रम् । तुशब्द सिद्धान्तपक्ष व्यावर्तयति । स्त्रीणां नास्ति कर्म । कर्म हि द्रव्यसंयुक्तं श्रूयते 'व्रीहिभिर्यजेत' 'तस्य द्वादशशतं दक्षिणा' इत्यादि । पुंसां च द्रव्यवत्त्वम् । पुंसां द्रव्यवत्त्वात् द्रव्यसंयुक्तं कर्म पुंसामेव स्यात् । स्त्रीणां तु अद्रव्यत्वं द्रव्यशून्यत्वम् । तस्मात् न तासां कर्म । स्त्रीणां द्रव्यशून्यत्वं तु क्रयविक्रयाभ्यां हेतुभ्यां सिध्यति । स्त्रियो हि पित्रा विक्रीयन्ते भर्त्रा च क्रीयन्ते । विक्रीतत्वाच्च पितृधनानामनीशिता क्रीतत्वाच्च भर्तृधनानाम् । विक्रयश्च श्रूयते 'शतमतिरथं दुहितृमते दद्यात् (भर्ता)' 'आर्षे (विवाहे) गोमिथुनं (दुहितृमते दद्यात्)' इति । यथा च वस्त्रादिद्रव्याणि क्रयविक्रयसंयुक्तानि तथा स्त्रियोऽपि द्रव्यै समानयोगित्वं च । वस्त्रादिद्रव्याणामिव स्त्रीणामपि क्रयविक्रयाभ्यां समानो योग । तथा च स्त्रीणां क्रयविक्रयविषयत्वात्, द्रव्यै समानयोगित्वाच्च अद्रव्यत्वम् । अद्रव्यत्वाच्च स्त्रीणां न कर्म । किंतु पुंसामेव । इति पूर्वपक्ष ।

**तथा चान्यार्थदर्शनम् । ११ ॥**

क्रयविक्रयविषयत्वात् स्त्रीणां द्रव्यशून्यत्वेन न तासां कर्म इति पूर्वपक्ष लिङ्गप्रतिपादनार्थं सूत्रम् । 'या पत्या क्रीता सती अथान्यैश्चरति' इत्यत्र अन्यार्थे अर्थवादे क्रीतत्वस्य दर्शनं स्त्रीणां क्रयविषयत्वे लिङ्गम् । क्रयविषयत्वाच्च अद्रव्यत्वम्, अद्रव्यत्वाच्च स्त्रीणां न कर्म ।

**तादर्थ्यात् कर्मतादर्थ्यम् । १२ ॥**

स्त्रीणामद्रव्यत्वात् न कर्माधिकार इति पूर्वपक्षे शङ्कानिरासार्थं सूत्रम् । तत्र शङ्का इत्थम् । ननु स्त्रीणां द्रव्यवत्त्वं नास्ति, भक्तोत्सर्पणेन वा कर्तनादिना वा यत् धनं तया उपार्ज्यते तेन तस्या द्रव्यवत्त्वम्, द्रव्यवत्त्वाच्च कर्माधिकार इति । अत्राह पूर्वपक्षी । भर्त्रा

नीतत्वात् स्त्रीणां दास्यं मर्षयितम्। दास्यादेव स्त्रीणां कर्तनादिकर्मणोऽपि दास्यं मर्षयितम्। स्त्रीभिः कर्तनादिना यत् द्रव्यं उत्पाद्यते तदपि भर्तुरेव। अत एव 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते। यत्ते समधिगच्छन्ति यस्य ते तस्य तद् धनम्॥' इति स्मृतिः संगच्छते। तस्मात् स्त्रीणामद्रव्यत्वान्न कर्माधिकारः इति पूर्वपक्षः।

फलोत्साहाविशेषात्तु। १३॥

स्त्रीणां द्रव्यवत्त्वाभावात् न कर्माधिकारः इति गतेः पूर्वपक्षे प्राप्ते, सिद्धान्तमाह। तुशब्दः स्त्रीणां द्रव्यशून्यत्वपक्षं वारयति। न स्त्रीणां निर्धनत्वम्। द्रव्यसंयुक्ताः स्त्रियः, ताश्च कर्माधिकारिण्यः, फलोत्साहाविशेषात्। फलविषयक उत्साहः फलोत्साहः फलेच्छा। पुंस इव स्त्रिया अपि फलोत्साहस्य अविशेषात् वैलक्षण्याभावात्। तस्मात् स्त्री फलार्थिनी सती स्मृतिप्रमाणोक्तं द्रव्यं परिगृह्णीयात् यजेत चेति।

अर्थेन च समवेतत्वात्। १४॥

स्त्रीणामपि कर्माधिकारः इति सिद्धान्तः। न च धनशून्यत्वेन तासां कर्माधिकाराभावः शङ्क्यः। तासां अर्थेन धनेन समवायात् संबन्धात्। तासां धनवत्त्वादित्यर्थः। विवाहकाले तथा संवादः क्रियते 'धर्मे चार्थे च कामे च नातिचरितव्या' इति।

क्रयस्य धर्ममात्रत्वम्। १५॥

पूर्वपक्षे यदुक्तम् 'क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणाम्' इति तत्र सिद्धान्ती उत्तरमाह। क्रयस्य धर्ममात्रत्वम् ज्ञेयम्। धर्ममात्रोऽयं क्रयः न वास्तविकः। तयो हि उभयोर्नियमो भवति। नियतं तु इदं दानं 'शतमतिरथं' शोभनामदोषाय च कन्या इति। विक्रयमपि स्मार्तं श्रुतिविरुद्धत्वात् नानुमन्यन्ते। तस्मान्नैतौ क्रयविक्रयौ।

स्ववत्तामपि दर्शयति। १६॥

स्त्रीणां न कर्माधिकारः अद्रव्यत्वात् इति पूर्वपक्षे उत्तरमाह सिद्धान्ती। स्त्री द्रव्यवती न अद्रव्या। यतः श्रुतिरेव स्त्रियाः स्ववत्तामपि दर्शयति न केवलं कन्याविक्रयाभावम्। 'पत्नी वै पारिणाह्यस्येष्टे' इति पारिणाह्य नाम गृहगताः पीठपिठरादयः पदार्थाः। तेषां स्वामिनी पत्नी इति श्रुत्यर्थः। 'आघ्नन्त्या पत्नीः संयाजयन्ति। भगाधीर्या हि पत्नयः। भगदा वा एताः परगृह्याणामैश्वर्यमवरुन्धते' इति च। दर्शादौ पत्नीसंयाजेषु पशुसाधनी द्रव्यम्। कुतः? पत्नीनां वीर्यं भगम् योनिरेव। तया भगद्योन्या स्त्रियः पतिगृहेषु ऐश्वर्यं लभन्ते इत्यर्थः। तस्मात् द्रव्यवन्त्यः स्त्रियः। द्रव्यवत्त्वात् तासां कर्मण्यधिकारः इति सिद्धान्तः।

स्ववत्त्वात्तु भक्त्या स्वामित्वमुच्यते। १९॥

पत्नी नापि द्रव्यवती इति सिद्धान्ते शङ्कते पुनः शङ्का। तुशब्दः सिद्धान्तव्यावृत्त्यर्थः। न स्ववत्ता द्रव्यवत्ता स्त्रीणाम्। पत्या स्त्रीदरात् 'शतमतिरथं दुहितृमते दद्यात्' इति श्रुत्युक्तस्य अतिरथशतदानस्य दृष्टार्थत्वात्। यत्तु 'पत्नी हि पारिणाह्यस्येष्टे' इति श्रुत्या पारिणाह्यस्य गृहगतस्य पीठेन्धनादेः पदार्थजातस्य यत् स्वामित्वमुच्यते तत् भक्त्या। गौणमित्यर्थः। तस्मात् स्त्रीणां द्रव्याभावात् न कर्माधिकार इति।

फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः। २०॥

स्त्रीणां धनस्वामित्वं गौणं न मुख्यं इति पूर्वपक्षिणः शङ्कां तुशब्देन निरस्यन् उत्तरमाह सिद्धान्ती। 'उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो, भूयसि हविष्करण इह मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः' इति मन्त्रेण स्त्रिया अपि फलार्थित्वमुक्तम्। कर्मफलमर्थयते इति फलार्थिनी स्त्री। फलार्थित्वात् 'पत्नी हि पारिणाह्यस्येष्टे' इति श्रुतौ पत्न्याः स्वामित्वेन मुख्येनैव अभिसंबन्धः। पत्न्याः स्वामित्वं न गौणं किंतु मुख्यमेव। तस्मात् धनवती स्त्री।

फलवत्तां च दर्शयति। २१॥

पुंस इव स्त्रिया अपि कर्माधिकार इति सिद्धान्ते हेत्वन्तरमाह। 'स पत्नी पत्या सुकृतेन गच्छतां, यज्ञस्य युक्तौ धुर्यावभूताम्। संजानानौ विजहितामरातीर्दिवि ज्योतिरजरमारभेताम्॥' इति श्रुतिः पत्युरिव पत्न्या अपि फलवत्तां दर्शयति। तस्मात् पुमान् पत्नी च उभौ कर्मणि अधिकृतौ इति सिद्धान्तः। के.

हवनीये जुहोति' इत्यनेन अनारभ्यवादेन सर्वहोमार्थस्य नैमित्तिकमानस्याहवनीयस्य होमनियामकत्वम्, आहवनीयव्यतिरेकेण होमासम्भवात् तस्य च नैमित्तिकमानत्वासिद्धत्वात्। न च अस्य तदन्तः सोमार्थत्वम्, येन मन्त्रेण विना अस्य सोमो ग्रहीतुमेव न शक्यते, किन्तु लिङ्गप्रकरणाभ्यां ऐन्द्रसोमार्थत्वमेव मन्त्रस्य। तेन ऐन्द्र एव सोमो मन्त्रेण गृह्यते। इतरेषां च अमन्त्रकं ग्रहणमिति प्रथम एव पूर्वपक्षः साधीयानिति।

सूत्रं तु– पूर्वोक्तलिङ्गदर्शनसमाधानार्थत्वाच्च भाष्यवार्त्तिकयोः सुयुक्तमिति।

**सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि। ४४ ॥**

यदुक्तमनैन्द्राणां अमन्त्रकं भक्षणमिति, नैतत्, सर्वेषां समन्त्रकमिति। यथासमाम्नातश्च मन्त्रः स्यात्। एवं तावत् तृतीयातत्पुरुषसमासाश्रयणेन इन्द्रपदसामानाधिकरण्य इति कृत्वा ऐन्द्राणां समन्त्रकं भक्षणं अनैन्द्राणां अमन्त्रकमिति प्रथमपूर्वपक्षनिरासेन पारमार्थिकसिद्धान्तोऽभिधीयते। अयमभिप्रायः। अनेनैव यदि इन्द्रपीतस्येति पदे तृतीयासमासेन सोमसमानाधिकरणं भवेत्। किं तर्हि? बहुव्रीहिसमासाश्रयणेन सवनसमानाधिकरणमिदम्। इन्द्रेण पीतः सोमो यस्मिन् सवने तद् भवति इन्द्रपीतं सवनम्। तस्य सवनस्य यः सम्बन्धी सोमः सोऽनिन्द्रपीतोऽपि सवनत एव इन्द्रपीतस्येति व्यपदेष्टुं शक्यत एव मन्त्रः सर्वे शेषभक्षणे प्रयोक्तव्यः। तदुक्तम्–– 'इन्द्रेण यस्मिन् सवने पीतः सोमो निरूप्यते। तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते ॥' इति (भा. पृ. ८०२)। ननु बहुव्रीहिसमासस्य अनेकपदनिष्पन्नत्वात् तृतीयासमासाद् दुर्बलत्वमित्युक्तम्। तदत्र सवनसामानाधिकरण्यमिति। उच्यते। इन्द्रपीतस्य सोमस्येति षष्ठ्यन्तस्य भक्षणक्रियासम्बन्धानुपपत्तेः अन्यस्याभावेऽपि इन्द्रपीतस्य सोमस्य अवयवं भक्षयामि इत्यवयवपदं अध्याहर्तव्यम्। न च भक्षणीयो विद्यमानः शेषः इन्द्रेण पीतः, इन्द्राय वा दत्तः। तेन विद्यमानत्वात् शेषो नेन्द्रपीतशब्दार्थः। न च इन्द्रोद्देशत्यक्तस्य भागस्य इन्द्रपीतत्वात् विद्यमानस्य च तदेकदेशत्वात् अविद्यमान एव इन्द्रपीतशब्देन अभिधीयते इति वाच्यम्। यतः सम्बन्धसामान्ये सोमस्येति षष्ठी। न च अविद्यमानस्य सम्बन्धोऽत्र उपलक्षणत्वेन आश्रयणीयः। न विद्यमानसम्बन्धे सम्भवति भूतपूर्वसम्बन्धाश्रयणम्।

किञ्च यज्ञशेषो कृत्स्न एवैवेन भक्ष्यते (?) इन्द्रपीतावयवत्वात्। न हि कपालावयवो घटावयवो भवति। तेन औपचारिक एवायं तदवयवव्यपदेशः। न च मुख्ये सम्भवति औपचारिकाश्रयणं युक्तम्। यदा त्विन्द्रेण पीत यस्मिन् सवने तस्य सवनस्य यः सोमः इति व्युत्पत्त्या विद्यमानशेष एवाभिधीयते, तदा तदवयव भक्षणे सति नातीवसम्बन्धोपलक्षणत्वम्। नाप्यवयवशब्द इति बहुव्रीहिसमास एव युक्तः। ननु बहुव्रीहिसमासेऽपि मुख्यपीतशब्देन इन्द्रोद्देशेन त्यागो लक्षणीयः, तदत्र इन्द्रोद्देशेन ग्रहणमेव लक्ष्यताम्। तथा च सति विद्यमानस्यापि शेषस्य इन्द्रोद्देशेन गृहीतत्वात् न पूर्वोक्तदोषप्रसङ्ग इति। नैवम्। लक्षितलक्षणादोषात्। तथाहि, पानेन त्यागो लक्षणीयः। त्यागेन च तदुद्देशेन ग्रहणम्। बहुव्रीहिपक्षे तु त्यागमात्रलक्षणम्। किञ्च, अपेक्षाभावात् प्रकरणविशेषाच्च एतदेवोचितम्। तथाहि, धर्मग्रहणान्वेन शेषभक्षणं तत्प्रकाशकं मन्त्रमपेक्षते। प्रकरणं च ज्योतिष्टोमस्य अविशिष्टमेव। बहुव्रीहिसमासाश्रयणेन सर्वेषामेव समन्त्रकं भक्षणमिति सिद्धम्।

प्रयोजनम्– पञ्चोक्तम्। सूत्रं तु– ऐन्द्राणां ग्रहाणां सर्वेषां चैकमन्त्र्यमिति ऐतिशायनस्य आचार्यस्य मतम्। यत सवननिर्देशोऽयं इन्द्रपीतस्येति। अन्यथापीत एव सोमः पीतशब्दप्रयोग सम्पद्येतेति। चौथा

**लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम्। ३।२।११।२८ ॥**

ज्योतिष्टोमे सोमप्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते। काश्चित् सोमाहुतयः इन्द्रदेवताकाः, काश्चिच्च इन्द्रभिन्नदेवताकाः। तेषां च सर्वेषामपि भक्षणानि सन्ति। तानि च भक्षमन्त्रेण क्रियन्ते। तत्र समानविधानेषु तुल्यप्रमाणप्रतिपादितेषु अत एव प्रकृतिविकारभावरहितेषु ऐन्द्रानैन्द्रमहयागेषु मध्ये अनैन्द्राणां ऐन्द्रभिन्नानां मैत्रा-

चमसादिग्रहयागानां सवनीयानि भक्षणे अमन्त्रकत्वं मन्त्रमन्त्ररहितत्वं स्यात्। लिङ्गविशेषनिर्देशात् भक्षमन्त्रे इन्द्रपीतस्य इति सोमविशेषणस्य निर्देशात्। तस्य च अनैन्द्रेषु अनन्वयात्। इत्येकः पूर्वपक्षः। इदं सूत्रं एकादशाधिकरणस्थम्। एतस्मात् उत्तरं सूत्रं एतदधिकरणशेषभूतं 'छन्दःप्रतिषेधस्तु। ३।२।११।३९' इति स्यात्। मध्ये तु अन्तरागतानि अधिकरणानि भवन्ति। इति ज्ञेयम्।

**यथादेवतं वा, तत्प्रकृतित्वं हि दर्शयति। २९॥**

वाशब्दः पक्षान्तरं सूचयति। ऐन्द्रानैन्द्रसोमग्रहयागेषु अनैन्द्राणां सोमग्रहाणां भक्षणं अमन्त्रकं कर्तव्यं इति प्रथमः पूर्वपक्षः पूर्वमुक्तः। अथ द्वितीयं पूर्वपक्षमाह। अनैन्द्राणां अमन्त्रकं भक्षणं न किंतु मित्रावरुणपीतस्य इतिरीत्या ऊहेन समन्त्रकत्वं स्यात्। यथादेवतं देवता अनतिक्रम्य ऊहः कर्तव्यः। हि यस्मात् तत्प्रकृतित्वं ऐन्द्रग्रहानप्रकृतिकत्वं अनैन्द्रग्रहाणां दर्शयति। तस्मात् ऊहेन समन्त्रकत्वं इति द्वितीयः पूर्वपक्षः।

**छन्दःप्रतिषेधस्तु सर्वगामित्वात्। ३९॥**

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहयागेषु मध्ये अनैन्द्राणां ग्रहयागेषु भक्षमन्त्रः मित्रावरुणपीतस्य इतिरीत्या ऊहेन प्रवर्तते इति द्वितीयः पूर्वपक्षः पूर्वमुक्तः। ▮ पक्षः अनैन्द्राणां भक्षणं अमन्त्रकं इति वदन् प्रथमपूर्वपक्षी तद्धन्द्वेन प्रवर्तयन् पुनः प्रथमपक्षमाह। स तु ज्योतिष्टोमे अनिषाने च पितृदेवत्ये 'तृतीयस्य सवनस्य जगतीछन्दसः' इति मन्त्रे 'अनुष्टुप्छन्दसः इति भक्षमन्त्रं सवमति' इति छन्दःप्रतिषेधः अनुष्टुप्छन्दः पदोहरूपः जगतीछन्दः पदप्रतिषेधः ऊहपक्षलाभकतया अभिमतः स तु अनैन्द्रेषु ऊहाभावेऽपि उपपन्नः। अप्राप्तस्यैव अनुष्टुप्छन्दः पदविशिष्टोहस्य तत्र विधानोपपत्तेः। अतः अभिषवादीनां धर्माणां सर्वगामित्वात् ऐन्द्रानैन्द्रसाधारणत्वात् प्रकृतिविकारभावाभावेन अनैन्द्रेषु अनूहात् अमन्त्रकत्वेन भक्षणं इति पुनः प्रथमः पूर्वपक्षः।

**सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि। ४४॥**

ज्योतिष्टोमे ऐन्द्रानैन्द्रसोमग्रहयागेषु मध्ये अनैन्द्राणां भक्षणं अमन्त्रकं इति यदुक्तं तत् न्यावर्तयति वाशब्दः। सर्वेषां ऐन्द्राणां अनैन्द्राणां च ग्रहाणां ऐकमन्त्र्यं एकरूपः अविकृतः यो भक्षमन्त्रः तद्रूपमेव। न अमन्त्रकत्वम्, नापि यथादेवतमूहः। तदेतत् ऐतिशायनस्य महर्षेः अनुमतम्। हि यस्मात् इन्द्रपीतशब्दः सवनाधिकारः, इन्द्रेण पीतं यस्मिन्, पीतमस्य अस्तीति पीतः इन्द्रः पीतो यस्मिन् सवने इत्येवं बहुव्रीहिः सन् गायत्रच्छन्दसः इत्यादिवत् सवनबोधकः। अन्यथा इन्द्रेण पीत इति तृतीयातत्पुरुषस्वीकारे भक्तिपानत्वात् भक्तिपानत्वप्रसङ्गात् भक्तिः लक्षणा पाने यत्र तस्मात् पानस्य भाक्तत्वप्रसङ्गादित्यर्थः। तस्मात् अनैन्द्राणां ऐन्द्राणां च सोमग्रहाणां भक्षणं अविकृतमन्त्रवदेव, न अमन्त्रकत्वं नापि यथादेवतमूहः इति सिद्धान्तः। के.

• लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम्। ३।२।११।२८॥ लिङ्गविशेषनिर्देशात् अनैन्द्राणाममन्त्रत्वं इत्येतावत् सूत्रं अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया स्वपदार्थे प्राधान्यात् तत्पुरुषस्य क्लृप्तत्वप्रतीतेः विशेषतश्च भक्षस्य अधिकरणत्वेन बहुव्रीहिलाक्षेपात्। (इन्द्रेण पीत यस्मिन् इति) इन्द्रपीतस्य इति इन्द्रलिङ्गनिर्देशात् अनैन्द्रसोमभक्षणानां लिङ्गविनियोगाभावविषयतया इत्येव पूर्वपक्षार्थम्। 'समानविधानेषु अनैन्द्राणाममन्त्रत्वम्' इत्येतावत्तु भाष्यकारैः ऐन्द्राणां च प्रधानानां धर्मभाक्त्वेन ज्योतिष्टोमाश्रयत्वेन समानविधाने प्रकृतिविकारभावाभावेन ऊहायोगात् अनैन्द्रसोमभक्षणानां तत्त्यक्तवा इत्येव पूर्वपक्षप्रयोजनोपन्यासम्। सु. पृ. ११४१.

※ लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्। ९।१।१७।४९॥

ज्योतिष्टोमे ऋतुपशवः समाम्नाताः। 'आग्नेयः पशुः अग्निष्टोमे आलब्धव्यः, ऐन्द्राग्नः पशुः उक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी' इति। चत्वारोऽपि एते पशवः समानविधाना इति एकः पक्षः, अग्नीषोमीये पशौ एव धर्मविधानं इतरेषु तु चोदकेन प्राप्तिः इति अन्यः पक्षः। अग्नीषोमीये च अस्ति अभिप्रायः। तत्र 'उपनयन मेध्या इत आशा-

* 'पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्' इत्यत्र पितृशब्दः **लिङ्गसमवायन्यायात्** पितापितृप्रमुखपरः। श्राद्धमयूखः पृ. १ घारपुरेसंपादितः.

* **लिङ्गसमवायमूलकगौण्या**, इतरा गौणी बाध्यते। बाल. पृ. १८३.

* *लिङ्गसमवायमूलिका गौणी, समभूयस्त्वगौण्या बाध्यते।* बाल. पृ. १८३.

* **लिङ्गसमाख्याभ्यां** भक्षार्थतानुवाकस्य (३।२।९। २५–२६) इत्यधिकरणे 'अभिनोऽस्त्वा बाहुभ्या०' इत्यादयः ग्रहणविशेषणाभ्यञ्जनप्रकाशकाः मन्त्राः प्रकरणेन विनियुक्ताः ग्रहणादीनां अनुष्ठानयोग्यानां स्वाङ्गत्वसिद्धौ विधिं कल्पयन्ति इत्युक्तम्। बाल. पृ. ६४.

* **लिङ्गसमाख्याविरोधे** भक्षानुवाके ग्रहणादिवाक्यानि समाख्यानात् भक्षाङ्गत्वेन सरूपसामान्यादिकल्पना मन्त्रान्तरविनियोगाय प्रस्थितानि, लिङ्गेन ग्रहणावेक्षणाभ्यञ्जनेषु विनियुज्यन्ते इति स्थितम्। याज्यासमाख्यानाधीन च मनोतायाः पृथुपाजवत्योश्च लिङ्गेन सामिधेनीत्वेन विनियोगः इत्युक्तम्। (सोमप्रकरणे इदम्)। शा. ३।३।७।१४ पृ. ८३७, (शेषप्रकरणे तु) समाख्यया मनोतायाः सोमारौद्रीयेषु याज्यानुवाक्यात्वेन प्राप्तानां सोमवत्त्वलिङ्गादपि याज्यानुवाक्याभिर्योगः। पृ. ८३९. * लिङ्गसमाख्याविरोधे (शेषप्रकरणे) मनोतायाः पृथुपाजवत्योश्च क्रमसंख्याकृतयाज्यासमाख्यया सोमारौद्रयागे याज्यात्वे प्राप्ते अग्निप्रकाशनलिङ्गात् क्रमबहुत्वात् तदीये सामिधेनीकार्ये निवेशः। शेषप्रकरणे तु मनोतायामेव सौमारौद्रयागे याज्यात्वप्राप्तौ सदेवत्यपाज्यानुवाक्याभ्यां लिङ्गप्राप्ताभ्यां बाधः। कौ. ३।३।७। १४ पृ. ३६०–६१.

ॐ लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य। ३।२।९।२५ ॥

ज्योतिष्टोमे सोमशेषभक्षणे 'भक्षेहि माऽऽविश' इत्यादिः महान् मन्त्रः विनियुक्तः। तत्रापि 'भक्षेहि' इत्यारभ्य 'शुभ्राजस्त्वाय' इत्यन्त, 'वसुमद्गणस्य' इत्यादिः 'उपहूतो भक्षयामि' इत्यन्तश्च भागः भक्षणप्रकाशकः। 'एहि वसो' इत्यारभ्य 'बाहुभ्यां सख्याम' इत्यन्तो भागः ग्रहणप्रकाशकः। 'नृचक्षं त्वा देव सोम सुचक्षा अवख्येषं' इति भागः अवेक्षणं प्रकाशयति। 'हिन्व मे गात्रा' इत्यादिः 'मा मेऽवाङ् नाभिमति गाः' इत्यन्तः सम्यग् जरणं प्रकाशयति। अस्य सर्वस्यापि मन्त्रस्य भक्षानुवाकः इति समाख्या। सोऽयं सर्वोऽनुवाकः किं भक्षणे विनियोक्तव्यः उत कश्चित् कश्चित् भागः अन्यत्रापि ग्रहणादौ प्रयोक्तव्य इति विचारे पूर्वपक्षमाह। लिङ्गसमाख्यानाभ्यां लिङ्गात् समाख्यानाच्च सर्वस्यापि अनुवाकस्य भक्षार्थता अवगम्यते। तस्मात् सर्वोऽनुवाको भक्षणे विनियोक्तव्य।

तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्। २६ ॥

ज्योतिष्टोमे सोमशेषभक्षणे भक्षानुवाको नाम मन्त्रसमुदायो विनियुक्तः। स सर्वोऽपि सोमभक्षणे एव विनियोक्तव्य इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्त उच्यते। तस्य भक्षानुवाकस्य भागशः ग्रहणादौ विभज्य विनियोगः कर्तव्यः। रूपोपदेशाभ्यां रूपात् गुणसामर्थ्यरूपात्, उपदेशात् समाख्यानस्यावशेषणात् प्रमाणाच्च। अर्थस्य चोदितत्वात्, यावता विना विवेकोऽर्थो न सिध्यति तावतोऽर्थस्य चोदनापरिगृहीतत्वेन ग्रहणमवेक्षणं च विना अभ्यूहनातिरेकेण भक्षयितुमिच्छत्सद्भक्षणानुपपत्त्या ग्रहणादेरपि भक्षयतिचोदनाचोदिततया अपूर्वसाधने तत्र विनियोगसम्भवेन वैयर्थ्याभावात् इत्यर्थः। के.

'तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्'। ३।२।१०।२६ ॥

लिङ्गविनियोगाधिकरणात् उपदेशस्य च समाख्यानेऽपि बलीयस्त्वात् उपदेशग्रहणस्य भक्ष्यनुव्ययमानार्थेन्द्रियतीने मन्त्रानुवाकस्य अवयवानां केषांचित् लिङ्गेन ग्रहणाद्यपकर्षः इति 'तस्य रूपादपकर्षः' इत्यस्यार्थः। भक्षणस्य अन्यथाऽनुपपत्तिकल्पितविधिना 'एहि वसो' इत्यादिवाक्यार्थस्य ग्रहणादेश्चोदितत्वात् अपूर्वसाधनत्वेन अपूर्वसाधनीभूतं मन्त्रं प्रति द्वारत्वोपपत्तेः मन्त्रप्रकाश्यता युक्ता इति 'अर्थस्य चोदितत्वात्' इत्यस्यार्थः। भक्षणस्य स्तुत्यर्थग्रहणादिवैशिष्ट्यप्रकाशने श्रुते. अनोदितत्वेन अदृष्टार्थतापत्ते दृष्टसंभवे च

अदृष्टार्थत्वायोगात् एकवाक्यत्वोपगमनसामर्थ्यस्य श्रुतिकल्पकत्वानुपपत्तेः घर्चिन्न्यायेन च कृत्स्नस्य भक्षार्थत्वाभावेऽपि भक्षानुवाकसमाख्योपपत्तेः ग्रहणाद्यभिधानसामर्थ्यस्यापि समाख्याविरोधाभावात् श्रुतिकल्पकता युक्ता इति ग्रहणार्थस्यैव अनुष्ठेयत्वेन प्रकाशनतया अपेक्षितत्वात् तददृष्टार्थत्वोपपत्तेः अनपेक्षितभक्षस्तुत्यर्थत्वे सति अदृष्टार्थतापत्तेः इति 'अर्थस्य चोदितत्वात्' इतिसूत्रावसरस्य आशयः व्याख्याऽन्तरम्। सु ११३७–११३९

लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य। ३।२।९।२५॥

भक्षमन्त्रे श्रूयते– 'भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम्, नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम्, हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः, शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमति गाः, मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य, माध्यन्दिनस्य सवनस्य, तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निहुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' (तैस ३।२।५) इत्येवमादि। तत्र सदेह कृत्स्न एवानुवाको भक्षणे विनियोक्तव्यः, उत कश्चिदस्य अवयवोऽन्यत्रापि इति। लिङ्गस्य विनियोजकत्वं सामान्यसंबन्धसापेक्षमिति प्रतिपादनप्रसङ्गेन श्रुतेरपि सामान्यसंबन्धसापेक्षविनियोजकत्वमिति प्रतिपाद्येदानीं लिङ्गगत एव विशेषः किं साक्षाच्चोदितेषु अर्थाक्षिप्तेषु लिङ्गस्य विनियोजकत्वं न वेति निरूप्यते।

अत्राय पूर्वपक्षः, यद्यपि 'भक्षेहि' इत्युपक्रमस्य 'सध्यासम्' इत्यन्तस्य ग्रहणार्थत्वम्, 'नृचक्षसम्' इत्युपक्रमस्य 'अवख्येषम्' इत्यन्तस्य अवेक्षणार्थत्वम्, 'हिन्व मे गात्रा' इत्युपक्रमस्य 'मा मेऽवाङ्नाभिमति गाः' इत्यन्तस्य सम्यग् जरणार्थत्वम्, 'मन्द्राभिभूतिः' इत्युपक्रमस्य 'भक्षयामि' इत्यन्तस्य भक्षणार्थत्वं प्रतीयते, तथापि सोमस्य भक्षणस्यैव विहितत्वात् लिङ्गस्य विहितविषयस्य विनियोजकत्वात् ग्रहण–अवेक्षण–सम्यग्जरणानां च भक्षणाक्षेपलभ्यत्वेन लैङ्गिकविनियोगायोग्यत्वात् कृत्स्न एवायं मन्त्रो भक्षणे विनियुज्यते। किंच उपक्रमे 'भक्षेहि' इति श्रूयते। उपसंहारे च 'भक्षयामि' इति। तेन उपक्रमोपसंहारयोः भक्षणकीर्तनात् वैश्वानरवाक्यवत् कृत्स्नस्यैव अनुवाकस्य एकवाक्यत्वात् भक्षानुवाकसमाख्योपपत्तेश्च कृत्स्नस्यैव भक्षणार्थत्वम्। किंच ग्रहणादीनामर्थतो लोकतश्च प्राप्तत्वात् लौकिकत्वेनैव लिङ्गं यत्र युक्ता। तेन लौकिकपदेनापि तत्प्रकाशनसिद्धेः नं वैदिकमन्त्रापेक्षा। तेन ग्रहणावेक्षणसम्यग्जरणाविषयाणामपि निखिलभक्षणप्रकाशनार्थं यतेन। अतश्च एकवाक्यता, एवोपक्रमोपसंहारगतभक्षणकीर्तनलिङ्गात् भक्षानुवाकसमाख्यानाच्च कृत्स्न एव मन्त्रो भक्षणार्थ इति। एवं प्राप्ते, अभिधीयते—

तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्। २६॥

अयमभिप्रायः – भवेदेव यदि अर्थमात्रविषये लैङ्गिकविनियोगे मन्त्रस्य न भवेत्। यद्यपि ग्रहणादयो न विधीयन्ते, तथापि भक्षणस्य ग्रहणादिना विना असम्भवात् भक्षणविध्याक्षिप्तमेव ग्रहणमवेक्षणं च अनुष्ठेयम्। यस्मात्तेन च भक्षणस्यैव प्रतिपत्तिरूपस्य ग्रहमक्षणपर्यन्तस्य विधानात् भक्षणविधिविहितत्वेन प्रधानत्वात् पृथगनुष्ठेयम्। तेषां च अस्मृतानां अनुष्ठानासंभवात् तेषामपि वैदिकभक्षणनिष्पत्त्यर्थमवश्यमनुष्ठेयत्वे नास्ति स्मृतिहेतुवैदिकोपायापेक्षा। शक्नोति च भक्षेत्ययं मन्त्रो ग्रहणादीन् प्रकाशयितुम्। तेन सूत्रकारात् यथालिङ्गं ग्रहणादिषु विभज्यैव मन्त्रः प्रयोक्तव्य इति।

यत्तु उपक्रमोपसंहारयोः भक्षणकीर्तनादेकवाक्यत्वात् कृत्स्नस्यैव भक्षणार्थत्वमित्युक्तम्। तदयुक्तम्। लिङ्गस्य बलीयस्त्वात्। नहि उपक्रमोपसंहारैकरूप्यादेकवाक्यत्वम्, तदनुरोधाच्चासमर्थस्य वाक्यस्य लाक्षणिकसामर्थ्यस्य लिङ्गं कल्पनीयम्, ततोऽपि श्रुतिरिति विप्रकर्षः। ग्रहणाद्यभिधानसामर्थ्यात् साक्षादेव श्रुतिकल्पनमिति संनिकर्षात् अभिधानसामर्थ्यादेव विभज्य विनियोग इति।

समाख्या च लिङ्गात् दुर्बला लौकिकी च एकदेशद्वारेणा-प्युपपद्यते न किंचिदनुपपन्नम् ।

प्रयोजनम्— पूर्वोक्तम् । सूत्रं तु— तस्य मन्त्रस्य भागशो भक्षादयुपकरणत्वात् लिङ्गात् ग्रहणादेरुपदिष्टत्वाच्च कथमश्रुतस्योपदिष्टत्वम् । तथाहि अयस्य भक्षणाङ्गत्वम् नोदितं तदिति । सौत्रा

॥ लिङ्गसमाख्यानाधिकरणम् । भक्षाधिकरणम् । ज्योतिष्टोमे भक्षानुवाकस्य यथालिङ्गं विभज्य भक्षणादौ विनियोगः ॥

लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥ ३।२।९।२४ ॥

भाष्यम्— भक्षानुवाके भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय । एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सघ्यासम् । नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम् । हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति गाः । मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य माध्यन्दिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसोऽभिगुण इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इत्येवमादि । तत्र सन्देहः किं कृत्स्न एषोऽनुवाको भक्षणे विनियोक्तव्यः उत कश्चिदत्र अवयवः अन्यत्रापीति । किं प्राप्तम् । लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य । सर्वोऽनुवाको भक्षणे विनियोक्तव्यः । कुतः । भक्षयामीत्येव शब्दो यत्र भक्षणे विनियोजनीयः, भक्षणमेव शक्नोति वदितुं नान्यत् किंचित् । अन्यानि त्वस्य पदानि भक्षणविशेषणवचनान्येव । यथाभक्षणा गीरिति तत्रत्य मन्त्रः । ननु 'एहि वसो' इत्येवमादि 'सघ्यासम्' इत्येवमन्तं ग्रहणार्थं ग्रहेण पदसमूहेन पर सामर्थ्यात् प्रकाशयितुं निमित्तं भक्षणानन्तर्यात् । 'नृचक्षसम्' इत्येवमादि, 'अवख्येषम्' इत्येवमन्तं अवेक्षणवचनम् । 'हिन्व मे गात्रा हरिवः' इत्येवमादि च 'मा मेऽवाङ्नाभिमति गाः' इत्येवमन्तं सम्यग्जरणार्थम् । मन्द्राभिभूतिरित्येवमादीनि वाक्यानि । कथमेतत् वाक्यं सन्ति सर्वमिदमेकं वाक्यं भक्षणे विनियुज्यते इति । उच्यते । सर्वाण्येतानि भक्षणविशेषणानीत्युक्तम् । आह । एवमपि भिन्नं वाक्यम्, विशेषणविशेष्ययोः युगपद्वचनासंभवात् । उच्यते । न विशेषणानि विवक्षिष्यामः । विशेषणैः ग्रहणावेक्षणादिभिर्विशिष्ट एकोऽर्थो विवक्ष्यते । नैव भिन्नं भवति । विशेषणवचनानामविवक्षितस्वार्थवचनता, भक्षणविशेषणपरता चेति लक्षणया तु गम्यते । श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी न लक्षणा । तस्मादेव वाक्यमिति । अतो उच्यते । यद्यपि अमी ग्रहणादयो ह्यर्थोऽपि गम्यते न तु सर्वे इष्यन्ते इति । भक्षणमेव प्रकाशयितुम् । तद्धि श्रुतम् । विशेषणान्यश्रुतानि । न वै प्रतीते प्रयोजनम् । प्रयोजनं च यावत् पदसमूहस्यैकम्, तावदेव वाक्यम् । तस्मात् त्रिविधमप्यर्थमेतदेकं वाक्यमिति भक्षणे विनियोक्तव्यम् । समाख्यानं च भवति भक्षानुवाक इति । कृत्स्नश्चानुवाको नामधेयम् । ननु च समाख्या लौकिकः शब्दः, कथं वैदिकमङ्गं नियच्छतीति । यद्यपि लौकिकः तथापि अनादिः तस्यानुशासनं च । किमतो यद्येवम् । एकदेशो भवति । भक्षणसम-भिव्याहारमनुवाकं ब्रूते । समभिव्याहारश्च एति सम्बन्धः भवति । यथा पाचको याजक इति । समभि-व्याहारात् धर्मभूतसम्बन्धमाह । आह । नानुमानगम्य एवंजातीयकम् अनुमानम् । विधानादेव अवगम्यते नान्यथा । न च समाख्या विधायी । अत्रोच्यते । समाख्या सम्बन्धिनी बुद्धौ सन्निधिमुपनयतीति प्रयोगवचनो विधास्यतीति । तस्मात् कृत्स्नोऽनुवाको भक्षणे विनि-योक्तव्य इति ।

वा— समस्तानुवाकोदाहरणं सर्वाणि पदानि च समर्थानीति वक्ष्यमाणनिरूपणसिद्ध्यर्थम् । अत्र सूत्रस्थान-पदेन प्रातःसवनादिशब्दाः तत्समानाधिकरणत्वसहिताश्च वसुमद्गणाद्यो गायत्रच्छन्दःप्रभृतयः इन्द्रपीतादयश्च क्रमेण यथासवनं निष्कृष्य प्रयोक्तव्याः । इदं ▮ विचा-र्यते किं समस्तोऽनुवाको भक्षणे एव विनियोक्तव्यः, उत ग्रहणावेक्षणजरणेष्वपि यथालिङ्गमिति । तत्र भक्षस्य

श्रुतिविप्रकर्षाद्दौर्बल्यम् । ग्रहणाद्यभिधानसामर्थ्येन हि श्रुतिमनुमाय शीघ्र विनियोगः क्रियते । इतरेण पुनरेकवाक्यता । ततो लक्षणाद्वारेण भक्षं प्रति सामर्थ्यम् , ततः श्रुत्यनुमानमिति विप्रकर्षः । तेन भक्षस्य प्रत्यासन्नतरेण मन्त्रादिना अवरुद्धत्वात् एतेषामपि च स्वप्रधानप्रकाशनवृत्ते अपकर्षः । ननु अर्थप्रकाशनं प्रकाशनं निष्प्रयोजनम् । कथं निष्प्रयोजनम् । यदा तानि अप्यप्रकाशितानि नैव शक्यन्ते अनुष्ठातुम् । तत्राम अर्थप्रकाश न प्रकाश्यन्ते, यदेवमेव विना प्रयत्नेन निष्पद्यते । ग्रहणादीनि तु सर्वाणि पृथक्प्रयत्नसाध्यानि तान्यस्मृतानि न शक्यन्ते कर्तुमिति अवश्यं स्मर्तव्यानि । भक्षविधिरपि तानि अचोदयिता न शक्नोति स्वार्थमनुष्ठापयितुमिति तान्यपि चोदयति । अतो मन्त्रस्वरूपान्तेषां चोपदेशात् सम्यग्जरणतन्मन्त्रयोश्च उपदेशादेव अपकर्षः, अर्थस्यैव चोदितत्वात् । तेन यद्यपि अनुदाहृतत्वात् मन्त्रोपदेशोऽत्र न दृश्यते वस्तु तथापि अदोषः । सम्यग्जरणं तु वमनविरेचनयोः ( ' वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति । तस्मात्सौमेन्द्रं चरु निर्वपेत्सोमवामिनः ' इत्यादिना ) प्रायश्चित्ताम्नानात् प्रत्यक्षोपदिष्टमेव द्रष्टव्यम् ।

भा— ' सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात् । अनन्यार्थो न मन्त्रस्य द्वारीभवितुमर्हति ॥ भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वयोगिनी । सामर्थ्यं चास्ति मन्त्रस्य भक्षणे तद्विशेषणात् ॥' तस्मात् सर्वोऽनुवाको भक्षणाङ्गमेकं वाक्यम् । इति प्राप्ते ब्रूमः । 'ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः । वाक्यमन्ते हि नेशाते कर्तुं लिङ्गस्य बाधनम् ॥ ग्रहणादि च शास्त्रेण साक्षाद् यद्यप्यचोदितम् । तथापि चोदितार्थेन कर्तव्यत्वात् प्रकाश्यते ॥' तस्मात् विभज्य विनियोगः ।

सोम— पूर्वत्र सामान्यसम्बन्धबोधकप्रकरणेन श्रुतिस्वारस्यभङ्गवत् , इहापि सामान्यसम्बन्धबोधकसमाख्यया लिङ्गस्वारस्यभङ्ग आश्रयणीयः इति प्रत्यवस्थानात् संगतिः । सूत्रे लिङ्गशब्दं विशिष्टभक्षणसामर्थ्यपरः ।

वि— ' भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणयोग्युत (गौ उ) । ग्रहणादौ यथालिङ्गं विभज्य व्यवस्थितो ॥ , अविशेषेण ग्रहणादीनां भक्षणे नियुज्यते स्तुतः । , अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते ॥' ( तैर्सं. ३।२।५ स्थितः पाठो गृहीतोऽत्र ) ।

भाट्ट— सोमे ' भक्षेहि माऽऽविश ' इत्यादिभक्षानुवाक इत्येवं समाख्याते मन्त्रः श्रुत । तत्र यस्याप्ययमन्त्रस्य भक्षणमेव प्रतिपादयति ■ तत्रैव विनियुज्यते । ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोग, अथवा भक्षणमन्त्रैकवाक्यतया भक्षणे एव इति चिन्तायाम् , ग्रहणादेरविहितत्वेन अपूर्वप्रत्यङ्गत्वात् जनकस्याप्यभावात् , ग्रहणस्य अर्थात् भक्षसाधनत्वेन प्राप्तावपि ' बाहुभ्यां हस्ताभ्याम् ' इत्यनेनोक्तस्य बाहुद्वयकरणस्य ग्रहणस्य कथमप्यप्राप्तेः, अवेक्षणस्य च भक्षाङ्गत्वेनैव अप्राप्तेः, सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभाविन्या भक्षाङ्गत्वेन तेषामपूर्वप्रयोजकत्वस्यापि अभावात् ग्रहणान्यंशे आनर्थक्यापत्ते , भक्षमन्त्रैकवाक्यतया भक्षार्थत्वमेवैषाम् । एवं च समाख्याऽपि उपपन्ना भवति । इति प्राप्ते, ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्याशब्दनुक्तप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्ते. तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ, न स्वतो निराकाङ्क्षयोर्द्वयो. आख्यातपदयो. कथंचिदेकवाक्यता परिकल्प्य गौण्या भक्षार्थत्वकल्पनम्, शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनानुपपत्तिमत् । न चैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वात् विधिसंभवः, सम्यग्जरणानुकूलव्यापारस्य आसनविशेषस्यैव अनुष्ठेयस्य विधेयत्वात् । वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणे प्रतिपत्तिरिति तस्य भक्षोपयोगिता ।

मण्डन— ' सव्यामन्त्रो ग्रहणस्य मन्त्र. । '

शंकर— ' भक्षमन्त्रे विभागः स्यात् । ' १०.

ङ्क लिङ्गसाधारण्यात् विकल्प. स्यात् । ८।१।१६।२७ ॥

सौर्ये कर्मणि दर्शपौर्णमासिको विध्यन्त इत्युक्तम् । दर्शपूर्णमासयोस्तु अनेकानि प्रधानानि । तत्र कस्य

निष्पन्न सौर्ये स्यात् इति विचारे विकल्पः स्यात् इति पूर्वपक्षः । कुतः ? लिङ्गसाधारण्यात् । 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति प्रमाणवचनस्य लिङ्गस्य सर्वत्रधान साधारण्यात् । न च समुच्चयः । तस्मात् विकल्पः ।

ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि । २८ ॥

सौर्ये कर्मणि दार्शपौर्णमासिकप्रधानेषु कस्यचित् निष्पन्नं विकल्पेन स्यात् इति पूर्वपक्षे सूत्रेण प्राप्ते वा शब्देन निरस्य सिद्धान्तमाह । न विकल्पः किन्तु नियम एव । नियमेन कस्यचिदेकस्यैव प्रधानस्य स्यात् । स च निष्पन्नं आग्नेयस्यैव स्यात् । ऐकार्थ्यात् एकार्थत्वात् एकदेवतत्वात् इत्यर्थः । आग्नेय एकदेवत्यः सौर्योऽपि । हि यस्मात् सौर्यं विकारः पूर्ववत्त्वात् पूर्वविहितविध्यन्तवत्त्वात् । स च पूर्वो विध्यन्त आग्नेयस्य ।

अश्रुतत्वान्नेति चेत । २९ ॥

सौर्ये यागे दार्शपौर्णमासिकाग्नेयस्यैव विध्यन्तो ग्राह्य एकदेवतत्वसामान्यात् इति सिद्धान्तिना उक्ते पूर्वपक्षिण शङ्का । एकदेवतत्वस्य अश्रुतत्वात् श्रुतत्वाभावात् न आग्नेयस्यैव विध्यन्तो ग्रहीतुं शक्यते । सौर्यं इत्यत्र सूर्यो देवता अस्य इति वा सूर्यौ सूर्या वा देवता अस्य इति न ज्ञायते । तथा च न नियमः । इति चेत् ।

स्याल्लिङ्गभावात् । ३० ॥

सौर्ये यागे आग्नेयस्यैव विध्यन्त इत्यत्र न नियमः, सौर्यशब्दे सूर्यः सूर्यौ सूर्या वा देवता अस्येति तद्धित नियमाभावात् इति पूर्वपक्षिशङ्कायामुत्तरमिदम् । स्यात् एकदेवत्वस्यानियमः सौर्ये एकत्वलिङ्गस्य भावात् नियमाव स्यात् । सौर्ये तावत् 'अमुमेवादित्यं स्वेन भागधेयेनोपधावति स एवैनं ब्रह्मवर्चसं गमयति' इति एकत्वलिङ्ग स्पष्टं ब्राह्मणोक्ते । आग्नेये च 'अग्निर्वै वा इत उत्तमः सुवर्गं लोकमायन् ते यजमानं अन्वायन्' इत्यादि 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति अग्निमेव स्वेन भागधेयेन समर्धयति' इति एकत्वलिङ्गम् । एवं च एकत्वलिङ्गस्य विद्यमानत्वात् सूर्यो देवता अस्य इत्येव विग्रहः, एक अग्निर्देवता अस्य

इति विग्रहः । तस्मात् आग्नेयस्यैव विध्यन्तः सौर्ये इति सिद्धान्तः । इदं चोदनागतं लिङ्गं प्रत्यक्षम् ।

तथा चान्यार्थदर्शनम् । ३१ ॥

सौर्ये आग्नेयस्यैव विध्यन्त एकदेवतत्वात् इति सिद्धान्ते चोदनागतं लिङ्गं पूर्वमुक्तं अत्र मन्त्रगतं लिङ्ग मुच्यते । तथा च सूर्यदेवताया अग्निदेवताधर्मवत्ले अन्यार्थदर्शनं नाम लिङ्गं भवति । 'अग्निर्मूर्धा दिव' इत्यनुवाक्या एकस्य आग्नेये, 'उदु त्यं जातवेदसं' इति सौर्ये । इदं मन्त्रगतं लिङ्गं मानस्य द्योतकम् । तस्मात् सौर्ये आग्नेयस्यैव विध्यन्त इति सिद्धान्तः । के

० लिट् । अनद्यतनपरोक्षभूतस्य लिडर्थः । 'भूते' (पा ३।२।८४) 'अनद्यतने०' (पा. ३।२।१११) इत्यनुवृत्तौ 'परोक्षे लिट्' (पा ३।२।११५) इति पाणिनीयसूत्रात् । वर्तमानाहोरात्रवृत्तिपागभावप्रध्वंसान्य तराप्रतियोगित्वं अनद्यतनत्वम् । तद्भिन्नत्वं अनद्यतनत्वम् । भूतत्वं वर्तमानध्वंसप्रतियोगित्वम् । साक्षात्करोमि इत्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् । तच्च क्रियानिष्ठम्, क्रियाविशिष्टकारकनिष्ठं वा । क्रियायाश्च पिण्डीभूतायाः साक्षात्प्रतीतिविषयत्वासम्भवेऽपि साक्षात्करणसम्भवात् । अत एव 'पश्य मृगो धावति' इत्यत्र धावनस्य धावनाश्रयकारकस्य वा साक्षात्कार विषयत्वात् न लिट्प्रयोगः । 'ब्यातेने किरणावलीम्' इति भूतत्वारोपेण उपपादनीयम् । मधि पृ ११६,

● लिट् । लिडर्थोऽपि भूतानद्यतनत्वविशिष्टपरोक्षस्य भावनात्मकेत्यर्थः । तत्र भूतत्वं लिङ्घातक कालीनध्वंसप्रतियोगित्वम् । तत्र कालिकसम्बन्धेन कृतौ एव अन्वेति । इदं च अभिमतमेव । तेन अनेकदिनव्यापकस्थलेऽपि अद्यतनकाले न पपाच इति लिट्प्रयोगः । लिङ्घातककालीनध्वंसप्रतियोगित्व वा । तदपि स्वरूपसम्बन्धेन अभिमतौ अन्वेति । लिङ्घातककाल एव लिडर्थः । लिडेव वा पूर्ववत् । तस्य च स्ववृत्तिध्वंसप्रतियोगित्वादिसम्बन्धेन तदन्वयः । अनद्यत्वे इत्यादौ भूतत्वान्तरं पूर्ववत् । अनद्यतनत्वं लिङ्घातकदिनभिन्नदिनवृत्तित्वम् । परोक्षत्वं च प्रत्यक्षवृत्तिसाक्षात्करोमीत्येतादृशविषयताशालिज्ञानानिरूपकत्वम् ।

इदं द्वयमपि कृतौ अन्वेति । परं तु आद्यं साक्षात्सम्बन्धेन, द्वितीयं तु स्वसमभिव्याहृतपदार्थान्वितत्वसम्बन्धेन । चैत्रवृत्तिकृतेः प्रयोजकगुरुआज्ञाद्यर्थाविषयत्वेन तस्या तद्भावबोधस्य व्यर्थत्वात् । तथा च कृतौ प्रसिद्धस्य साक्षादाज्ञाविषयत्वस्य तस्याभावः । उत्तमपुरुषेऽपि अनवधानेन परोक्षं द्रष्टव्यम् । शक्तिस्तु अर्थद्वये प्रत्येकम् । विशेषणविशेष्यभावे विनिगमनाविरहात् । अत एव उक्तद्विकस्य उक्तलक्षणेऽपि न विशेषणता । विनिगमनाविरहात् । रहस्य पृ. ८३.

• लिप्सासूत्रम् । ४।१।२।२ ॥ मीको. पृ. १५०२ 'क्रत्वर्थपुरुषार्थलक्षणम्' इत्यत्र द्रष्टव्यम् ।

• लिप्सासूत्रोक्त( ४।१।२।२ )न्यायेन फलस्यानेच्छाविषयत्वात् 'यागेन स्वर्गं प्राप्नुयात्' इत्यर्थवर्णनमनुपपन्नमित्याह— 'शमयामा फलप्राप्तिः' । मोम. १।२।२ पृ. ८६१.

• लुङ् । भूतसामान्यं लुङर्थः । 'भूते' ( पा. ३।२।८४ ) इत्यधिकारे 'लुङ्' ( ३।२।११० ) इति सूत्रात् । यथा 'घटोऽभूत्' इति । मणि. पृ ११८. • लुङ् । लुङर्थस्तु 'अपाक्षीत्' इत्यत्र भूतत्वमात्रम् । रहस्य. पृ. ४४

• लुट्– अनद्यतनभविष्यत्त्वं लुडर्थः 'भविष्यति॰' ( पा ३।३।३ ) इत्यनुवृत्तौ 'अनद्यतने लुट्' ( पा ३।३।१५ ) इति पाणिनीयसूत्रात् । यथा 'श्वो भविता' इति । मणि. पृ. ११७.

• लुडर्थस्तु फलं इत्यादौ अनद्यतनत्वविशिष्ट भाविनम् । तत्र लुडन्तधात्वर्थकालीनध्वंसाभावप्रतियोगित्वक्षणवृत्त्यादिकं पूर्ववत् आख्याते एव अन्वेति । रहस्य. पृ ५३.

• लुट्प्रत्ययः अनद्यतने एव भविष्यति काले भवति । टुप्. ९।१।१०।३५ वर्णक २, पृ. १६७९.

• लुप्तार्थप्रतिप्रसवविधिः– 'पूषा प्रपिष्टभागः' इति तार्तीय., दाशमिकश्च 'कृष्णलचरौ घृते श्रपयति' इति । बाल. पृ. १५–१६.

• लुप्तोपकाराणामननुष्ठानं अलुप्तोपकाराणां तु अनुष्ठानम् । वि. १०।२।१.

• लूतातन्तुन्यायः । लूता कीटविशेषः । स यथा स्वदेहात् तन्तून् निर्माति संहरति च स्वदेहे, तथा च तस्याः स्वतन्तुनिर्माणे स्वतो निमित्तकारणत्वरूपकर्तृत्वम्, स्वदेहापेक्षयोपादानकारणत्वं च, एवं ब्रह्मणो जगतः कर्तृत्वम्, स्वशक्त्यपेक्षयोपादानत्वं च । एवं च जगत् स्वशक्त्या निर्माति, स्वशक्तौ संहरति चेत्येवं निदर्शनमस्य प्रवृत्तिरिति । माहूली. ५०२.

• लृङ् । भविष्यतो क्रिययोः हेतुहेतुमद्भावो लृङर्थः । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' ( पा. ३।३।१३९ ) इति सूत्रात् । लिङो निमित्तं हेतुहेतुमद्भावः । यथा 'सुवृष्टिश्चेदभविष्यत् सुभिक्षमपि अभविष्यत्' 'यदि घटोऽभविष्यत् तदा अद्रक्ष्यत्' इति । मणि. पृ ११८. • लृङ् । लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियानिष्पत्तिः । यथा 'यदि सुवृष्टिरभविष्यत् तदा सुभिक्षमभविष्यत्' अत्र सुवृष्टिसुभिक्षयोः हेतुहेतुमद्भावात् । उभयोरनिष्पत्त्या च क्रियाऽतिपत्तिः । अयं भूते भाविनि च । 'दृष्टो मया भवता पुत्रार्थे चङ्क्रममाणः, इतश्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टोऽभविष्यत् अभोक्ष्यत न तु भुक्तवान्' इत्यादौ भूतेऽपि प्रयोगदर्शनात् । अनयोश्चार्थयोः साक्षादेव स्वरूपसम्बन्धेन भासमानयोः । रहस्य पृ. ८८.

• लृट् । 'आग्नेयमष्टाकपालमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इति विधायांशे क्रियाया उपपदे अनुशिष्टेन लृटा श्रुत्यैव आरम्भकत्वादिपदे, विनियोक्त्री श्रुतिरेव इति भट्टसोमेश्वरमते । पार्थसारथिमते तु नैव श्रुतिः । यत्तु नवमे ( ९।१।१०।३३ ) 'आग्नेयमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इति आरम्भणीयाविधौ 'लृट्प्रत्ययोऽपि श्रुत्यैव तादर्थ्यस्याभिधायकः' इति सिद्धान्ते निर्णीतं तत् परमतेन । अत एव 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः' इति लृट्श्रवणेन ( सत्या ) पञ्चमे (५।३।११।२९–३१) सिद्धौ. पारस्परीयो विनियोगः उक्तः. 'निरपेक्षेण वाक्येन दीक्षार्थेष्टिर्विधीयते' इति । ( तत्रैव परस्तात्तु स्वत एव 'दीक्षिष्यमाणः' इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते । तेन दीक्षार्थत्वमिष्टेः.' इत्यप्यु-

त्वम्। के. )। तन्त्ररत्नेऽपि 'परेणावेदनात्' इत्यधिकरणे पञ्चमे (५।३।११।२९–३१) उक्तम्। आमावैष्णवो वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थ. इति। 'सोमेन यक्ष्यमाणोऽग्निमादधीत' इत्यत्रापि वाक्यान्तरेण आधानोत्तरकालस्य सोमाङ्गत्वं लृट् श्रुतिरगादेव। यद्यपि अत्र तत्रत्य 'यक्ष्यमाण इति च दीक्षिष्यमाण इत्यत्र निरादांया क्रियाया उपपदे लृट्प्रत्ययः सोमेन यक्ष्ये इत्यर्थे' इति तथापि क्रियान्तरयोगे एव लृटः स्मृत्युक्तिद्वारा वाक्यीनविनियोगोपपादनाभिमतेति संक्षेपः। बाल. पृ. ४७.
● लृट्। भविष्यत्सामान्य लृटोऽर्थः। यथा 'अद्य श्वो वा घटो भविष्यति' इति। एव च 'दर्शपूर्णमासौ आरप्स्यमानोऽन्वारम्भणीयां निर्वपेत्' 'सोमेन यक्ष्यमाणः आदधीत' इत्यादौ स्वादेशशानचः साधारण्येऽपि 'लृट् शेषे च' (पा. ३।३।१३) इति सूत्रेण वाक्यशार्थस्थान च अनद्यतनभविष्यत्त्वम्। मणि. पृ. ११७. ● लृट्। लृडर्थोऽपि घस्वतीरादी अद्यतनानद्यतनसाधारणं भविष्यत्त्वसामान्य तदेव (भाक्तत्वामेवान्वेति)। रहस्य. पृ ४३. ● लृट्। समानेऽहनि लृट् कल्प्यते इत्येतत् युज्यते। भविष्यत्कालसामान्ये लृट् कल्पते। ननु लुटा अनद्यतनकालोऽवगम्य बाध्यते। नैवमुक्तम्। यदि लुट् अनद्यतने विधीयमानो लृटमबाधमानः आत्मानं न प्रतिलभते ततो बाधेतापि। अपमबाधमानोऽपि आत्मानं लभते, तस्मान्न बाधते। तस्मात् लृट् अद्यतने अनद्यतने च भविष्यति काले भवति। लुट्प्रत्ययस्तु अनद्यतने एव। टुप्. ९।१। ११।२५. पृ. १६७९.

● लृड्विनियोक्त्री श्रुति क्षेपेऽवयवे यथा–'आमावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः'। बाल. पृ ४६.

● लेखागमस्यन्यायः। मुख्य–अपशब्दविवेचनोपायस्य प्रकृतिप्रत्ययविभागकल्पनस्य व्याकरणपरिकल्पितस्यैव लेखागमस्यन्यायेन व्याकरणशास्त्रे व्युत्पादनासुगमा। कु. ३।४।८।२९ पृ. ३६१.

● लेट्। 'लिङर्थे लेट्' (पा. ३।४।७) इति सूत्रात् विध्यादन. आशीश्च लेडर्थः। यथा भवति पताति इति। अयं तु छन्दोमात्रगोचर.। मणि. पृ. ११७. ● लेट्। लेटः पञ्चमस्य द्वैधा नेमम्। अनुबन्धकारे यद्यपि एकार: पञ्च तथापि टकारानुबन्धकस्य स्थानसङ्गात् अननुबन्धकेषु लकारेषु टकारानुबन्धस्य लेट. पञ्चमस्य टकारानुबन्धभूतेषु अर्थेषु पञ्चमस्य पञ्चमत्वात्। यद्वा 'धातुगवन्वं प्रत्ययाः' इति सूत्रेण धात्वधिकारे 'क्रियासमभिहारे लोट्' इति लोट् विहितः। ततः 'छन्दसि लुङ्लङ्लिट.' इति लकारत्रयं विहितम्। ततः 'लिङर्थे लेट्' इति लेट् विहित.। अत. सूत्रितधात्वधिकारे लकारचतुष्टयानुत्तर विहितत्वात् पञ्चमलकारोऽयम्। इदम विधानापेक्षं पूर्णमत्र 'अथ पष्ठी निति चिनुते' इत्यत्र। तदेनत् पञ्चमे प्रतिपादितमिति। बाल. पृ ४०. ● लेट् (पञ्चमलकार) विधात्री श्रुति.। वा. ३।१।७।१३ पृ. ७००. ● लेट् वेदे एव। तदर्थो लिङर्थ एव 'समिधो यजति' इत्यादौ। रहस्य. पृ ८४ ● लेट् पञ्चमलकारः लेट्शब्देन। वि. ३।१।१ वर्णक २.

● लोक.। न च लोकः एवंविधेषु अर्थेषु (वैदिके कर्मणि) प्रमाणम्। भा. ३।३।७।१४ पृ. ८५७, ● लोक हि शब्दार्थावगमे प्रमाणम्। न च लोके द्योतर्भेदो. तद्वचनात एकवचनान्तो वा प्रवर्तमानो दृश्यते। ९।१।४।१३. ● प्रतीतव्यानन्तरहारी हि लोकः अभिधानलक्षणाश्रितैः अनुरोधेन उदासीनावस्थ. सामान्यविशेषभावादि-(व्यवस्था) विवरम परीक्षकैरिवैकं क्रियमाणं न वानुमन्यते। वा. ३।१।६।१२ पृ. ६८३. ● लोकस्य सर्वार्थप्रत्यायकत्वात् सामान्यानुवर्तित्वकत्व न युक्तम्। सु. पृ ३६१. ● लोकेपादानेन कृतार्थस्य लोकस्य अभिधेय–नाम मान–भौतम–निग्रहलायसंबद्धविवेकानादरः (लोकादिः अभिधेयोऽर्थ, गम्यमानोऽर्थो व्यक्ति, उपसर्जन चोदोऽर्थ, प्रमाणादिभिन्नत्वादिपरामर्शः, योगरूढानां पङ्कजादिशब्दानां विषयः पञ्चत्वादि. इति)। वा. ३।८।४।१३ पृ. ९१३, ● लोके अपि

सुबोधिन्यनुसारेण तु अथ सूत्रार्थ — उपदमाति गृहनिर्माणादिशास्त्रि अशास्त्रा निर्मूल । शास्त्र न प्रत्यक्ष स्वमूलवेदानुमापक नेत्यर्थ । अर्थेन स्वरश्रणादि प्रयोजनेन गम्येत शास्त्र । अप्राप्ते गृहनिर्माणादिकौशल्य शूद्रे पुरुषे शास्त्र अर्थवत् सफल्यम् । स्वबुद्धया कर्तुमक्षम शास्त्र दृष्ट्वा कुर्यादित्यर्थ । इति । [कर्म आरभ्य समाप्तव्यमेव इति भाष्योत्प्रेक्षित एकदेशिमत न रमणीयम् । कामशब्दस्य चिन्त्यपेक्षितफलपरत्व संभवति अनपेक्षितनिमित्तपरत्वस्य अन्याय्यत्वात् । फलकामे निमित्ते प्रारम्भ सुतरा समाप्तिः सम्भावना मक्तस्य फल्वा रमकस्य कर्तव्योपदेशानुपपत्त्या नत फलान्तरकल्पना पत्तेश्च । ततश्च फलार्थिन कर्मविधानात् प्रक्रान्ते कर्मणि वीतरागस्य न समाप्तिनियम । कु ५।१।४।२९ ] के

* लोके क्रियाकर्तृ दान भृतिरूप दृष्टम् । सू

* लोके 'गा आनय' इत्यादिप्रयोगे पदपदार्थयोरन्य मगतिर्गृह्यते । वाक्य तु आकाङ्क्षा–योग्यता–सन्निधिवशात् स्वार्थं प्रतिपादयति । वि १।१।७ * लोके यथा ग्रामान्तरादागताना पुरुषाणा धर्मीकरणेन अदृष्ट उपकार क्रियते इत्युच्यते लोके च नानुपपत्ति । भा ९।१। ४।१२, * लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेषु इत्यवगन्तव्यम् । नाध्याहारादिभिरेषा परिकल्पनीयोऽर्थ परिभाषितव्यो वा । १।१।१।१, * लोके विदितपूर्वा भर्या उच्यते बहुक्षीरादय (इय गौ केन वा बहुक्षीरा० )। तेषा विज्ञानमेव न प्रयोजनम् । तत प्रशंसा गम्यते । अविदितवादे न श्रद्धीरन् पूर्ववचनादिव । विदितत्वादेव च प्रोच्यन्ते । १।२। २।२१ * लोके हि पुत्राणा पितृधने समविभागो दृष्ट । वि १०।३।१३ * लोकश्च इदमपि व्यवहरमाणो दृश्यते । न च लोके पर्यनुयोगावकाशोऽस्ति, अनादित्वात् । ऋजु पृ ९१

* 'लोकावगतसामर्थ्य शब्दो वेदेऽपि बोधक' इति न्यायेन 'गुरुपदानुसारी वेदार्थो वर्णनीय । वि ९।२।१२ (गुरुमते)

* लोकप्रसिद्धि नाम प्रमाण प्रथमात्तर्कमेव । मणि ६१

* लोकप्रसिद्धिप्रतीक्षे वेदे यत्र एकदेशोऽपि जातिनिमित्तता लभ्यते न पुनर्निमित्तान्तरशक्तिकल्पना सम्भाति । वा १।४।७।१० पृ ३४३

* लोकप्रसिद्धिविपरीतान्यार्थस्य वाक्यार्थस्य मानताविरोधापत्तिपरिहारार्थं विशेषणविशेष्यता कथित इति न्याय । 'मानताव प्राप्तत्वात्०' इति न्यायमीको पृ २०२० इत्यत्र द्रष्टव्यम् । सु पृ १४३६

* लोकवत् । यथा इय गौ केनया देवदत्तस्य एषा हि बहुक्षीरा, रूपवत्या अनष्टप्रजा चेति । कतया इत्यप्युक्त गुणाभिधानात् प्रवर्तन्तेतरा केतार । बहुक्षीरा इति च गुणाभिधानमवगम्यते । तद्वत् 'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बर' इत्यादौ वेदेऽपि भविष्यति । भा १।२।१।२०, * लोकवत् । यथा 'मत्स्यान् न पयसा समश्नीयात्' इति । यद्यपि बहुशो मत्स्या भवन्ति तथापि पयसा सह न समश्यन्ते । १०।७।१९।६१ * लोकवत् । यथा लोके एकस्मिन्नर्थे बहुवचन न प्रयुज्यते । ११।४।१९।५२, * लोकवत् । यथा लोके कायस्थप्रभृतिभ्यो यद्दीयते, तत्र कायस्था स्वामिना सह गण्यते । तेभ्य स्वामी विभज्य निर्दिशति, इद युष्माकमिद तुभ्य इति । १०।३।१२।५१, * लोकवत् । यथा लोके 'शत देवदत्तयज्ञदत्तयोर्दीयताम्' इत्यत्र समासार्थो निधीयते, यदेतत् शत तत् एतयोर्दीयतामिति । द्वन्द्वश्रुतिविधानसामर्थ्यात् शत विभज्यते । १०।६।४।८ * लोकवत् । लोकेऽपि पय एव घनीभावयितु दध्युपादीयते । कथम् । दध्यभावे अन्येन अम्लेनापि काञ्जिकादिना क्रियते, तथापि च आमिक्षाशब्दो भवति । ८।२।४।२२, * लोकवत् । लोकेऽपि हि कायस्थप्रभृतिभ्यो यद्दीयते, तदसमीति तेऽपि परिक्रये अनमतायमेव मन्यन्ते । १०।२।८।१३, * लोकवत् । 'शतकृष्णला दीयताम्' इति एकजातीयानां शत न भिन्नजातीयानाम् । १०।३।११।४८

* लोकवाक्यशेषयोर्विरोधे बलाबलम् । वा १। ३।८।१९ पृ २२१–२२४ इद मीको पृ १२७२ 'विप्रतिषिद्धवाक्यशेषाधिकरण' इति भिदी द्रष्टव्यम् ।

• लोकवेदाधिकरणम् । उत्सूत्रम् । १।३।९।३० वर्णकं १ ॥

भाष्यम्— 'अथ गौः इत्येवमादयः शब्दाः किं आकृतेः प्रमाणं उत व्यक्तेः इति सन्देहः । उच्यते । इदं तावत् परीक्ष्यताम्, किं य एव लौकिकाः शब्दाः त एव वैदिकाः उत अन्ये इति । यद्यपि त एव तथापि किं त एवैषामर्थाः ये लोके उतान्ये इति संशयः । तत्रान्ये लौकिकाः शब्दाः अन्ये वैदिकाः, अन्ये चैषामर्थाः इति ब्रूमः । कुतः ? व्यपदेशभेदात् रूपभेदाच्च । इमे लौकिकाः इमे वैदिकाः इति व्यपदेशभेदः । 'अग्निर्वृत्राणि जङ्घनत्' इति अन्यदिदं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वाच्च न त एवार्थाः । अपि च समामनन्ति 'उत्ताना वै देवगवा वहन्ति' इति । ये देवानां गावः ते उत्ताना वहन्ति इत्युक्ते गम्यत एव, ये उत्ताना वहन्ति ते गोशब्देनोच्यन्ते इति । तस्मादन्यो वैदिकगोशब्दस्य अर्थः । तथा 'देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्' इति हिरण्यपर्णो वै देववनस्पतिर्निर्दिष्टः । 'एतद्वै दैव्यं मधु यद् घृतम्' इति वैदे घृते मधुशब्दः । तस्मात् अमीषामन्ये अर्थाः । इति प्राप्ते, ब्रूमः । य एव लौकिकाः शब्दाः त एव वैदिकाः, त एवैषां अर्थाः इति । कुतः ? प्रयोगचोदनाभावात् । एवं प्रयोगचोदना सम्भवति, यदि त एव शब्दाः त एवार्थाः । इतरथा शब्दान्तरे अर्थो न प्रतीयेत । कस्मादेकशब्दत्वमिति । उच्यते । प्रत्यभिज्ञानमिदम् । हेतुर्व्यपदिश्यतामिति । ततो हेतुरुच्यते अविभागादिति । न तेषामेषां च विभागमुपलभामहे । अत एव एकशब्दत्वं तत्र तत्र अर्थावगमश्च, अतो नान्यत्वं च वदामः ।

यच्चोक्तं 'ये उत्ताना वहन्ति ते देवगवाः, यद् घृतं तन्मधु, यो हिरण्यपर्णः स वनस्पतिः' इति । नास्ति वचनं यत् उत्तानानां वहतां गोत्वं ब्रूयात् । ये गावस्ते उत्ताना वहन्ति इत्येतत् तत् । यदि च अनेन वचनेन गोत्वं विधीयते, उत्ताना वहन्ति इत्यनुवादः स्यात् । न चोत्ताना वहन्तः प्रसिद्धाः केचित् । ते विधीयन्ते विधातव्याः । तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम् । विधाने हि तथा वाक्यम् । यदि चान्ये वैदिकाः, ततः उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येत अविज्ञातलक्षणं गोत्वं विज्ञातुम् । न च उत्तानवहनवचनमपि अनर्थकम्, स्तुत्यर्थेन अर्थवत् भविष्यतीति । एवं घृतस्य मधुत्वम्, हिरण्यपर्णता च वनस्पतेः । तस्मात् त एव शब्दा अर्थाश्च ।

वा— इह नाम-आख्यात-उपसर्ग-निपातानां मध्यात् नामानि परिगृह्यन्ते । तेषामपि जाति-गुण-क्रिया-द्रव्य-यदृच्छा-सर्वनाम-शब्दानां मध्यात् जातिशब्दाश्चि-न्त्यन्ते । तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते किं पुनरयं आकृतेर्वाचकः अथ व्यक्तेः इति । तत्र 'एतत् सांन्यासिकं कृत्वा वक्ष्यमाणं तु, सांप्रतम् । उपाय-फलसिद्ध्यर्थमिदं तावद्विचार्यते ॥' [ वक्ष्यमाण आकृत्यर्थकत्वं सांन्यासिकं निक्षेपत्वेन स्वमनस्येव गुप्तत्वेन कृत्वा, साम्प्रतं आदौ, उपायसिद्ध्यर्थं फल-सिद्ध्यर्थं च अन्यत् विचार्यते इत्यर्थः । सुधायां तु 'वक्ष्यमाणं पूर्वपक्षादि सांन्यासिकं न्यासार्हं कृत्वा सम्प्रति इदं तावत् विचार्यते इत्यन्वयः । न्यासार्थात् सन्न्यासप्रातिपदिकात् 'तदर्हति' (पा० ५।१।६३) इत्य-स्मिन्नर्थे (तदर्हति योग्यो भवति इत्यर्थे इति सिद्धान्त-कौमुदी) ठञ्प्रत्यये सांन्यासिकपदव्युत्पत्तिः । इत्युक्तम् ] किं य एव लौकिकाः शब्दाः त एव वैदिकाः त एव चैषामर्थाः उतान्ये इति । आह 'किं लोकवेदशब्दा-नामेकत्वप्रतिपादने । प्रयोजनं, यतः पूर्वं तावत् तत् प्रतिपाद्यते ॥' उच्यते— 'फलमस्य विचारस्य वैदिकेषु भविष्यति । लोके च निर्णयोपायस्तेनै-कत्वाय यत्यते ॥' यदि शब्दार्थानामनन्यत्वं लोकवेद-योर्भवेत्, तत एतस्या व्यवस्थाकुलामिधानचिन्तायाः इह व्यवहारस्य अनेकप्रयोगानुसरणद्वारेण अभिधेयाभिधेय-त्वनिर्णयः शक्यते कर्तुम् । 'प्रयोजनं तु लोकस्य न किंचिदपि सिध्यति । आकृतिव्यक्तिवाच्यत्व-परमार्थनिरूपणात् ॥' सम्मुग्धितानेकार्थसन्निधाने हि शब्दः प्रयुक्तः स्वयमपि अर्थजाते प्रत्ययं करोति । तेन न अविविक्ताभिधेयाभिधानभेदेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां पुनः । 'यदुच्यमानया

कार्यं यदि वा जातिरन्यथा । समस्त नियते व्यस्तया को विवेकधियो गुण ॥' यदि उच्येत इहापि भेदवत् सामान्यविशेषलक्षणनाघसिद्धिरेव प्रयोजन मिति । तदुच्यते- " मा हि दधिदानादि ' लोके कर्मार्थलक्षणम् ' ( १।३।१।८।२६ ) । तद्वशात् क्रियमाणे तु न चिन्त्ये श्रुतिलक्षणे ।। तेन लोके विचारोऽयं जायते निष्प्रयोजन । स्यात् प्रयोजन- वान् वेदे ज्ञानोपायस्तु दुर्लभ ।। तेन शब्दार्थं भिन्नत्वे व्यवस्थापितविचारणा । वाच्यावाच्य- विवेकाय न कर्तव्या कथंचन ।। अभेदे सति लोकस्थे कृत शब्दार्थनिर्णय । कस्मिन्ननुप युक्तोऽपि कन्न वेदेषु वास्यति ।।' तेन लौकिकवैदिक शब्दार्थैकत्वे सति आक्रम्याभिधानम् उपपत्तिमत्त्वात् प्रयो जननत्वाच्च आरब्धव्यम् । भेदपक्षे तु अज्ञानं इयत धुम्य भेदपक्षावत् प्रतिपाद्यते । नियतानियताक्षर च्छन्द समन्वित स्वरलोपागम वर्णविकार-अक्षरन्यासक्रमभेदात् अध्यायानध्याय-उपनीतानुपनीत- त्रैवर्णिकचातुर्वर्ण्यप्रयो ज्यप्रयोज्य न-गुरुशुश्रूषासाधितगुरुसम्प्रदाय-यदृच्छाप्रयुक्त वाक्यवदया वत्वन्त् यदि पदपदार्थान्तर लोकवेदयो तयो लौकिकानामेव प्रयोगानियमात् अर्थवत्ता । वेदे तु आनर्थक्यात् न चोदनालक्षणो धर्म । स्वरेण वर्णभेद प्रथते । अध्यायानध्यायतश्च शुश्रूषणानाश्रयोगेन च अनिदम्पारम्पर्यात् उत्तानवदनवाक्यभङ्ग । तस्मात् न वैदिकाना अभ्यासात् न ततोऽपि पौरुषेयाणाम् वाणि । आम्नायादिधर्मभेदनियतानियतपदवाक्यरचना द्वार व्यपदेशरूपभेदाभ्या शब्दाना अर्थाना लौकि- काना वैदिकाना च भेद । इति प्राप्ते, अभि- धीयते । 'प्रयोगचोदनाऽभावादेवत्वं तेषु गम्यते । तस्मात् सिद्धि फलत्वाद्वेदविभागाद् भवि ष्यति ।।' भेदे सति यदुक्तं कर्मवैदिकपदाना अनवगतसङ्गतेन अपशूयत्वात् क्रियाकारकसंसर्गात्मक प्रयोगचोदनाना अभाव एव स्यात् । ' एकत्वे सति सद्भावादिति वा हेतुवर्णना । अर्थैकत्व प्रधा- नत्वाद् धात्वभेदोऽयमुच्यते ।। ' शब्दार्थैकत्व इति वक्तव्ये अर्थैकत्वस्य प्राधान्येन शब्देकत्वोक्तिरिति मत्वा एतदुक्तम् । अथवा वस्तुमात्रपर्यालोचनात् उभयस्याधारत्वा- भिप्रायेणैव अर्थैकत्वोक्ति । प्रयोगचोदनाऽभावप्रसङ्ग परपक्षे स्वपक्षे वा तदभावसिद्धि वेदत्वादिनैव सह विवादे अवकल्पते नान्येन इत्यत आह- 'प्रयोजनमिद' तदभाव मभिधीयता इति । तदुच्यते । प्रत्यभिज्ञारूपप्रत्ययाविभा गात्, ज्ञायमानोभयप्रयोगरूपाविभागाद्वा, वाच्यतत्समूह मानविघनापनपदवर्णविषयव्यपदेशाविभागाद्वा, तथा उच्चारयितृणा स्थानकरणप्रयत्नाविभागाद्वा, तत्कालिक सहृदयानुगमनाविभागात् इति हेतुविकल्पा । ' प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्व प्रतिष्ठितम् । एकशब्दोदितज्ञानग्राह्यत्वाच्चैकवाक्यता ।। यथा सुवर्णादीना याऽपि वाच्यान्तरे श्रुति । अर्थैक त्वाविरोधेन गुणमात्रान्यता परा ।। यथा हि वामना गावो नराश्चिपिटनासिका । वर्णप्रावर णाद्यान्ये नरार्थत्वाच्च न च्युता ।। एव सत्येव गोत्वादौ धर्मो यदि विलक्षण । नैतावताऽर्थभेदो ऽस्ति विशेषानभिधानत ।।' न च या एव देवाना गाव ता एव अपरस्य सर्वस्य वैदिकस्य गोशब्दस्य वाच्या भवन्ति । मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरा प्रयुज्यमानत्वात् । ' एष हिरण्यपर्णस्य भेरी यदि वनस्पते । देवलोके, तत शब्द किमर्थान्तर वाच्यताम् ।। यद्येतद् घृतमस्माक देवाना मधुवद् यदि । रसनीयादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत् ।। न च सर्वाप्रसिद्धत्वे गम्यतैवकोऽपि कश्चन । तेनासिद्धप्रसिद्धाना नास्त्यन्यत्वनिरूप णम् ।।' अत अत्यन्तमेतेषामेव गवादीना देवसम्बन्धाना उत्तानवदनप्रतिपादन इति वक्तव्यम् । अथवा भूमिष्ठाना मेव सता येनापि गुणवादेन पृथिवीगोलकस्योर्ध्वभ्रमणा दिना वा पुराणोक्तेन दर्शितत्वात् यथैव वय उपरि देवान् पश्याम, एवमधोदेशस्य उपरिवर्तनात् अयमपि लोको द्यौरुपरि दृश्यते इति उत्तानवदनादि । तस्मात् लोकवेदयो अभिन्ना शब्दार्था इति सिद्धम् ।

ग्रा-- आकृत्यधिकरणोपोद्घाततया लोकवेदयो पद पदार्थाना अपरत्वम् यत्ने विचार्यते । तत्र सिद्धान्त ' प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्व प्रतिष्ठितम् ।

वर्णात्मकं पदं तच्च शब्दभेदान्न भिद्यते ॥' तस्मात् सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम् ।

सोम— लोकवेदाधिकरणस्य आकृत्यधिकरणोपोद्घातत्वात् संगतिः ।

वि— 'लोके पदपदार्थौ यौ न तौ वेदेऽन्यतामितौ ।, रूपभेदात् पदं भिन्नमुच्चारणादिभिदा स्फुटा ॥, वर्णैक्यात् पदैकत्वं शाखिर्स्ता रूपभिन्नता । प्रायिकेण पदैक्येन तदर्थस्य तथाविधम् ॥'

भाट्ट— वाक्यशब्दप्रसङ्गात् वाच्य किं यस्त्वादिजातिः उत व्यक्तिः इति चिन्ता । तदर्थं च लोकवेदयोः शब्दानामन्तरं उत न इति चिन्तनीयम् । अन्यथे हि उपायाभावेन वैदिकशब्दशक्तिग्रहस्यापि असम्भवात् नाशा चिन्ता आरम्भणीया । एकत्वे तु लोकवृद्धव्यवहारानुसारेण गृहीता शक्तिः वेदेऽपि प्रतिभाति इति युक्ता आद्या चिन्ता ।

तत्र वर्णभेदेऽपि स्वर-च्छान्दसत्वमागमलोपविकार-अभ्यासानभ्यासादिधर्मभेदात् छवो रत इत्यादिपदयोरिव लोकवेदयो पदानामन्यत्वम् । इति प्राप्ते, यत्र अर्थभेदप्रतीत्यनुगुणधर्मभेदः तत्र पदभेद' यथा सो रस इत्यादौ क्रमात्, 'राज वाक्यं' इति न्यूनातिरिक्तत्वात्, 'स्थूलपृषती' इत्यत्र कर्मधारयतत्पुरुषयोः स्वरात् अन्तोदात्त-आद्युदात्तरूपात्, 'पचने दक्षिणा देहि, भोजनार्थं पचते' इत्यत्र व्यधिकरणवदसन्निधिरूपात् वाक्याद्, 'मातः पुनरायाति, यातो देवदत्तयज्ञदत्तौ' इत्यत्र समानाधिकरणपदसन्निधिरूपया श्रुत्या, अश्वः इति अगमः इत्यर्थे व्याकरणस्मृत्या तदभिज्ञस्य पदभेदानुभवात् । यत्र तु नार्थभेदप्रतीतिः तत्र सत्यपि धर्मभेदे तदनवगमयितृत्वेन पदस्वरूपावधारणात् न पदान्यत्वं लोकवेदयोः इति युक्ता आद्या चिन्ता ।

मण्डन— 'लोके च वेदे च न शब्दभेदः ।'

शंकर— 'अर्थैकत्वं लोकवेदयोः ।' १८

● वाक्यप्रसङ्गम् वाच्यार्थनिर्धारणाय प्रवर्तितप्रमाणाकृत्यधिकरणोपोद्घातत्वेन लौकिकानां वैदिकानां च शब्दानां तदर्थानां चानन्यत्वं निर्णेतुं लोकवेदाधिकरणं आरम्भो । सु. १।३।१०।२७. ● लोकवेदाधिकरणे शाब्दाथवादिपूर्वपक्षादिवत्स्य 'व्यक्तिरेव वाच्या' इति पक्षस्य प्रसक्तं प्रामाण्यं अपोद्यते । कौ. १।३।९।३० पृ १२५.

● आकृत्यधिकरणपूर्वपक्षारम्भमपि सूत्रं ( प्रयोगचोदनाभावार्थैकत्वमविभागात्' १।३।९।३० ) लोकवेदाधिकरणसिद्धान्तेऽपि योज्यम् । कौ. १।३।९।३०.

● लोकवेदसिद्धशब्दप्रयोगोत्तरकालप्रणीत व्याकरणम् । वा. १।३।८।२४ पृ. १७८.

● लोकव्यवहारवेलाया गस्कारणामभावः ( वहिंगज्यादिषु ) । वा. १।४।७।१० पृ. ३४३.

● 'वेदेऽपि च सम्भवन् प्रायेण छेदनादिकार्यात् । वहिर्गो ज्वलितशब्दस्तमाश्रित लोकसंमतम् ॥' वा. १।४।७।१० पृ ३४३.

● लोकंपृणा इष्टका 'लोकं पृण छिद्रं पृण' इत्यनेन मन्त्रेण उपधीयमानेष्टका । वि. ५।३।८. ● लोकंपृणाभिः एकनिश्चला पुनश्चितिः अभिचित एव केवलसोमयागे गुणविधि. । संकर्ष. १।३।१३. ● लोकंपृणायाः चयने आवृत्तौ, तन्मन्त्रस्यापि आवृत्तिः । भा. ११।४।१२।४२, ● लोकंपृणया. श्रक्, चित्रिण्यादयः इष्टकाः मध्यमायां चितौ उपधेयाः । ५।३।८।२०.

● लोकंपृणामन्त्रेण उपधानम्, सूददोहसा च अभिमन्त्रणम्, न तु द्वाभ्यां मिलित्वा उपधानम् । संकर्ष. २।१।४१. मीको. पृ. ८६ 'अभिचयने लोकंपृणमन्त्रेण०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● लोकायतं नास्तिकशास्त्रम्, तत्र शिक्षिता इति लोकायतस्था. चार्वाकाः धर्मवादं कुयुक्तिजालरूपता. । सु. पृ. १२६.

● लोट् प्रतिषेधे श्रौतो यथा– इदाहरणं मृग्यम् । बाल. पृ. ४०. ● लोट् विधायी श्रुतिः । भा. ३।१।७।१२ पृ ७००. ● लोट् विधौ श्रौतो यथा– 'एकपात्य तच्चमान्त्यस्थनात्' इति । अत्र च मन्त्रार्थोऽपि लोट् विधौ ज्ञेय, एकेन प्रकारेण तस्यार्थस्योदस्याप्राप्तेः । बाल. पृ. ३९. ● लोट् शब्दमात्रस्य वाचकौ लोट्त्वेन । वि. २।१।१२ वर्णक २. ● प्रसङ्गले लोटं वक्ष्याम. । सत्यां विवक्षायां पुरुषादिष मध्यमादयः । यदा तत्र प्राप्तः काल इति निरुक्ते, तदा पुरुषेण मध्यमो नाम्ति

शेष वा । यदा त्वस्तु क्रियाया प्राप्तः काल इत्येतावत् विवक्ष्यते न तत्र मम चेति, ● तदा युष्मदादीनामनुरोधो मध्यमादयो भवितुमर्हन्ति इति पूर्वपक्षे । भा ३।८। ११।२२

● लोडर्थः यथा लिङ्थ एव । प्रैषादयः कृत्यप्रत्ययाश्च 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा ३।३।१६३) इति सूत्रे चकारेण लोटोऽपि अनुकर्षणात् । रहस्य पृ ४४ ● विध्यादयः आशीश्च लोडर्थः । 'लोट् च' (पा ३।३।१६२) 'आशिषि लिङ्लोटौ' (पा ३।३।१७३) इति पाणिनीयसूत्रात् । यथा 'मा भवतु' 'भवतात्' इति । 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' (पा ७।१।३५) इति सूत्रेण आशिषि तातङ्विधानात् । मणि पृ ११७

● लोप अभिघारणस्य तृणान्तर्धौ । १०।२।१२–१३ मीको पृ १४७६ 'तृणान्तर्धौ उपस्तरणाभिघारणयोर्बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप आधानगानानां रथन्तराणां आग्नेयादिकाम्येष्टौ चयने । १२।४।९।२८–२९ मीको पृ ४८ 'अग्निचयने ध्रुवस्य०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप उपस्तरणस्य तृणान्तर्धौ । १०।२।१२–१३ मीको पृ १४७६ 'तृणान्तर्धौ उपस्तरणाभिघारणयोर्बाधः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप गुणकामानां काम्यकर्मणां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२०।८२ मीको पृ ७१० (१) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानां नानुष्ठानम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप पत्नीनां यजमानादिसंस्काराणां दीक्षणीयेष्ट्यादीनां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१८।५० मीको पृ ७६० (४) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे पत्नीयजमानसंस्कार–इष्टीनां लोपः' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप न मन्त्राणां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१९।५१ मीको पृ ७७० (३) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे मन्त्राणां अनुष्ठानम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप निरूढस्य लोहितस्याभावे नाशे वा । प्रायश्चित्तं तु लोपनिमित्तं भवत्येव अग्नीषोमीये पशौ । यष्ट्रोहिताधिकरणम् । ४।१।१२।२७ ● लोप शेषकार्यस्य, शेषकार्याभावप्रसङ्गस्य इत्यत्र नाशे । ६।४।२।३ मीको पृ २०७३ 'दशपूर्णमासादौ स्विष्टकृदादि०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप समेधस्य, नाशूत अभावे नाशे वा । प्रायश्चित्तं तु लोपनिमित्तं भवत्येव अग्नीषोमीये पशौ । यष्ट्रोहिताधिकरणम् । ४।१।१२।२७ ● लोप सूक्तवाके सर्वतायुरादिफलप्रकाशकभागस्य अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२१।५३–५५ मीको पृ ७६० (८) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकस्थसर्वतायुः०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● लोप स्विष्टकृदागस्य, एककपालस्य सर्वहोमे (इवे) आप्येन समापनमपि नास्ति । भाट्ट ४।१।७ मीको पृ १०१५ 'आप्यन्याय' इत्यत्र द्रष्टव्यम् । ● लोप होतृकामनया अनुष्ठीयमानानां गुणकामानां अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२।५६–५७ मीको पृ ७७० (५) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● लोभेन यथा पुरुषः प्रवर्तते नहि तथा विधिवचनेनापि । भा ३।४।१०।२८ पृ ९६०, ● लोभात् पतितान् याजनमहीत्रन्य यो याजयिष्यति, तद्दोषेण 'अश्वमेधेन यजेत' इति विधानम् । न तु तद्विधानान्यथानुपपत्त्या याजनं इतरेषामपि विहितमिति कल्प्यते । ३।४।१०।२८ पृ ९६० ● लोभात् वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्, तत्स्मृतेर्बीजम् । भा १।३।२।४ पृ १८६

● लोभमूलिका स्मृतिर्न प्रमाणम् । भा १।३। २।४

⁂ लोष्टप्रस्तरन्याय । लोष्टो मृत्पिण्डः । प्रस्तरः पाषाणः । यत्र लघुतरवस्त्वपेक्षया गुरुतरवस्तुनस्तत्र जायते, तत्रास्य प्रवृत्तिः । अन्ये तु– यत्र गुरुलघुवस्तुनोरुपादानविवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री ६७१

⁂ लोष्टप्रस्तारन्याय । लोष्टस्य मृत्तिकापिण्डस्य प्रस्तारो विस्तार इति यावत् । अथ यथा मृत्पिण्डस्य कुलाले नानावैचित्र्य घटशरावप्रभृतिविविधप्रतिरूप रव

यत्रैव विवक्षया प्रवर्तते । अत एव लोष्टप्रस्तारन्यायेनाऽनन्तरैर्विषयमुक्तमित्युक्तं दुर्गादासेन । माहस्री. ६७४.

लोष्टलगुडन्यायः । यथा लोष्टप्रोथमर्दको लगुडस्तथोपर्यवमर्दकयोः सांनिध्यविवक्षया अस्य प्रवृत्तिरिति । लोष्टो मृत्पिण्डः, लगुडो दण्डः । माहस्री. ५०१.

लोहाग्निन्यायः । अयं परस्परधर्माध्यासावस्थयोरविवक्षया प्रवर्तते । माहस्री. ३७४.

लोहचुम्बकन्यायः । यथा चुम्बकमणिर्निष्क्रियोऽपि संनिधिमात्रेण स्वयमप्रवर्तमानोऽपि लोहमाकृष्य प्रवर्तयति, तद्विकारहेतुश्च भवति, तथा पुरुषः प्रवृत्तिं प्रवर्तयतीति सांख्याः । माहस्री. १८०.

● 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति निर्दिष्टे लोहितोष्णीषविधानार्थं तत्पदमुच्चार्यते । अत्र उपसर्जनीभूतोऽर्थो विधित्सितः प्रधानीभूतश्च अनुवादः । भा १।१।१।१२. पृ. ६८७, ● 'लोहितोष्णीषाः प्रचरन्ति' अत्र लोहितोष्णीषत्वं प्रचारायोपदिश्यते । ११।१।१।१.

लोहितोष्णीषाधिकरणम् । लोहितोष्णीषन्यायः । श्येने लोहितोष्णीषत्वादिकं सर्वेषामेव ऋत्विजां नोद्गातृणामेव ॥

गुणत्वाच्च वेदेन न व्यवस्था स्यात् । ३।८।४।१२ ॥

भाष्यम्— एवं वा । श्येने श्रूयते 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति' इति । तथा वाजपेये श्रूयते 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति । तत्र संदेहः किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्तव्या, वाजपेये चाध्वर्युभिर्हिरण्यमालित्वम्, उत उभयमपि सर्वैर्ऋत्विग्भिरिति । किं तावत् प्राप्तम् ? समाख्यानात् श्येने उद्गातृभिः वाजपेयेऽध्वर्युभिरिति । एवं प्राप्ते, ब्रूमः । गुणत्वाच्च वेदेन न व्यवस्था स्यात् । गुणो लोहितोष्णीषता हिरण्यमालित्वं च । पुरुषः प्रधानम् । अतो लोहितमुष्णीषं हिरण्यमाला च पुरुषविशेषणत्वेन श्रूयते, न कर्तव्यतया । तस्मात् पुरुषप्राधान्यम् । विमतो भवेत्तम्, पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम् (तत्रोऽधिकरणे १२ सूत्रे) । अपि च गुणत्वश्रवणात् सर्वपुरुषाणामेतद्विधानमिति गम्यते । प्रधानसंनिधौ हि गुणः क्रियमाणः प्रतिप्रधानमुपदिष्टो भवति । तत्र वचनेन प्राप्तं कथं समाख्यया विनश्यमानमपि नियन्तुं शक्येत । तस्मात् उभयत्र सर्वैर्ऋत्विग्भिः एवंजातीयको धर्मः क्रियेतेति ।

वा— 'गुणत्वे तस्य निर्देशः' (३।८।२।६) इत्यनेन गतार्थं (प्रकृतद्वादशसूत्रस्य प्रथमं भाष्यव्याख्यानं) इत्यन्यथा व्याचष्टे । ये संस्काराः शब्दो वचनादृत्विजां आम्नायते किं समाख्यया नियम्यन्ते नेति । लोहितोष्णीषादयो हि औद्गात्रादिषु पठ्यमानाः सन्तोऽपि तत्स्थाने वचनादृत्विजां क्रियमाणाः समाख्याविषयता प्रतिपद्यन्ते । इति प्राप्ते, ब्रूमः । 'संस्कारत्वाप्रतिकान्ते समाख्यागोचरे सति । वचनेनर्त्विजां येन तेनैवाम्नायतेऽपि स्थिताः ॥' ऋत्विगुद्देशेन श्येने विधीयमानाः प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम् । तस्मादिह न व्यवस्था स्यादिति ।

सोम— अस्तु अत्र समाख्यया व्यवस्था इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— संस्काराणां ऋत्विगपेक्षया गुणत्वात् तत्तद्वेदसमाख्यया न व्यवस्था स्यात् इति ।

वि— 'हिरण्यमालिताऽऽद्यास्तु संस्कारा वचनाश्रिताः । ऋत्विजां ते यथाऽऽम्नानं कर्तव्या निखिलैरत ॥, अत्र आम्नायवशात्, नैव सर्वविधिर्विधानतः । अनित्युक्त्य गुणानुषेः कर्तव्या निखिलैरपि ॥' ५.

भाट्ट— ये ऋत्विक्संस्काराः हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादुद्गात्रादिभिरेव कर्तव्याः, तदुक्तध्योद्देश्यगतत्वेनाविवक्षितत्वात् । अथाप्यनुवादापेक्षा, तदा तत्पुरुषः कार्यः । इति प्राप्ते, अनियतकर्तृप्राप्तौ समाख्यया वचनेनापेक्षितनियमनस्थानम्, प्रकृते च संस्कारस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षणात् न समाख्याशास्त्रनियामकत्वम् । कर्तृत्वपरिसंख्यापरत्वं तु वैरूप्यापत्तेरयुक्तम् । यदि तु समाख्यायाः सत्त्वात्तदर्थवाचिनाः भेदेनात्र हिरण्यमालित्वविधित्सया परिसंख्यापरत्वमेतस्यागत्यैव, तथापि समाख्यया तत्रास्य संकोचायोगादेव सर्वविषयत्वनिश्चयः ।

मण्डन— 'हिरण्यमाला ऋत्विग्गणम् ।' ५.

शंकर— 'ऋत्विजां हेममाला ।' ७.

* लोहितोष्णीषादिवत् । यथा श्येने अतिदेशप्राप्तऋत्विजः अनूद्य लोहितोष्णीषादिरूपगुणमात्रविधान तथा आख्यातलक्षितकर्तृत्वेन पुरुषस्य प्राप्तत्वात् पुरुषस्यानुवादः स्वर्गमान साध्यत्वेन विधीयते । सु. ६।१।१।१. * लोहितोष्णीषादिवत् स्वर्गकामादिशब्दाः क्रियासम्बन्धानुवादेन लोहितोष्णीषादिवत् विशेषणपराः । रत्न. ६।१।१।१.

* लोहितोष्णीषत्वादिभिः श्येने उपदिष्टैः आतिदेशिकस्योपवीतस्य न बाधः, किंतु समुच्चयः । भा. १०।४।१।१-२

* लोहितनिरसनं पशालम्भस्य न प्रयोजकं किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ । वि ४।१।१२.

* लोहितशकृतोः पशुप्रयोजकत्वं नास्ति अग्नीषोमीये पशौ । भा ४।१।१२।२८-७.

* 'लौकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते । यानि किञ्चिददृष्टार्थं तत् दृष्टार्थं हि कुर्वते ॥ वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः । अल्पेनापि निमित्तेन विरोध योजयन्ति च ॥ नेच्छेत् प्रसङ्गो नाम दन्तो मीमांसके कथंचित् । न च कश्चन मुक्तेपुर्धर्ममर्मा हि ते सदा ॥ प्रसर न लभन्ते हि यावत् क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥ कचिद्दृष्टेऽदृष्टे हि लोकेऽप्यालम्बमानस्य । जीविता लभते कश्चित् सन्मार्गपतितं स्वयम् ॥ तस्माल्लोकायतत्वाना धर्मनाशनशालिनाम् । एव मीमांसके कार्यं न मनोरथपूरणम् ॥ मयाऽऽदौ श्रद्धया सिद्ध पुनर्न्यायेन बाधितम् । आगमसिद्धप्रमाणकृत पुराणादिचतुष्टयम् ॥ तस्मै सेवानुमन्तव्य कर्तं य नान्यथा क्वचन् । सर्वे स्वयत्नः सीदेद् दुर्नदर्शनतादिवत् ॥ पश्चो योऽङ्गीकृतो येन तमतस्यन् च निर्दिशेत् । हासयेदन्यथा श्रेयान् भीतोपद्रवकारिभिः ॥' वा १।१।२।२ पृ. १७१.

* लौकिकं कर्म अवश्यं समापनीय इति नास्ति नियम । वि. ६।२।४. * लौकिक वचन प्रमाणान्तरसापेक्षम । पुरुषाणां हि वाक्यप्रयोग. प्रतीतार्थप्रत्यायनार्थ. । स च प्रतीतात्यभिचारी इति प्रमाणान्तरप्रतीतिपर्युपस्थापकेन तेन भवितव्यम् । तथा च प्रतीत्युपस्थापकत्वात् अनुमानतैव गम्यते । तेन विपर्ययोऽपि अनुमानस्यैव, न शब्दस्येति । यत् पुरुषेण वाक्य प्रयुज्यते ॥ प्रतीतार्थप्रतिपादनाय । न च प्रमाणान्तर विना प्रतीतिरस्ति । तस्मात् प्रमाणान्तरसापेक्षं लौकिक वचनमिति । ऋजु. पृ २२. * लौकिक वरद 'यथेष्टविनियोग तु मर्यादि वस्तु लौकिकम्' । या. २।१।१६।४८ पृ ५११

* लौकिकं सोमपानं यत् सत्रगतेषु दशपानेषु च बाहुसाम्यार्थमासेव्यमाने सोमे (सोमरसे) । भा १।४।१।१२. * लौकिकान्यपि यानि कृषि-पुत्रपानअध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेन इष्यन्ते । तेषामपि स्वरूपास्थानाशत्वात् संस्कारैरेव विप्रकर्षेणहानसिद्धिः । ते तु अवैदिकत्वात् संस्कारा न अपूर्वशब्दाभिधेयत्वेन प्रसिद्धाः । वा २।१।१।५ पृ. ३९०

* लौकिकान्येव प्रत्यक्षानुमानोपमानार्थापत्त्यभावाख्यानि प्रमाणानि । बाल. पृ.८ * लौकिकानि कर्माणि अष्टकादीनि स्मार्तानि । मा. ८।४।२।२, * लौकिकानि कर्माणि पार्वणस्थालीपाकादीनि । तेषामायतन औपासनोऽग्नि । तस्मात्त नान्याहवनीये प्रसज्येरन् । भा. १२।२।१।१-१

* लौकिकानि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् । मणि पृ. ११. * लौकिकानि वचनानि उपपन्नार्थानि अनुपपन्नार्थानि च दृश्यन्ते- यथा देवदत्त गामभ्याज शुक्लेत्यादीनि, दश दाडिमानि षडपूपा इत्येवमादीनि च । भा १।१।५।५ पृ. ४७, * लौकिकानि वाक्यानि भवन्ति विवाकुर्वन्तु, तद्यथाइयं गौः नेतव्या, देवदत्तीया, एषा हि बहुक्षीरा रक्षणत्या व्यवस्था चेति । १।३।२।२०. * लौकिकअग्नि लौकिककार्येष्विव वैदिककार्येष्वपि शेषमात्र भजते, सर्वकार्यसमर्थत्वात् । अग्निचयने इष्टकापाक लौकिके निर्मन्थ्ये यथा । वि. ७।३।७, १२. * लौकिक. अप्राप्तबाध. (७५) पर्यनिरुक्तिरिप. । प्रत्यक्षेण अनुमानादीनि पञ्च बाध्यन्ते इति ते पञ्च बाधाः । प्रत्यक्षव्यतिरिक्तानां मध्ये यदेव प्रथम प्रवृत्तं तेन उत्तरस्य उत्पत्ति-

प्रतिरूप्य निरूप्यते तेन अनुमानकृता. ४ + उपमानकृता. ४ + शब्दकृताः ४ + अर्थापत्तिकृता. ४ + अनुपलब्धिकृताः ४, सर्वेषां मेलनेन (२५) पञ्चविंशतिविधः भवति अप्रमाणाद्यः । के. ● लौकिकः अर्थापत्तिभेदः. अकर्माङ्गभूतानामपुरुषार्थताभिमत. । शा. ३।४।१०।२८ पृ. ९५७. ● लौकिक प्रत्यग्रतिग्रहः लोके लिप्समानो वा अभिलषमाणो वा यथार्थं लभते यः । भा. ३।४।१०।२८, ● लौकिकः कर्मव्यतीकारः, यथा पार्वणश्राद्धीनाके अष्टकाश्वो आग्रहायणी कर्माणि इति । ७।४।२।२. ● लौकिकः निन्द्यः प्रमाणाद्य. षड्विध. । प्रत्यक्ष–अनुमान– शब्द– उपमान – अर्थापत्ति– अभावैः षडप्रमाणानां भावः इति । बाल पृ. १२१. ● लौकिकः प्रयोगः शब्दार्थसम्बन्धे हेतुः न वैदिकः । भा. २।१।४।१२. ● लौकिकः शब्द. अपि प्रमाणम् । बाल. पृ. ८. ● लौकिकाः धर्मा. अविगीताः विगीतेभ्यः प्रमाणीभूता भवन्ति । भा. १।३।२।३ पृ. ५८१. ● लौकिकाः हि जात्यादिषु नानुपलब्धिमात्रेण 'नास्ति' इत्यवगच्छन्ति, पुनर्दर्शने मिथ्यात्वदर्शनात् । बृहती. पृ. २८९. २ 'य एव लौकिकाः शब्दास्त एव वैदिकाः, त एवामीषामर्था इति (लोकवेदाधिकरणे स्थितम्) । शा. १।३।७।१० पृ. ३४१, ● लौकिकस्य अपि वाक्यस्य अनादितोऽविरोधात् प्रामाण्यम् । १।२।१।२५ पृ. ३८८. ● लौकिकस्य (स्मार्तस्य) विधेः (वेदे) अभावात् निगमस्य एव नास्ति, तुल्यकक्ष्यता । शा. ७।८।२।१०, ● लौकिकानां (स्मार्तानां) मान्त्राचारपद्धीनां दर्विः 'ब्रह्मचारिणा मन्त्रवत्या दर्व्या जुहोति' इति । ८।४।४।६, ● लौकिकानां स्थालीपाकादीनां स्मार्तानाम्, वैदिकस्य च वास्तुहोमस्य दर्विहोमशब्दो नामधेयम् । ८।४।२।२-३. ● लौकिकेऽग्नौ आशीर्विपक्षः । ६।८।४।१२. मीको. पृ ६७६ 'आशीर्विपक्षाधिकरणम्' इत्यत्र द्रष्टव्यम् । ● लौकिकेऽग्नौ उपनयनहोमः । ६।८।२।११–१९. मीको. पृ. ११८७ 'उपनयनहोमाधिकरणम्' इत्यत्र द्रष्टव्यम् । ● लौकिकेऽग्नौ चतुर्होतृमन्त्रैर्होमः । वि. ६।८।१.

सू लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् । ९।३।३।९॥

अग्नीषोमीये पशौ 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहून् एते ते वायवः इति' इत्याम्नायते । इदं प्रायश्चित्तं लौकिके वैदिके वा यूपोपस्पर्शने उत वैदिके एव अथवा लौकिक एवेति विचारे सिद्धान्तमाह । लौकिके एव यूपोपस्पर्शने इदं प्रायश्चित्तं भवितुमर्हति, न वैदिके । लौकिके एव दोषसंयोगात् । यूपस्य हि अञ्जनं उच्छ्रयणं च कर्म यजुर्भिः तान्यवरोप्य तत्र स्पर्शः । तस्मात् लौकिके एव दोषस्य गमकः । तस्मात् तत्रैव निमित्तेन स्पर्शनेन प्रायश्चित्तं चोद्यते अपवृक्ते समाप्ते कर्मणि । प्रकृतौ वैदिके यूपोपस्पर्शने प्रायश्चित्तस्य अभागित्वात् आम्नानेन अप्राप्तत्वात् । तस्मात् कर्मसमाप्त्युत्तरकाले लौकिके स्पर्शे प्रायश्चित्तं इति सिद्धान्तः । के.

● लौकिके पुनर्पानाय ग्रहणार्थं क्रियमाणे (सोमपाने) (वमते च यमने) न किञ्चिद् दुष्यति । वमनादेव हि तं विदन्ति लोके । भा. ३।४।१२।३११, ● लौकिके प्रत्यक्षानुमानावगते दृष्टफले कर्मणि असमाप्य संस्थेऽपि न दोषः । यदा तु प्रत्यक्षानुमानाभ्यां अनवगमने दोषप्रसङ्गस्तदा समापनीयमेवेति शास्त्रेण सिध्यति । वि. ६।२।८. ● लौकिके यूपोपस्पर्शने प्रायश्चित्तं न वैदिके । भा. ९।३।३।९, ● लौकिके हि (अग्नौ) पाके मासप्रसङ्गो न वैदिके (अग्नौ) श्रामित्रे मांसपाकः । १२।२।१।२. ● लौकिकेषु अग्निषु निषादस्थपतीष्टिः । ६।८।३।२०–२१. मीको. पृ. २१८९ 'निषादस्थपतीष्टिः लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु' इत्यत्र द्रष्टव्यम् ।

सू लौकिकेषु यथाकामी संस्कारार्थलोपात् । ११।३।१२।३५॥

समादि. वेदाः, कर्णिन, सुमार्जनि च पात्राणि इत्येतेषु लौकिकेषु पदार्थेषु यथाकामी यथा कामयते तथा स्यात्, प्रतिप्रयोगं अन्येऽन्ये उपादातव्याः तेन एव वा प्रतिप्रयोगः इति । कुतो यथाकामता ? संस्कारार्थलोपात् संस्कारस्य अर्थे प्रयोगस्य तयोः लोपाभावात् । न कश्चित् पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृत.,

योऽन्योपादानं दुष्येत । नापि अध्याहारः, न ह्येषोऽपि हि शक्यते प्रयोगः कर्तुम् । तस्मादनियम इति सिद्धान्तः । के

* ननु च यद्यपि नापत्यशाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते निमित्तभावात्, 'अङ्गुल्यग्रे हस्तियूथशतम्' इति । तत् अद्धाऽपरिहृतेर् अर्थामिस्य वितथाशङ्का । नैवम् । अनभिज्ञो भवान् वाक्यार्थस्य मायस्य । अङ्गुल्यग्रे हस्तियूथशतमिति, प्रमाणान्तर दर्शनमत्र नाप्यते, न पुनः हस्तियूथशतमिति । बृहती पृ २१. * लौकिकी (स्मार्ता) इनिकर्तव्यता आचारात् औपासने कर्तव्या । शा ७।४।१ * लौकिकी इति कर्तव्यता पार्वणस्थालीपाके, अष्टकान्तरो, आग्रहायणे कर्मणि । भा ७।४।२।२ * 'लौकिका प्रतिपत्तिर्हि गौणत्वेनापि नीयते । नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता । लौकिकत्वन्यथात्वेऽपि नार्थोऽतीव निरूप्यते ॥' वा १।३।४।९ पृ २१७ * लौकिकी वैदिकी च इति तुलार्थापत्तिरपि द्विविधा । बाल पृ ८, * लौकिकी वैदिकी च इति समाख्या द्विविधा । पृ १२

* लौकिकाग्नौ उपनिधान गर्तनिरासे आयदोहस्तोत्र पाठे । ७।३।१२।३०–३२ मीको पृ १५४३ 'गर्तनिरासे आयदोहस्तोत्रपाठे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* लौकिकोपायस्यादिवनुपर्यन्तीवानीना ऋतुषु विनियोग । वि ३।६।५

* लौकिककर्मणि आरम्भस्यापि समाप्तिर्न नियता । ६।२।८।१७–१९, मीको पृ १८५० 'तदधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * लौकिककर्मणा गार्हपत्याद्यग्निषु नानुष्ठानम् । भा १२।२।१।१–७ 'विहाराधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* लौकिककर्माङ्गानां इष्टता प्रत्यक्षेण निश्चीयते, वैदिककर्माङ्गानां तु श्रुत्या । वि ८।१।१ वर्णक १

* लौकिकन्यूपस्पर्शो पुरुषार्थतया शास्त्रविहितम् । ९।३।३।९. मीको पृ १२८ 'अग्नीषोमीये पशौ वाचंयमत्वयुत्तर०' इत्यत्र द्रष्टव्यम् ।

* लौकिकवाक्यानां प्रमाणान्तरापेक्षत्वात् प्रमाणान्तरत्वेन अथमध्यापकत्वम् । ऋजु पृ १२

* 'लौकिकसाधारण्येनाकारेण शब्दसमर्पिते एव पूर्वोत्पदार्थे संस्कारवशात् वाक्यबोधने सति तदनन्तरं तस्य पूर्वोत्पन्नानागतौ अथात संस्कारस्य अपूर्वविषयत्वमर्थसात' इत्यत्र न्याय 'त्वे पयसि दध्यानयति' इत्यत्र द्रष्टव्यम् । रसायनम् पृ २५०

* ल्यप्—परादेश विनियोक्त्री श्रुति सोमेश्वर मतेन यथा— 'तस्या आरभ्याधाये' इत्यादि । बाल पृ ६०

* ल्यबादे एककर्तृकत्व–पूर्वकालत्वयोः न कल्पार्थ अङ्गाङ्गिभावनीभक्त्वा न सिध्यति । निमित्तनैमित्तिकभावो नापि एककर्तृकत्वादेरुपपत्ते । यथा 'एतादृशाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेत' इत्यत्र । नि १०।२।१२

व

* वक्त्रानुक्रमप्र ब्राह्मणश्चत्रियवैश्यात्रानार्थं दर्शन स्मरणमूलम् । वा १।३।१।२ पृ १६७

* वक्तृणां पदान्वयगर्भो वाक्यप्रयोगः । वा ३।१।१४।४६ पृ ४४४

* वक्तृक्रमविपर्ययेण श्रोतृक्रमः पदार्थवाक्यार्थ ज्ञाने । सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतुः क्रमो भाति । ■ हि प्रथमं तावत् किञ्चित् विशेष्यं विवक्षति ततस्तस्य केनचित् विशेषणेन विना अभिधानुमशक्ते निशरणमनयस्य करोति तत शब्दोच्चारणम् । श्रोता पुनः प्रथमं तावत् शब्दं शृणोति, ततो विशेषणम्, ततो विशेष्यम् तत तदुपपत्त्यादि वस्त्वन्तराणि ■ सर्वे । तेन यद्यपि वक्त्रा पूर्वं सर्वाघ आलोचितं तथापि श्रोता पश्चादेवैन प्रतीष्यति । वा ३।१६।१२ पृ ६७६

* वक्तृज्ञानानुमानम् । सम्प्रति पौरुषेयवाक्यानां वक्तृज्ञानानुमानमात्रजनकत्वेनैव अथप्रतिपादकत्व इति प्रतिपाद्यते । युक्तशब्दश्रवणमात्रात् अर्थप्रतीति त्रिविधि

जायते इति चेन्न, व्युत्पन्नशब्दोच्चारणेऽपि वक्तुरभिप्रायनिश्चयेऽर्थाभिधानादर्शनात् तात्पर्यज्ञानमपि सामग्रीत्वेन कल्प्यते। तात्पर्यज्ञानं च इममर्थमयमस्मै प्रतिपादनायेदं वाक्यमुच्चारितं इत्यनुमानम्। अतश्च प्रमाणान्तरान्तर्भावः।

ननु अस्तु वाक्यमात्रादनभिधानम्, आप्तवाक्यस्य दोषरहितस्यार्थावबोधकत्वं किमिति नाश्रीयते? नैवम्, आप्तस्यापि दोषराहित्यमेवाशक्यं तथाभूतस्यापि अन्यपरप्रयोगो दृश्यते, यथा– 'विषं भुङ्क्ष्व' इत्यादौ भोजननिवृत्तिपरे वाक्ये। अतः प्रमाणान्तरेणावगते तात्पर्येऽर्थनिश्चयः तात्पर्यनिश्चयात् अर्थनिश्चयः, तात्पर्यनिश्चयश्च वक्तृज्ञानानुमानद्वारेणैव भवतीति आप्तवाक्यस्यैव लिङ्गत्वमुपपन्नम्, विप्रलम्भकवाक्येऽपि योग्यार्थज्ञानपूर्वकत्वाद्यभिचारात्।

ननु कथं ज्ञानमनुमीयते? न तावत् ज्ञानमात्रस्यानुमानम्, ज्ञानमात्रविशेषनिश्चयाभावादेव अनुमानवैयर्थ्यं स्यात्, न तावत् विशिष्टज्ञानानुमानम्, अर्थेनैव ज्ञानस्य विशेषः नान्येन, अतोऽर्थनिश्चयेन विशिष्टज्ञानानुमाने निश्चिते च अनुमानवैयर्थ्यमेवेति कथं वक्तृज्ञानानुमानम्? नैवम्, वाक्यश्रवणे सति अभिधानात् प्रागेव पदैः पदार्थाः स्मर्यन्ते, स्मृतानां च पदार्थानाम् एवमन्वेतुं योग्यं नैव इति विमर्शः जायते, अतो न्यायसंपादितेन विमर्शेन विशिष्टोऽर्थो बुद्धिस्थः, तेनैव विशिष्टज्ञानानुमानम्। ननु विमर्शो नाम कीदृशः? स च प्रमाणमप्रमाणं वेति अपि न विद्मः। उच्यते— विमर्शस्तावत् अभिधानात् प्रागेव भवद्भिरप्यङ्गीकृतः, इतरथा अभिहितैः पदार्थैः विशिष्टोऽर्थो जातु न शक्यते, पदार्थानामनेकार्थसाधारणत्वात् कस्य विशिष्टार्थस्य गमकाः भवेयुः? आकाङ्क्षासंनिधियोग्यतायुक्तार्थस्य गमका इति चेत्, तर्हि स एव विमर्शशब्दार्थो युष्माभिरप्यङ्गीकृतः। स च प्रमाणेतिकर्तव्यतारूपः न प्रमाणमात्रम्, न च स्मृतिमात्रं वा, विमर्शानङ्गीकारे च प्रत्यधिकरणं पूर्वपक्षसिद्धान्तवचनवृत्तिविमर्शो न स्यात्।

केचित्तु विप्रलम्भशङ्कया तिरोहितत्वादर्थनिश्चयो न जायते। 'पुरुषत्वे तु विप्रलम्भशङ्कया सा तिरोहिता' इत्युक्तत्वादित्याहुः। तदयुक्तम्, अभिधानसामग्रीसद्भावे सति प्रत्ययस्याप्रतिबन्धकत्वात्। इतरथा कर्तृनिर्णयसद्भावेऽपि प्रतिबन्धकत्वप्रसङ्गः, अनुमाननिश्चये च प्रसङ्गस्तुल्यः। अतः सामग्र्यभावादेवानभिधानम्।

ननु एवं व्यवहारप्रसिद्धिविरोधः, पौरुषेयवाक्येभ्यो हि व्युत्पत्तिः, वाक्यं च नाभिधायकम्, लिङ्गमेवेत्युक्तम्। नैवम्, शक्तिविभागे व्यभिचाराशङ्का। लिङ्गेन च उत्तरकालेऽर्थनिश्चयश्च। अतो वक्तृज्ञानानुमानद्वारेणैव अर्थनिश्चय इति सिद्धम्। प्रचि. पृ. ७–११.

वचसि बहवो गुणा इति न्यायः। अत्र वचसि अनृणो इत्यर्थः। यथा वदेन्तु शिवेन शिरसा धार्यते, लोकैश्च नमस्यते इति सर्वत्र ज्ञेयमिति। साहस्री. ८८६

● वङ्क्रयः एक पार्श्वीय। तत्र अश्वस्य एकस्मिन् पार्श्वे सप्तदश, एकस्मिन्नितरपार्श्वे। इतरेषां पशूनां तु त्रयोदश त्रयोदश एकैकस्मिन् पार्श्वे। भि. ९।४।१–२. ● वङ्क्रयः अश्वस्य चतुस्त्रिंशत्। भा. ९।४।२।१७, ● वङ्क्रयः गोमृगस्य षड्विंशतिः। अथ अश्वमेधे सवनीयः पशुस्तृतीयः। ९।४।२।१७, ● वङ्क्रयः तूपरस्य षड्विंशतिः। अथ अश्वमेधे सवनीयः पशुः द्वितीयः। ९।४।२।१७, ● वङ्क्रिभिः. गणितामिह प्रयोजनम्, कृत्स्नं पार्श्वमुद्धरेत् इति। ९।४।१।७.

● वङ्क्रीयत्ताप्रकाशनार्थं अश्वमेधे अध्रिगुप्रैषे अश्वतूपरगोमृगाणामर्थे वैशेषिकसंख्याकरणपक्षे 'षड्विंशतिरस्य वङ्क्रयः' इति समासवचनम्। ९।४।२।१७–२१. मीको. पृ. ७४१ 'अश्वमेधे अध्रिगुप्रैषे अश्ववङ्क्रीयत्ताप्रकाशनार्थं०' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वङ्क्रीयत्ताप्रकाशनार्थे अध्रिगुप्रैषे पशुगणे समस्य संख्यावचनं कार्यं 'द्विपञ्चाशदस्य वङ्क्रयः' इत्यादि। ९।४।२।१–१६. मीको. पृ. ३४६ 'अध्रिगुप्रैषे पशुगणे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

● वचसैव कारयति इत्यादिवत्। न च प्रथमान्तपदोक्तव्यापारार्थकत्वमेव 'वचसैव कारयति' इत्यादिवत्, तर्हि अस्तु इति वाच्यम्। भाट्ट ५।१।११.

* वचनं अतिदेशे प्रमाणम् । मणि पृ १३ * वचनं न प्रमाणम् । अत 'वचनात्' तृतीयश्रवणे षोडशिग्रहणम् । भा १०।५।११।४४ * वचनं न्यायात् बलीयः । सर्वपृष्ठे पञ्चा पृष्ठाना देशे वचसा वचनात्, न तु न्यायात् प्रकृतावित्र । वि १०।६।५ * वचनं लौकिकं 'नद्यास्तीरे फलानि सन्ति' इति, तत् तथ्य मपि भवति वितथमपि भवतीति । भा १।१।२।२ पृ १३ । यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा, अवितथमेव तत् । अथ त्वप्रत्ययितात् अनिन्द्रियविषयं वा ततः पुरुषबुद्धिप्रभवमप्रमाणम् अशक्यं हि तत् पुरुषेण ज्ञातुं ऋते वचनात् । १।१।२।२ पृ १५, * वचनं लौकिकं वैदिकं च । पौरुषेयं अपौरुषेयं चेत्यर्थः । तत्र पौरुषेयाद् वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः न 'एवमयमर्थ' इति । विप्रतिपद्यते हि एतदपि कश्चित् पुरुषकृतात् वचनात् प्रत्यय । न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति । १।१।२।२ पृ १६ १७, * अप्रति अववादो वचनं बाधकं भवति । ३।५।७।२२, * किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । २।२।१३।२७ ३।२।२।३, ५।४।४।१०, ६।६।७।११, १०।८।२१।४२, १०।५। २५।८६, ११।४।४।१३, १२।४।७।११, ८ न च शक्यते प्रत्यक्षेण प्रो वदितुम्, किमत्र वचनं करिष्यति । ३।२।२।४, * न्यायपूर्वकं हि वचनं बाधकं भवति । ७।४।२।५, * प्रत्यक्षविरुद्धं वचनं न प्रमाणं भवति । यथा अम्भसि मग्नानि अलाबूनि, शिलाः प्लवन्ते, पावकः शीत इति । ४।३।५।१० * वचनानि प्रमाणानि । 'वेदैर्वाप्यनुज्ञाता येषामेव प्रवर्तिता । नियतानामभिधेयानां स च तद्युगादिषु ॥ नेषा विपरि यत्न कुर्वतां धर्मसंहिता । वचनानि प्रमाणानि नान्येषां (बौद्धादीनां) इति निश्चय ॥ तथा च प्रायश्चित्त दानकाले यो वाक्यमार्गीयम्, अन्यकविकृतं वा श्लोकम्, सूत्रं वा उदाय मानवादिप्रायश्चित्तं दद्यात्, न कश्चिदपि धर्मार्थं प्रतिपद्येत । वा १।३।३।७ पृ २०२ * वचनेन अङ्गप्रधानयोर्भिन्नकालकर्तृत्वाधिकरणम् । ११।१।१।१ मीको पृ १०७ 'अङ्गप्रधानयोः वचनबलात् भिन्नदेशकालकर्तृकत्वमपि' इत्यत्र अधिकरणम् ।

वचनादनुज्ञातभक्षणम् । ३।५।१३।४०॥

अथ एकपात्रे सोमोऽनेकेन भक्ष्यते । किं तत्र अनुज्ञाप्य अननुज्ञाप्य वा भक्षयितव्यम् उत अनुज्ञाप्यैवेति । अयं च संदेहो भाष्यकारेण 'तस्मात्सोमो नानुपहूतेन पेयः' इत्यस्य वचनस्य विषयप्रदर्शनार्थं प्रदर्शितः, न तु विचारार्थम् । प्रत्यक्षे वचने सति संदेहाभावात् । तेन सूत्रमिदं वचनगतस्य उपहूतपदस्य अनुज्ञारूपार्थकथनार्थं उत्तरविचारविषयप्रदर्शनार्थं चेति बोध्यम् । दीना

वचनादनुज्ञानभक्षणम् । ३।५।१४।४०॥

ज्योतिष्टोमे सोमभक्षः यदा एकपात्रे अनेकैः क्रमेण क्रियते तदा किं भक्षयिता आद्यात् अनुज्ञाप्य भक्षयेत् अनुज्ञा अगृहीत्वैव वा भक्षयेत् इति संदेहे लाघवात् अनियमे प्राप्ते सिद्धान्त उच्यते । एकपात्रे इति पदं पञ्चमिसूत्रादनुवर्तते । एकपात्रे भक्षणे कर्तव्ये अनुज्ञातस्यैव सोमस्य भक्षणं कर्तव्यं न तु अननुज्ञातस्य । कुतः । 'तस्मात् सोमो नानुपहूतेन पेयः' इति वचनात् । उपह्वानं च अनुज्ञापनम् । के

* वचनात् यत्किंचित्त्वं कृत्वा नवावधानानामपि अङ्गानाम् । यथा 'आग्निमारुतादूर्ध्वं अनुयाजैश्चरन्ति' इति । भा ११।३।४।६, ८ वचनात् अन्यथेहाऽप्यनुक्रमाङ्गानाम् । ११।३।१।१ * 'वचनात्' इत्युक्ते प्राप्तोऽस्त्येव कार्येऽर्थे वचनस्य हेतुत्वं यम् । अत एव परंपराया अपि न प्रमाणा तद्गोचरो धर्म इति सिद्धम् । बृहती पृ २१

वचनादिष्टिपूर्वत्वम् । ५।४।३।५ ॥

आधानं कृत्वा ततः पूर्वं दर्शपूर्णमासेष्टिर्वा कर्तव्या ततः सोमः, अथवा आधानं कृत्वा ततः पूर्वं सोमः कर्तव्यः ततो दर्शपूर्णमासौ इति इष्टिपूर्वत्वं सोमपूर्वत्वं चेति विचारे पूर्वपक्षमाह । आधानस्य इष्टिपूर्वत्वं स्यात्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति वचनात् । के

वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य । ६।३।१३।३१ ॥

ज्योतिष्टोमे, अभावे सोमस्य अभावे अलाभे, अन्यस्य च कस्यचिदपि सुमहतोऽलाभात् सङ्कल्पयितुमयोग्य

मपि पूर्वोक्तरूपं 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति वचनात् प्रतिनिधिः स्यात्। तत्सामान्येन गुणद्रव्याभावेऽपि मन्दसदृशस्वरूपेण तत्सामान्येन सोमसादृश्येन हेतुना पूतीकद्रव्यं प्रतिनिधिः स्यात्। इतरथा मुख्यस्य सोमस्य अभावात् यागस्य च अप्रवर्तनं स्यात्। के.

§ वचनात्त्वयथार्थमैन्द्री स्यात्। ३।२।२।३ ॥

अग्नौ श्रूयते— 'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र सन्देहः किं इन्द्रस्योपस्थानम्, उत गार्हपत्यस्य इति। इदानीं पूर्वाधिकरणापवादः क्रियते। अत्र 'निवेशनः सङ्गमनो वसूनाम्' इति मन्त्रेण इन्द्रस्य देवतात्वस्य वसुनिवेशनसङ्गमनकर्तृत्वेन यथा इन्द्रोऽभिधातुं शक्यते, तथा 'भुवोऽध्वरस्य सोमस्य विष्णुश्चाग्निरेवोऽनल.' इति वेदं वसुरूपस्याग्नेः 'वसूनां पावकश्चास्मि' इति श्रेष्ठत्वकीर्तनात् वसुनिवेशनसङ्गमनकर्तृत्वेन अग्निरप्यभिधातुं शक्यते एव। तथापि 'ऐन्द्र्या' इति तद्धितश्रुत्या इन्द्रस्यैव प्राधान्येनाभिधानं वेदानुमतमिति मन्त्रोऽयमुदाहृतम्। अत एव वार्तिके स्फुटोदाहरणप्रतिपादनेन्द्रपदस्यानेन मन्त्रोऽन्य शाखान्तरे पठ्यते इति निर्दिशत— 'कदाचन स्तरीरसि नेन्द्र सश्चसि' इति। अयमत्र पूर्वपक्षिणोऽभिसन्धिः। यद्यप्यस्य मन्त्रस्य श्रुत्या गार्हपत्यशेषत्वं प्रतीयते। श्रुतिश्च लिङ्गात् बलीयसी, तथापि अशक्यार्थेऽसमर्थस्य श्रुतिबलेनापि विनियोक्तुमशक्यत्वात् न गार्हपत्येऽस्य विनियोगः सम्भवति। यतो नानेन इन्द्राभिधायकेन मन्त्रेण कथञ्चिदपि गार्हपत्योऽभिधातुं शक्यते। न चाभिधानं विना प्रकारान्तरेण अस्य मन्त्रस्य गार्हपत्यशेषत्वमनेन वाक्येन प्रतिपाद्यते इति वाच्यम्। उपतिष्ठते इत्यात्मनेपदविरोधात्। 'उपान्मन्त्रकरणे' (पा. १।३।२५) इत्युपपूर्वात् तिष्ठतेर्मन्त्रकरणेऽर्थे आत्मनेपदं विधीयते। कथं गार्हपत्यमिति द्वितीयेति चेत्, उच्यते। वचनं तावद्देवतानिधानार्थमेव। द्वितीया च सक्तुवदविवक्षितेप्सितार्था कारकसामान्यलक्षणाद्वारेणाधिकरणमाचष्टे। तेनायमर्थः — गार्हपत्यदेशे स्थित्वा ऐन्द्र्या इन्द्रोपस्थानं कर्तव्यमिति। एवं प्राप्ते, अभिधीयते। मन्त्रेण यदि मन्त्रश्रुतिविरोधेऽपि मन्त्राणां मुख्यार्थत्वमुपपद्येत तथापि अवश्यं तावदत्र एकस्यामुख्यार्थत्वं वक्तव्यम्। तत्र हि मन्त्रानुरोधेन ब्राह्मणवाक्यगतगार्हपत्यपदे वृत्त्यन्तरमाश्रीयताम्, ब्राह्मणानुरोधेन वा मन्त्रगतेन्द्रपदे, तत्र ब्राह्मणस्याज्ञातविधित्वेन स्वतःप्रमाणत्वात् प्रथमप्रवृत्तेश्चानन्यप्रमाणत्वेऽर्थे गौणत्वमयुक्तम्। मन्त्रस्य तु ब्राह्मणविहितार्थप्रतिपादकत्वेन तत्परतन्त्रप्रवृत्तेः ब्राह्मणप्रतिपादितार्थानुरोधेन गौणत्वमेव युक्तम्। तदुक्तम्— 'गौणत्वं यत्र नाम स्यात्कयोश्चिद् ब्राह्मणमन्त्रयोः। तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥' इति (वा. पृ. ७५२)। तेन मन्त्रगत इन्द्रशब्दो गार्हपत्यसाधनत्वगुणयोगाद्गार्हपत्यं प्रकाशयति। अथवा 'इदि परमैश्वर्ये' इति धातोरयमिन्द्रशब्दो व्युत्पन्नः। अग्नेश्च यद्यपि परमैश्वर्यं नास्ति, तथापि स्वकार्ये तावत् दाहपाकादौ ऐश्वर्यमस्ति। तेन ऐश्वर्यगुणयोगाद्वा अयमिन्द्रशब्दो गार्हपत्ये गौणः। तदुक्तम्— 'स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंयन्धकारितम्। इन्द्रत्वस्यानुमानाद्वा स्वकार्ये सोऽपि हीश्वरः ॥' इति (वा. पृ. ७५५)। तस्मात् इन्द्रशब्द एव गार्हपत्ये गौण इति सिद्धम्। यत्तु बलाबलाधिकरणेनैव गतार्थत्वात् इदमनर्थकमिति केचित् चोदयन्ति। तदयुक्तम्। श्रुतिलिङ्गबलाबलनिर्णयस्यैव तदधिकरणार्थत्वात्। तथाहि श्रुतिविरोधे गौणानामपि मन्त्राणां मन्त्रत्वं भवतीत्येतदधिकरणसिद्धं भवति यदा, तदा तत्र श्रुतेर्बलवत्त्वं वक्तुमर्हति, अन्यथा अशक्यार्थे विनियोगासम्भवात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन श्रुतिरेवान्यथा नीयेतेति न किञ्चिदनुपपन्नमिति।

प्रयोजनम्— पूर्वोक्तम्। सूत्रं तु— वचनादैन्द्री अयथार्था गौणार्थेत्यर्थः। तौना.

§ वचनात् त्वयथार्थमैन्द्री स्यात्। ३।२।२।३ ॥

'कदाचन स्तरीरसि इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते। अनया किं इन्द्रस्योपस्थानं कर्तव्यं लिङ्गात् उत तृतीयाश्रुत्या गार्हपत्योपस्थानं इति विचारे सिद्धान्तवादः। वचनात् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'

अपच्छेदाभाव. अन्वारम्भ. उक्त. सः कारणात् स्यात् अध्वर्योः साहाय्यार्थं. स्यात् । यूपान्तरे उच्छ्रिते सति अवसृजेत् उच्छ्रयणेन कारणेन । न तु तेन परिव्याणान्तता सिध्यति । यथा पशौ 'पृषदाज्येन अनुयाजान् यजति' इति पृषदाज्यधारणार्थं पात्रस्य विशुद्धिर्भवति पात्रभेदो भवति अर्थात् तथा प्रकृतेऽपि अर्थात् अनवसर्गः न तु असौ नियामकः ।

वृत्तौ तु कारणात् अध्वर्योः सहायापेक्षारूपकारणात् अवसर्गः यजमानातिरिक्तकल्पना स्यात् । यजमानकार्ये अन्वारम्भे अन्य. कल्पः स्यात् इति व्याख्यातम् । अवसर्गः इत्येव च पाठो गृहीतः । कुतूहलेऽपि पदार्थानुसमयभङ्गात् कारणात् अत्र अवसर्गः स्यात् इति व्याख्यातम् । परंतु 'अवसर्गः अन्वारम्भः स्यात्' इति तत्र केचः । स च न युज्यते । अवसर्गः अवसर्जनं त्यागः अपच्छेदः इत्यर्थः । अन्वारम्भस्तु अनवसर्गः ।

**वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्रविवृद्धिः । ९ ॥**

यूपैकादशिन्या अञ्जनादिपरिव्याणान्तेन गुणकाण्डेन अनुसमयः इति सिद्धान्ते उक्ते पूर्वपक्षिणा 'कारणाद्वाऽनवसर्गः ०' इति सूत्रेण कृतां शङ्कां सिद्धान्ती निरस्यति । वाशब्दो निरासद्योतकः । न पदार्थानुसमयः किन्तु परिव्याणान्तेन पदार्थकाण्डेन अनुसमयः स्यात् । अनवसर्गः अन्वारम्भस्तु न कारणात् किंतु शब्दकृतत्वात् 'यूप नारभेत आ यूपपरिव्याणात्' इति वचनादेव । शक्नोति हि कर्नैऽपि यजमानात् अध्वर्युः यूपमुच्छ्रयितुम् । इतरत् यूपसहव्यापकप्रयोगवचनन्तु न्यायमानम् । प्रयोगवचनात् चोदनां स्यात् । पशौ पृषदाज्यपात्रविशुद्धिस्तु अर्थात् उपभृतः आज्यग्रहणे व्यापृतत्वात् पृषदाज्यधारणानुपपत्तेः । के

* 'वचनात्तु समुच्चयः' ( ३।६।१६।४५ ) इति सिद्धान्तेऽपि दर्शनमेव आगन्या वचनीकृत्य समुच्चयं वक्ष्यति । वा. ३।६।१६।४२ पृ. १०६४. * वचनात् मातृयामाभिधानात् । 'पुत्रा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुभनाः । न ते निर्मन्त्रयतां यान्ति विनियोज्याः पुनः पुनः ॥' इति स्मृतेः । ( वा. ३।२।८।२४ ) । सु. पृ. ११२१.

※ **वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् । ६।१।१२।४४ ॥**

रथकारस्य त्रैवर्णिकभिन्नस्य जातिविशेषस्य आधाने अग्न्याधेये अधिकारः अपेतव्य., 'वर्षासु रथकार आदधीत' इति वचनात् । अस्य रथकारकर्तृकाधानस्य सर्वशेषत्वात् सर्वेषां त्रैवर्णिकानां आधानेभ्यः अवशिष्टत्वात् । अथवा अस्य रथकारस्य सर्वेभ्यः त्रैवर्णिकेभ्य अवशिष्टत्वात् । इति पूर्वपक्षः । अत्र रथकारः त्रैवर्णिक एव इति पूर्वपक्षाशयः । त्रैवर्णिकेभ्यः किंचित् हीनः न तु सर्वथा अत्रैवर्णिकः इति तु सिद्धान्ते भविष्यति ।

**न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् । ४५ ॥**

'वर्षासु रथकार आदधीत' इति आधानाधिकारी रथकारः अत्रैवर्णिकः इति पक्षे सूत्रेण प्राप्ते इदमाह । न्याय्यः न्यायादनपेतः धर्माधिकारत्वायत्तपक्ष. त्रैवर्णिक एव रथकार. स्यात् । न अत्रैवर्णिकः इति वाक्यार्थः । त्रैवर्णिकस्यापि रथकारशब्दस्तु कर्मसंयोगात् रथनिर्माणरूपकर्मणा संयोगात् स्यात् । शूद्रस्य तु धर्मेषु प्रतिषिद्धत्वात् न शूद्रो रथकारः । तस्मात् त्रैवर्णिकः कदाचित् रथकर्मकर्ता रथकार. स्यात् । तस्य वर्षासु आधान इति कश्चित् ।

'न्याय्यो वा स्यात्' इति पाठः कुतूहले । नीयते इति न्याय्य । धर्मेषि यत् । रथकर्मसंयोग प्रवृत्तिनिमित्त आश्रित्य रथकारशब्द. अत्र त्रैवर्णिकेष्वेव नेतव्य. इति तदर्थः । शेषं समानम् ।

**अकर्मत्वात्तु नैवं स्यात् । ४६ ॥**

पूर्वसूत्रोक्तपक्षनिरासार्थ. तुशब्दः । 'वर्षासु रथकार आदधीत' इत्युक्तो रथकारः एवं त्रैवर्णिक न स्यात् । अकर्मत्वात् त्रैवर्णिकस्य शिल्पकर्मशून्यत्वात्, 'न जीवेद्युद्धिजाः शिल्पैः' इति निषेधात् ।

**आनर्थक्यं च संयोगात् । ४७ ॥**

'वर्षासु रथकार आदधीत' इत्युक्तो रथकार. त्रैव

* वचने प्रत्यक्षे सति न आनुमानिकम् । १।२।४।३४. * प्रत्यक्षवचने सति सामर्थ्यं अप्रापकम् । वा. २।३। ३।८. पृ. ५८९

* वचनातिदेशः इत्यत्र वचनं द्विविधं प्रत्यक्षश्रुतं आनुमानिकं चेति । बाल ॥ ११८.

* वचनानर्थक्यात् वरं पदमात्रस्य कल्पना । सोम ७।१।८.

* वचनतः श्रुतिः ( त्रिभिः प्रकारैः श्रुतिर्भवति, व्यापारत, फलतो वचनतः इति ) । आर्त्विज्यभवाया आधिक्य वचनस्य विषय. । आर्त्विज्यमर्थं यद् द्रव्य सा भृतिः, सा दक्षिणा । ततोऽधिक दक्षिणात्वे सिद्धं वचन-प्रामाण्यात् भवति । विकृतौ कल्पेन वचनप्रामाण्यात् अत्यन्तकल्पकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमस । भा. १०।३।११।४५.

* वचनप्रामाण्यात् प्रतिषेधो विधिं बाधित्वा भविष्यति । विधिरपि प्रतिषेधम् । नान्या गतिरस्ति इति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । यदा विधि. तदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । भा. १०।८।३।६.

* वचनमात्रस्य ऊहो यथा–'छागस्य वपाया मेदस' इति प्रकृतौ । अजापत्येषु तु ' छागानां वपानां मेदसा ' इति । बाल. पृ. १२७.

* वचनविभक्तयोर्विभक्तिः प्रधानम् , कारकवाचि त्वात् । वचन तु गुणः, कारकसंख्याभिधायित्वात् । वि. ५।३।५

* वचनव्यक्तिः । अन्या हि वचनव्यक्तिः विधीय-मानस्य, अन्या गुणेन उपव्याख्यानस्य । अज्ञातस्तु शास्त्रेण विधीयमानोऽर्थं , ज्ञातस्त्वनूद्यते गुणसंबन्धार्थम् । न च सकृदुच्चार्यमाणः शब्दः ज्ञातश्च अज्ञातश्च भवितुमर्हति । भा. ३।१।६।१२ पृ. ६९०.

* वचनशतेनापि अशक्यविनियोगप्रयोग. । मु. पृ. १०८९. * वचनशतेनापि नहि इन्द्रशब्द शक्तो गार्हपत्याभिधानसमर्थः कर्तुम् । वा ३।२।२।४ पृ ७५४. * न वचनशतेनापि शक्यमेतत् । इन्द्रशब्देन अग्निं प्रत्याययेदिति ब्रुवन् विहन्येत । यथा अग्निना सिञ्चेत्, उदकेन दीपयेदिति । भा. ३।२।२।४, * नहि वचनशतेनापि अनारभ्योऽर्थः शक्यते विधातुम् । यो हि ब्रूयात् ' उदकेन दग्धव्यम् , अग्निना क्लेदयितव्यम् ' इति किं स वचनप्रयोजनमसमञ्जसमनुवीत । ३।१।६। १२ पृ. ६९१.

* वचनाभक्षणादिक्रियाफल मेधादिप्राप्तिः । सु पृ. ५९.

§ वज्रलेपन्यायः । अयं वस्तुनः सुदृढमुख्यत्व-विवक्षाया प्रवर्तते । साहस्री. ७७५.

* वज्रिणी नाम इष्टकाः अग्निशेष., न तु चिति-शेष. । तेन ता. उत्कृष्यपघातव्याः न तु प्रतिचिति । प्रकृष्ट-काधिकरणम् । भा. ५।३।६।१५–१६, * वज्रिणी नाम इष्टकाः अप्रकरणे समाम्नाताः । तासामपि अग्न्यर्थतात् अखण्डत्वम् , अकृष्णत्वम् , अस्मसंयोगः, इति धर्मा कर्तव्याः प्रकरणात् वाक्यस्य बलवत्त्वात् । ३।६।१२।१९, * वज्रिणीनां इष्टकाना मध्यमचितौ उपधानम् । ५। ३।७।१७–१९, तत्र प्राक् लोकंपृणायाः स्यात् । ५। ३।८।२०.

* वञ्जुल अग्नु जायते । ' अप्सुजो वेतस ' इति वञ्जुले वेतसशब्दं दर्शयति । भा. १।३।४।९

§ वटे यक्षन्यायः । यदि वस्तुतस्तत्पदोपदेशस्य मूलभूतोऽनुभवो नास्ति तत्र सोऽप्येतादृशः, सत्ये तु विलक्षण इति बोध्यम् । इममेनं निरयप्रमाणविशेषत्वमा-पदन्तीति केचित् । साहस्री. ४७

* ' वत्सः प्रथमजो दक्षिणा ' आग्रयणे । स अन्वाहार्यधर्मकः स्यात् । भा १०।३।३।२५ । वत्सस्य पात्रो न कार्य. । १०।३।८।३६ । तत्र अभिघारणमपि न स्यात् । १०।३।१०।३८. * वत्साः ( वत्सगोत्राः ) पञ्चावत्तिनः । वि १०।७।२०. * ' वत्स आलभेत ' अत्र साक्षाद्विनियुक्तदोहाङ्गगोद्रव्योपकारकतया वत्सस्य आलम्भसंस्कारत्वम् , तेन आलम्भन साक्षाद् विनियुक्तो-पकारकभान्युपयोगार्हवत्ससंस्कारार्थं दर्शार्थं सन्निपत्योप-कारक तदर्थं प्रवृत्तिरूपं वैदिक कर्म इद च पशुलोपादि-करणे भवत्येव. । बाल. पृ. ८२. * ' वत्समालभेत ' इति अग्निहोत्रे धेनुदोहाधिकारे श्रूयते । तत्र वत्सस्पर्श-

श्रूयते । प्रायादपि चार्थनिश्चयो भवति । यथा आम्रप्राये लिखित, आम्र इति गम्यते । ननु लिङ्ग प्राय दर्शनम्, कथमनेन सिद्धिरिति । उच्यते । यथा प्राय दर्शनेन सिध्यति तथा वर्णयितव्यम् । कथं च प्रायदर्शन हेतु ? न्याय्यन प्राप्तौ सत्याम् । न पुनर्याग ? देवता सम्बन्धाभावात् न यागवचन । इत्यर्थत्वाच्च वत्स आलभ्यमानो (स्पृश्यमानो) गां प्रस्नावयिष्यतीति । तस्मादेव न्यायप्राप्तं प्रायदर्शनं द्योतकं भवति । तस्माद् आलम्भनं संस्कारः (स्पर्शमात्रम्) ।

वा— "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके । सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥" इति ये वदन्ति तान् प्रति उच्यते । न किञ्चित् साधनं अप्रदर्शितविषयं स्वार्थं साधयति । सूत्रकारेण च इह हेतुमात्रमुपात्तम् । न च अर्थप्रकरणादिभिरपि उदाहरणमतिशासंशयहेतुना गम्यतमनुपलभ्यते । तस्मात् अगमके सूत्रे सति अवश्यं दोषप्रतिसमाधानार्थं वृत्तिकारादिभिर्वर्तितव्यम् । सर्वत्र समत्वे अध्याहारादिवर्णनमुक्तम् (शाबरे भाष्ये) । सर्वथा शिष्यप्रज्ञासहकारे सूत्रकारादीनां प्रवर्तमानानां यैनैव तदनुगुणं यत् कृतं तदेव ग्रहीतव्यम्, नाग्रहः कर्तव्य । इदं सूत्रकारेण नोक्तम्, इदं वृत्तिकारेण एतत्प्रदर्शनार्थं एतद् वर्णयन्ति । तदिह भगवान् उपवर्षः किल अग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं वाक्यम् उदाहृतवान् 'वत्समालभेत' इति । तत्र च पूर्ववदेव शेषा सहायगुपवर्तन्ताम् । किं प्राकृत एव आलम्भे वत्सो विधीयते, तथा आलभमानं अथवा यागान्तरमेतत् करोति । तत्र विशेषणाभावात् प्राकृत प्रत्ययो नास्ति इति पूर्वाधिकरणसिद्धमेतत् इति नोपन्यस्तम् (भाष्ये) । तेनैतदनुक्रमेण यन्निमित्तभिधानबुद्धौ प्रयतनाय अपनोदोऽयं क्रियते । तत्र भोक्तृभयोपप्रत्युदाहरणत्वात् गतमानोऽपि पूर्वपक्ष श्रोतृबुद्धिवैचित्र्यात् क्रियते । यो नाम नानित्यायतया श्यामायनोदितेन वेदार्थमुपनिनीषेत् तस्य तन्निवृत्ति अप्रदर्शिताशङ्का न शक्या कर्तुं इति प्रदर्श्यते । तत्र केषाञ्चित् पूर्वाधिकरणे एव आलम्भति यागविधायकत्वेन प्रसिद्ध, अन्येषां च यदुभयत्वेन, तदुभयत्र अत्रापि तथैव मन्यन्ते । तत्र अपूर्वयागविधानम्, प्राप्ते वा वत्सविधानं इति पूर्वपक्षे द्वैतम् । सिद्धान्तस्तु द्रव्यदेवतासम्बन्धाभावानुपपत्त्या पूर्वमस्माभि यजि कल्पित नादृष्टपूर्वशक्त्यालम्भाभिधानेन व्यभिचारानुमानात्मकेन वा । न चेह असौ अस्ति इति गम्यतां । तथा च दोहनादिसंस्कारकर्म प्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् ।

अर्थवादोपपत्तेश्च । १७ ॥

भाष्यम्— अर्थवादश्च भवति 'वत्सनिकान्ता हि पशवः' इति (निकान्ता प्रिया, पशूनां निकान्तः प्रेष्ठो वत्सनिकान्ता)। यस्मात् वत्सप्रियाः पशवः, तस्मात् वत्स आलब्धव्य इति । यदि गां प्रस्नावयितुं आलभ्यते तत एतद्वचनमवकल्पते । अथ सर्वथा तु एवंजातीयकं वचनं नोपपद्येत । तस्मादपि आलम्भनं संस्कार इति सिद्धम् ।

वा— 'वत्सनिकान्ता हि' इति प्रस्तावनार्थं च वत्सोपचारसमर्थनविधौ हेतुनिगदोऽर्थवाद उपपद्यते । मारणार्थत्वे तु आलभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानं असम्बद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्स, तस्मात् प्रस्नावनार्थमालब्धव्य इत्यसम्बद्धमेव स्यात् । स तु पुनः वत्सप्रिया माता पुत्रं चाटुकरणात् तेन वा स्पृष्टा मधुरयमानं स्नेहात् प्रस्नविष्यति इत्युपपद्यते । तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानम् एतत् इति सिद्धम् ।

शा— अग्निहोत्रदोहाधिकारे 'वत्समालभेत' इति श्रुतम् । तत्र असत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भनसामान्यात् अत्रापि यागविधि मन्यते । तत्रोत्तरम्, आलम्भो नाम स्पर्शमात्रं न तस्य यागमन्तरेण क्वचित् । लौकिकेऽपि च दर्शनात् । अतोऽत्र आलम्भनमात्रं वत्ससंस्कारो विधीयते ।

भोम— अत्र पूर्वपक्षस्यातिमन्दत्वेन प्रत्युदाहरणमाश्रयाम् । प्रयोजनं पूर्वपक्षे अग्निहोत्रशाखत्वा यजिः पशुयागः अनुष्ठेयः । सिद्धान्ते तु वत्सचाटुकरणम् ।

सूत्रार्थस्तु– यागविधि संस्कारविधिर्वा इति संशये यावदुक्तं संस्कारमात्रमेव विधेयम्, दोहनादिसंस्कारप्रायपाठात् इति ।

रि— ' वत्सालम्भो यजिः स्पर्शो वा, वायव्या- दिवद् यजि ।, स्पर्शः स्याद् देवताद्दित्वात् संस्कारः प्रत्ययाठतः ॥'

**भाट्ट**— यत्र ॥ न देवताश्रवणं तत्र न यागकल्पना, अपितु संस्कारमात्रविधानम् । यथा अग्निहोत्रे ' वत्स- मालभेत ' इत्यत्र आलम्भमात्रं वत्ससंस्कारकत्वेन विधी- यते । आलम्भो· स्पर्शमात्रवाचित्वात् ।

**मण्डन**— ' वत्सालम्भो यजिर्नहि ।'

**शंकर**— ' वत्सालम्भो यजिर्न ॥ ।'

■ वत्सालम्भाधिकरणं ( २।३।६।१६–१७ ) 'ईष्टा- लम्भाधिकरणस्य' ( २।३।५।१२–१५ ) अपवादः । कौ. २।३।७।१६, ❀ वत्सालम्भाधिकरणम् । वत्सालम्भस्य अनिश्चितविधेयवाक्यस्य भेदप्रयोजनम्, संस्कारविधि- प्रायपाठः इति च ( न्यायशरीरम् ) । २।३।६।१७.

☞ वत्सक्षीरन्याय. । यथा वत्सविवृद्ध्यर्थं धेनोस्तनं क्षीरं प्रवर्तते, तथा धेनेनाऽपि प्रकृतिः पुरुषमोक्षणाय प्रवर्तते इति सांख्याः । उक्तं च– ' वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥' इति । साहस्री ७२९.

❀ वत्सजानुप्रभृति भेदस्य ( दर्शपूर्णमासप्रकरणस्थ ) पुरुषार्थत्वम् । भा. ४।१।२।१ वर्णक २.

❀ वत्सत्वं गोत्वैकार्थसमवायिनी शाब्दावान्तरजाति । सु. पृ. १०११.

❀ वत्सतन्त्र् अश्वधेन्यनयो. समुच्चय, न विकल्पे- नापि यागयो बाध., अग्न्याधाने । वत्सतन्तू उपरिष्टाद्ववः कार्ये भविष्यति, शाणस्तु अधोवासः । भा. १२।३। १।१–२, ❀ वत्सतन्त्र् विश्वजिति एकाहे परिधानार्थ- माम्नाता ' अक्षभूमानुदेत्य वत्सत्वचं परिधत्ते ' इति । १२।३।१।१.

❀ वत्सत्वगहतवाससो. समुच्चयः अग्न्याधाने विश्वजिति । १२।३।१।१–२. मीको. पृ. ७६१ ' अग्न्याधाने विश्वजिति वत्सत्वगहतवाससोः समुच्चय. ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

❀ वत्सनिकान्ता । वत्स. नितरां कान्तः प्रियो येषां तादृशाः पशव. । के.

❀ वत्सरूपदक्षिणया आग्रयणगतया प्राकृतान्वा- हार्यदक्षिणाया बाध. । भा. १०।३।६।३४.

❀ वत्सशब्दः गोजैवोनिविशेषवचनः । वा. ३।४।४। १३ पृ. ९२०.

☞ वत्ससंयोगे व्रतचोदना स्यात् । ६।४।१२। ३४ ॥

दर्शपूर्णमासयो. ' बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम् ' इति श्रुतम् । तत्र वत्सेन संयोग. श्रुत. । तस्मिन् वत्ससंयोगे बर्हिःसंयोगे च श्रुते सति व्रतचोदना बर्हिर्वत्ससाधनकव्रतविधिः स्यात् । औपव स्थ्येऽहनि रात्रौ बर्हिषः वत्सस्य च भक्षणं कर्तव्य इति पूर्व. पक्ष. ।

**कालो वोत्पन्नसंयोगात् यथोक्तस्य । ३५ ॥**

वाशब्देन प्रथम पूर्वपक्ष निषिध्य द्वितीय पक्षमाह । ' बर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम् ' इत्यत्र यथोक्तस्य 'भक्षणमाषा यद्यरण्यं नाश्नाति' इति वचनान्तरेण प्राप्तस्य व्रतस्य कालो विधीयते व्रतस्य प्राप्तत्वात् कालस्य चाप्राप्तत्वात् । न तु बर्हिर्वत्ससाधनक व्रतविधिरयम् । उत्पन्नसंयोगात् । उत्पन्नस्य विहितस्य व्रतस्य संयोगोऽयम्, न तु उत्पत्तिसंयोगः । उत्पन्न संयोगात् यथोक्तस्य व्रतस्य कालोऽत्र विधीयते इति । व्रतं व्रतयति भक्षणीयं भक्षयति इत्यर्थ. । तथा च बर्हिराहरण- काले पौर्णमासे व्रतभक्षणम्, वत्सापाकरणकाले तु अमा वास्यायां व्रतभक्षणं कर्तव्यं ।

**अर्थापरिमाणाच्च ।३६॥**

' बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्या- याम् ' इति वाक्ये व्रतभक्षणे बर्हिराहरणकाल., वत्सा- पाकरणकालश्च विधीयते इति द्वितीयपक्षवादी पक्षान्तरे दोषमाह । बर्हिषा व्रतमुपयन्ति, वत्सेन व्रतमुपयन्ति इति विधाने स्वीकृते अर्थस्य अपरिमाणात् अर्थपरिमाणा- भावात् अर्थपरिच्छेदाभावात् निश्चितार्थज्ञानाभावप्रस क्तादित्यर्थः । किं वत्सोऽत्र व्रतयितव्य , किं वत्सेन हस्तस्थानीयेन व्रतयितव्यम्, उत वत्स सन्निपात्य अन्यदेव किंचित् व्रतयितव्य इति नैव व्यवतिष्ठते आचार्य । वत्ससाधनकं व्रतं कुर्यात् इत्युक्तम्, तच

इत्येतत्त अनिश्चितम् । तस्मात् अपि काल्यर्थः संयोगः । इति द्वितीयः पूर्वपक्षः ।

वत्सस्तु श्रुतिसंयोगात् तदङ्गं स्यात् । ३७ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपैति वत्सैरमावास्यायाम्' इत्यत्र व्रतभक्षणे वत्सः बर्हिश्च तदङ्गं व्रताङ्गं स्यात् । अन्यतः प्राप्ते व्रते अङ्गतया बर्हिः वत्सश्च विधीयते । श्रुतिसंयोगात् 'बर्हिषा वत्सैः उपयन्ति' इति । काले तु लक्षणा स्यात् । तस्मात् बर्हिः वत्सश्च व्रताङ्गतया विधीयते इति तृतीयः पक्षः । तुशब्दो द्वितीयपक्षव्यावर्तकः ।

कालस्तु स्यादचोदना । ३८ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति वत्सैरमावास्यायाम्' इत्यत्र न बर्हिर्वत्ससाधनकस्य व्रतस्य विधिः, नापि कालस्य विधिः, नापि बर्हिषो वत्सस्य वा व्रताङ्गतया विधिः, किंतु बर्हिराहरणस्य वत्सापाकरणस्य च कालः निर्दिश्यते इति सिद्धान्तः । उक्तपक्षनिराकरणार्थः तुशब्दः । कालनिर्देशस्तु अचोदना न चोदना । कालो न विधीयते किंतु अनूद्यते । अयमेव द्वितीयपक्षाद्विशेषः । काल एव स्यात् परन्तु अचोदना इति । अचोदनात् इति कुतूहलपाठः । कालस्य चोदनाभावात् इत्यर्थः ।

अनर्थकश्च कर्मसंयोगे । ३९ ॥

'बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायाम्' इत्यत्र कर्मसंयोगे बर्हिषो वत्सस्य च व्रतकर्मणा संयोगे स्वीकृते बर्हिः वत्सश्च अनर्थक एव स्यात् । तत्र बर्हिस्तावत् वत्सयोः अभक्षणीयत्वेन । 'अमावास्यायां व्रतं व्रतयति' इति च मांसनिषेधात् वत्सोऽपि अभक्षणीय एव । तस्मात् कर्मादिविधिः अयुक्तः । तस्मात् बर्हिराहरणकालस्य वत्सापाकरणकालस्य चानुवाद एवायम् ।

अवचनाच्च स्वशब्दस्य । ४० ॥

'वत्सैरमावास्यायां व्रतमुपयन्ति' इत्यनेन वत्सापाकरणकाले दम्पत्योर्भोजनम् इति सिद्धान्तः । पूर्वपक्षी तु वत्सेन व्रतं इति वत्सं निरस्य अपितेन तन्मांसेन भोजनं इति मन्यते । तत्र, स्वशब्दस्य तादर्थ्यबोधकस्य शब्दस्य अवचनात् वचनाभावात् । न हि तादृशं वचनं विद्यते । तस्मात् कालानुवाद एवायं इति सिद्धान्तः । के.

वदतो व्याघातन्यायः । यथा— जिह्वा मे नास्ति, मम माता वन्ध्येत्यादौ प्रसरतीति सर्वदर्शनसंग्रहे बौद्धदर्शनेऽभिहितः इति । साहस्री ६९३.

वध्यघातकन्यायः । यथा भुजङ्गादिभूयिष्ठां वनभूमिं दृष्ट्वा भुजङ्गभुजगेरभावोऽवगम्यते, तथा प्रकृतेऽपि । साहस्री. ३८०.

'वध्यतां यत्स्वयं शालो नाऽनेनाऽर्थोऽपि जीवता । स्वपक्षहानिकर्तृत्वात् कुलाङ्गारो गतः ॥' इति न्यायः । एवं च स्वसन्ताननिवृत्ता महादिव्यरिवद्धर्मपरिप्रयु पुत्रोऽपि वध्य एवेति भावः । साहस्री. १२१.

* वध्यवधकानां नाशकगो द्वितीयः प्रकारः । वा २।३।७।१७ पृ. २४८.

* वनम् । एकदेशावस्थिता वृक्षा एव वनशब्देन बोध्यन्ते । सु. पृ. १०. * वनम् । भवति हि बहुना एकवचनान्तः शब्दः समुदायापेक्षः, यथा यूथं वनं परिषदिति । भा. २।२।१।२ पृ. ४८० । अपेक्षामात्रमेव समुदायस्य करोति नाभिधेयत्वम् । यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ तदा साकल्येन दृष्टान्तौ । यदा तु समुदायमेव ब्रूतः तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम् । वा. पृ. ४८०.

* वनवादः । भाष्यम्— असत्यपि अर्थान्तरे एवंजातीयको भवति प्रत्ययः— पङ्क्तिः, यूथम्, वनम्, इति यथा इति चेत्, न । अनवक्लृप्तमिदं वचनमुपन्यस्तम् । किमिति वने वनप्रत्ययो भवतीति । प्रत्यक्षेणोपलभ्यन्ते वृक्षा अपि न सन्तीति । ... न च वृक्षव्यतिरिक्तं वनम् । यस्मान्नोपलभ्यते अतो वनं नास्तीत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते मिथ्यैव वनप्रत्यय इति । ततो वनं नास्तीत्यवगच्छामः । . अथ वनादिषु नैव विप्रतिपत्तिः, न वै न सन्तीति । तस्मादसम्बद्धः पङ्क्तिवनोपन्यासः । भा. १।१।५।८ पृ. ५०–५२ । बाल—वनवादे वनादिवत् परमाण्वादिपुञ्जात्मक एव अवयवी नार्थान्तरमित्या-

यद्वा । तस्य अप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् सत्ताविग्रहाद्यभावेन तन्मूलकव्यवहाराभावाद्वा इति तत्प्रामाण्यसिद्धयर्थमेव वनादिदृष्टान्तवैषम्योपपादनेन निरस्ता ।

० वनवाद.— ( ' सास्नादिविशिष्टा आकृतिः ' इति भाष्यं आक्षिपति– ) ' सास्नादिभिर्विशिष्टत्वमाकृतेरुच्यते कथम् । यदाऽवयविसंबन्धि गोत्वं नावयवे स्थितम् ॥' १ ॥ ( समाधत्ते– ) ' एकावयविसंबन्धस्तेषां गोत्वेन विद्यते । तेनाऽसाधारणत्वात्ते स्युर्गोत्वस्योपलक्षणम् ॥ ' (गोत्वस्याभिव्यक्तिमुपलक्षयितुं सास्नाद्युपादानम् । अस्ति हि तेषामेकावयविसम्बन्धो जात्यन्तरेभ्योऽसाधारणं गोत्वेन, अतः ते शक्नुवन्ति तदुपलक्षयितुमिति ) २ ॥ ( किं पुनरत्र गोपादाने प्रयोजनम् ? अत आह–) ' पिण्डे सत्तादिजातीनां बह्वीनां समवेतता । ताभ्यो विशिष्यते गोत्वं सास्नादिभिरसंशयम् ॥ ' ३ ॥ ( काश्यपीयास्तु सास्नालाङ्गूलादि गोत्वे लिङ्गमिति वदन्तो व्यञ्जकत्वमेव सास्नादीनां मन्यन्ते, केचित्तु यथाश्रुतेन भाष्येण विशेषणत्वम्, तदुभयमयुक्तम्, इत्याह– ) ' न चैते व्यञ्जकास्तस्य गुणवद्वा विशेषणम् । ( कारणमाह– ) तथाहि नाऽगृहीतेषु तेषु स्याद्गोत्वबोधनम् ॥' ( दृश्यते च दूरस्थैः सास्नादीनदृष्ट्वापि तेषु गोत्वम्, अतो नैते नीलादिवत् द्रव्यस्य गोत्वस्य विशेषणम् ) ४ ॥ ( सास्नादिसामान्यापेक्षत्वे च गोत्वस्य तेषामपि व्यञ्जकापेक्षत्वादनवस्था इत्याह– ) ' तेषां च व्यञ्जकैः स्वैः स्यात् पुनर्ग्रहणकल्पना । तथा सत्यनवस्था स्यान्न स्याद्गोत्वावधारणम् ॥' ५ ॥ ( इतश्च न तेषां व्यञ्जकत्वमित्याह– ) ' सर्वेषु च गृहीतेषु सास्नादिषु भवेन्मतिः । गोत्वे, न चैषु सर्वेषु युगपद्बुद्धिसंभवः ॥' ६ ॥ ( तस्मात् यथा सत्तामात्रव्यतिरेकेण अवयवैरपि महत्त्वं गोत्वे तथा अवयविरूपे तत्सम्बन्धे च गोत्वादौ ग्रहणम् । न तु तद्ग्रहणापेक्षम् । अन्यथा सत्तामात्रापेक्षं ग्रहणमित्याह– ) ' तस्मात् सत्तामात्रेण महत्त्वादौ यथैव धीः । क्रियतेऽवयवैः पिण्डे तथा जातिगुणादिषु ॥' ७ ॥ ( चोदयति– ) ' यद्येवमगृहीतेषु तेषु किं सा न जायते । ( यद्यपि सर्वे अवयवा न गृह्यन्ते, केचित् तावत् दूरस्थैरपि गृह्यन्ते, तदनभिग्रहे तु कंचिदप्यवयवं अगृहीत्वा गोत्वधीर्जायेत इति । परिहरति– ) तद्देशव्यतिरेकेण प्राप्तं येन न विद्यते ॥ ' ८ ॥ ( तदेव विवृणोति– ) 'गृह्यमाणे तु गोत्वादौ नास्तीयत्कहेतुकः । सास्नादेः कस्यचिद्बोधः सद्देशत्वेन जायते ॥ ' ( समानदेशानि हि अवयवाऽवयविसामान्यानि, तेन गृह्यमाणे गोत्वे नतु ज्ञोऽस्मभ्ययोग्यस्य कस्यचिदवयवस्य तत्सामान्यस्य वा नान्तरीयकं ग्रहणं भवति ) ९ ॥ ( यद्वा न व्यवच्छेदमात्रेण उपलक्षणपरोऽयं विशेषणशब्दः, किंतु यथाश्रुतोऽपि अवयते व्याख्यानुमित्याह– ) ' यदनन्तरमेवाहुस्तद्विशिष्टेति कीर्त्यते । ( ' न प्रत्यक्षा गावो माप्या भवितुमर्हन्ति, इयकः, स्वस्तिकः, वर्धमानकः इति हि प्रत्यक्ष दृश्यते ' इति भाष्यार्थमाह– ) साध्यानुमानस्य न प्रत्यक्षेति बोध्यते ॥' ( यतैः ननु आकृतिः साध्या अस्ति ना न वा इत्यनेन आकृत्यभावे अनुमानमन्तर्गीतम्, तच्च अनेन प्रत्यक्षविरोध भाषितं ययने इति ) १० ॥

( किं पुनस्तदनुमानम् ? तत् दर्शयति– ) ' परेषां साधनं ह्यत्र नाकृतिः पिण्डतः पृथक् । तद्धीहानाद्यविज्ञानात्पङ्क्तियूथवनादिवत् ॥ ' ( पिण्डव्यतिरिक्ता नाकृतिः, तज्ञाने तदनुपलम्भात् । यद्भेदे च यद्बुद्धिर्न भवति तयोः व्यतिरिक्तमपि न भवति मृगादिभ्य इव यूथम्, वृक्षेभ्य इव वनमित्यर्थः ) ११ ॥ ( किं पुनः स्वयं साधनमाभिधाय दूषणमेवोक्तम् ? अत आह– ) ' सर्वत्र लोकसिद्धत्वान्न वाच्यं साधनं स्वयम् । निषेधतां परेषां तु विरोधं लोकतो वदेत् ॥ ' ( लोकप्रसिद्धपदार्थव्यवहारिणामस्माकं न कश्चिदपि पदार्थः साधयितव्य, प्रसिद्धं तु धर्मिणमपह्नुवानेभ्यः लोकप्रसिद्धप्रत्यक्षेण विरोध एव वक्तव्य इति ) १२॥ ( चोदयति– ) ' विसंवादो न दृश्येत यदि प्रत्यक्षताऽऽकृतेः । ( परिहरति– ) प्रमाणेऽपि

विसंवादात्तार्किकेषु कुतो नियमः ॥' १३ ॥ (सर्वे प्राणिप्रसिद्धेऽपि प्रत्यक्षादिप्रमाणे अस्त्येव तार्किकाणां विसंवादः, तत्रश्च निरालम्बनवादिना प्रत्यक्षगम्यस्यापि अपह्नवात् । अतः पुनस्तदीयविसंवादस्याऽऽदरणम् ? अनादरणीय एव स इति । तदेव दर्शयति–) 'रूपा यर्थापि तेषां हि प्रत्यक्षत्वेन सम्मते । विवादो (महाजनस्य तु नास्त्येव क्वापि विप्रतिपत्तिरित्याह–) नैव लोकस्य जातौ विप्रतिपद्यते ॥' १४ ॥ (कथं मवगम्यते इत्याह–) 'व्यवहारा हि दृश्यन्ते सामान्यार्थनिबन्धना । दधिघटादिविनाशे कौण्डिन्य ब्राह्मणादिषु ॥' १५ ॥ (विशेषेण हि सामान्यस्य बाधमाश्रयन्तो ब्राह्मणशब्दस्य सामान्यवाचित्वं मन्यन्ते, यथैव दन्तकादुदाहरणात् आकृतिं संस्थानं मन्यन्ते तदेव सामान्यमिति मन्वाना, तान्प्रत्याह–) 'आकृति-र्जातिरेवाऽत्र संस्थानं न प्रकल्प्यते । (कारणमाह) न हि वाय्वग्निशब्दादौ किंचित्संस्थानमिष्यते ॥' (नानासंस्थानपरिणामेषु वाय्वादिषु अस्ति वायुत्वादि प्रत्यभिज्ञा, या संस्थानव्यतिरिक्तं जाति साधयति) १६ ॥ (सामान्यादौ च प्रतिपिण्डं भिन्नं संस्थानम्, तत्कथं सामान्यं स्यात् ? आह–) 'अन्य दन्यच्च संस्थानं प्रतिपिण्डं प्रतीयते । (इतश्च न तत्सामान्यमित्याह–) संयोगात्मकतायां तु विभागेषु विनश्यति ॥' १७ ॥ (दाढ्यर्ने) 'अथ संस्थानं सामान्यं (निषेधोति–) अश्वादावपि तत्समम् । (अथ सत्ता भ्रान्तसामान्यमुच्यते, न तद् गोत्वजाते रस्तीत्याह–) गोत्वेन विना होतद् व्यवच्छिन्नं प्रतीयते ॥' १८ ॥ (भिन्नेऽपि मनुष्यत्वादिसंस्थाने सद्भावात्तत्रापि गोत्वादिप्रतीतिः स्यात् इत्याह–) 'मर्त्य प्रतिकृतीनां च संस्थाने सत्यपीदृशे । न गोत्वादि मतिर्दृष्टा, (उपसंहरति–) तस्माज्जातिः पृथक् ततः ॥' (संस्थानात् पृथग्भूता जातिरेव आकृतिः) १९ ॥ (इदं च जातिपरत्वम् आकृतिशब्दस्य उपक्रमेऽ प्युक्तम्, इदानीमुपपादितम्, भाष्यकारोऽपि आकृत्यभिधानं दर्शयिष्यति 'द्रव्यगुणकर्मणां सामान्यमात्रम् आकृतिः' इति । न हि गुणकर्मसु संस्थानं सम्भवति इति । रुच कादुदाहरणमपि संस्थानातिरिक्तसामान्याभिप्रायमेवेत्याह–) 'रुचकादिषु सामान्यं रुचकत्वमुदाहृतम् । (अननुगतसंस्थानाभिप्रायं वा इदमित्याह–) भिन्नेषु चैषु सामान्यं सुवर्णत्वं प्रतीयते ॥' २० ॥ (एतच्च संस्थानाभिप्रायत्वं दूषणमात्रम्, न हि भिन्नेषु रुचकादिसंस्थानेषु अनुवर्तमानं सुवर्णत्वं संस्थानं भवति । सुवर्णत्वस्य रुचकत्वादिविशेषानुगतमुपपादयति–) 'वर्धमानकभङ्गे च रुचकः क्रियते यदा । तदा पूर्वाऽर्थिनः शोकः प्रीतिश्चाप्युत्तराऽर्थिनः ॥२१॥ हेमार्थिनस्तु माध्यस्थ्यं तस्माद्वस्तु त्रयात्मकम् । (त्रयात्मकम् उत्पत्तिस्थितिविनाशधर्मात्मकमित्यर्थः । तदेवोपपादयति–) नोत्पादस्थितिभङ्गानामभावे स्यान्मतित्रयम् ॥ २२ ॥ न नाशेन विना शोको नोत्पादेन विना सुखम् । स्थित्या विना न माध्यस्थ्यं (यथैव संस्थानस्य उत्पत्तिनाशयोरपि न सामान्यस्यापि नाशोत्पत्ती, न हि यत्र तस्य विनाशः सुवर्णस्याऽस्ति, अत एव नित्यताऽपि सामान्यस्य सिद्धेत्याह–) तेन सामान्यनित्यता ॥' २३ ॥ (इतश्च सामान्यं संस्थानमित्याह–) 'मुद्गमाषतिलादौ च यत्र भेदो न लक्ष्यते । तत्रैकबुद्धिनिर्ग्राह्या जातिरिन्द्रियगोचरः ॥' (अदूरस्थापितेषु मुद्गादिषु संस्थानभेदमनुपलक्षयतोऽपि दूरस्थाः पुरुषाः मुद्गत्वादिकमेव एकबुद्धिगोचरमिन्द्रियेण गृह्यन्ते इति) २४ ॥ (इतश्च प्रत्यक्षं सामान्यमित्याह–) 'आराद् दृष्टे च पुरुषे संदेहो ब्राह्मणादिषु । न स्याद्यदि न गृह्येत सामान्यं चक्षुरादिना ॥' (वस्तुमानलिङ्गवतो हि संदेहो न ब्राह्मणादिषु व्यवतिष्ठते, अतो गोत्वादिभ्यो चान्यत् ब्राह्मणादिषु च अनुवृत्तं नवत्र नाम सामान्यम्, यत्प्रत्यक्षगतं अत्र संदेहः) २५ ॥ (यदि प्रत्यक्षा जातिः किमिति तर्हि नरत्वादिवत् ब्राह्मणत्वादिकमपि सहसैव न गम्यते ? ) 'तस्यो पलक्षणं चापि क्वचित् केनचिदिष्यते । रूपादीनां विशेषेण देशकालाद्यपेक्षया ॥ २६ ॥ सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम् । तैलाद् घृतं विलीनं च गन्धेन च रसेन च ॥ २७ ॥

भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ॥ अश्वत्थादौ च दूरस्थे निश्चयो जायते शनैः ॥ २८ ॥ संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः । क्वचिदाचारतश्चापि सम्यग्ज्ञाताऽनुपाख्यिनात् ॥' २९ ॥ (योनितो मातापितृसम्बन्धात्, यथा च मातापितृज्ञानाऽपेक्षं ब्राह्मण्यादेः प्रत्यक्षत्वं तथा अर्थवादाधिकरणे ( १।२।२ ) स्वयमेव वक्ष्यति । क्वचिच्च देशे सम्यग् ज्ञाता अनुपाख्यिताद्पि आचाराद् ब्राह्मण्यादिनिर्णयः स च देशापेक्ष, यस्तु समन्ताऽभ्यागतिना ब्राह्मण्यादिनिश्चयः स कालापेक्ष., सर्वत्र रूपाद्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिश्चयः, अपरोक्षत्वादिति । किं पुनरिय जातिः प्रत्येकं पिण्डेषु वर्तते, व्यासज्य वा, न तावदेका प्रत्येकं अनेकत्र युगपदर्हा वर्तितुम्, व्यासज्य चेत्तर्हि परस्परसापेक्षेषु वृत्ति, सा कथमतीतानागतवर्तमानेषु अनन्तेषु पिण्डेषु समवेत । प्रत्येक च गोबुद्धिर्न स्यादत आह–) 'प्रत्येकसमवेताऽत्र दृष्टत्वान्न विरोत्स्यते । (दृष्टो हि प्रतिपिण्ड जातिः 'इयं गौः, इयमपि' इति । न चैतावता एकत्वहानिरित्याह–) तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥' ३० ॥ (विभिन्नं विभुः प्रादेशिकी वा, तथा सावयवा निरवयवा वा इति बुभुत्सायामाह–) 'विभुत्वाऽवयवाऽभावौ प्रतिपाद्यौ च लक्षणात् ॥' ३१ ॥ (एतदेव दृष्टान्तेन उपपादयति–) 'यथा च व्यक्तिभेदेनैव दृश्यमाना पुनः पुन । कालभेदेऽप्यभिन्नैव जातिर्भिन्नाऽऽश्रया मती ॥' ३२ ॥ (ननु पुनः, किं कार्त्स्न्येन सा एका एकत्र वर्तते भागशो वा, सावयवा वा इति, सोऽयं प्रश्नोऽनवकाश एव जातावित्याह–) 'कार्त्स्न्यांऽवयवशो वृत्ति. प्रश्नं जातौ न युज्यते । (कथमित्याह–) न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥' ३३ ॥ (यत्र हि व्यक्त्यन्तरगतो न भेद. तत्कार्त्स्न्यम्, भेदापेक्षो हि कृत्स्नशब्द., तदिदं द्वयमपि अनवयवायामेकस्यां जातौ अनवसरमेवेति । यदि न देशान्तरे वर्तते, कथं तर्हि वर्तते अत आह–) 'तस्माद्व्यक्तिषु जातीनां वृत्तिरस्तीति गम्यते । विशेषाऽनवसरोऽभावानन्यमात्रेणानिष्टते ॥' ३४ ॥ (वृत्तिरेवात्र प्रमाणवती, न विशेष इति । कथं पुनः स्तम्भादिषु दृष्टो विशेषो जातौ नाश्रीयते ? अत आह–) 'या चावयवशो वृत्तिः स्तम्भसूत्रादिषु दृश्यते । भूतकण्ठगुणादेश्च प्रतिपिण्डं समाप्तिनः ॥ ३५ ॥ तत्रावयवयोगित्वमविभुत्वं च कारणम् । आकृतेस्त्वतद्भावेन न प्रसक्तमदो द्वयम् ॥' ३६ ॥ (कण्ठगुणः कण्ठभूषणं हारादि, प्रतिपिण्डं समाप्तिः कार्त्स्न्येम्, एकत्र कृत्स्नस्याऽन्यत्रावृत्तिः, सा च अविभुता हारादीनाम्, जातिस्तु विभुः, सा एकत्राऽविकलाऽपि वृत्ता अन्यत्रापि अविकला आश्रयान्तराऽनपेक्षैव वर्तते, तथा दर्शनात्, इदमेव हि विभुत्वमिति । ननु द्वैविध्यमात्रा वृत्तिः व्यापकनिवृत्त्या जातेर्निवर्तेत, अत आह–) 'न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् । त्रिविधाऽपि हि दृष्टत्वात्संभवेद् द्विविधा यथा ॥' ३७ ॥ (व्यतिरेकोऽत्र नास्ति, प्रकारान्तरस्यापि प्रत्यक्षेण जातौ दर्शनात् द्वैविध्यनयेन तस्य सभवः । अथ जातेरन्यत्र प्रकारान्तरं न दृष्टं इति चेत्, तत्तुल्यं दृष्टान्तेष्वपीत्याह–) 'इतरत्र न दृष्टं चेत् स्तम्भादिष्वपि तत्समम् । नैव हान्योऽप्यतुल्यत्वं तयोर्नाप्यनया सह ॥' ३८ ॥ (न चैकत्र दृष्टस्य अन्यत्राऽदर्शनात् अभावो भवति, अनैकान्तिकत्वादित्याह–) 'न ह्यन्यस्मिन्नदृष्टत्वाद्वैरूप्यं प्रणश्यति । (स्यादप्यन निदर्शनाभावेऽपि, यद्यनुमानगम्येयं वृत्तिः स्यात्, न त्वेतदस्तीत्याह–) न चानुमानगम्येयं यास्त्वेषैव निदर्शनम् ॥' ३९ ॥ (सा तु प्रत्यक्षगम्या । तत्सारूप्येण कर्त्राकारणरूपेण प्रत्यक्षप्राप्या वृत्तेर्वृत्त्यन्तरस्यादर्शनेन निराकरणं युक्तम्, तस्मादव्याप्यविशेषत्वादित्याह–) 'स्वरूपतश्च दृष्टाया वृत्तेर्न परकल्पना । निराक्रियोपपद्येत तद्विशेषमपश्यताम् ॥' ४० ॥ (अत्र अयुक्तमित्याह–) 'अदृष्टाऽसंभवाच्चापि या प्रमाननिराक्रिया । साऽयुक्तैव, ऽनुमानेन प्रत्यक्षज्ञानबाधनात् ॥' ४१ ॥ (जातेर्दृष्टं वृत्तिस्वरूपं च कार्त्स्न्यादिप्रकार. तदसम्भवात् तन्निराकरणं तत्र युक्तमिति । उपसंहरति–) 'तस्मादसंभवो यस्य तस्याग्रहेण साधनम् । युक्तं न

तावताऽन्योऽपि संभवन् बाधमर्हति ॥ ' ४२ ॥ ( एवं स्वमतेन व्यक्तिदेशमेव सामान्यमाश्रित्य दूषणं समाहितम् , यदा तु वैशेषिकपक्षेण सर्वगतत्वं जातेस्तदाऽप्यदोष इत्याह– ) ' तेन वैशेषिकोक्ताऽपि जातिः सर्वगता मता । व्यज्यते यत्र पिण्डेन वर्णवत्तत्र गृह्यते ॥ ' ४३ ॥ ( येनैव दर्शनबलेन प्रकारान्तरं पूर्वेराश्रितम् , तेनैव सर्वगताया अपि जाते केषुचित्पिण्डेषु प्रत्येकसमवायवशात् अभिव्यक्तिः कार्त्स्न्यैकदेशविकल्पशून्यामाश्रित्य क्वचित् ग्रहणं समर्थयते इति । एवमुपपादितां जातिं प्रयोगेण दर्शयति– ) ' तस्मात्पिण्डेषु गोबुद्धिरेकगोत्वनिबन्धना । गवाभासैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥ ' ४४ ॥ ( एकगोत्वनिबन्धनत्वमेव साध्यम् , गोत्वग्रहणं चानुवादः , गवाभासत्वात् एकरूपत्वात् इति च हेतुद्वयम् , यत् खलु गवाभासमेकरूपं च ज्ञानं तत् एकालम्बनम् , यथा एकपिण्डे गोबुद्धिरिति । प्रयोगान्तरमाह– ) ' न शाबलेयाद्गोबुद्धिस्ततोऽन्यालम्बनाऽपि वा । तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥ ' ४५ ॥ ( प्रत्येकसमवायेऽपि प्रयोगमाह– ) ' प्रत्येकसमवेताऽर्थविषया वाऽपि गोमतिः । प्रत्येकं कृत्स्नबुद्धित्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥ ' ४६ ॥ ( तथा तत्रापि नानात्वं नेत्यत्र प्रयोगमाह– ) ' प्रत्येकसमवेताऽपि जातिरेकैकबुद्धिभिः । मन्त्रत्वेष्विव वाक्येषु ब्राह्मणादिनिवर्तनम् ॥ ' ४७ ॥ ( यच्च सादृश्यरूपस्य सामान्ये निराकृतम् , तत्रापि प्रयोगमाह– ) ' न च सादृश्यविषया गोधीस्तादृग्रूप्यवस्तुन । प्रामाण्ये सति गद्बुद्धि प्रत्यभिज्ञैकवस्तुनि ॥ ' ४८ ॥ ( गोबुद्धिः धर्मिणी, सदृशः अन्यः न विषयः इति साध्यो धर्मः, तदेवेदमिति गौरित्येकोल्लेखित्वादिति हेतुः, प्रामाण्ये सति इति च विशेषणम्–अबाधितरूपत्वे सतीति यावत् । यत्र यत्र अबाधितरूपा–तदेवेदम्–इत्येकोल्लेखिनी, तत्र तत्र न सदृशो विषयो भवति यथा एकवस्तुप्रत्यभिज्ञाया इति दृष्टान्तः । ' व्यामोह इति चेत् , न असति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम् ' इति भाष्यार्थमाह– ) ' नैकरूपमतिर्गोत्वे मिथ्या वक्तुं च शक्यते । नात्र कारणदोषोऽस्ति बाधकप्रत्ययोऽपि वा ॥ ' ४९ ॥ ( अप्रत्ययान्तरे एकजातीयके भवति प्रत्ययः पङ्क्तियूथं वनमिति यथेति चेत् इति चोद्यस्य उत्तरभाष्यम् ' असम्बद्धमिदं वचनमुपन्यस्तम् ' इति, तदाक्षिपति– ) ' यदा व्यक्त्यतिरेकेण माद्यत्वादन्यथाऽऽकृतेः । वनपङ्क्त्यादिसंस्थानेकान्तात्तदाऽसंबद्धता कथम् ॥ ' ५० ॥ ( यत्तु व्यक्तयतिरेकेण ग्रहणं जातिसद्भावे साधनं सिद्धान्तिनोक्तं तस्य अनैकान्तिकत्वमतो नोच्यते, वनस्य वृक्षव्यतिरेकेण गृह्यमाणस्याप्यवस्तुत्वात् , तत्कथं असम्बद्धत्वमिति । समाधत्ते– ) ' साधनं चेन्मयोक्तं स्यात् युज्येत व्यभिचारिता । दूषणत्वधिया त्वेतदसंबद्धत्वमुच्यते ॥ ' ५१ ॥ ( नास्माभिः साधनमुक्तम् , किन्तु प्रत्ययविपर्ययेशस्य दूषणम् , तस्य व्यभिचारोपन्यासोऽसम्बद्ध एव, न हि प्रत्ययविपर्ययो व्यभिचारमपेक्षमिति । कस्तु पुनरिदं दूषणम् ? अत आह– ) ' नास्तित्वहेतोरुक्तैषा प्रत्यक्षेण विरुद्धता । ( कः पुनरसौ ? ) परस्य साधनं ह्यत्र यच्चपूर्वमुदाहृतम् ॥ ' ५२ ॥ ( अथ वनबुद्धिवज्जातिबुद्धेरपि प्रत्यक्षाभासत्वात् तद्विरोधो हेतुदूषणमित्युच्यते, अत आह– ) ' प्रत्यक्षाऽऽभासता चात्र नैवास्ति वनबुद्धिवत् । ( कथमित्याह– ) कस्यचिद्धि मिथ्यात्वात्सर्वं मिथ्येत्यसंगतिः ॥ ' ५३ ॥ ( तदेव पुनरप्यसङ्गति असम्बद्धत्वमिति । अत्रैव दृष्टान्तमाह– ) ' यथा वनादिबुद्धीनां मिथ्यात्वान्न रसादिधीः । मिथ्यैवं जातिबुद्धिः स्याद्विशेषो वाऽभिधीयताम् ॥ ' ५४ ॥ ( ननु एवमपि वनबुद्धेर्जातिबुद्धेश्च विशेषो वक्तव्य , येन प्रामाण्याऽप्रामाण्ये व्यवतिष्ठेते, तमाह– ) ' वृक्षेभ्यो व्यतिरेकेण वने चेत्प्रमतिर्भवेत् । दुष्टत्वदोषपातश्च स्यादाप्तौ तु न विद्यते ॥ ' ५५ ॥ ( ' दोषसद्भावे न विशेष इति कथमवगम्यते, दृष्टान्तदर्शनात् आह– ) ' सन्निकृष्टस्य वृक्षेषु बुद्धेर्वनत्वं निवर्तते । ( जातिबुद्धिस्तु न कथं निवर्तते इत्याह– ) केनचित्तु प्रकारेण जातिबुद्धिर्न नश्यति ॥ ' ५६ ॥ ( ननु वनमध्यस्थस्यापि वनमित्येकरूपा वनशब्दात् बुद्धिरुत्पद्यते, तस्याः कथं दूरत्वादिदोषेण प्रामाण्यं निवार्यते ?

तद्भावेऽपि चाप्रामाण्ये जातिबुद्धिरपि तथा स्यादित्यत आह– ) 'वृक्षत्वधीर्विना शब्दात्सेयं वाच्यचिराकृता। वनशब्दाऽनुरक्ता तु मध्यस्थस्यापि जायते ॥ ५७ ॥ मिथ्यात्वकल्पना तस्या. प्रत्यक्षादेरसंभवात्। जाति सर्वप्रमाणैस्तु तद्रूपेणावगम्यते ॥' ५८ ॥ ( या तावत् दूरस्थस्येन्द्रियजन्या वृक्षाविविक्तैकत्वावभासिनी बुद्धि सा उक्तेन प्रकारेण नियङ्गा, या तु वनशब्दजन्यैकबुद्धि सा स्वत मध्यस्थस्यापि जायते, तस्यास्तु प्रत्यक्षादिमूलाऽभावात् मिथ्यात्वम्, जातिबुद्धिस्तु प्रत्यक्षादिसद्भावात् न मिथ्या। ननु किं मूलान्तरेण, शब्द एव मूलं भविष्यति अत आह– ) 'प्रमाणान्तरदृष्टे च पदमर्थे प्रयुज्यते। तस्माद् दृष्टे प्रयुक्तत्वं सिध्यार्थं स्याद्वनादिषु ॥' ५९ ॥ ( न हि पदं स्वातन्त्र्येण प्रमाणम्, प्रमाणान्तरदृष्टानुवादमात्रत्वात्, अतस्तदभावे तस्य मिथ्यात्वमिति। केचित्तु वनैकत्वं शब्दैकगम्यं सत्यमेव, अतो न तद्दृष्टान्तेन जाते मिथ्यात्वमित्याहु, तदुपन्यस्यति–) 'केचिन्नित्यं वनैकत्वं शब्दगम्यं समाश्रिता। ( न च प्रमाणान्तरगम्यत्वाभावान्मिथ्यात्वम्, स्वार्थेऽनाऽन्यप्रमाणान्तरभावात् मिथ्यात्वमनङ्गीकुर्वन्ति आह– ) अन्ये सगताभावेऽपि सत्यं नतयाद्वसादिवत् ॥' ६० ॥ (ननु प्रमाणान्तरसंगत्या विना न पदस्य स्वातन्त्र्येण प्रामाण्यं संभवति, इन्द्रियादिवत्, अतो मिथ्यात्वं स्यादत आह– ) 'मिथ्यात्वं यदसंगत्या तदज्ञाते प्रसज्यते। ज्ञायमानस्य योऽपत्तु न ■ कश्चिदसंगते. ॥' ६१ ॥ (यदेतदसंगतार्थस्य पदस्याप्रामाण्यं न तद्वाचनिकम्, किंतु अनवगतार्थे पदस्य सम्बन्धग्रहणासंभवात् अगृहीतसम्बन्धादपि ज्ञानं जायते, तत्तस्य स्वत प्रामाण्यात् न असंगत्या किंचिद् दुष्यति, जायते च वनशब्दादेकवनज्ञानमिति न मिथ्यात्वमिति। नन्वेवं प्रमाणान्तरानवगतविषयं पदमिति सिद्धान्तहानिरित्यत आह– ) 'प्रमाणान्तरगम्येऽर्थे पदं नित्यं प्रयुज्यते। धर्मोऽयं न च सर्वेषां पदानामभ्युपेयते ॥' ६२ ॥ ( नायं सिद्धान्त सार्वत्रिकः क्वचिदपोद्यतापीति। वनशब्दो वा कथमगृहीतसम्बन्धोऽर्थे प्रत्याययति, तथा सति प्रथमश्रवणेऽपि प्रत्याययेत्, तस्मात् अयुक्तोऽयं पक्ष इति मत्वा पक्षान्तरमाह– ) 'अस्त्येव संगतिश्चात्र वृक्षा हि बहवो वनम्। ते प्रमाणान्तराज्ज्ञाताः ( एकवचनाऽभिधेयेषु एकत्वस्य ग्रहणं च यदिवक्तव्यतेषु नाना) संख्या चैषाऽन्यवस्तुनि ॥' ६३ ॥ ( शङ्कते– ) 'नानेकस्यैकशब्दत्वं चेत् ( ■ हि सकृदुच्चरितेन प्रातिपदिकेन अनेकेषा अभिधानं संभवतीति। परिहरति– ) एकशेषप्रदिष्टत्वात्। ( ये हि अनेकार्था अक्षादिशब्दा ते कृतैकशेषा युगपदपि बहूनर्थानभिदधत्येवेति। पुनः शङ्कते– ) तत्र संख्यायिबुद्धिश्चेत् ( अनेकार्थगमनाद् द्विवचनं बहुवचनं वा एकशेषे, तत्कथं एकवचनं वनशब्दात् ? परिहरति– ) अस्तु तस्मात्प्रवर्जनम् ॥' ६४॥ ( एवं चाऽभिधायैकवचनम्, इह तदसंभवात्तदकरणं प्रातिपदिकवचनवत् प्रातिपदिकप्रयोगासंभवात् साधुत्वमात्रार्थं भविष्यति, यद्वा वृक्षेष्वप्येकत्वम् अस्त्येव इत्याह– ) 'तस्मात् सामान्यदृष्टेन सिद्धैकत्वस्य संगति. । (तस्मादेकवचनान्निङ्गादेः सामान्यतोदृष्टेन वृक्षेष्वप्येकत्वमगति सिध्यति, एकार्थवचनादेकवचनं दृष्टम्, वनशब्दादपि एकवचनं दृश्यते, अतस्तदभिधेयेऽस्त्येकत्वम्। न च वाच्यम्, केवलेन सामान्यदृष्टेन अर्थसिद्धिरिति, सूर्यगत्यादिषु दर्शनादित्याह– ) तेनान्याऽननगम्यापि संख्या स्यात् सूर्ययानवत् ॥' ६५ ॥ ( तेन–सामान्यदृष्टेन इत्यर्थ । न किंचिद् युक्तम्, न हि वृक्षेषु एकत्वं वक्तुमनुमातुम्, प्रत्यक्षविरोधात्, अत पक्षान्तरमाह– ) 'केचिद्वृक्षत्वसामान्यमाहुर्वृक्षाश्रितं वनम्। ( यथेह वात्र विशेषणविशेष्यत्वम्, वृक्षाश्रयं वा बहुत्वं नाऽऽश्रय वा वृक्षत्वमिति। तस्य च एकत्वमस्ति इति एकवचनोपपत्तिरित्याह– ) तत्र चैकत्वमस्त्येव ( यद्वा अस्त्येव वृक्षेऽनेकदेशस्थेषु वनत्वमित्येकवचनोपपत्तिरित्याह– ) वनत्वं वाऽपि विद्यते ॥' ६६ ॥ ( नन्वेकाश्रयमन्तरेण कथं वनशब्दसामान्यमत आह– ) 'विनाऽप्येकाश्रयत्वेन यथैवावयवी तथा। ( ननु संयुक्तेषु अवयवेषु संभवति अवयवी, वृक्षेषु असंयुक्तेषु कथं वनत्वं नाम सामान्यं वर्तेत, अत आह– ) असंयुक्तैरभिव्यक्तिर्दृष्टत्वान्न विरोत्स्यते ॥' ६७ ॥ ( किं पुन. प्रमाणं वनत्वसामान्यसद्भावे ? अत आह– ) 'अन्य-

द्यपाऽनन्यत्वादिकं वाचितं किं निश्चेतुं आह-) 'वस्त्वनेकत्ववादाच्च न संदिग्धाऽप्रमाणता । ज्ञानं सन्दिह्यते यत्र तत्र न स्यात्प्रमाणता ॥ ७९ ॥ इहा-ऽनैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम् । (वस्तुविषयो हि अस्माकं अनेकान्तवादो नैकाकार वस्त्विति, यत्र तु ज्ञानमेवाऽवस्तुरूपं अनेकं अवभासते 'किमयं स्थाणुः किं वा पुरुषः' इति, तत्र संशयात् अप्रामाण्यं भवति, इह तु अनेकरूपमेव वस्त्विति निर्णयात् कुतोऽप्रामाण्यमिति । यत्तु अभेद-वादिभिरुक्तम्, यदा संकेतग्रहणकालादन्योऽवयवः बुद्ध्या निरूप्यते तदा अवयवी नाम न कश्चिदवशिष्यते, तस्मात् न अस्य अवयवेभ्यो भेद इति, तदयुक्तम्, भेद-पक्षेऽपि अवयवेषु निष्कृष्टेषु अवयविबुद्धिरसम्भवैव, अयुक्ताऽनेकावयवव्यापकत्वादवयवी नाम, तेषु निष्कृष्यमाणेषु तस्यापि विनाशो बुद्धितो भवति, तदाह-) निष्कृ-ष्याऽवयवाद् बुद्ध्या याऽन्वयव्यपदीयता ॥८०॥ बुद्धिस्थस्यापि नाशस्य सोऽद्भवस्यापि युज्यते । (दृष्टिविरुद्धं परिहरति-) कुशिकाऽनवयेऽन्यस्य श्यामत्वेन प्रतीयते ॥' ८१ ॥ (कार्येषु अने-केषु वृत्ति व्यापकवृत्तिरिति । यदि किमयं तत्र किं कार्त्स्न्येन एकेन वृत्तिं विना अवयवं इति, तत् जातिवदेव भवति अनवकाशेन, 'न हि भेदनिवृत्तिं कार्त्स्न्यैकदेशकल्पनम्' इति सूत्र (श्लो. वनवाद श्लो. ११), न समानेषोऽप्यवयवेषु वर्तते अवयवा-न्तरपरि वर्तिः, तदाह-) 'तत्र शास्त्रादिसमभः प्रत्याख्येयोऽत्र जातिवत् । (पुनर्गात्रविशेषविनिमेनो-पवचनस्य सास्नादिसमुदायकल्पनादौ दोषमाह-) सास्ना-दिगुणहेतुत्वेनान्यस्मिन् गोत्ववर्तितेन ॥' ८२ ॥ (कारणमाह) 'भिन्नं यत्र हि सास्नादि पिण्डात् पिण्डान्तरे यतः । (अथ सास्नादिराश्रयकथनार्थाना-च समुदाय उपपत्तमभेदेन, अतोऽन्यत्वादि भवती दुष्यते, तदाह-) न चावयवसामान्यं परेषा-मुपपद्यते ॥' ८३ ॥ (उपसंहरति-) 'तस्मात् सास्नादितोऽन्येन गोत्वबुद्धिरुपजायते । (वनबुद्धि-रपि तर्हि वनान्तरेष्वपि समवन्ती न समुदायमात्रस्य नास्ति इत आह-) वनान्तरेषु या बुद्धिर्वनमित्युप-जायते ॥ ८४ ॥ तस्यास्तदैव वृक्षत्वं प्राहुं बह्वाश्रयं विदुः । (अस्ति हि अस्माकं वृक्षत्वं बहुत्वसामान्यं समुदायसामान्यं च, अत्र सर्वेषु वनेषु वृक्षगतबहुत्वो-पाधिकृता वृक्षसमुदायकृता वा वनबुद्धिर्भवतीति । स्यादेतत् वृक्षस्थितबहुत्वाभिधाने बह्वाश्रयं वृक्षत्वाभिधाने च समु-दायाऽभिधाने च वनमित्येकवचनम्, यदा हि इत्थं (हि) बहवो वनमिति यत्र तदा किं अनुपपन्नमेव एकवचनम्, नेत्याह-) एकत्वेऽप्याकृतेर्यद्वद्बहुत्वं व्यक्त्य-पेक्षया ॥ ८५ ॥ बहुत्वे हि तथा व्यक्तेरेकत्वं जात्यपेक्षया । (यथा हि जातिं पत्यात्मना बहुत्वम्, एवं व्यक्तीनामप्यस्ति जात्यात्मना एकत्वम्, नातिग्रहण देशगतेनापि जात्यपेक्षयार्थमिति । भवत्वेवम्, तु वचनमपि तु सामान्याधीन किंचिदपि न भाति, अतएकस्मिन्नपि वृक्षसमुदाये 'वनानि' इत्यपि प्रयोगः स्यादत आह-) यद्यनेकाभिधाने च शब्दा नियतशक्तयः ॥' ८६ ॥ (नियतशक्तयो हि शब्दाः, केचिदेकत्वेनैवाऽऽ-च्छिन्नमर्थं वदन्ति, केचित्तु बहुत्वेनैव, केचिदुभयथा अपि प्रयोगभेदेन वदन्तीति, तदेवोदाहरणानि दर्शयति-) केचिद्दर्शयन्ति दारसंख्याका गमयन्त्यम्बरादिषु । एको व्रीहिः सुनिष्पन्न इति जातिं समस्तया ॥ ८७ ॥ पत्नीसनहनादौ तु व्यक्तिमाकृतिसंख्यया । कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया ॥ ८८ ॥ व्यक्तिजाती वदन्त्यन्ये द्रव्याऽवयवसंख्यया । अस्मानिति यथैवस्मिन् पाशानितीरितेष्वपि ॥' ८९ ॥ (व्रीहिशब्दश्च अन्येषामपि जातिवचनानां दृष्टान्तानुपलक्षणार्थः, पत्नीशब्दोऽपि स्वीयाधिको-पन्यासितया प्रवर्तमानो व्यक्तिवचन, स च आकृति-संख्यया व्यक्तिमवच्छिनत्ति, 'पत्नीं सन्नह्य' इति अस्मिन् मन्त्रे हि अनेकपत्नीकेऽपि एकवचनस्यैव प्रयोगात् आकृतिगतया वाचिना शब्देन प्रवृत्तिनिमित्तं पत्नीत्वमित्यवगम्यते, न हि पत्नीत्वं नाम आकृतिरस्ति । 'अश्मन्' इति व्यक्ति-मवयवसंख्यया, 'अदिति पाशान्' इत्यत्र मन्त्रे जाति-वचनं पाशशब्द एकस्मिन् पाशे बहुवचनान्तं प्रयुज्य-मानो जातिं द्रव्याऽवयवसंख्यया वक्ति । यद्यपि चाय

कर्तृत्वसंजननार्थाः, तैर्विनाऽपि सिद्धे कर्तृत्वे फलभावानुपपादात्। ऋत्विक्फलं च दक्षिणाख्यमानमकं विनाऽपि तैरुपलभ्यते, न तु याजमानम्। तस्मात् यथैव प्रधानानि पुरुषार्थत्वात् यजमानकर्तृकाणि भवन्ति, एवमेतेऽपीति। यथाप्राप्तरूपाणामेव चैषां यजमानगामित्वम्, इति न दन्तधावनं अध्वर्युणा गृहीत्वा यजमानस्य दन्ताः नाल्पिनयाः। केशश्मश्रुवपनेऽपि नियमः नापितकर्तृकमिति नाध्वर्योः क्षुरग्रहणापत्तिः।

व्यपदेशाच्च। ५॥

भाष्यम्— परस्मैपदव्यपदेशश्च भवति 'अभ्यनक्ति' 'दरेणीकयाऽनक्ति' इति च। अन्यो यजमानस्य अञ्जनमभ्यञ्जनं (च) करोतीति गम्यते।

वा— अध्वर्युव्यापारे च 'अभ्यनक्ति' इति परस्मैपदेन निर्देशात् 'अभ्यङ्क्ते' इत्यात्मनेपदयुक्तो विधिर्यजमानस्येति गम्यते।

गुणत्वे तस्य निर्देशः। ६॥

भाष्यम्— यदुक्तं समाख्यानात् यथावेदमिति। नैतदेवम्। गुणत्वे तस्य निर्देशः। तत्र यत्र समाख्या नियामिका इष्यते, यत्र कर्मणः प्राधान्यम्। यदर्थेतस्या पुरुषाः प्राप्ताः, तत्र समाख्यया नियमः। कल्प्यो हि सम्बन्धो वपनादिभिः पुरुषाणां अदृष्टार्थत्वात्। कल्प्यश्चारादुपकारकैः। न च कल्प्ते उपपद्यमाने कल्पः शक्यः कल्पयितुम्। तस्मात् पुरुषप्राधान्ये समाख्या नियामिका स्यात्।

वा— यत्तु इतरकर्मवत् समाख्यया नियम्यते इति। तत्र समाख्या नियामिका भवति, यत्र क्रत्वपेक्षा। क्रतुस्वामी, यदर्थः परिक्रयः। स च कर्तुः क्वचित् गुणत्वमापादयितुं क्रियते, न संस्काराय। ('कल्प्यो हि' इत्यादि भाष्यं उक्तान्यथोपपादनार्थत्वेन व्याख्यानपूर्वं व्याचष्टे— सु) तद्दर्शयति कल्पनीयो हि वपनादिभिः सह विनियोगस्य सम्बन्धः, इतरैः पुनः कल्पनोऽपेक्षणादिति।

चोदनां प्रति भावाच्च। ७॥

भाष्यम्— चोदनेत्यपूर्वं ब्रूमः। अपूर्वं प्रति संस्कारा विधीयन्ते। ते असम्भवन्तः द्रव्येषु कल्प्यन्ते। सन्निकृष्टद्रव्याभावे च विप्रकृष्टेषु भवेयुः। यदा तु सन्निकृष्टे द्रव्ये सम्भवन्ति, तदा न विप्रकृष्टेषु प्रयोक्तव्याः, कृतार्थत्वात्। तस्माद्याजमाना इति।

वा— प्रधानापूर्वाश्रयत्वाच्च यजमानस्य संस्काराः सन्निकृष्टाः मुख्यमपूर्वेण गृह्यन्ते। तन्निष्क्रयार्थत्वाद्वा तत्रैव कार्या इति।

अतुल्यत्वादसमानविधानाः स्युः। ८॥

भाष्यम्— इदं पदोत्तरं सूत्रम्। अथ कस्माद् समानविधाना भवन्ति, अविशेषविधानाद्धि पुरुषमात्रस्य प्राप्नुवन्ति। तदुच्यते। नैतत् समानं सर्वपुरुषाणां विधानम्। कुतः। अतुल्यत्वात्। अतुल्या एते एतद्विधानं प्रति। का अतुल्यता? यत् यजमानस्य विहिताः, न ऋत्विजाम्। कथं यजमानस्य विहिता इत्यवगम्यते? अर्थात् 'स्वयं प्रयोगे स्यात्' (३।७।८।१८) इति। नन्वविशेषात् ऋत्विजामपि विहिताः। प्रयोजनाभावात् अविहिता इति वदामः। कथं प्रयोजनाभावः? ऋत्विग्भिः क्रियमाणाः, न यजमानेन कृता न कारिताः। अतदर्थत्वात् परिक्रयस्य। स्वयंकृताश्च नार्थेन उपकुर्वन्ति। तस्मादप्रयोजनाः। अत ऋत्विजामविहिताः। एतदतुल्यत्वम्। तस्मात् असमानविधाना इति।

वा— अनेन च न्यायेन यजमानस्य समाख्यया कल्पिता भवन्तु, विशेषाभावात्। न च संस्कारत्वात् प्रतिप्रधानमावर्तेरन्नित्यादि दोषः स्यादिति नोदितो वदति। नैतदुक्तम्। सर्वं हि यजमानेन स्वयं कर्तव्यं परिक्रयेण वा कारयितव्यम्। तथा हि संस्कारान् अध्वर्य्वादयः कुर्युः ते परिक्रयस्य अयोग्यत्वेन अप्रयोजकत्वात् कारिता नापि कृता इति अकर्माङ्गत्वेन स्युः। तस्माद ऋत्विग्यजमानानामेते असमानविधाना इति।

शा— पुरुषसंस्काराः केशश्मश्रुवपनादयः किं आध्वर्यवाः उत याजमाना एव इति समाख्यानात् आध्वर्यवत्वे प्राप्ते, ब्रूमः। संस्काराः संस्कृतस्य कार्ययोग्यतां आधातुं क्रियन्ते न कश्चिद्योग्यताजननार्थं क्रतौ परिक्रीणीते, स्वयमेव योग्यत्वात्, स तस्य कार्यं प्रति गुणभावेन परिक्रीणीते, तेन गुणत्वेन परिक्रीतानां कर्तृत्वं प्राप्ते. यथा प्रधानामेन च समाख्यया व्यवस्थानात् यथैव पुरुषाणां

गुणमात्र तत्रैव समाख्यानियमः । संस्कारास्तु याजमाना, वचनात् ऋत्विजामपि भवन्ति 'हिरण्यमालिनः ऋत्विजः' इतिवत् ।

**सोम**—पूर्ववैयर्थ्येन अव्याख्यानात् सङ्गतिः । **सूत्रार्थस्तु**– संस्काराः कर्मवत् तत्तद्वेदसमाख्यया व्यवतिष्ठेरन्, तेषां कर्तृपुरुषसामर्थ्यजनने उपयोगादिति ।

**वि**— 'संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा ।, अध्वर्योस्तत्र यत्करणात् तद्वेदोक्तश्च तस्य ते ॥, संस्कारैर्योग्यता प्राप्य स्वकार्ये कर्तुमृत्विजः । भीयात्यतः क्रिया तेषां यजमानगा ॥'

**भाट्ट**—वपनादयः परिस्रंस्काराः समाख्यानात् अध्वर्युकर्तृकाः । तेन अध्वर्युणा क्षुर दण्डनादि अन्य न गृहीत्वा यजमानस्य केशवपनादि दन्तधावन स्नान च करणीयं अञ्जनाभ्यञ्जनवत् । इति प्राप्ते, 'वपते' इत्यात्मनेपदात् वपनफलभाक्त्वस्य यजमानस्यैव तत्कर्तृत्व प्रतीयते । अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन 'स्थाली पचति' इतिवत् तत्कर्तृत्वम्, तदाशयेन 'तस्मात् केशान् वपाम्यहम्' इति प्रयोगः । यस्तु 'नापितो वपति' इत्यादिप्रयोगः, स छेदनानुकूलक्षुरक्रियाकर्तृत्वमादाय । तत्प्रयोजककर्तृत्वमादायैव 'नापितो यजमानं वापयति' इत्यादिप्रयोग । अतश्च 'वपते' इत्यात्मनेपदस्वरसे आधारत्वमादायैव कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि आत्मनेपदस्य प्रमाणाभावः । तेन अर्थाश्रितस्य तस्य यजमानकर्तृत्वनियमे एव प्रमाणाभावे, अध्वर्युकर्तृत्वनियमस्य कः प्रसङ्गः इति नापितकर्तृकमपि तत् । सोमे तु 'प्रवपति देवम्' इति परस्मैपदप्रयोगात् अध्वर्युकर्तृकमेवानवपनोत्तर 'नापिताय क्षुर प्रयच्छति' इति विधानात् तत्कर्तृकमेव तत् । एवमन्यत्रापि आत्मनेपदयुक्ते द्रष्टव्यम् । अत एव यत्र 'स्नास्यन्ति' 'दर्भेणीवतश्चक्ति' 'दण्डेन दीक्षयति' इत्यादौ परस्मैपदनिर्देशः क्रियते, तत्र सत्यपि आधारत्वमादाय आत्मनेपदोपपत्त्या यजमानकर्तृकत्वे, व्यापारान्तरस्यापि विधानात् अध्वर्युकर्तृकत्वमिष्यते । स्नाने तु शरीराधार एव, स्नातीति परस्मैपदस्यापि प्रयोगात् अन्यकर्तृके च स्नापयतीत्येव प्रयोगात्, यजमाननिष्ठव्यापारस्यैव विधेयत्वेन अन्यकर्तृव्यापारस्य अविधेयत्वेन नाध्वर्युनियमः । न च तत्र परस्मैपदात् अन्यकर्तृत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अतः एभिस्संस्काराः स्वामिकर्तृका एव । कर्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव । विशिष्य विहितास्तु तेषामेवेति न क्वापि समाख्यया नियमः, तस्याः नियामकत्वमात्रेण प्रयोजकत्वाभावादिति वक्ष्यते ।

**मण्डन**— 'स्यात् स्वामिनिष्ठं वपनादि कर्म ।'

**शंकर** — 'पुंसस्कारा याजमानाः ।' ३. 'वचना दृत्विजामपि ।' ४.

● वपनार्थाना आधूननार्थानां च वपनसंस्कारपठितमन्त्राणां भुवसस्वासवपत्तये अनियमेनोपादानम् । भा. १०।५।५।१४.

● वपनादयः यजमानसंस्काराः प्रधानोपकारकाः, नाङ्गोपकारकाः । वि. ३।७।२, ● वपनादयः संस्काराः यजमानस्यैव । वचनात्तु हिरण्यमालिनो ऋत्विजः, सर्वे वाजपेये, लोहितोष्णीषाः श्येने सर्वेषां ऋत्विजाम् । ३।८।५, ● वपनादयः संस्काराः यजमानगतमात्मिव्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते । ३।८।३, ● वपनादयः संस्काराः यजुर्वेदे समाम्नाताः । ३।८।१

● वपनादिसंस्काराणां लोपोऽस्त्रियजमान्य मृताधिकारित्वपक्षे । १०।२।१८।७०. मीको पृ. ७६० (४) 'अधिवयजमानस्य मृताधिकारित्वपक्षे वप-संस्कार-हीनां लोपः' इत्यत्र द्रष्टव्यम् ।

● वपनादिसंस्कारदृष्टोपकारकाः । स च यजमानस्य दृष्टे कर्मोपयोगे नास्ति किन्तु भौतिकाद्यर्थे एव । वि. ३।७।२

● वपननखनिकृन्तनयोः निर्हातवापितकर्तृत्वेन कर्तृत्वनाकाङ्क्षा । सु. ३।८ पृ. ६४

● वपननिषेधः आधाने- अपूर्वकर्मणा- दर्शपूर्णमासयोः प्रथम- अहस्वर्थभिनाशनिषेधः । बाल पृ. २१.

● वपनप्रयोगप्रतिपत्तौ आदीपोभीमादिरिवोत् प्रमाणं सिद्धान्ते । गा. ३।७।२।६ पृ. १०७८.

* अञ्जन-अभ्यञ्जन-वपनपावनानां बहुयजमानकेषु अहीनेषु नित्यादिनिर्दिष्टेन एकैकेन पदार्थेन पदार्थानुसमयो यजमानेषु । सोम. ५।२।२.

* वपा सर्वप्रधाना । भा. १०।७।८।२३. * यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या । १०।७।१९।६४, * वपया प्रातःसवने चरन्ति अग्निष्टोमे पशोः सवनीयस्य । ११।२।३।१४. * ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने ' इति वचनं पशुर्भिन्ति त्रीणि सवनानि कर्तव्यानि इति ( पोषयति ) । टुप्. ११।२।१२।२२. * ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने ' इति सवनीयपशोरेकत्वेऽपि कालभेदेन विधानम् । वि. ११।३।३. * वपायाः श्रपणं आहवनीये विहितम्, तस्यायं प्रतिषेधः योऽयं मध्यपात्रप्रतिषेधः वैदिकेऽग्नौ । भा. १२।२।१।६. * वपानां वाजपेयगतानां प्रयाजशेषेणाभिघारणं नास्ति । ४।१।१४।१३-१९. मीको. पृ. २०८५ ' प्रयाजशेषाभिघारणाभावः ' इत्यत्र द्रष्टव्यम् । * वपायां प्राकृताज्यधर्मस्य नातिदेशः । संकर्ष २।२।१६. मीको. पृ ६९३ ' अवदानं प्राकृत एकरूपाङ्गे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाभिधानं अनिगुनैयगनेनोत्कसम्बन्धेन । ९।०।३।२२. मीको. पृ. २४८ ' अनिगुनैयगनेन उत्कशब्देन वपाभिधानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपोत्खननस्य आसमत्वप्रयोगविशेषः । मु. पृ. ४.

* वपाप्रचारात्पूर्वं पशुपुरोडाशस्य कालः । भा. १२।१।१।१, १२।३।१०.

* वपानन्तु हृदयाद्यङ्गस्यापि पञ्चावत्तमेव ज्योतिष्टोमे अग्नीषोमीये पशौ । १०।७।२०।७२-७३. मीको. पृ १२० ' अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाश्रपणं प्रतिप्रस्थाता करोति । वि १०।७।८. * वपाश्रपणी तन्त्रं ऐकादशिनेषु पशुषु । ११।४।९।३८-३९. मीको. पृ १३०६ ' ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीना तन्त्रम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं न नानाजातीयेषु पशुषु, यथा सौत्रामण्याम् । ११।४।१०।४०-४१. मीको. पृ. १९३६ ' तन्त्रं न कुम्भीशूलवपाश्रपणीना० ' इत्यत्र अधिकरणं द्रष्टव्यम् । * वपाश्रपणी तन्त्रं वाजपेये समस्तासु प्राजापत्यपशुषु । ११।४।८।३३. मीको. पृ. १९३५ ' तन्त्रं कुम्भीशूलवपाश्रपणीना० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वपाश्रपणी-कुम्भीशूलानां वाजपेये प्राजापत्यपशुषु अङ्गादिश्रपणार्थं तन्त्रम् । ११।४।८।३०.

🙞 वमनाधिकरणम् । वैदिकसोमवमने सोमेन्द्रश्चरुः प्रायश्चित्तम् ॥

पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥

भाष्यम्— इदं समामनन्ति ' सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः ' इति । तत्र सन्देहः, लौकिकस्य सोमपानस्य वमने सोमेन्द्रश्चरुः उत वैदिकस्येति । किं लौकिकं सोमपानम्, किंच वैदिकम् ? उच्यते । वैदिकं सोमपानं ज्योतिष्टोमे तद्विकृतिषु च । लौकिकं सोमपानं यत् सत्रयानेषु दशरात्रेषु च धातुसाम्यार्थं आसेव्यमाने सोमे । किं प्राप्तम् ? पानव्यापच्च तद्वत् । लौकिके वमने इष्टिर्भवितुमर्हति, न वैदिके । कस्मात् ? पूर्वः पक्षः प्रतिनिर्दिष्टः । यथा तत्र दोषसंयोगेन श्रवणात् लौकिके अप्रतिषेधे इत्युक्तम्, एवमिहापि दोषसंयोगेन श्रवणं भवति ' इन्द्रियेण वा एष वीर्येण व्यृध्यते, यः सोमं वमति ' इति । लोके धातुसाम्यार्थं आसेविते वमनेन विनष्टे धातुसाम्यव्यापदा इन्द्रियेण व्यृद्धिरुपपद्यते । शास्त्राद्धि वैदिके न दोषः स्यात् । तत्र दोषः पातयः इति शास्त्रचोदिते निवृत्ते नास्ति दोषः । यद्यपि वम्यते, तथापि पानक्रिया तत्र निर्वर्तिता, कृतो वचनार्थ इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि सोमेन्द्रः स्यात् ।

वा— अयमपि अनारभ्यवाद एव । ' सोमेन्द्रं चरुं निर्वपेत् यः सोमं वमति ' इति । तत्रापि पूर्ववदेव अधिकरणद्वयमपि विचार्यते । लौकिकसोमपाने रसायनार्थं कृते वमनेन व्यापन्ने सोमेन्द्रयागः, उत वैदिके, उत उभयत्रापि । तत्र तद्वत् इत्यनेन सामान्यपक्षः

' दोषात् त्विष्टिर्लौकिके स्यात् ' इत्यत्र चातिदिश्यते । अथवा अधिकरणद्वयमपि सिद्धान्तरूपेण अधिकरणद्वयेऽपि अतिदिश्यते । केनचिद्विशेषेण पूर्वपक्षरचना । तत्रेह तावत् वैदिकेन पानेन द्रव्यप्रतिपादनस्य कृतत्वात् न कदाचित् भ्रेषे पुनः प्रतिसमाधानापेक्षाऽस्ति इत्यर्थक इष्टिविधानम् । लौकिके तु वमनेन व्यापन्ने रसायनगुणाभावात् इन्द्रियेण वीर्येण च व्यृद्धिः समाप्यते । न चास्ति दरवत् अन्यत्रासमापना । तत्संयोगे च श्रूयमाणा इष्टिः शास्त्रसामर्थ्येन विधीयते । तस्मात् तत्र स्यादिति ।

दोषात्तु वैदिके स्याद्यर्थाद्धि लौकिके न दोषः स्यात् । ३३ ॥

भाष्यम्— वैदिकस्य पानस्य व्यापदि भवितुमर्हति, न लौकिकस्य । कस्मात् ? दोषात् । दोषसंबन्धोऽत्र श्रूयते ' इन्द्रियेण वा एष वीर्येण व्यृध्यते ' इति । लौकिके पुनः धातुसाम्यार्थं क्रियमाणे न किंचिद् दुष्यति । वमनार्थेन हि तं पिबन्ति लोके । यद्यपि अयमर्थवादः, तथापि फलकल्पनापरिहाराय वैदिके एव इति कल्पना न्याय्या ।

वा— तैरेव वैदिकत्वसामान्यादिभि (हेतुभिः) वैदिके भवति इति परमार्थोच्यते । न हि वमने वैदिकस्य सम्भवति, अचोदितत्वात् । अतो य एव दोषो लौकिकगामित्वे हेतुः स एव इह वैदिकविषयत्वे स्यात्, तथाहि, ' सम्यग्जरणरूपान्ता प्रतिपत्तिर्विधीयते । तद्व्यापद्धि प्रधानस्य न भवेत् पूर्ववत् फलम् ॥ ' न च तावत् लौकिकपानव्यापदि दोषोऽस्ति, वमनार्थमेव पानात् । यद्यपि भवति, तथापि वैगुण्येन तस्य प्रतिसमाधान इति न वैदिकोपायापेक्षा । वैदिके तु पाने सम्यग्जरणपाठात् जरणान्ता प्रतिपत्तिरवधारिता । सा च वमनेन व्यापद्यते । तत्र प्रधानफलवैगुण्याशङ्कायां तत्समाधानार्थी इष्टिर्विधीयते । अथ तु अत्र फलार्थवादः, तत्र सुतरां फलकल्पनाभयात् लौकिकाद्विवृत्तिर्भविष्यति । वैदिके तु वमनेन पानं प्रत्यायितम् (प्रत्यवायितम्), तेन सङ्गतस्य इष्टिरिति सुकरः संबन्धः ।

शा— ' तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत् । दोषो ह्यत्रास्ति वमनाद् व्यृद्धिरिन्द्रियवीर्ययोः ॥ ' एवं प्राप्ते, ब्रूमः । ' लोके हि वमनार्थेव पानाद् दोषो न विद्यते । सम्यग्जरणपर्यन्तं वेदे पानं विधीयते ॥ वेदे तु क्रतुवैगुण्यात् समाधित्सोपजायते । अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत् ॥ अपेक्षितविधिर्न्यायानपेक्षितचोदनात् । तेन क्रत्वङ्गमेवेष्टिः फलं चैवं न कल्प्यते ॥' ३।४।१६.

सोम— सूत्रार्थस्तु-सोमपानस्य व्यापत्तिरपि अश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षवत् लौकिकी एव निमित्तमिति ।

कै— दृष्टान्तसंगतिरत्र ।

वि— ' सोमवामिचरुर्लौके वेदे वेन्द्रियनाशकः । दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः ॥, अतो वमनार्थेन लोके पानं श्रुतौ पुनः । जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः ' ॥

भाट्ट— अनारभ्यैव ' वि वा एष इन्द्रियेण वीर्येणर्ध्यते (दोषमागेनर्ध्यते) यः सोमं वमिति, यः सोमवामी स्यात्, तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत् ' इति श्रुता इष्टिरपि वैदिकस्यैव सोमस्य वमने भवेत्, न तु लौकिकस्य । वैरूप्यगौरवादिभयेन जघाति होमवदेव उभयार्थत्वस्य वक्तुमनुचितत्वात् । न च अश्वप्रतिग्रहेष्टिवत् दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्वशङ्का, वमनजन्यस्य आयुर्नाशादिरूपस्य इन्द्रियवीर्यनाशरूपव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि व्यवमानत्वात् । तन्निर्घातार्थत्वस्य प्रत्यक्षादिविरुद्धत्वाच्च । वैदिके वमनार्थतयैव सोमपानविधानात्, तस्य इन्द्रियादिनाशकत्वानुपपत्तेश्च । अतः इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया क्रतुवैगुण्यस्यैव प्रतिपादनात् तन्निर्घातार्थमेव अस्या इष्टेः युक्तम् । श्रवणे च ' मा मेऽवाङ् नाभिमति गाः ' इत्यादिमन्त्रयोः सम्यग्जरणान्तस्यैव भक्षणस्य दोषप्रतिपत्त्यर्थत्वावगतेः वमने क्रतुवैगुण्यम् । अतश्च अश्वदानवत् वमनस्य नैमित्तिकत्वाभावेऽपि इष्टेः अविगुणक्रतुविशेषाङ्गत्वं अविरुद्धम् । १६.

मण्डन— ' वेदोक्तपाने वमने चरुः स्यात् । '

शंकर— ' वर्माङ्गवमने यत्र । '

● वमनेष्टिः ( ३।४।१२।३२–३३ ) 'सोमेन्द्रं चरुं निर्वपेत् य: सोमं वमिति' इति यच्छब्देन इष्टिवमनयो: समानकर्तृत्वनिर्देशात् यजमानवमने एवेष्टिः । सु. पृ. १५१२, ■ वमनेष्टिः । सौमेन्द्र कर्म वमनोपस्थापित-कर्माङ्गत्वा अनुमन्देव सोमवामिन उपकरोति, यजमानस्यैव च तथा उपकर्तुं शक्नोति नर्त्विजम्, ततश्च वमना-नार्थत्वेन सौमेन्द्रस्य कर्मणः यजमानकर्तृकत्वात् तस्य च वमनयजमानकर्तृकत्वनिर्देशात् ( निर्वपेत् यः सोम वमिति ) यजमानवमने एव सौमेन्द्रं कर्म । पृ. १५१३, ● वमनेष्ट्यां वैदिकसोमवमननिमित्तकत्व अर्थवाद-प्रामाण्याधीनम् । वृ. ६६.

● वमननिर्वेचनयोः ( सोमस्य ) प्रायश्चित्तम्ना-नम् । वा. ३।४।१।२६ पृ. ७८५.

⧖ वरमद्य कपोतः श्वो मयूरादिति न्यायः । न्यायोऽयं सदिग्धबहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तु-वरत्वविषये प्रवर्तते । साहस्री. ६७०.

⧖ वरं सांशयिकान्निष्कादसांशयिकः कार्षापण इति न्यायः । सुवर्णनामकाद्विष्कसंशयमननिष्कादसंशा-यिकः कार्षापणो वरम् । कार्षापण नाम राजतारिमित-रूपकस्य 'हवैया' इति ख्यातस्येति । न्यायोऽयं सदिग्ध-बहुमूल्यवस्त्वपेक्षया अल्पमूल्यवस्तुवरत्वविषये प्रवर्तते । साहस्री. ६७६.

● वरः नाम —'गौर्वै वरोऽतिवरः, अन्यो धेनुर्वरो-ऽतिवरः, अन्योऽनड्वान् वरोऽतिवरः' इत्यापस्तम्बा-चार्योक्तो वरशब्दार्थो द्रष्टव्यः । सोम. ३।८।१.

⧖ वरगोष्ठीन्यायः । गोष्ठी नाम नैकेषां कस्य-चिदुद्देश्यस्य 'गोठी सभा' इत्यन्यः । अन्योन्यवार्तालाप-स्थानविशेष इति । वरस्यार्थाय गोष्ठी वरगोष्ठी । तत्र यथा वरवधूनन्यूनाधिकमन्ये विवाहादिरूपमेव कार्यं निष्पाद्यते तथा प्रकृतेऽपि । साहस्री. २०.

■ वरघातायं कन्यावरणमिति न्यायः ॥ न हि वरघाताय कन्यामुद्वाहयन्तीति न्यायः ॥ दाम्भि समानविषयको समानार्थको शब्दौ हि अनिष्टान्तरशास्त्रादि-र्थमवगाधा अभीष्टेरपि यत्तु न वरणीयमित्येवं तत्त्वार्थे प्रवर्तेते । साहस्री १५३,१५८.

● वरदानस्य अध्वर्युकर्मता अग्निचयने स्वयमातृ-ण्णोपधाने । 'य एतां इष्टकामुपदध्यात्, स त्रीन् वरान् दद्यात्' इति । वि. ३।८।२.

● वरकः नाम धान्यं भयङ्करं तस्य प्रतिनिधात-व्यम् । भा. ६।३।६।२०.

● वरणं अयन्त्रप्रवृत्तानां प्रवर्तनार्थमभ्यर्थनम् । वा. ३।७।९।२४, ● वरणं आधानवत् कर्मोपनिकान् तान् ( ऋत्विजः ) उत्पादयत् दृष्टार्थं भविष्यति । ३।७।१६। ३३ पृ. १०९७. ● वरणम् । 'ऋतुप्रैषादिभिर्वृणीते' इति येषां आम्नाया वचनम्, तेषां तत्रैव मन्त्रैर्वरणम् । संकर्ष. ३।४।११. मीको. पृ. १२४३ "ऋतुप्रैषादि-भिर्वृणीते' इति येषा॰" इत्यत्र अधिकरणं द्रष्टव्यम् ।

⧖ वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् । १०।२।१०।३५ ॥

द्वादशाहादौ सत्रे ऋत्विजां वरणं न स्यात् । पूर्ण-मासादौ वरणस्य आनमनार्थत्वात् सत्रे च तदभावात् आर्त्विज्यस्य । सत्रे सर्वे यजमानाः सर्वे ऋत्विजः इति स्वकर्म सर्वेषां स्वकर्मैव भवति न परकीयम् । पूर्णमासादौ तु ऋत्विजां न स्वकर्म इति तत्र वरणं आनमनार्थं इति युक्तम् । तस्मात् सत्रे वरणं नास्ति इति सिद्धान्तः । के. ● 'वरणमृत्विजामानमनार्थत्वात्॰' ( १०।२।१०। ३५ ) । अध्वर्य्वादयो दीक्षावाक्ये अनूद्यन्ते इति वरणमरणे कर्तव्ये स्यातामू, तत्र 'वरणमृत्विजा॰' इति सिद्धान्तः । वा ३।७।१६।३३ पृ. १०९८. ● 'वरणमृत्विजामानमनार्थत्वात् ॰' १०।२।१०।३८। सत्रे ऋत्विजां स्वकर्मत्वेन वरणस्य आत्मार्थत्वापत्तेः आत्मनि च प्रार्थनात्मकवरणायोगात् सत्रे वरणं नास्ति । सु. २।७ पृ. २५. ● वरणमृत्विजां किं अवयवमुद्दिश्य समुदायमुद्दिश्येति । किं पुनरत्र युक्तं समुदायमुद्दि-श्येति । तथा सति अविघ्नेन कर्तुं कर्म निर्व-र्तेत । भा. ११।८।२।५। यदप्युच्यते समुदायमुद्दिश्य वरणमिति, तदयुक्तम् । वरणमपि भेदेन कर्तव्यम् । एकैकस्य भेदेन वरणम् । टुप्. ● वरणं ऋत्विजां प्रकृतौ ( ज्योतिष्टोमे ) आनमनार्थं दृष्टप्रयोजनम् । भा. १०।२।१०।३८, संकर्ष. २।३।१. ● यागं

चोदितस्यैकत्वं निरूपितम्। तस्मात् दक्षिणैकत्वम्। तथा च तत्र कर्तारः।

**वेदिसंयोगादिति चेत्॥ ४७॥**

**भाष्यम्—** अथोच्येत वेदिसंयोगो होतुः श्रूयते 'अन्तर्वेद्यन्यः पादो होतुर्भवति, बहिर्वेद्यन्यः' इति। एकस्य होतुः पाद उभयत्रोपपन्नुमसमर्थः। तस्मात् कर्तृभेदः।

**न देशमात्रत्वात्॥ ४८॥**

**भाष्यम्—** नैतदेवम्। कस्मात्? देशमात्रत्वात्। नायं होतुः पादो वेदेरुपकारार्थत्वेनोपदिश्यते। किं तर्हि? देशमात्रमेतद्विधीयते। तस्मिन् देशे होता स्थानम्, यत्र अन्यतरः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति। कुतः? एकवाक्यत्वात्। एकमिदं वाक्यं युक्तम्, सन्निध्यनुग्रहादेकार्थत्वाच्च। यदि च होतुः पादो वेद्युपकारत्वेनोपदिश्येत, एकस्मिन्नन्तर्वेदिनिहिते कृतः श्रुत्यर्थ इति द्वितीयस्यानियमः स्यात्। सोऽपि नियन्तव्यो बहिर्वेद्यन्य इति। कथं पुनरेकोऽन्तर्वेदीत्युक्ते द्वितीयोऽपि प्रसज्येत, अप्रतिषिद्धत्वात्। यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्तत एकस्य वचनं द्वितीयनिवृत्त्यर्थम्। न चास्ति प्राप्तिः। तस्मादस्ति प्रयत्नः। तथा च वाक्यभेदः। अथ तु देशविशेषविधानार्थमेतद्वचनं ततस्ताभ्याम् उभाभ्यां सम्भूय क्रियत इत्येकार्थत्वात् एकवाक्यत्वमुपपन्नम्। तस्मात् होतुः पादो वेदेरनङ्गम्। अतो नोभयत्र निर्णयः।

**शा—** कर्तृषु इदानीं तन्त्रावापौ चिन्त्येते। तत्र अध्वर्युप्रतिप्रस्थातारौ वचनादेव विहारद्वये व्यवस्थितौ। ब्रह्मा होता आग्नीध्रश्च किं विहारयोर्भेदेन उत तन्त्रेणेति। तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात् प्रयोगाङ्गभूतानां कर्तृणामपि भेदः स्यात्। नैवम्। असत्यपि भेदे तैरेव उभयत्रापि कार्यसिद्धेः। दर्शिता च कार्यसिद्धिः भाष्ये। वचनाच्च 'चातुर्मास्यानां पञ्चर्त्विजः' इति। विहारद्वयाभिप्रायं हि इदं पञ्चर्त्विग्वचनम्। न हि एकैकस्मिन् विहारे पञ्च पञ्च सन्ति। वचनादेव विहारद्वये अध्वर्युप्रतिप्रस्थात्रोः व्यवस्थितत्वात्। तस्मात् तन्त्रं ब्रह्मादयः।

**सोम—** पूर्वाधिकरणे देशभेदव्यवस्थापनेन सिद्धं भेदप्रयोगभेदं उपजीव्य एतदधिकरणप्रवृत्तेः संगतिः।

**वि—** 'कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदतः। पञ्चर्त्विग्वचनान्नैवं द्वयोरुक्त्या व्यवस्थितिः॥'

**भाट्ट—** तत्र अध्वर्युप्रतिप्रस्थातारौ वचनात् व्यवस्थितौ। ब्रह्मा होता आग्नीध्रश्च किं भेदेन उत तन्त्रेणेति चिन्तायां देशभेदेन तत्तद्देशसंबन्धिपदार्थप्रयोगभेदावगतेः प्रयोगाङ्गकर्तृणां भेद इति प्राप्ते, सत्यपि प्रयोगभेदे तैरेव कर्तृभिः प्रसङ्गात् कार्यसिद्धेः तत्कर्तृकपदार्थानामावृत्तौ प्रमाणाभावाच्च भेदेन ब्रह्मादयः। न ह्यत्र यद्वाध्वर्युरितिवद्वचनमस्ति, अतश्च वस्तुगत्येन अङ्गना तन्त्रिणामनेः सत्यपि विरोधे वैरुत्तरविहारे एव पदार्थाः कर्तव्याः। अत एवोभयत्रोत्करदेशसत्त्वेऽपि नाग्नीध्रकर्तृकस्फ्यादानादीनां भेदेनानुष्ठानं न वा तदर्थमाग्नीध्रभेदः, वस्तुगत्येन उत्तरविहारसम्बन्ध्युत्कर एव तेनैवाग्नीध्रेण स्फ्यादिवत् प्रत्याश्रावणादिनियमपरिहारसिद्धेः।

आवश्यकी चेयं रीतिः अन्तर्वेदिकर्मयजमानपदार्थेषु। न हि तेषां देशभेदादावृत्तिरिष्टा, देशसंस्कारकत्वाभावेनावृत्तौ प्रमाणाभावात्। सकृत्करणेनैव कार्यसिद्धेश्च। अत एव यजमानकर्तृको प्रयाजादेस्तन्त्रावृत्तिरिष्टैव। न च तदर्थमाग्नीध्रभेदः शङ्क्यः। 'चातुर्मास्यानां पञ्चर्त्विजः' इति वचनेन तद्बाधात्। तत्कर्तृकपदार्थेषु तु नैव कश्चिद्विशेषः। विहारद्वयदक्षिणभागस्थितेन एकेनैव ब्रह्मणा तन्त्रेण उभयोपकारकपदार्थकरणोपपत्तेः। एवं होतृपदार्थेष्वपि। न च तस्य 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः' इति वचनेन वेदिदेशस्य अङ्गत्वावगतेः कथं तन्त्रानिरोध इति वाच्यं 'अर्धमन्तर्वेदि मिनोति' इतिवत् देशविशेषलक्षणया गार्हपत्यपुरोभागस्यैव तत्र विवक्षितत्वात्। अस्तु वा कथञ्चित्तत्र विशेषस्तथाऽपि प्रसङ्गादेव कार्यसिद्धेर्न पदार्थावृत्तिः कर्तृभेदो वा।

**मण्डन—** 'न तयोः कर्तृभिन्नता।' तयोः दक्षिणोत्तरविहारयोः।

**शंकर—** 'कर्तृतन्त्रं तयोर्मतम्।'

● वरुणप्रघासेषु अवभृथ अर्थकर्म प्रधानमित्यर्थः। न प्रतिपत्तिः, नापि वारुण्यामिक्षाद्रव्य विपर्ययः। **सि.**

११।२।१५ ● वरुणप्रघासेषु अवभृथ प्रधानाङ्गभेदे देशभेद 'अभ्यवभृथेन चरति' इति वचनात्। भा ११।३।१।१ ● वरुणप्रघासेषु अवभृथधर्मक कर्मा तस्य विधानम्। ११।२।१ ।६३-६६ मीसो दृ ७०३ 'अवभृथधर्मवत्कर्मान्तरम् वरुणप्रघासेषु विधानम्' इत्यत्र अधिकरण द्रष्टव्यम्। ● वरुणप्रघासेषु अवभृथशब्द सौमिकावभृथधर्मातिदिशन् तद्धर्मसंयुक्त कर्मान्तर विधत्ते। वि ७।३।८, ● वरुणप्रघासेष्वाग्नेय्यादीना मारुत्या भेदेनानुष्ठानम्। ११।२।९।३९-४२ ● वरुणप्रघासेषु आमिक्षा मारुती वारुणी च। भा ११।२।१५।६३, ● वरुणप्रघासेषु उत्तरे विहारे 'अध्वर्युरग्नी हवींषि आसादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इत्र देशत वाचनिकी व्यवस्था श्रौती। बाल पृ १८ ● वरुणप्रघासेषु उत्तरवेदिरस्ति 'उपान वपति' इत्यनारभ्य श्रुतेन वाक्येन उत्तरवेद्या अग्नेरुपवापस्य विहितत्वात्। वि ७।३।९ ● वरुणप्रघासेषु औत्तरवेहारिकाणि अङ्गानि मारुत्या नोपकुर्वन्ति देशभेदात् कर्तृभेदाच्च। भा ११।३।१६।२४, ● वरुणप्रघासेषु 'नाथ एककपाल' (क देवता अस्य इति काय) चातुर्मास्येषु। ७।१०।८।२२, ● वरुणप्रघासेषु कायं एककपाले चातुर्मास्यवैश्वदेविकन्यायादपि नैक कपालनिर्वपतस्यातिदेश नाम्ना। ७।३।१०।२६

## ● वरुणप्रघासेषु दक्षिणविहारे नियमाय मारुत्यर्थं पृथगङ्गानुष्ठानम्॥

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते। ११।२।९।३५॥

भाष्यम्— वरुणप्रघासेषु विहारपृथक्त्वमाम्नात 'पृथगग्नी प्रणयत, पृथग्वेदी कुरुत' इति। तत्र श्रूयते 'अध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। इह विचार्यते किं भेदेन दक्षिणविहारेऽङ्गानि कर्तव्यानि, अथवा यान्येव उत्तरे कृतानि तान्येव इतरस्याप्युपकुर्वन्तीति। किं प्राप्तम्? भेदेनाङ्गानि कर्तव्यानि। कुत? देशभेदात्। देशो हि भिद्यते, दक्षिण उत्तर इति। यानि उत्तरे विहारे प्रधानानि तेषां सान्निध्येन अङ्गानि अनुवर्तन्ते, अङ्गानि तु विधानतात् प्रधानेनोपदिश्येरन्, तस्मात्प्रादेश‍देश इति। न प्रदेशाया मारुत्या। तस्मात् तदर्थं दक्षिणे विहारे भेदेन कर्तव्यानीति।

अचोदनेति चेत्। ३६॥

भाष्यम्— एतत् चेत्पश्यसि देशभेदादङ्गाना पृथक् निर्वृत्तिः। नैतदुक्तम्। यत्कारणम्, अचोदनाऽङ्ग मारुत्या। यत्र याग फल प्रति चोद्यते तत्राङ्गानि गृह्णाति। न चेह मारुत्या फल प्रति चोदना। कि तर्हि 'चातुर्मास्यै स्वर्गकामो यजेत' इति। न चेदिह कर्म चोद्यते, अङ्गाना प्राप्तिरेव नास्ति, कुतो भेद समता वा।

स्यात्पौर्णमासीवत्। ३७॥

भाष्यम्— स्यादङ्गाना प्राप्ति। पौर्णमासीवत्। यथा 'पौर्णमास्या पौर्णमास्या यजेत' इति न तत्र कर्म फल प्रति चोद्यते। अ यत्नेव तच्चोदितम्, 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत' इति। अथ च तत्र प्रधान पौर्णमास्या क्रियते इति। एवमिहापि भविष्यति।

प्रयोगचोदनेति चेत्। ३८॥

भाष्यम्— अथ उच्येत, प्रयोगस्तत्र पौर्णमास्या चोद्यते यजेतेत्याख्यातेन। प्रयोगश्च अङ्गप्रधानाना निवर्तित। प्रयोगाङ्ग च फल। तस्मात्तत्र साङ्ग प्रधान पौर्णमास्या क्रियते इति।

तथेह। ३९॥

भाष्यम्— तत्र ब्रूम। इहापि मारुत्या प्रयोग चोद्यते 'आसादयति' इत्यनेनाख्यातेन। यथा च तत्र प्रयोगाङ्गमेव देशोऽपि। तस्मात् मारुत्यपि साङ्गा दक्षिणविहारे कर्तव्या। ननु नासादयतिशब्देन याग उच्यते। कथ तत्र प्रयोग चक्ष्यति? आह। यागाय येनदासादनम् यथा पत्नी। तथा इहार्थं गच्छति। इतरथा अत्यन्तमेवं कल्पयितव्य स्यात्। यागार्थं चेत्तत्र यागोऽवश्य कार्य। तेषा अन्यथा याग चोदना भवति। यथा 'सौर्यं चरु निर्वपेत्, सौम्य नख्रुमन्मेन' इति। तस्मात् इहापि मारुत्या प्रयोग चोद्यते। तत्र च प्राप्तानामङ्गाना भेदेन क्रिया।

आसादनमिति चेत्। ४०॥

येन कर्मणा संनिपतितो मन्त्रस्तदर्थोऽसौ इति गृह्यते विशेषः । तस्मादप्यावृत्तिः ।

शा — वरुणप्रघासेषु दक्षिणोत्तरविहारयोः निर्वापादिमन्त्राः [illegible] तन्त्रेण अध्वर्युणा प्रतिप्रस्थात्रा वा अन्यतरेण वक्तव्याः, उत उभाभ्यामपि भेदेन इति संशये अन्यतरेणापि उच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्तुम् इति मन्यते । निर्वपामीत्यादेः आत्माभिधायित्वात् न तन्त्रता संभवति, इति उभयोः पृथक्पृथक् प्रयोगः । सकृदर्थकृदनुष्ठानप्रसङ्गात् तन्त्रावापचिन्ताऽपि इयं अत्र कृता ।

सोम— पूर्ववदिह न कार्यसिद्धिः इत्युपस्थितेः संगतिः । सूत्रार्थस्तु— निर्वपणादिमन्त्राः भेदेन प्रयोक्तव्याः, तेषां करणमन्त्रतया कर्मादिसंनिपातित्वात्, उभयोश्च कर्त्रोः प्रयोगतोऽन्यमन्त्रासंभवेन एकेन प्रयुक्तस्य इतरकर्तृककर्मादिसंनिपातासंभवात् इति ।

वि— ' विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ।, तन्त्र इष्टेः स्मृते. सिद्धे, कर्त्रोर्भेदात् पृथक् भवेत् ॥'

भाट्ट— वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्देशभेदात् कर्तृभेदाच्च पदार्थाना न क्रमता इति स्थितम् । तत्र च प्रयाजादिविषये भूयोऽनुग्रहस्य न्याय्यत्वात् मासर्यां न्यायप्राप्तः क्रमः. ' प्रदेशा ध्वर्युः करोति, तत् प्रतिप्रस्थाता करोति ' इति वचनेन बाध्यते इत्युक्तमेव । अतस्ते तावत् पृथगेव कर्तव्या. । मन्त्रास्तु ये अर्थस्मारकाः ते अध्वर्युणा तावत् पठनीया. । ततश्च तेन मन्त्रान्ते पदार्थे कृते पश्चात् प्रतिप्रस्थाना स्वपदार्थे क्रियमाणे अध्वर्यु-प्रतिप्रस्थातृकर्तृकपदार्थयोः क्रमविधानात् प्रतिप्रस्थातृकर्तृकपदार्थस्य अध्वर्युकर्तृकपदार्थेनैव उपस्थितिसिद्धेर्मन्त्रकार्यस्य प्रसङ्गसिद्ध्या न मन्त्राणा प्रतिप्रस्थात्रा पृथक्पाठः । इति प्राप्ते, -निर्वपामीत्यादिमन्त्रेषु आत्माभिधायितया आत्मकर्तृकनिर्वापस्मृतेरेव कार्योपयोगितया तादृश्याश्चान्यतः अलाभात् न प्रसङ्ग । यत्तूक्तम् ' प्रदेशाध्वर्युः करोति ' इत्यनेन न क्रमविधिः, प्रसङ्गाभावमात्रफलकतया पदार्थकरणमात्रविधानात्, कर्तृभेदेन पाठक्रमस्यापि अनियामकत्वाच्च । अतो युगपदेव द्वाभ्यां समन्त्रकाः पदार्थाः कर्तव्याः इति न प्रसङ्गावकाशः ।

मण्डन— ' पाठः पृथक् स्यात् द्रष्ट संनिपातिनाम् । '

शंकर— ' विहारयोर्न मन्त्रैक्यम् । ' १०.

* वरुणप्रघासेषु ' द्वयोः प्रणयन्ति ' इति पुनर्विहितमग्निप्रणयनं अपूर्वम् । न प्राकृतं नापि सौमिकं परतु अतिदेशप्राप्तं प्राकृतं कृत्वा पुन. अपूर्वं विहितं अग्निप्रणयनं कर्तव्यम् । वि. ७।३।९ वर्णकं २ ( पार्ष्णिकमतम् ), * ' वरुणप्रघासेषु ' द्वयोः प्रणयन्ति ' इति पुनर्विहितमग्निप्रणयनं न तु वैश्वदेवशुनासीरीययोः । पुनर्विधानं च उत्तरवेद्या अग्निनिधानगुणविधानार्थम् । ७।३।९, * वरुणप्रघासेषु नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारे अनुतिष्ठति । इतराण्यष्टौ च अध्वर्युरुत्तरे विहारे अनुतिष्ठति । उभयोरपि विहारयोरङ्गाना भेदेनानुष्ठानम्, न तन्त्रम् । ११।२।९.

* वरुणप्रघासेषु पत्नीसंयाजानां द्विरावृत्तिः ॥

एकाग्नित्वादपरेषु तन्त्रं स्यात् । ११।२।११। ४९ ॥

भाष्यम्—इदमपरं तत्रैव चिन्त्यते । किं आपराग्निका होमास्तन्त्रं कार्याः उत भेदेनेति । किं प्राप्तम् ? तन्त्रमिति । कुतः ? एकाग्नित्वात् । पौर्वाग्निकानामग्निभेदात् भेद उक्त. । इह स हेतुर्नास्ति । एकाग्नित्वादेतेषाम् । तस्मादेते तन्त्रं भवेयुः ।

नाना वा कर्तृभेदात् । ५० ॥

भाष्यम्— नाना भवेयुः । कुत. ? कर्तृभेदात् । मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थात्रा कार्याणि । इतराणि अध्वर्युणा । तन्त्रभावेऽन्यतरेण कर्तृकृतं वैगुण्यं स्यात् । तस्मात् भेद ।

शा— ये पुनः आपराग्निका होमाः पत्नीसंयाजादयः तेषु तन्त्रं आवापो वा इति संदेहे पौर्वाग्निकवत् देशभेदाभावात् तन्त्रत्वं स्यात् । असत्यपि देशभेदे कर्तृभेदात् भेदः, प्रतिप्रस्थातृकर्तृका हि मारुत्या उपकुर्वन्ति अध्वर्युकर्तृकास्त्वितरेषा तस्माद्भेदः ।

वि— ' तत्रैव पत्नीसंयाजादौ तन्त्रं भिद्यताऽथवा । तन्त्रमग्न्यैक्यतो, भेद कर्तृभेदानिवारणात् ॥ '

**भाट्ट**— तत्रैवापराग्निका पत्नीसंयाजादयो देशभेदात्तन्त्रम् । इति प्राप्ते, देशभेदवत् कर्तृभेदस्यापि प्रयोगभेदप्रयोजकत्वात् तदनुरोधेन तत्राप्यावृत्तिः । न च देशभेदादेवाङ्गावृत्तौ सिद्धायां तत्र कर्तृत्वापेक्षणे प्रतिप्रस्थातुः मानविधानाच्च कर्तृभेदस्य स्यात्तन्त्रेण प्रयोगभेदाक्षेप कार्यमिति वाच्यम्, वैपरीत्यस्यापि वक्तुं शक्यत्वेन विनिगमनाविरहेणोभाभ्यामपि कर्तृदेशाभ्यां स्वविशिष्टप्रयोगविधिबलेन प्रयोगभेदाक्षेपोपपत्तेः । अतश्च पत्नीसंयाजादिषु देशभेदाभावेऽपि कर्तृभेदादेवावृत्तिः ।

वस्तुतस्तु देशकर्तृविशिष्टप्रयोगविधानेऽपि वास्तिक परम्परायवनदोन तत्तद्देशीयतत्तत्कर्तृकपदार्थानामेव प्रयोगविध्यापत्तेर्होमादिकर्तृकपदार्थानां तत्तद्देशाभासिद्धत् अव देशीयानामप्यापराग्निकानां प्रतिप्रस्थातृकर्तृकत्वानापत्तेर्नानेन पत्नीसंयाजादिषु प्रतिप्रस्थातृकर्तृकत्वम् । न हि मारुतीयागे प्रतिप्रस्थातृकर्तृकत्वम्, येनाङ्गप्रधानयोरेककर्तृकत्वात् पत्नीसंयाजेष्वपि तत्प्राप्तिसम्भवः स्यात् । मारुतीयागस्य यजमानकर्तृकत्वेन प्रतिप्रस्थातृकर्तृकत्वाभावात् । किन्तु 'प्रचरेयाप्यर्धं करोति' इत्यनेन पत्नीसंयाजेषु तत्प्राप्तिः । अत्र हि यः पदार्थो यागाङ्गकाण्डगभूते अध्वर्युकर्तृकः तत्पदार्थस्य मारुतीयागाङ्गत्वे प्रतिप्रस्थातृकर्तृकत्वं विधीयते । अतश्चापराग्निकानामावृत्तिः ।

**मण्डन**— 'आपराग्निकभेदः स्यात् ।' आपराग्निकानां होमानां भेद भेदेन अनुष्ठानं स्यात्— न तन्त्रेण इत्यर्थः ।

**शंकर**— 'आपराग्निकभेदोऽत्र ।'

* वरुणप्रघासेषु प्राग्वंशादेव औत्तरवेदिकस्य प्रणयनम् । सङ्कर्ष ३।२।२२ * वरुणप्रघासेषु बर्हिरादीनां न भेदः । भाट्ट ११।२।९ * वरुणप्रघासेषु मारुत्या भेदे प्रयाजादीनां भेदेन क्रिया । भा ११।२।१०।४८ * वरुणप्रघासेषु यवपिष्टमय मेष वारुण्यामिक्षायामन्वदधाति । तस्य आमिक्षासंयुक्तस्य मेषस्य सर्वस्यैव होमः । वि ११।२।१८, * वरुणप्रघासेषु वारुणी आमिक्षा । तत्र 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति'। अत्र प्रयोगप्रकार — वरुणप्रघासेषु नव हवींषि । तेष्वष्टमं हविः वारुण्यामिक्षा । नवमं हविः 'काय एककपालः'। वारुण्यामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति, तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा, तत एककपालेन प्रचर्य, माण्डलिकेन वारुण्यामिक्षाया निष्कासेन यवतुषैश्च अवभृथमनुतिष्ठन्ति इति । ११।२।१५, * वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति विहिते कर्मान्तरे अतिदेशप्राप्तो वारुण एककपाल पुरोडाश तुषनिष्कासाभ्यां बाध्यते । अतिदेशात् उपदेश प्रबल । ७।३।८ * वरुणप्रघासेषु विहारद्वये सति पत्नीसंयाजानां तन्त्र न, कर्तृभेदात् । ११।२।११।४९-५० * वरुणप्रघासेषु विहारद्वये होतृ आग्नीध्र ब्रह्मणां तन्त्रम् । अध्वर्युप्रतिप्रस्थात्रोस्तु यजनाद्भेद । ११।२।१०।४४-४८ * वरुणप्रघासेषु विहारपृथक्त्वे आज्यग्रहणे, प्रोक्षणे, अभिमर्शने, मन्त्रिपातिनो मन्त्रा अध्वर्युप्रतिप्रस्थातृभ्यां भेदेन कर्तव्याः । भा १२।१।९।२८ * वरुणप्रघासेषु विहारभेदेऽपि गार्हपत्यस्यैकत्वात् पत्नीसंयाजानां तन्त्र इति पूर्वपक्ष । अध्वर्युः प्रतिप्रस्थाता च एकस्मिन्नेव गार्हपत्ये पृथक्पृथक् पत्नीसंयाजान् जुहुयातामिति सिद्धान्त । वि ११।२।११ * वरुणप्रघासेषु वैश्वदेवे च अग्निमन्थनम् । भा ७।१।३।१७ * वरुणप्रघासेषु वैश्वदेवपर्वस्थसार्थवादाङ्गविधीनां 'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इत्यनेनातिदेश, न तु अर्थवादमात्रस्य । वि ७।१।२ * वरुणप्रघासेषु 'शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति'। वि. ७।१।५ * वरुणप्रघासेषु शमीमय्य हिरण्मय्यो वा स्रुचः समार्ष्टव्या । संमार्गाधिकरणम् । २।१।४।९-१२ * वरुणप्रघासेषु शालामुखीयो नास्तीति पूर्वपक्ष, अस्तीति सिद्धान्त । तत्र तु आपस्तम्बमते नास्ति बौधायनमते अस्तीति व्यवस्था । सङ्कर्ष ३।२।२८ मीको पृ २४९१ 'यदि वरुणप्रघासेषु च शालामुखीयोऽस्ति' इत्यत्र द्रष्टव्य । * वरुणप्रघासेषु 'शूर्पेण जुहोति' इति न शूर्पप्रकृती धर्मे नित्यपूर्वप्रवृत्त । ९।१।५।११-१९ मीको पृ २०७२ 'द्रव्यसंस्कारप्रमुदाहरणम्' इत्यत्र द्रष्टव्यम् ।

* वरुणप्रघासावभृथे अवभृथनामत्वात् सौमिकावभृथधर्माणामतिदेश । ७।३।४।१३-१६ मीको पृ २१६ 'अतिदेश वरुणप्रघासावभृथे०' इत्यत्र अधिकरण

* वषट्कारोऽपि पृथक् सोमभक्षकारणम् । ३।५।१०।३१. मीको पृ १८२७ ‘ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम्’ इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥

अस्त्यत्र वषट्कारदेवता ‘सोमस्याग्ने वीहीत्यनुवषट्करोति’ इति । तत्र संदेहः किं अनुवषट्कारदेवतोपलक्षणीया नेति । अत्रापि स एव न्यायः केनचिद्विशेषेण उदाहरणान्तरेऽतिदिश्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । भवतु तत्राग्निशब्दो देवताया देवतान्तराभावात् अनुपलक्षणम् । इह तु ‘सोमस्याग्ने वीहि’ इत्यस्य होममन्त्रस्य करणत्वेनानुवषट्कारे विनियोगात् अग्नीषोमयोश्च मन्त्रवर्णादनुवषट्कारदेवतात्वमैकान्तिकमेव । तस्मात् अनुवषट्कारशेषभूतसोमभक्षणे अग्निरुपलक्षणीय एवेति । एवं प्राप्ते, अभिधीयते । सत्येवं यदि होमकरणत्वादनुवषट्कारदेवतार्थं सोमो गृह्यते । किं तर्हि ? प्रधानदेवतार्थेन । अनुवषट्कारो हि प्रतिपत्तिकर्म, तेन हि प्रधानदेवतार्थमाहृतमेव द्रव्यं प्रतिपाद्यते । अतो यथा पूर्वेषः पाता अध्वर्युर्होता वा इतरपात्रान्तरेण प्रतिपत्तिकर्मसंबन्धित्वेन नोपलक्ष्यते, तथानुवषट्कारदेवताऽपि । सदा लुप्तश्चैव यदि च प्रकृतौ ऐन्द्रप्रतिपत्तिसंबन्धिन उपलक्षणं कृतं भवेत् । न त्वेतदस्ति । तदुक्तम्– ‘यथा पश्चात्तन पाता पूर्वपात्रुपलक्षणम् । अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥’ इति (वा पृ. ७१७) । तेन स्वपूर्वत् तत्र कृतवत् अनुवषट्कारदेवताऽप्यनिर्नोपलक्षणीय एवेति ।

प्रयोजनम्– न वक्तव्यमेव । सूत्रं तु– पातृकर्तृवदनुवषट्कारदेवताऽपि नोपलक्षणीयेति । टीका.

■ वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥

अस्य सूत्रस्य केवलानन्दीया वृत्तिः मीको. पृ. ४२६ ‘अनुवषट्कारश्च कर्तृवत्’ इत्यत्र द्रष्टव्या ।

* वषट्कारश्च (अनुवषट्कारश्च) कर्तृवत् । ३।२।१६।३८ । वषट्कारश्च नैव स्यात् पातृकर्तृवत् वषट्कारशब्देन अनुवषट्कारदेवताया. उपलक्षणोपलक्षणीयाः प्रतिपत्तिकर्माङ्गत्वेन प्राकृतकार्यापत्त्यभावात् प्रकृतदेवतासंस्कारभूतस्य उपलक्षणस्य अतिदेशतोऽप्राप्तेः इत्येव उपलक्षणानिराकार्यं नेदं इति पूर्वसूत्रादनुषक्तम् । सु. पृ. ११५५. * वषट्कारः चमसभक्षणे कारणं तच्च होतुः । चि. ३।५।१०. ■ वषट्कारः प्रदानार्थः । भा. १२।३।१५।३५. * वषट्कारः यावति विषये तावत्येव प्रथमभक्षः । भा. ३।५।१०।३१ * वषट्कारः षष्ठेऽहनि ऋतुयाजेषु होत्रादिभिः कृत् शिरस्कप्रैषमन्त्रोत्तरं कर्तव्यः, न तु केवलप्रैषमन्त्रोत्तरम् । ऐब्रा. २२।८. * तन्त्रे च लौकिके वषट्कारः निर्दिष्टः । भा. ८।४।५।११, ■ भक्षस्य कारणं वषट्कारः । ३।५।१८।४५. * यदा याज्यावषट्कारयोः समुच्चयः तदा याज्योर्ध्वं वषट्कारः । यदा विकल्पः तदा ‘ये यजामहे’ इत्यव्यवहितोत्तरत्वं वषट्कारस्येति पूर्वपक्षः । याज्यावषट्कारयोः विकल्पो नास्त्येव याज्योत्तरमेव च वषट्कारः । संकर्ष. ४।३।४. * वषट्कारेण यागः क्रियते न याज्यामात्रेण, अतस्तावता च यष्टव्यम् । भा ३।५।१८।४५. * वषट्कारेण हविःप्रदानार्थत्वात् इज्यते न केवलया याज्यया । भा ३।५।१८।४५.

■ वषट्काराच्च भक्षयेत् । ३।५।९।२१ ॥

अथ किं समाख्यैव भक्षणे कारणम् ? नेति ब्रूमः । वषट्काराच्च भक्षयेत् । वषट्कारश्च भक्षणनिमित्तम् । कथम् ? एवं हि श्रूयते ‘वषट्कर्तुः प्रथमभक्षः’ इति । अत्र प्राप्तभक्षणानुवादेन प्राथम्यमात्रं विधीयते, अथवा वषट्कारनिमित्तकं प्राथम्यविशिष्टं भक्षणान्तरमिति । अत्राय पूर्वपक्षिणोऽभिसंधिः । सर्वत्र विशिष्टविधिगौरवभयेनोपपदप्राप्तान्तो विधिर्धात्वर्थस्य विलक्षणीमपि यथा कथंचित्प्राप्तिमपेक्षते । अस्ति च होतुर्वषट्कर्तृत्वात् ‘होतुश्चमसः’ इति समाख्यया स्वचमसे भक्षणप्राप्तिः । अतस्तेन समाख्याप्राप्तभक्षणानुवादेन वषट्कारनिमित्तकं प्राथम्यमात्रं विधीयते । तेन वषट्कर्तृत्वनिमित्तकं भक्षणं कर्तव्यमिति । एवं प्राप्ते, अभिधीयते । यद्येव वषट्कारसमाख्ययोः च भक्षणमनुवदितुं शक्यते । तथाहि, न तावदत्र भक्षणमात्रानुवादेन प्राथम्यं विधीयते, अन्यत्रापि प्रसङ्गात् । किं तर्हि ? वषट्कर्तुर्यो भक्ष इति वषट्कर्तृसंबन्धिभक्षणानुवादेन । तथा सति वषट्कर्तृसंबन्ध-

सापेक्षस्य भक्षणस्य प्राथम्येन सह न समासः सम्भवति, असमर्थत्वात् । अथ प्राथम्येन भक्षणस्य प्राधान्याच्च ‘ भवति वै प्रधानस्य सापेक्षस्य समासः ’ इत्यनुशासनात् वषट्कर्तृसम्बन्धसापेक्षमपि भक्षणं प्रथमपदेन समस्यते इत्युच्यते, तथापि प्राथम्यं तावत् भक्षणगुणभूतम्, तदपि वषट्कारनिमित्तकत्वात् वषट्कर्तृभक्षणस्य प्राथम्यं न निमित्तान्तरेण । किं नर्हि ? वषट्कारेणैव । तेन वषट्कर्तुरिति भवन्यात् गुणभूतस्यापि प्राथम्यस्य सापेक्षत्वात् स्पष्ट एव समासदोष इति । भक्षणप्राथम्ययोः निष्कृष्यानुवदितुं विधातुं चाऽशक्यत्वात् वषट्कर्तुः प्राथम्यविशिष्टमपूर्वमेव भक्षणं विधीयते इति । ननु ‘ एक साम तृचे क्रियते स्तोत्रीयम् ’ इति समासापेक्षं समासस्यामपि ऋचमनूद्य नित्यविधानं दृष्टम्, तथा प्राथम्यविधानं भविष्यति । नैतत् । तत्रापि समासार्थस्यैव विधानात्, किन्तु तत्र सामान्यविचारेणैव प्राप्तत्वात् नियमस्य चाप्राप्तत्वात् नित्यपरो विधिरित्युच्यते । इह तु मानद्वषट्कार भक्षणस्याप्राप्तत्वात् समासार्थ एव विशेष्यलक्षणेन विशिष्ट विधीयते । तेन वषट्कारनिमित्तक भक्षण होमात् प्रथम कृत्वा समाख्यानिमित्तकं भक्षणं चमसे कर्तव्यम् । न तु तस्यैव प्राधान्यमिति सिद्धम् ।

**प्रयोजनम्**– पूर्वोक्तम् । सूत्रं तु– न केवलं समाख्यया वषट्कर्ता स्वचमसे एव भक्षयेत्, किन्तु वषट्कारनिमित्तं पात्रान्तरेऽपि भक्षयेदिति । सौता.

**ङ्क वषट्काराच्च भक्षयेत् । ३।५।१०।३१ ॥**

सिद्धान्तसूत्रम् । सप्तमेऽधिकरणे सोमभक्षनिमित्त समाख्या इत्युक्तम् । तत्र निमित्तान्तरप्रतिपादनार्थमिदं सूत्रम् । निमित्तान्तरसमुच्चयार्थश्चकारः । यथा समाख्यया भक्षयेत् तथा वषट्कारादपि भक्षयेत् सोमम् । निमित्तात् इति पदं पूर्वसूत्रादनुवर्तते । ‘ वषट्कर्तुः प्रथमभक्षः ’ इति प्राथम्यविशिष्टभक्षणस्य विधायकेन विधिवाक्येन वषट्कारस्य भक्षनिमित्तत्वमुक्तं भवति । तस्मात् यो य ग्रहचमसं वषट् करोति स तं भक्षयेत् प्रथमम् । ततो यथायथं समाख्यामात्रं भक्षयेत् । के.

० ‘ वषट्काराच्च भक्षयेत् ’ । ( ३।५।१०।३१ ) इत्यधिकरणे ‘ वषट्कर्तुः प्रथमभक्षः ’ इत्यत्र समासवशेन प्राथम्यभक्षयोः एकोपस्थितिविषयत्वात् प्रथमभक्षशब्दे एकदेशेन भक्षमनूद्य एकदेशेन प्राथम्यं न विधातुं शक्यते इति वक्ष्यते । कु. ३।१।६।१२. ० वषट्कारस्य ‘ वषट् ते विष्णवास आकृणोमि० ’ इत्यत्र वर्तमानस्य आकृणोमि इत्यनेनान्वयेन अख्यातान्वयात् न प्रदानार्थता । संकर्ष २।८।१९, * भक्षवषट्कारयोः सहत्वं प्रत न विरुध्य ? । ४।३।३.

**ङ्क वषट्कारे प्राणापाननिमेषाणां प्रतिशाखमुपसंहारः ॥**

तन्निच्छाखायां ‘ वषट्कृत्याऽपान्यान्निमिषेदपानेन एव प्राणं दधाति निमेषेण चक्षुः ’ इति श्रुतम्, ‘ वषट्कृत्य प्राण्यादपान्यादथ निमिषेत् ’ इति तु शाखान्तरे । तत्र शाखाभेदेन केषाञ्चिद्विधिद्वयं केषाञ्चिद्विधित्रयमेतत् । इति प्राप्ते, अपाननार्थगादस्यापाननविध्युत्तरमेव श्रुतेऽपि पाठे अपाननिमेषविध्योरुत्तरमर्थवादद्वयश्रवणेन वषट्कृत्येत्यस्य निमेषविधानस्यानुपपत्तिप्रतीतेः अपाननिमेषयोर्वषट्कारानन्तरभवितोत्तरकाल एव प्राप्तौ शाखान्तरे वषट्कारोत्तरं प्राणनस्यैकस्यैव विधिः इतरयोः क्रमार्थमनुवादः । संकर्ष. ४।३।७.

* वषट्कारे ‘ य कामयेत प्रमायुकः स्यात् ’ इति यजमानमरणकामस्य होतुर्विधिरयम् इति पूर्वपक्षः । स्वर्गकामस्य विधेरर्थवादोऽयं इति सिद्धान्तः । संकर्ष. ४।३।९.

**ङ्क वषट्कारे ‘ यं कामयेत प्रमायुकः स्यात् ’ इति स्वर्गकामविधेरर्थवादः ॥**

वषट्कारमेव प्रकृत्याम्नायते ‘ यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य ऋचा वषट् कुर्यात् ’ इत्यस्यान्ते ‘ उच्चैः क्रौञ्चमिव वषट् कुर्यात्स्वर्गकामस्य ’ इति श्रुतौ द्वावपि काम्यविधी कुर्यादिति लिङ्श्रुतेरविरोधात् । दीर्घरोगसंततस्य प्रत्यासन्नतमिवक्लिष्टस्य मरणकामनाया अपि सम्भवात् । अन्यथा तादृशस्यारम्भहननविधिः स्मृतिषु वैयर्थ्यापत्तेः । सर्वस्वारादिभौतकर्मस्वपि मरणकामाधिकारित्वादर्शनात् । पुरुषाभिप्रायाया विधिश्रवणात् । वस्तुतस्तु य. प्रमायुकः स्यादित्यनुक्त्या होतृगत एवैष कामः प्रतीयते । न च द्वेष्ये यजमाने

* वसिष्ठादीनां सत्राधिकारो नास्ति विश्वामित्रसमानकल्पत्वाभावात्। वि. ६।६।४.

● वसवः अष्टौ— ' धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ' सु पृ. १०८६.

* वसोर्धारा नामकर्म । बहून्येतानि कर्माणि । तेषां तु अनुक्रमेण क्रियाततानो भवति । द्वादश द्वादशानि जुहोति इत्युक्तम् । तत्रापि मन्त्रान्ते एव कर्मादिसन्निपातः । भा. १२।३।११।२६-२७. * वसोर्धारायां मन्त्रान्ते कर्मादिसन्निपातः अग्निचयने । १२। ३।११।२६-२७, मीको. पृ. ४७ ' अग्निचयने वसोर्धाराया मन्त्रान्ते कर्मादिसन्निपातः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* वस्तु एकमपि क्रमतः ( उपादेयोद्देश्यगततत्तद्रूपासंभवभेदात् ) क्वचिदेव विवक्ष्यते न सर्वत्र । कथमेकस्य युगपत् उद्दिश्यमानोपादीयमानत्वं इति चेत् । अपेक्षाहेतुभेदात् द्वैरूप्याण्यपि भवन्ति इत्युक्तम् ( स्रुतद्वाधिकरणे ' आचार्यो मातुलश्चेति द्व्यैकत्वेऽपि सिध्यति । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥ ' इत्यादिना । ) । भा. ३।८।६।१९ पृ. ७३७. ■ वस्तु नवरसमयम् । ' धर्मार्थकामभङ्गे च उत्तमः क्रियते यदा । तदा पूर्वार्थिनः शोकः प्रीतिश्चाप्युत्तरार्थिनः ॥ हेमार्थिनस्तु माध्यस्थ्यं तस्मात् वस्तु नवात्मकम् ॥ ' ( नवात्मकं उत्पत्तिस्थितिविनाशधर्मात्मकम् । रत्नाकरः ) । श्लोवा. वनवादे २१-२२.

※ वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायः । श्रुत्यादिमानसिद्धवस्तुनः प्रयोजनाभावापराधेन निराकरणमयुक्तमिति विवक्षायामस्य प्रवृत्तिरिति । साहस्री. १६४.

● वस्तुन. एकस्य अनेकधायोगेनाद्यनन्तरेः अनेकत्र दर्शनम् । सु. पृ. ८४३

● वस्तुजातं त्रिविधम्, चेतननिष्ठचेतनकर्तृकं यथा पचादि । चेतनाचेतनकर्तृकं ध्मोमादि । त्रिविधाचेतनकर्तृकं नदीस्यन्दनादि । मणि. पृ. ४५.

※ वस्तुशक्तिन्यायः । यत्र पदार्थशक्तेः प्रबलत्वं विवक्ष्यते, तत्राय प्रवर्तते । तद्यथा— ' वने तैन खले गुडं पाने दान मनागपि । प्राप्ते नास्त्र स्वयं यति विकार वस्तुशक्तितः ॥ ' इति । साहस्री. ५५२.

∗ वस्तुशब्दः न भावविकारवाची, भावविकाररहितेष्वपि नित्येषु आकाशादिषु वस्तुत्वप्रतीतेः । सु. पृ. ३४८.

● वस्त्रम् । निर्णेजकधौतगर्दभाकटवस्त्रादिधनं उदीच्यानां दाक्षिणात्यानां च अनाचारः । बा. १।१। ३।७ पृ. २०४. * वस्त्रं पूर्वदिने ब्राह्मणाय दत्तमुत्तरेद्युः त्याज्यं न भवति । शिष्टाः प्रक्षाल्य दिनान्तरे पुनः गृह्णन्ति । वि. ११।३।१२.

● वहतिः शब्दः प्रापणे सिद्धः । भा. ११।१।८।३१.

※ वह्निधूमन्यायः । यथोत्पत्तिप्रतीतिरुपकारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विरुध्यते, तथा प्रकृतेऽपि । किञ्च, यथा धूमरूपकार्यदर्शनात् कारणरूपवह्नेरनुमानम्, तथा यत्र कार्यलिङ्गेन कारणानुमानम्, तत्रास्य प्रवृत्तिरिति । साहस्री. ३१७.

※ वह्निन्यायः । यथा लोकस्याग्नेर्दाहकत्वं पाचकत्वं प्रकाशकत्वम्, तथा प्रकृतेऽपि । साहस्री. ३७१.

※ वह्निविस्फुलिङ्गन्यायः । यथा वह्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्वे दवे आत्मानो व्युच्चरन्तीति विषयेऽस्य प्रचारः । साहस्री. १२७.

● वाऽपि । वाऽपीति विपर्यासेन प्रयुक्ते भाष्ये ऽर्थः । भा. ७।३।१।२.

● वा- शब्देन विधिशक्तिप्रतिबन्ध । भाट्ट १०।८।४. ● वा- शब्देन संशयो निवर्त्यते । भा. ३।२।८।१५ । ' सिद्धान्तेनोपक्रम वाशब्देन व्यावर्त्य ' इति । वा.

● वाक्यं अपि क्रियैव संवादीयात् । वा. १।२।४। ३१-१ पृ. १४६. ● वाक्यमपि ' कल्याण् धर्मं कुर्वीय. ' इति न्यायवद्युक्तं प्रकरणात् बलीय । भा ४।३।८।८-९, ● वाक्यं ' अवयवा भीयन्ते ' इति विनियोगकारणं उक्तम् । ३।३।४।११. ● वाक्य

यजेत' इत्यादिश्रुतिस्थलीयपदसमभिव्याहारात् कर्तृत्वाद्यन्यतमसंसर्गस्त्रीत्वादिप्रकारकयागादिविशेष्यक-शाब्दबोधोऽपि नातिश्यामि इति ध्येयम् ।

ननु एवं 'औदुम्बरो यूपो भवति' इत्यादौ वाक्यशेषोदाहरणत्वापत्तौ औदुम्बरतया. वाक्यीययूपाङ्गत्वमुपेक्ष्य 'पशूनाप्नोति' इति द्वितीयाश्रुतिप्रमाणकपश्वङ्गत्वस्यैव कल्पनात् औदुम्बराधिकरणाश्रितयूपाङ्गत्वविरोध । अत एव संनिध्यनुग्रहादपि न वाक्यीययूपाङ्गत्वाङ्गीकार इति चेन्न । यूपकर्मकभवनाक्षिप्ताया भावनाया यूपेतरस्य कर्मत्वेन अन्वेतुमयोग्यत्वात्, आश्रयालाभेन च श्रौतपश्वङ्गत्वायोगात् तत्र वाक्यीययूपाङ्गत्वस्वीकारात् । न च 'सोमापौष्णं त्रैतमालभेत पशुकाम' इति प्रकृतस्य निर्वपे– ( निरूपे- ) पशुमात्रस्य यागस्य औदुम्बराश्रयत्व सम्भवति । न च स्वसाधनद्रव्यपरिच्छेदकत्वाश्रयत्वासंभवेऽपि अतिदेशप्राप्त– पशुनियोजनाख्य– यूपपरिच्छेदकत्वसम्भव, यूपस्येव शृङ्गादीना अतिदेशप्राप्तत्वेन तत्परिच्छेदकत्वापि ह्यस्ताऽऽपत्तौ यूपानुवादानुपपत्ते । अत एव आतिदेशिकपशुनियोजन यूपद्वारा आश्रय इत्यपि न । अथ 'यत्र पशुमती यजमान, पशावत्त्वेव वपा कार्या' इत्यत्र ( यथा ) अवदानानुवादेन पशुत्वविधिमङ्गीकृत्य हृदयाद्यवदानेऽपि पशुत्वसिद्धि सिद्धान्तिता दशमे ( भाट्ट. १०।७।१८, २० भा ), यथापद अप्राप्त्यनुवाद, उपलक्षण वा सत् सर्वानुवाद । तथा अत्रापि यूपपदमप्राप्त्यनुवाद, उपलक्षण वा स्यात् इति चेन्न । तत्र हि हृदयादिषु पश्ववदानाभावे पशुत्वस्थानपतितस्यावदानस्य अतिदेशादेव प्राप्ते 'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यति' इत्यस्य वैयर्थ्यापत्त्या अवदानस्य नित्यानुवादत्वस्वीकार । तत्र हि अवदानमात्रोद्देशेन पशुत्वविधौ हृदयाद्यवदानेष्वपि पशुत्वप्राप्ते हविष्यवदानप्राप्तौ ह्यवदानविधि तद्व्यावर्तकत्वेन सार्थक । न च हृदयादिष्वपि वाससम्या दीना पश्ववदानस्य अतिदेशादेव प्राप्ते तेषां हविष्यवदानप्राप्तौ ह्यवदानविधि सार्थक इति न योक्त युक्त इति वाच्यम् । तथापि विधे पाक्षिकफलत्वमुपेक्ष्य यथापदस्य एतस्यैव पाक्षिकानुवादत्वौचित्यात् । प्रकृते तु न कस्यापि नैयर्थ्यादिकम्, इति त्रिमिति यूपपदस्य पाक्षिकानुवादत्वाङ्गीकार ।

इदं च प्राचीनाभ्युपेतप्रक्रियानुसारेणोक्तम् । वस्तुतस्तु अवदानोद्देशेन पशुत्वविधौ हृदयादिवाक्ये हृदयादीनामेकादशेतरत्वेषु अवदानस्य परिसंख्यातत्वात् वपाया अवदानस्यैव अभावे पशुत्वप्रसक्त्यभावात् वपाऽनुवादानुपपत्ते एकप्रसरताभङ्गापत्तेश्च नाय वाक्यार्थ समञ्जस । किन्तु पशुत्वविशिष्टावदानान्तरस्य अतिदेशत पूर्वपक्षे पशुत्वविशिष्टप्राप्तावदानस्य वा वपोद्देशेन विधि, तस्यैवोपस्थितत्वात् । हृदयादिवाक्ये हृदयाद्युद्देशेन विधि इति हृदयादिषु तदङ्गपशुत्वप्राप्ति इति नव्यमताश्रयणे न वपापदस्य अप्राप्त्यनुवादत्वादिप्रसक्ति । परन्तु नव्यमते अवदानविधिसमकालप्रवृत्ताना हृदयाद्यवदानविधीना संकुचत्प्रवृत्तौ अवदानविधिवाक्यस्य कल्पनापत्त्यतिरिक्त प्रमाण न पश्याम । किंच पशुत्वविशिष्टावदानान्तरस्य वपोद्देशेन विधौ अवदानोद्देशेन पशुत्वविशेषणविधिस्वरूपाया अवदानस्वरूपे आनर्थक्यप्राप्तौ वपाभ्यासापूर्वसाधनत्वलक्षणाया आवश्यकत्वात् यावदवदानेषु कथ पशुत्वप्राप्ति । नहि अभ्यासविशेषधर्मस्य अभ्यासान्तरे प्राप्ति सम्भवति, अपदेशस्य अभ्यासविशेषविषयत्वात्, अतिदेशस्य अभ्यासयो प्रकृतिविकारभावाभावेन असम्भवात् । पशुत्वविशिष्टावदानस्यैव वपोद्देशेन विधौ तु प्रकृतनिर्देश वपाभ्यासपूर्वसाधनीभूतावदाने पशुत्वविधौ तात्पर्यात् नावदानान्तरे पशुत्वविधि सम्भवति, इति तदधिकरणसिद्धान्त चिन्त्य एव इति न वपापददृष्टान्तेन यूपपदस्य अप्राप्त्यनुवादत्वादि इति । अतश्च आश्रयालाभात् न पश्वद्देशेन औदुम्बरत्वविधि सम्भवति इति वाक्यस्थ यूपाङ्गत्वमेव औदुम्बरताया । न च प्रकारान्तरेण आश्रयालाभेऽपि प्रकृतवाक्ये एव औदुम्बरत्वकरणकपशुकर्मकयूपाश्रयकभावना विधानात् यूपात्मकौदुम्बरत्वाश्रयलाभ, आश्रयस्य साध्यत्वातिरिक्तस्य दुर्वचत्वेन भावनाया. अनेककर्मत्वात् वाक्यभेदापत्ते । ननु राणके ( सुधायां औदुम्बराधिकरणे पृ ७७ ) अतिदेशप्राप्तस्य पशुनियोजनस्य यूपद्वारा आश्रयत्वमाशङ्क्य 'प्रकृतौ हि प्रत्यक्षोपदिष्टस्य

होमप्रणयनादे पश्चात् साकाङ्क्षापेक्षाया यथाश्रमसादिवत् परार्थस्यापि ( दधि– ) गोदोहनादेः आश्रयीभूतसाध्यापेक्षादर्शनात् उभयाकाङ्क्षावशात् साधनत्वमभ्युपेयते । न चैतावता अङ्गत्वप्रसङ्गः, तादर्थ्येन विधानाभावात् । अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिका गोदोहनादिना कर्मसिद्धौ चमसादेरनङ्गत्वेन तदभावे नैगुण्याभावः (–भावादनादर ) । विकृतौ तु अपरोक्षकरणोपकारमुखेन करणोपकारप्राकृतगोदोहनादिविशिष्टस्यैव पशुनियोजनस्य ( पशुशब्दो नास्ति–मु. ) अतिदेशात् साधनाकाङ्क्षाया यावदर्थनिर्दिष्टसाधनान्तरग्रहणस्य न युक्तम् । अन्यतराकाङ्क्षाहेतुकस्य प्रकृतस्य इतराकाङ्क्षोत्थापन– (ओत्थापन– ) पूर्वकत्वात् विधिमन्तरेण च आकाङ्क्षानुत्थापनात् ( आकाङ्क्षोत्थापनायोगात् )' इति परिहृतम् । तच्चिन्त्यम् । प्रणयनस्य प्रत्यगताङ्गत्वाच्चमसेन निराकाङ्क्षतया गोदोहनाश्रयत्वस्य उभयाकाङ्क्षाभावात्, गोदोहनादेः फलसाधनतामात्रेणैव हि प्रणयने चमसाधिकारबोध, तदैव प्रणयनस्य नैराकाङ्क्ष्यम्, गोदोहने फलसाधनतान्यथानुपपत्तिमूलकाकाङ्क्षालम्बः प्रणयने गोदोहनाधिकारबोधस्तु तदुत्तरकालीन, इति 'सर्वतो बलवती कल्पनान्यथानुपपत्ति' इति न्यायेन गोदोहनीयफलसाधनताऽन्यथाऽनुपपत्त्या निराकाङ्क्षस्यापि प्रणयनस्य आकाङ्क्षामुत्थाप्य गोदोहनाश्रयत्वाङ्गीकारः । 'काम्यं नित्यस्य बाधकम्' इति न्यायेन काम्ययोगे चमसस्य अनङ्गत्वम् । एवमेव च अपरिमितस्योक्तेन निराकाङ्क्षस्यापि ज्योतिष्टोमस्य फलोद्देशेन विधीयमानोद्भिद्गुणाश्रयत्व उद्भिदधिकरणे पूर्वपक्षा–( क्षा )नुपपद्यते । अत एव प्रकृयमाणगतफलसाधनत्वान्यथानुपपत्त्या क्रियायाः परार्थगुणाश्रयता सा प्रमाणवतीव । तथाश्रयत्वस्य प्राकरणिकत्वे यावदस्तु सन्निधिपाठानर्थक्यम् । न च खादिरत्वादिवत् छेदेऽपि यूपे यौदुम्बरत्वानिवेश संभवात् आश्रयत्व समवायेन इत्यस्मत्करोत्येव आश्रयत्वगण्डनम्, इत्यलमनया प्रासङ्गिकचिन्तया ।

न च 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' 'सह पशुपति' इत्यादिषु यथाक्रम दक्षिणोद्देशेन अभेदसम्बन्धेन धेनोः, ऋग्वेदविहितकर्मोद्देशेन स्वरप्रकरणत्वेन उच्चैस्त्वस्य, अपर्णोद्देशेन स्वरूपसम्बन्धेन साहित्यस्य च विधानात् कर्तृत्वाद्यन्यतमत्वस्य शाब्दबोधाविषयत्वेन न व्याप्तिः इति वाच्यम् । वस्तुतो धेन्वादीनां करणत्वेन भावनाऽन्वयस्यैव तत्तदुदाहरणे विवक्षितत्वात् । तथाहि, 'धेनुर्दक्षिणा' इत्यत्र तावत् श्रुतत्वयोः परस्परान्वयाभावात् 'न हि क्रियारहितं वाक्यमस्ति' इति न्यायेन क्रियापदाध्याहार आवश्यकः । तत्र च भावनायाः साकाङ्क्षाया दक्षिणापदस्य दक्षिणाकार्यपरतया भाव्यसमर्पकत्वम् । करणाकाङ्क्षायां च करणतासमर्पणं धेनुपदार्थस्य, धेनुपदोत्तरप्रथमायाः या करणत्वलक्षणया धेनुकरणत्वस्य भावनायामन्वयः । धेनुदक्षिणयोः अभेदबोधस्तु पार्ष्ठिकः । धेनुरेवदक्षिणेति विधाने वाक्यभेदस्तु विशिष्टकारकविधानात् अनावश्यकः । एवं 'उच्चैर्ऋचा क्रियते' इत्यत्र वेदोपक्रमानुरोधात् धातुना ऋग्वेदविहितकर्मलक्षणात्, तस्य च प्राप्तत्वेन भावनायां उद्देश्यत्वेन अन्वये जाते करणाकाङ्क्षायां उच्चैस्त्वस्य मन्त्रघटितपदपदार्थसम्बन्धावच्छिन्नकरणत्वसमर्पणेन भावनाऽन्वयः, न तु अन्यघटितपरम्परासम्बन्धमात्रेण, तथात्वे भावनायाः करणाकाङ्क्षोपशान्त्यभावात् । एवं 'सह पशयति' इत्यत्रापि प्रमाणान्तरप्राप्तपर्णोद्देश्यकभावनायां साहित्यस्य कर्तृत्वाद्यन्यतमसमर्पणेन अन्वयः । तथाहि, दर्शपूर्णमासयोः 'यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदियात्, त्रेधा तण्डुलान् विभजेत् । ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधश्चरुम् । येऽणिष्ठाः, तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति श्रुतम् । तत्र अमावास्याकर्मणि च चन्द्रोदयावच्छिन्नदिनप्रारम्भे निमित्ते 'त्रेधा तण्डुलान्' इति वाक्येन अपनीतपूर्वदेवतासम्बन्धानां तण्डुलानां प्रतिपत्तिमात्रेण देवतान्तरसम्बन्धोपपादनार्थानि त्रीणि वाक्यानि, न तु कर्मान्तरविधायकानि, अपरित्यक्तपूर्वकर्मसम्बन्धद्रव्यप्रतिपत्तिमात्रेण देवतान्तरसम्बन्धात् । अत एव पूर्वदेवतानिर्देशाभावात् निरुपधीभूतद्रव्यापेक्षायां 'इन्द्रायत्र गृह्णाति' इत्यत्र पूर्वप्रकृतयागा एव निरूपकाः । अतः आग्नेयस्य मध्यमादिभेदेन नानात्वप्रवृत्तिः । दधिपयसोर्यागौ अवस्थापितावन्य-

अत एव 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामि' इति मन्त्रे कर्तृत्वाद्यन्वयमर्यादिनामाजन्यस्य कर्तृत्वाद्यन्वयप्रसक्तस्य कर्तृत्वाद्यन्वयमनबोधजनकस्य वा कर्तृत्वाद्यन्वयसमवायाद्बोधस्य अजननेऽपि तत्सदृशमभिव्याहारेणवाक्यान्तरात् देवस्यत्वादिपदानां स्वार्थविशिष्टनिर्वापस्मारकत्वद्वारा निर्वापाङ्गत्वम्। विधिवाक्यमन्त्रवाक्ययोः अयमपरो विशेषः, यत् विधिवाक्यं कर्तृत्वाद्यन्वयमन्वयलक्षणया, समभिव्याहारेण वा, स्वत एव विनियोजकत्वम्, मन्त्रवाक्ये तु 'देवस्यत्वादिभिः निर्वापं प्रकाशयेत्' इत्यादिवाक्यान्तरकल्पनया। देवस्यत्वादिपदानां मन्त्रवाक्यपदार्थन्यासेन विप्रयासेन च मन्त्रवाक्यस्य स्वतः अविनियोजकत्वात्। निष्प्रभावादेव च देवस्यत्वादिपदार्थानां निर्वापाङ्गत्वमपि न स्वतो मन्त्रवाक्यगम्यम्, अपि तु श्रुतिघटितवाक्यान्तरकल्पनया इति बोध्यम्। अत्र विधिवाक्यस्य योग्यताज्ञानं विना लक्षणया समभिव्याहारेण वा कर्तृत्वाद्यन्वयबोधकत्वाभावेन योग्यतापरिच्छिन्नतुमापकत्वेन अङ्गत्वप्रमापकत्वेऽपि न लिङ्गतो दौर्बल्यम्, प्रत्युत सश्रुतिकवाक्यान्तरकल्पनया प्रमाणभूतात् लिङ्गात् स्वतो विनियोजकत्वेन प्रबलत्वमेव। अत एव अग्नीषोमीयप्रकरणपठितस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतामन्त्रस्य केवलाग्निप्रकाशकस्य उभयदेवत्याग्नीषोमीये विनियोगासम्भवात् ज्योतिष्टोममहाप्रकरणरूपवाक्यान्यवाक्यबोधकप्रमाणबहुत्वलिङ्गेन केवलाग्निदेवत्ये सवनीये उत्कर्षप्राप्तौ 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति ब्राह्मणवाक्येन लिङ्गबाधेन अग्नीषोमीयादिष्वा इत्युक्तं दशमे (१०।४।२१)। मन्त्रवाक्यस्य तु सामर्थ्यकल्पनाद्वारा सश्रुतिकवाक्यान्तरकल्पनया दूरान्तरितप्रामाण्यकतया श्रुतिकल्पनापेक्षयान्तरितप्रामाण्यकत्वात् लिङ्गात् दुर्बलत्वम्। अत एव 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः॥' इत्येकान्वयबोधोपयोगिपदसन्निधिसत्त्वात् वाक्यात् सम्पूर्णस्य सदनाङ्गत्वप्रसक्तौ बाधेन लिङ्गात् पूर्वार्धस्य सदने, उत्तरार्धस्य सादनेऽपि विनियोगः। तदुक्तम् 'तमे पयसि इत्यत्र-

यति, तत् वैश्वदेव्यामिक्षा' इत्यत्रेव वाक्यान्तरीयार्थपरामर्शकत्वेन युज्यते इत्युक्तं बलाबलाधिकरणे। इति वाक्यनिरूपणम्। मुरारि. पृ ११७५–८१.

● वाक्यं पदद्वयात्मक. । वि. ३।३।८. ● वाक्य प्रकरणात् प्रबलत् । भा. ३।२।८।२२, ३।३।१३।२७, ३।३।११।२४ पृ. ६१३, ३।११।५।११, ३।११।६।१२, ३।११।१०।२०, ३।३।७।१४, ३।४।१।१, ३।४।५।१४, ३।४।६।१७, ३।६।१३।३५, ४।१।२।४, ६।५।१५।८५, ८।४।५।१७, ९।१।२।२, ९।१।५।११, १०।३।१२।४१. ● वाक्यं प्रकरणात् बलीयः। 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्यत्र 'इन्द्राग्नी' पदस्य लिङ्गात् दर्शाङ्गत्वे सिद्धे 'इदं हविः' इत्यादेरपि तदेकवाक्यत्वात् दर्शाङ्गत्वम्, न तु प्रकरणात् पूर्णमासाङ्गत्वम्। मीन्या. ● वाक्य प्रकरणात् बलीयः। प्रकृतौ (प्रकरणेन) साकाङ्क्षः, अध्वर्युं पुनर्वाक्येन। भा. १०।३।२१।७४. ● वाक्यं प्रकरणात् बलीयः। रशनाधर्माः प्रकरणात् अग्नीषोमीयस्य। 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति वाक्यात् यूपस्य। ३।६।१०।३१. ● वाक्यं प्रकरणाद् बलीयः। 'वैश्वानं हवींषि आसादयति' इति हविर्मात्रं वाक्याद् गम्यते, प्रधानहवींषि प्रकरणात्। ३।७।१।२. ● वाक्य क्रमात् क्रमश्च दुर्बलः। २।८।२।२२. ● वाक्यम्। भगवत्पुरुषनिपात. अन्यनिपातसंगाभावे वाक्यसमाप्ते, असमाप्तेश्च अर्थाभावेन अर्थद्वारवाक्यान्तरान्वयाभावेन। सु पृ. ७४८. ● वाक्य भिद्येत उभयविधाने। भा. ३।२।२।७, १०।७।१५।४९, ● वाक्य लिङ्गात् बलीयः। ३।१।६।१२ पृ. ६८९. ● वाक्यं लिङ्गश्रुती कल्पयित्वा अङ्गत्वे मानम्। मीन्या. ● वाक्यं विशेषवृत्ति, पदं सामान्यवृत्ति। भा. ३।१।६।१२ पृ. ६८९. ● वाक्य विशिष्टपदकसमूहात्मकम्। सु पृ. १०९ ● वाक्य श्रुत्या बाध्यते। भा ४।१।५।१४. ● वाक्य श्रुतेर्दुर्बलम्। 'द्यावापृथिव्या धेनु०' इत्यादौ गवि सा च श्रुतिः, दामसम्बन्धो वाक्येन स्यात्। तच्च दुर्बलं श्रुतेः। १०।२।

अर्थवत्त्वादिति इति नानर्थक्यनिमित्तमवकाशं लभते ।

सर्वेषामेव च श्रुत्यादीनां आनर्थक्यप्रतिहतानां दुर्बलेतरादि नाम उपलभ्यते । तद्यथा — श्रीवादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नुवदपि अविच्छिन्न प्रकरणलभ्या पूर्णसाधनत्वेन सम्बन्धो भविष्यति । तत्र आसक्षित वाक्यात् लिङ्गस्य बलीयस्त्वम् । तथा च भाष्यानुसारे दर्शितम् (३।३।१४) । वा ३।३।७।१४ पृ ८३१-८३३, ● वाक्यस्य लौकिकस्य प्रमाणान्तरदर्शितविषयता । बृहती पृ ५९८, ● वाक्यस्य यावदर्थकवाक्यार्थे प्रकरण आनाम्नातस्य प्रमाणमेव । मीन्या ● वाक्यस्य वाक्यार्थे न शक्तिः । पदशक्त्यैव वाक्यार्थसिद्धेः । मीन्या ● वाक्यस्य वाक्यार्थप्रतिपत्त्युपायभूतपदार्थाभिधानपदाभावे साकाङ्क्षत्वेन अपरिपूर्णस्य विशिष्टार्थप्रतिपादकत्वायोगात् विशिष्टार्थप्रतिपादनं च विना व्यवहारसाधनत्वेन आनर्थक्यापत्तेः परिपूर्णतायै श्रुतस्यैकवाक्यभूतपदान्तरकल्पना युक्ता । सु पृ ५११, ● वाक्यस्य निष्प्रयोजनत्वम् । पृ. ८६७ ● वाक्यस्य विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ, आधिक्याभ्युपगमे तु आनर्थक्यम् । यद्वा, पुनश्च अपि वाक्यविषयत्वकल्पने लक्षणावाक्यभेदगौरवाध्याहारदोषाः । यद्वा न्यूनत्वे लक्षणावाक्यभेदौ, आधिक्ये चानर्थक्यम् । अन्यथाकल्पने विपरिणामव्यवहितकल्पना व्यवधारणकल्पना-दोषा इति । बाल पृ २-३ ● वाक्यस्य विशेषणविशेष्यभावमात्रे व्यापारः । पृ १००२, ● वाक्यस्य सकृदुच्चरितस्य अनेकार्थपरत्वायोगात् आवृत्तिलक्षणवाक्यभेदापत्तिः । पृ ८७२, ● वाक्यस्य सर्वात्मना वक्ष्यमाणाकाङ्क्षणीयालाभे यत्र कथंचिन्न नैराकाङ्क्ष्यं कल्प्यते । पृ ६०१, ● वाक्यस्य स्वार्थसमाप्तस्य वाक्यान्तरान्वयो न भवति । पृ ४७८, ७२४ ● वाक्यस्य हेतुपरत्वे सम्भवति स्तुतिलक्षणाया अप्रमाणत्वात् । भाट्ट ४।१।१७ ● अनेनैव प्रवृत्त, अनेनैव निवृत्त इति अतिभार एकस्यैव वाक्यस्य भवति । मा ७।१।१।२ ● एतदेव वाक्यस्य पौरुषेयत्वं यत् प्रमाणान्तरापेक्षस्वार्थप्रतीत्यर्थप्रत्यायनपरतया प्रयोगः, न यथादिवार्थता । ऋजु पृ ३४ ● ‘ तत्

सामर्थ्यं समाम्नाये ’ १।८।११।१७ । तदेतदस्य वाक्यस्य समाम्नाये सामर्थ्यं यत् अविहितपूर्वकाभिधानम् । इतरथा अर्थवादा सन्त अनर्थका स्युः । भा १।८।११।१८ ● न च वाक्यस्य पदैरन्यतया प्रमाणमस्ति, विभक्तसाकाङ्क्षसहन्यमानैरथोऽवगम्यमानोऽथपरत्वात् । तेन वाक्यमेवैकं अल्पपदं अपरं बहुपदम् । वा ३।३।७।१४ पृ ८५१. ● ‘ वाक्ययोः एकवाक्यत्वं पुनः संहत्य जायते ’ इति न्यायेन आख्यातभेदेऽपि आकाङ्क्षावशात् अस्ति एकवाक्यता । ( अग्निहोत्रं दध्ना जुहोति इति, दध्नेन्द्रियकामस्य जुहुयात् इति च इत्यत्र) । सोम ८।३।३ ● वाक्ययोर्विरोधे ‘ पञ्चदश सामिधेनीरनुब्रूयात् ’ ‘ सप्तदश वैश्यस्य ’ इत्येतदुदाहरणम् । उभयमपि हि सामान्यविशेषरूपत्वादेकवाक्यत्वे कृते विशेषो सति विधिविशेषणयोगात् सामान्यस्य बाधो भवति । वा ३।३।७।१४ पृ ८४० ● वाक्यानां अर्थं प्रत्यायन्तां नियुद्देशेन एकवाक्यत्वात् प्रामाण्यम् । अर्थवादाधिकरणम् । १।२।१।१-१८ ● वाक्यानां अनेकार्थता सगुणकर्मविधानेन अगत्या स्वीक्रियते । ( सौनामप्या गुणग्रहविषये ) । भा ८।२।१।७ ● वाक्यानां अर्थवत्तापि द्वैविध्यदर्शनात् । उच्चारणार्थं प्रत्यायने हि अविनाभूते तत्र अन्यतरविवक्षया प्रयुज्यमानेऽपि किंचिन्नान्तरीयकं भवति । यदि अर्थप्रत्यायनं विवक्ष्यते तदा उच्चारणमभावात् । अथोच्चारणविवक्षा ततोऽर्थप्रत्यायनमनुपपन्नम् । यथा जपेषु त्रिषु विज्ञातं च । वा १।२।४।३१ पृ १४३-१४४ ● ‘ वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ’ । नहि अत्र ( ‘ दीक्षितो न ददाति ’ इत्यादेः ) अग्निहोत्रादिविधिभिः पदैकवाक्यता । येन तेषामर्थविधाने सति आकाङ्क्षायाम् अर्थबोधस्याभावेन पर्युदासो न भवेत् । किन्तु ‘ अग्निहोत्रं जुहोति ’ ‘ दध्ना जुहोति ’ इत्यादिवत् ‘ वाक्यानामेक० ’ इति न्यायात् वाक्यैकवाक्यत्वम् ( पूर्वपक्षशङ्का ) । सोम १०।८।७ ● वाक्यानां व्याकरणेन अनन्वाख्यानम् । वा १।३।८।२८ पृ २६१. ■ वाक्यानां— विधिवाक्यानाम्, अर्थवादवाक्यानाम्, उपनिषद्वाक्यानाम्, अध्यायादस्वयानां च

फलपर्यन्तगाने क्रमः सविस्तर अर्थवादाधिकरणे (मीको. पृ. ६३९) वार्तिके द्रष्टव्यः । * वाक्यानां स्वार्थपर्यवसितानामपि महत्त्व एकमहावाक्यार्थापादनेन एकवाक्यत्वं भवति । सु. पृ. ६२५. * 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' वा. १।४।१३।२४ पृ. ३६६. * वाक्ये एकस्मिन् अन्योऽर्थो विधीयमानो नान्येन संबध्यते, वचनव्यक्तिभेदात् । भा. ३।१।६।१२ पृ ६९०, * वाक्ये एकस्मिन् द्वौ संबन्धौ न विधीयेते । भिन्नेन हि तथा वाक्यम् । ३।४।१।७, * वाक्ये एकस्मिन् यथोपक्रम निगमयितव्यम् । १।४।१३।२४. * वाक्ये पुनः 'अर्थं प्रति न सामर्थ्यं, न च दोषात्तमुच्यते । केवलः पदसंगात, सामर्थ्यमुपलभ्यते ॥' वा. ३।३।७।१४ पृ. ८२६ * वाक्ये वैरूप्यलक्षणो वाक्यभेदः । 'अरुणया' इत्यत्र तृतीयया करणीभूता एकहायनीमुद्दिश्य भरणप्राप्तिपदिकार्थविधौ भिन्नदोषात्त्वात्या अपि एक हायन्याः एकवाक्ये वैरूप्यम् । बाल. पृ. १८१. * असत्प्रदपदार्थप्रधाने सति आनन्तर्याभावेऽपि सर्वत्र लोके वेदे च वाक्ये पदानाम्, प्रकरणे च वाक्यानां सम्बन्धो भवति । सु. पृ. ६९५. * एकस्मिन्नेव वाक्ये न द्वौ सम्बन्धौ स्तनोति विधातुम् । भा. ३।५।१।१०, ४।३।११।३३. * न च गुणफलसंबन्धाद्वे वाक्ये मति कर्मान्तरम् । भा. २।२।२।२२, * 'प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलभ्यते । तत्र स्यादनुवादत्वम्' ॥' २।२। ५।१७ पृ. ५१२, * विशेषसम्बन्धे वाक्ये सामान्यसम्बन्धाधिकमपि वस्तुतः अभ्रेयाधिकरणोक्तो वाक्यभेदो योज्यः (३।१।८)। ३।७।८।१६, * सर्वेन अग्निरोत्रेन वाक्ये निमित्तमाने विशेषणत्व तत्त्वतः । २।२।३।६ पृ ४७८. * वाक्ययोः भिन्ने योगानेकस्ये उपादानस्य 'तस्य वा एषा यज्ञस्य' इति व्यवेतयज्ञ-पदैकवाक्यत्वात् यज्ञमागपर्यन्त 'तस्मात् वसिष्ठ-दवीपौर्णमासीयत्रोपरिष्ठात् चरन्ति' इत्यनेन सन्निहित यदिकद्वित्वैकवाक्यतया अश्वकापदार्थपर्यन्तेन वाच्यते । दीयानेकत्वे तु 'पञ्चदश सामिधेनी अनुब्रूयात्, सप्तदश वैश्यस्य' इति । कौ. ३।३।७।१४ पृ. ३६१. * वाक्ययोः विशेषे सामानाधिकरण्यबोधकवाक्यात्, निमित्तविशेष-संयोगबोधक वाक्यं बलीयः । बा. ३।३।७।१४ पृ. ८४०. * लिङ्गवाक्ययोर्लिङ्गं बलीयः । भा. ३।३।७।१४ पृ ८४९.

* वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्व नास्ति । वि. २।२।७.

वाक्याधिकरणम् । तद्भूताधिकरणम् । वेदवाक्यकर्मप्रख्यावकम् ॥

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । १।१।७।२५॥

भाष्यम्— यद्यपि औत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न 'चोदनालक्षणो धर्मः' । चोदना हि वाक्यम् । न हि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्येतो वाक्यात् अन्यतमात् पदात् 'अग्निहोत्रात् स्वर्गो भवति' इति गम्यते, गम्यते तु पदत्रये उच्चरिते । न चात्र चतुर्थः शब्दोऽस्ति अन्यदतः पदसमुदायात् । न चायं समुदायोऽस्ति लोके, यतोऽस्य त्वमहादर्थोऽव गम्यते । पदान्यमूनि प्रयुक्तानि, तेषां नित्योऽर्थः, अप्रयुक्तश्च समुदायः । तस्मात् समुदायस्यार्थः कृत्रिमो न्याय्यो वा । न च पदार्था एव वाक्यार्थः । सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यम् । अन्यश्च सामान्यमन्यो विशेषः । न च पदार्थात् वाक्यार्थावगतिः, असम्बन्धात् । अथाति चेत् वाक्ये कश्चिदपि पदार्थोऽवगतो अर्थान्तरमवगमयेत्, एकस्मिन्नवगते सर्वमवगत स्यात् । न चैतदेवं भवति । तस्मादन्यो वाक्यार्थः ।

स्यादेतत्, असमुदायादपि वाक्यात् अर्थात सम्बन्धे व्यमानादर्थावगम इति । यदि कश्चिदेव शब्दो धर्ममात्मीयम् प्रयुक्तमेत् । न नैव शब्दधर्मो यस्मदुक्तादपि शब्दादर्थः प्रतीयते । नहि प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति । (उच्यते) । तदभिधीयते, पदधर्मोऽयं न वाक्यधर्मः । पदाद्धि प्रथमश्रुतादपि प्रतियन्तोऽर्थं दृश्यन्ते । नैवमेवम् । यदि प्रथमश्रुताद्वाक्याच्छ्रुतपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च । न अपदार्थविदोऽवगच्छन्ति, तस्मान्नैतदेवम् । ननु पदार्थविदिरपि अव

गम्भ्यन्ति अकृत एव वाक्यार्थसम्बन्धो भविष्यति, पदार्थ भेदनेन हि सम्प्रत्यय अवगमिष्यन्ति, यथा तमेव पदार्थे द्वितीयादिश्रवणेनेति । नेति ब्रूमः । यदि वाक्ये अन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहित पदार्थेभ्योऽर्थान्तर मत्याययति, उपकारस्तु तदा न पदार्थज्ञानादवकल्पते । तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण सम्भवति वाक्यार्थज्ञानमिति । ननु एवं भविष्यति, सामान्यवाचिनः पदस्य गौरिति वा अश्व इति वा, विशेषकः शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तत्र । कथमिव गौरिति वा अश्व इति वा सामान्यवाचिन पदात् सर्वगवीषु सर्वाश्वेषु वा बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत ? न च शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न चानर्थको मा भूदिति अर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः, तस्मात् कृत्रिमः । पदसङ्घाता गृह्यन्ते, सङ्घाताश्च पुरुषकृता दृश्यन्ते, यथा – ' नीलोत्पलवनेष्वद्य चरन्नश्चारुसारया । नीलकौशेयसंवीता प्रनृत्यन्तीव कादम्बा ॥ ' ( ' शाभा. कौशेयसंवीता कादम्बा इव शोभना ' इति उत्तरार्धपाठो न्यायरत्नमालायाम् । ) अतो वैदिका अपि पुरुषकृता इति ।

बृहती— ' अपनी वाऽयकता रपुरर्थेभ्यातनि मितत्वात् ' । ' यद्योत्पत्तिको नित्यः शब्द संबन्धश्च, तथापि न चोदनालक्षणो धर्मः ' इति ( भाष्येण ) किमिदमारब्धम् ? इदमारब्धम्— वृद्धव्यवहारादौत्पत्तिकसम्बन्धः शब्दार्थज्ञानस्य, वृद्धव्यवहारश्च प्रमाणान्तरावगतस्य वाक्येनार्थं प्रतिपादयन् कस्यचित् कश्चिदस्य प्रतिपद्यते । तद्व्यतिपन्नाः बालोऽपि जानाति ' अनेनैव तत् प्रतिपाद्यते ' इति । प्रतिपत्तिश्च हानोपादानादिकार्यानुगम्या । हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तु नाप्रमितविषयम् । अतश्च प्रमाणान्तरप्रमितविषयमेव औत्पत्तिकत्व शक्यतेऽवगन्तुम्, न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः, तत्रौत्पत्तिकत्व शक्यावगमम् । ( यदेव हि प्रमाणान्तरेण अवगतेऽवगन्तु तद्विषयमेव हानोपादानवत्त्वावगमम् । अतः कथमनुन्मीलितागमविवेचनो बालः शब्दैकगम्यविषय हानोपादान बुध्येत ? अतः बुद्धहानोपादानश्च कथं तद्विषया प्रतिपत्तिं बुद्धस्यानुमिमीते ? अननुमितवृद्धविषयबुद्धप्रतिपत्तिश्च कथं तद्विषयशब्दस्य शक्तिमवधारयेत् ? अनवधारिततद्विषयशक्तिश्च तदर्थं कथं शब्दादवगच्छेत् ? अनवगच्छंश्च कथं व्यवहरेदिति ) तस्मात् वैदिकानामग्निहोत्रादीनामौत्पत्तिकत्व दुरवगमम् । तस्मादौत्पत्तिकत्वकल्पनोऽनर्थकः । वेदप्रामाण्यसिद्ध्यर्थं औत्पत्तिकत्वमिष्यते स्वतःप्रामाण्यवादिभिः ( मीमांसकैः ) । न च वृद्धव्यवहारात् नियमोत्पत्तिकत्व वेदार्थप्रतिपत्तौ अभ्युपगन्तुं प्रतिपत्तुं क्षमम् । ( शङ्कते– ) किमिति न क्षमम् ? ( उत्तर– ) समुदायाद्धि वृद्धव्यवहारे अर्थोऽवगम्यते । न चासौ समुदायो वेदे प्रयुक्तः । तस्मान्न निमित्तता प्रतिपद्यते । ( चोदयति– ) ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽवगम्यते । आवापोद्वापाभ्यां हि ' देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्, विष्णुमित्र गां बधान रक्ताम् ' इत्येवम् अन्वितशुक्लार्थं, अन्यत्र आपोद्धृतशुक्लार्थं अन्वितकृष्णार्थं च, अन्यत्रापोद्धृताश्वार्थं अन्वितप्रधानार्थश्च वाक्यार्थोऽवगम्यते, अतोऽवगम्यते पदेभ्यः पदार्था एवावगम्यन्ते, न वाक्यार्थः । पदार्थसमुदायेन वाक्यार्थोऽवगम्यते । अन्यथा हि एकपदोद्धारे सकलवाक्यार्थानवगतिरेव स्यात्, न पदार्थमात्रस्य । तस्मात् पदेभ्यः पदार्थाः, पदार्थेभ्यः परस्परान्विताववगतिः ( परस्परान्वितार्थावगतिं पूर्वपक्षी परिहरति– ) यदि पदेभ्यः पदार्था अवगम्यन्ते पदार्थेभ्यः परस्परान्वयः, किं पदार्थनिमित्तक एव वाक्यार्थः ? ( चोदयिता– ) ओमित्युच्यते । ( पूर्वपक्षी– ) कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वम् ? ( चोदयिता– ) सर्वस्य सर्वस्मिन्निति ब्रूमः । ( पूर्वपक्षी– ) एवं तर्हि सर्ववाक्यार्थावगतिः सर्वस्मात् ( स्यात् ), नियमे वा हेतुर्वक्तव्यः ' इत्थंभूतेन इत्थंभूतोऽन्वयः प्रतिपाद्यते ' इति ( सन्निहितोच्चारितपदप्रतिपादितसाकाङ्क्षान्वययोग्येन तथाभूतपदार्थान्तरान्वयः प्रतिपाद्यते इति ) न चात्र वृद्धव्यवहार मुक्त्वा अन्यत् कारणम्

पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तद्वशादपि निर्णयो दुर्घट (पदाभेदे पदार्थाभेदात् वाक्यार्थप्रतिपत्तिभेदस्त्वनुपपन्न स्यात् ) पदभेदे च पदार्थनिश्चय स्यात् ( कल्पितेपदात् भिन्ने प्रत्यक्षेपदेऽङ्गीक्रियमाणे कल्पितेपदे गृहीत संबन्धस्य प्रत्यक्षे ह्यत्र पदार्थानवगतिरेव न स्यात्, तस्मादनर्थक एव प्रत्यक्ष स्यात् ) आनर्थक्ये चैव वाक्यता कथम् ? विभागश्च न ( कथम् ? ) । वर्णोपजन एव हि स्यात् ( भिन्नार्थप्रतिपादकतया विभिन्न पद भवति, विभागेन तु अर्थाप्रतिपादकत्वे न पदविभाग स्यात्, किन्तु तस्मिन्नेव पदे वर्णान्तरमधिकमिवमुपजातमिति स्यात् ) आगमविकल्पपक्षे तु सर्वं सुपपन्नम् । आगमविकल्पावगम तु इति चेत्, आगमा तदाविव ( इत्थं प्रकृतिप्रत्ययादिविभागेन निरूपिता शब्दभागा प्रतिपत्त्युपाया इति पाणिनिप्रभृतिभिराचरणात् व्याकरणागमादेवावगमम् ) ननु ( ते ) 'ऋषीणामपि यज्ज्ञान तदप्यागमपूर्वकम्' इति । ( वाक्यपदीये १।३० तदप्यागमहेतुकम् इति तु तत्र पाठ ) । अनिबद्धप्रमत्ता चास्यानादित्वात् सतोरस्य शक्यतेऽपगन्तुम् । सेयमनपेक्षता प्रामाण्यहेतु । भेदपक्षे सर्वमिदमसमञ्जसम् । ज्ञानप्रधानत्वात् वेद अवच्छिन्नार्थबोधकत्व वेदस्य वेदत्वा कथम् ? 'अथ यदल्पं तन्मर्त्यम्, अथ यद्भूम तदमृतम्' इति । किं तदल्पम् ? अवच्छेद । कल्पनीयस्यावच्छेदो दृष्ट, न पुनस्तत्त्वस्य । 'वाग्वाचो मतम्' इत्यादि च सर्वं उपपन्नार्थं भवति, अन्यथा हि विरोध स्यात् ( यदद्वैतप्रतिपादक तदुपपन्नार्थं भवति, धर्मनिषेधेन भिन्नार्थप्रतिपादकत्वं विरोध धर्मनिषेधेन भिन्नार्थप्रतिपादकानां वेदान्तानां च स्यात् । शब्दविवर्तात्मकत्वपक्षे तु न विरोध ) विरोधे चाप्रामाण्यम् । तस्मादेकानुगुण ( अखण्डानुगुण ) इद ब्रह्मणि ( वेदादि ) आगमविदो व्याचक्षते । सोऽयमागम । ( व्याकरण ) तदिद तत्त्वम् ( व्याकरणोक्त ) । त इमे ब्रह्मविद ( वैयाकरणा ) स एव विजानते । तस्मान्निवर्तन्त्य ( मीमांसक ! ) एतस्माद्भेदग्रहणात् समारम्भपातिन ।

( 'अत एक एवाय' इत्यारभ्य वैयाकरणोक्त पूर्वपक्षी दूषयति- ) ननु चात्रापि वृद्धव्यवहारव्युत्पत्तिर्नैवोपकारिका । आगमतश्चेत् विकल्पा प्रवर्तन्ते, किं वृद्धव्यवहारेण ? अथ वृद्धव्यवहारव्युत्पत्त्या अविकल्पिता ( असञ्जातविकल्पा ) आगमविकल्पात् प्रतिपद्यते, तदिद भेदव्यवहारेऽपि तुल्यम् । अथ ( वृद्धव्यवहारव्युत्पत्तिनिर्वाहियते ) आगमत एव विकल्पा प्रतिपद्यते ( परिगृह्यते इति पाठो विमर्शाय ) वृद्धव्यवहारव्युत्पत्ता निमित्तावगति क्वोपयुज्यते ? तस्मात् ( वृद्धव्यवहारव्युत्पत्त्यपेक्षाया ) अयमपि भेदपर्यवसित एव पक्ष ( भेद विना व्युत्पत्तिप्रतिपत्त्योरनुपपत्ते )।

अथेदानीमयमपर प्रकार ( निरस्यते ) जातिगुणयोरिव एकद्रव्यनिवेशादेकद्रव्यसमवाय प्रतीयते, तद्वत् जातिगुणशब्दयोरपि सन्निहितयोच्चारितयो तद्वाचिनी कार्यताऽवगम्यते इति चेत्, तच, व्युत्पत्तौ निमित्तमात्रतयाऽवगते निमित्तमात्रतयैवावगति प्राप्नोति ( व्युत्पत्तिसमये पदार्थान्तरनिरपेक्षतया आवापोद्वापाभ्या व्युत्पत्तेस्तत एव पदात् केवलपदार्थावगति स्यात् तावन्मात्रे व्युत्पत्ते इत्यर्थ ) । एवमानर्थक्यमिति चेत् ( पदार्थमात्रस्य सम्बन्धाग्रहणसमये एवावगतत्वात् पदार्थमात्रप्रतिपादकत्वे आनर्थक्यमिति चेत् ), नहि आनर्थक्यमर्थान्तरावगतौ हेतु । तस्मादनर्थक एवाय वृद्धव्यवहारविरचन शब्दार्थयोरौपत्तिकसम्बन्धाभिधानन्नेव । तस्मात् पूर्वोक्तमेव कृत्स्नस्य सम्बन्धिकस्य सम्प्रवक्ष्यति स्थितम् ।

( एव पूर्वपक्ष साधयित्वा भाष्यमनुना व्याचष्टे- ) 'यद्यपि औत्पत्तिको नित्य शब्द सम्बन्धश्च, तथापि न चोदनायां गतो धर्म' इति वृद्धव्यवहारस्यानिमित्तता प्रतिज्ञेय वैदिके व्यवहारे, यथोक्त 'चोदना हि वाक्यम्, नहि अग्निहोत्रात् स्वर्गो भवतीति गम्यते' इति ( एवं स्यात् पश्यत्, गम्यते तु पदत्रये उच्चारिते इति प्रथमेन पदस्य प्रतिपत्ति ) वाक्यात् ( च ) प्रतिपत्तिर्वैसा हेय भिधाभावनिवेशम् । न चायं समुदायो वृद्धव्यवहारसिद्ध य श्रुतौ प्रयुक्त । तस्मादनिमित्तता पूर्वोक्तस्य भाष्यस्य आर्थतया वर्णिता । 'पदानि हामूनि प्रयुक्तानि, एषा नित्योऽर्थ' इति । वृद्धव्यवहारे हि

पदानामौत्पत्तिकस्य निमित्ततया सिद्धं तस्मिन्नेन ( प्रमाणान्तरानिगमनीये ) नैमित्तिके । इह पुनर्नैमित्तिकान्तरागतौ ( प्रमाणान्तराविषयस्यागतौ ) अविद्द एव निमित्तभावः । कुत ? असंयुक्तः समुदायो यस्मात् । एवं सति कृत्निमत्वमुपपादितम् । 'न च पदार्था एव वाक्यार्थः ' इति परपक्षान्वयिना दर्शयति । परस्परान्वयिता हि विशेष उच्यते ( अन्वयानन्वयौ हि असाधारणौ, साधारणौ हि अनन्वितान्वया इति अनन्वितमनन्वितं सामान्यम् ) 'सामान्ये हि पदं वर्तते, विशेषे वाक्यम्' इत्यनेन व्यावहारिकी पदव्युत्पत्तिरर्थविनेत्युक्तम् । विस्तरश्चानोक्त एव पूर्वम् । 'न च पदार्थाद्वाक्यार्थावगतिः, असम्बन्धात्' इति । ननु अस्त्येव पदार्थानां वाक्यार्थेन संबन्धः, तदन्वयस्यैव वाक्यार्थत्वात् ( परिहरति– ) न हि प्रयोगशून्या परस्परान्विता शक्यतेऽवगन्तुं इति पूर्वोक्तानामभिधेयतद्व्याप्त्यनिरूपणा । 'अवगते चेत् संबन्धे कस्मिंश्चिदर्थेऽवगते अर्थान्तरमनागम्येत एकस्मिन्नवगते सर्वमवगतं स्यात्' इति अपदार्थनिमित्तत्वे वाक्यार्थस्य हेतुः ( वाक्यार्थः पदार्थनिमित्तको न भवति इत्यत्र हेतुः ) वर्णितप्रायम् । 'असंयुक्तादपि नास्त्यात् अवगते सम्बन्धे समागमदर्शनाभावः' इत्यनेन अनुपलब्धिनिर्मुक्त निर्दोषकं ( कार्येकत्र ) वेदे दर्शयति इति वर्णितम् । 'शब्दो धर्ममात्मीय व्युत्क्रामेत् ( अतिक्रामेत् इति विमलायां पाठः ), न चैष शब्दधर्मः, यदसंयुक्तादपि शब्दात् अर्थः प्रतीयते ' इति कार्यानुवर्तिता अनुपलब्धिनिर्मुक्तो दर्शयति । यथोदितम् । 'नहि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्ति' इति सामान्यतोदृष्टविरोधः पूर्वोक्तः ( श्लोकेन भाष्येणोक्त. ) । 'यदभिधीयते पदमर्थोऽयम्, न वाक्यधर्मः, वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्ते ' इति, कथं तर्हि अर्थानवगम. ( किमिति प्रथममेव वाक्य वृद्धस्येव बालस्यापि वाक्यं नावगोधयति ? ) । न नावबोधयति, तेन अवगन्तव्योऽस्ति कश्चित् प्रकारो येनावगोधयति । ननु कोऽसौ इति चेत् आह– ) अवगतेर्विद्यः, पदार्थमात्रव्युत्पत्तिरेव वृद्धव्यवहारो वेदार्थावगतौ हेतुः, इत्युपपत्त्यनेनैव भाष्येण प्रागुक्तेनैव ( पदार्थसंबन्धे व्युत्पत्तेः अवगतिर्विदेऽपि भवतीत्यर्थः ) 'नैतदेवम् यदि प्रथमश्रुताद्वगच्छेयुः अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च, न त्वपदार्थविदोऽवगच्छन्ति ' इति । नहि असंयुक्तात् लोके समुदायात् अर्थोऽवगन्तुं शक्यते । ननु पदार्थविदोऽवगच्छन्तीति, तत् सामान्यतोदृष्टभ्रान्त्या पूर्वोक्तमेवेति मन्तव्यम् । 'ननु च पदार्थविद्भिरपि अनवगच्छद्भिः अनुतक एव वाक्यार्थसंबन्धोऽवगतो भवति, पदार्थवद्देनैव गत्वा अवगमिष्यन्ति यथा तमेनार्थं द्वितीयादिश्रवणेनेति' विभ्रम भ्रान्त्या ? आगमनिष्कृत्यानुगुण्यादर निमित्तेनैव, यथा वृद्धव्यवहारे एव ( मीमांसकपक्षे ) द्वितीयादिश्रवण ( उपायः, तथा आगमविकल्पा इति– ) अर्थ पूर्वोपवर्णितोऽर्थः । 'नेति ब्रूमः, यदि वाक्यान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, क उपकारस्तदानीं पदार्थज्ञानादनर्थकत्वे ' इति पूर्वोक्तमनिमित्तत्वं वेदस्य कल्पनायामपि तुल्यं इत्यस्यार्थः । 'ननु एवं संभविष्यति, सामान्यवाचिनः पदस्य गौरिति वा अश्व इति वा, विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते ' इति । तदेतत् कार्यैक्यनिबन्धन यदुक्त अर्थगौरिव बुद्ध्येकत्वोत्पत्तिहेतुत्वम्, तदुपन्यस्तम् (विशिष्टार्थप्रतिपत्तिरेकं कार्यं तदभिन्नजनमेवानुरूपमुत्पादयद्ददं शुक्लगोशब्दयोरिति ) । 'नहि कथमिव गौरिति वा अश्व इति वा सामान्यवचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुत्पद्यते श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत ' इति । निमित्तमात्रमुत्पन्ने यंव्यवहारव्युत्पत्तौ ( व्यवहारव्युत्पत्तौ निमित्तमात्रव्युत्पत्तेः इति व्युत्क्रमेण पाठो विमलायाम् । निमित्तमात्रस्य पदान्तरनिरपेक्षस्य स्वार्थव्युत्पत्तौ ) पदार्थमात्रगतिः प्राप्नोति, न परस्परान्वयः । इति प्रागुक्तमनेनोक्तम् । अर्थनिमित्तं तु आर्थम्, न शाब्दम्, शाब्दं चेदं विचार्यते । तत्र च वाक्यप्रयोगिभ्येव ( प्रयोगमात्रेण्येव ) निमित्तोक्ता । न च प्रयोगव्युत्पत्तौ ( प्रयोगे व्युत्पन्ने यत्र तत्र वृद्धव्यवहारे ) पदार्थान्तरशङ्कया पदस्य स्वार्थनिमित्तता दृष्टा, येन पदान्तर– ( •दार्थान्तर• ) प्रयोगात् सर्व-

गता ( अतो नियोगाभिधानं इति वक्ष्यमाणेन सम्बन्धः )। ' आचार्यचोदित करोमि ' इति हि दर्शितं ( भाष्ये। चोदित प्रवर्तितः कार्यमवबोधित इत्युच्यते, नान्यथा चेतनः प्रवर्तयितुं शक्यते )। ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके। ( उत्तर– ) उपायो हि ते, न शब्दार्थाः। के पुनरमी उपाया नाम ? (उत्तर–) उपायो हि तत्त्वशः प्रयोगदर्शनमात्रात् शब्दार्थे निरोधेऽप्युपयन्ति, यथा हर्निहर्यभिषेपरय पशुरयम् । ( हरणक्रिया यदा पशुमन्निच्छन्ति, तदा शब्दाः कर्तां दत्तिर्दिरित्युच्यते )। परममी नियोगं समदीनन्यायोभिः प्रयुज्यमानः प्रेषणादिव्यपदेशं लभते, प्रवर्तकत्व तु शब्दार्थे सर्वेनापरित्यागात्। अतो नियोगाभिधानमिदम्। नियोगाभिधाने च सति तत्साधनस्यानिषद्धोऽवगम्यते। साधनाभिधाने च ( यागादौ साधने साध्यान्वितोऽभिधीयमाने अर्थात्– ) साध्यमवगम्यते। अत इदमुक्तं ' तद्भूतानां आख्यातेनार्थेषु व्यवस्थितानां क्रियार्थत्वात्. निमित्तमनुपपद्यते ' इति ( नैव भाष्ये– के. )। ननु च प्रयोगे सति एतदुक्तं भवतु (यदि अपूर्वान्वितेषु प्रयोगो दृष्टः स्यात्तदैतदुक्तम्, न तु सोऽस्ति। परिहरति– ) येन योऽसौ अप्रयोगे इतीति ? पश्यतेषु हि दृष्टो लौकिकः प्रयोगः, वैदिका अपि त एव। अतस्तथाभूतेष्वेवात्र प्रयोगः ( लोके हि कार्यान्वितस्याभिधायितया पदानि व्युत्पन्नानि, तेन वेदेऽपि कार्यान्विता एव पदैः पदार्था वक्तव्याः, लिङादिभिरपि पदार्थान्वितमेव भाग्यं वक्तव्यमिति विधीयते पदानयोग्यतया क्रियाव्यतिरिक्तकार्याभावात् इति न किंचिदनुपपन्नम् )। तस्मादपूर्वमेव अन्वितमभिधीयते लिङादिभिः। ( शङ्कते–यदि व्युत्पत्तौ दृष्टिपक्षा वगति– ) एवं तर्हि निमित्तो नैमित्तिकावगतिः ( न च व्युत्पन्नमप्रतीयत् अनिश्चयमिति, तत् कथं ततो व्युत्पत्त्यवगतिरिति। उत्तर– ) मन्द ! नैवम्। कथं नोपायोऽयम्। नहि अभिन्नोऽन्यप्रत्ययः शक्यते प्रतिपत्तुम्।

( एवं स्वमतं स्थापयित्वा वैयाकरणमतं निराकुर्वन्नाह– ) न स्फोटात्मिका पदार्थाः, एवममिधानानि पदानि, तदिदं वाक्यपदीये ( मतम्। ' अन्विताभिधायीनि पदानि, न पुनरर्थविच्छेदशून्यानि, पदान्येव च वाक्यम्, न पदानीति ' इति। वाक्यपदे अधिकृत्य कृतो ग्रन्थो वाक्यपदीयं ' शिशुकन्दयमसभद्वद्व० ' इति छः )। अन्यथा ( एवंविधाद्पदार्थानाश्रयणे ) हि अवगम्यमानः पदपदार्थविवेक. असन्नुतो भवति अविद्यमानः प्रतिपन्नः ( स्यात् )। तस्मान्न कार्यतः ( वाक्यार्थप्रतिपत्तिलक्षणात् ) तावत् वाक्यवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रमा (पदान्येव अन्विताभिधायीनि वाक्यम्, पदार्था एवान्विता अभिधीयमाना वाक्यार्थं इति )। अत एतत्तु भेदानवगमाद्वास्येयन्त्वं इत्युक्त ( स्फोटनिराकरणपर्वणि। यतो वाक्यार्थावगतिः प्रामाणिकी ) अतः क्रियार्थेन समाम्नाय ( वेदानाम् )।

ननु च नास्त्येव क्रियार्थेनैव आम्नानं लोके। ( एकदेशी परिहरति– ) अस्ति तावत् क्रियार्थता वेदे, तद्विषयमिदमधिकरणं भविष्यति। ( चोदकः– ) किं न लौकिकविषयमिदमपि स्यात् ? ( एकदेशी– ) किं वा मन्यते भवान् ? ( चोदकः– ) न्यायाभिधानतुल्यत्वात् सर्वत्रेति मन्यामहे ( यो न्यायोऽभिहित अन्विताभिधानलक्षणः, स लोके वेदे च सम इति हेतोः सर्वत्रैवाधिकरणमिति। परमसिद्धान्ती ब्रूते– ) भवतु सर्वत्र। ( चोदकः– ) ननु च क्रियार्थेन इत्यव्यापकम्। ( सिद्धान्ती– ) व्यवहारनिमित्तैवेयं क्रिया इति मत्वा शाम्यतु भवान्। ( नात्र क्रियाशब्देन लिङ्गिनोऽभिहितः, किंतु व्यवहाररूपा क्रिया अभिप्रेता, सा च लोके सर्वत्रास्तीति व्यापकम् ) अतः सिद्धं ' कार्यस्य तन्निमित्तत्वात् ' इति। वैदिकानां सनिमित्तत्वम्। ' तेष्वेव पदार्थेषु ' इति ( भाष्ये ) अन्वितेषु इत्यर्थः। कुत ? नापेक्ष्य पदार्थान् पार्थक्येन वाक्यार्थः प्रतीयते ( अन्विता एव पदार्था वाक्यार्थं )। न चेत् प्रतीयते कस्य वाक्य प्रमाणताम् कल्पयिष्यते ? ननु चान्वयो न पदार्थः, स च वाक्यार्थो भविष्यति, अतश्चार्थात् वाक्यमपि पदेभ्योऽन्यदिति गम्यते ( इत्यत ) ' नन्वर्थापत्ति.' इत्यनेनोक्त ( भाष्येण )। ' तत्र, अर्थस्य तन्निमित्तत्वात् ' इत्यन्विताभिधानेन कथितोऽस्यार्थः– अर्थापत्तिर्नास्तीति। ' अपि चान्वयव्यतिरे-

स्मरणीयेऽर्थे निमित्तता न भवति, तथा शब्दस्यापि)। 'एवं च सति गुणान्तरप्रतिषेधो न शब्दाद्' इति कल्पितनिमित्तपरिहारात् परिहृतम् (कल्पितनिमित्त निमित्त पदार्थे इति निरु बौद्धा मन्यते, तेषां मते अन्यापोहमात्रनिष्ठा श्रुतिः, ततश्च गुणान्तरप्रतिषेध शुद्ध शब्दस्याय इति, तदिदं निराकृतं 'कल्पितं निमित्तं न भवति' इति कल्प्यमाने)। 'अपि च प्रातिपदिकाद् उत्तरा द्वितीयादिविभक्तिः' इति, अन्विताथमेव प्रातिपदिकं स्मरति, यत करणादिना प्रातिपदिकात् तृतीया (विभक्ति) विदधाति (करणं च क्रियाप्रति भवति। अतश्च क्रियासम्बन्धार्थप्रतिपादकं प्रातिपदिकमित्युक्तं भवति)। विभक्तयश्च परस्परान्वयप्रतिपादिका प्रयोगात् अस्मृताम्नायस्य अन्तरेण श्रुत्यैव दर्शयन्ति (तेन अन्वितमेव शब्देनाभिधीयते इति विभक्तीनां प्रयोग प्रमाणम्)। अत अभ्युच्चयोपपत्तिरियम् (अन्विताभिधानविवक्षायाम्)। यदुक्तमनुमानं 'कृतकत्वात्' इति (यद् वेदवाक्यं कृतकत्वात् घटोऽपि कृतकः इति यदनुमानं तद् यदुक्तं) वृद्धव्यवहारस्य निमित्तत्वोपपत्त्या। 'अपि च' इत्यनेन पूर्वोक्तां सम्बन्धकारणार्थं दर्शयति (भाष्यम्। अतीन्द्रिये कार्ये नायायिष्वर्थेषु समयकरणशक्तिर्नास्तीति)।

लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥

भाष्यम्-- लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य सन्नियमं सन्निकर्षं कृत्वा तत्र सङ्गतं एवंजातीयकानि वाक्यानि 'नीलोत्पलमानय' इति। तस्मात् 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्येतेभ्य एव पदेभ्यो यथा अवगता, तेभ्य एवैतदवगम्यते 'अग्निहोत्रात् स्वर्गो भवति' इति। पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थ इति।

बृहती-- लोके पुनः प्रमाणान्तरप्रमितविषयत्वा (विषयता) युक्तेन तत्पूर्वकत्वात् शब्दव्यवहारस्य। 'तस्मात् पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थप्रत्ययः' इति (भाष्य) व्याख्यातम् (व्यतिरिक्ताभिप्रायमिति)। तस्मादुपपन्नं वृद्धव्यवहारनिमित्तत्वं व्युत्पत्तिकरणसम्बन्धस्य, वेदवाक्यार्थप्रतिपत्तिहेतुत्वं च। 'विप्रकर्षे' इत्यादयस्तु शब्दप्रत्यभिज्ञार्थेन, अभिधाने हि स दोषः, समासादीनां तु तत्रैव परिहारोऽभिधीयते।

ऋजु-- यद्यपि पदपदार्थसम्बन्धस्यापौरुषेयत्वाद् वृद्धव्यवहारादेवावगमश्च सिध्यति तथापि वाक्यार्थरूपे धर्मे पुरुषसङ्केतानपेक्षत्वात् किंचिन्मूलं समवलम्ब्य प्रामाण्यं धर्मे चोदनायाः। तथाहि, प्रत्येकं वा पदानि वाक्यार्थमवगमयेयुस्तत्सङ्घातो वाक्यं वा पदार्था वा। न तावदस्त्येकपदेभ्यो वाक्यार्थप्रतीतिर्दृश्यते, न चैषां वाक्यार्थविशेषे सम्बन्धग्रहणमस्ति, न च समस्तप्रतिनियतवाक्यार्थानाम्। वेदवाक्यस्य च प्रमाणान्तरागोचरत्वात् सम्बन्धग्रहणमत्यन्तासम्भाव्यम्। अन्वितवाक्यार्थस्यासाधारणत्वाच्च पदार्थानां प्रत्येकं वाक्यार्थविशेषप्रतिपादनमनुपपन्नम्, अगृहीतसम्बन्धस्य प्रत्यायकत्वे च पदमात्रात् सर्वपदार्थानामपि न सम्भवति प्रत्यायकत्वम्। नचागृहीतसम्बन्धः शब्दोऽर्थं प्रत्याययति बालानामप्रतीतेः, प्रतीतौ व्युत्पत्तिवैयर्थ्यात्। यद्यपि पदसमानसम्बन्धं न प्रत्यायकं तथापि पदसंघातो वा पूर्वपूर्ववर्णजनितसंस्कारसहितो वा अन्त्यवर्णो वा निरवयवो वाक्यस्फोटो वा सम्बन्धग्रहणापेक्ष एव वाक्यार्थं प्रत्याययिष्यतीति चेत्। न। अपदसमानानामपि प्रसङ्गात्, व्युत्पत्तिवैयर्थ्यप्रसङ्गादित्युक्तम्। अथ पदार्थवेदनमपि वाक्यार्थप्रतीतावङ्गम् असम्बद्धानामपि प्रतीतिर्न दोषः, व्युत्पत्तिश्च यथाऽनावर्थ्येनैवोच्यते, तदयुक्तम्। यदि हि पदेभ्योऽर्थान्तरभूतं वाक्यं पदार्थव्यतिरिक्तं वाक्यार्थं साक्षादेव वाचकतया प्रतिपादयति, तदा पदार्थपदस्योपयोग, तदनुपयोगे च पदार्थव्युत्पत्तिरनर्थिका वाक्यार्थं प्रतिनिरुक्ताम्। न च पदार्थादानन्वितार्थान्तरसम्भवात्। ननु सामान्ये पदार्थो विशेषे वाक्यार्थः स च स्वसामान्यविशेषरूपेण। सत्यम्। नियतविशेषाणामिह न सिध्यति सर्वविशेषसाधारणत्वात् सामान्यस्य। ततश्च सामान्येऽपि पदार्थान्तरसापेक्षसामान्यविशेषाक्षेपो मुख्यमपि न स्वेदत आनयन आक्षिपेत्। तत्र च न गवेनानयन प्रतीतेः। ननु आकाङ्क्षादिनिमित्तोऽर्थनियम, सत्स्वपि तेषु अदर्शनात्। नहि प्रत्यक्षेण वा उपरस्य वस्तुक्षमिति जिज्ञास्यमान सन्निहितमपि

**वेदान्तिनस्तु** इतरान्विते एव शक्तिग्रहः, न तु कार्यान्विते। तथाहि, प्रयोजकवाक्यस्य आनयनकर्मता-विशिष्टगोरूपे अर्थे शक्तिमवधार्य आवापोद्वापाभ्यां गामादिपदस्य गोत्वादौ शक्तिमवधारयन् आद्यव्युत्पत्ति-गृहीतान्वयांशे शक्तिमत्यजन् इतरान्विते एव शक्तिमव-धारयति। एवं च अन्वयेऽपि शक्तिः इत्याहुः।

**नैयायिकास्तु** समभिव्याहारेण वाक्यार्थबोधः घटा-नयनविशिष्टसंसर्गज्ञाने तादृशानुपूर्वीज्ञानस्य हेतुत्वमात्र-कल्पने लाघवात्। शाब्दत्वं च न शब्दवृत्तिविषयत्वं किंतु शब्दजन्यप्रतीतिविषयत्वम्। तेन वृत्त्यविषयस्यापि अन्वयस्य शाब्दबोधोपपत्तिः इत्याहुः।

**सिद्धान्तस्तु** वाक्यस्य वाक्यार्थे लक्षणा। न च शक्याभावात् कथं लक्षणा इति वाच्यम्। बोध्यसम्बन्ध-स्यैव लक्षणात्वात्। 'घटमानय' इत्यादिवाक्ये घटा-नयनसामान्यबोधेऽपि तद्विशेषबोधस्य लक्षणां विना अनु-पपत्तेः। नहि घटानयनसामान्यं वाक्यार्थः। ज्ञानेच्छा-प्रवृत्तीनां समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतु-मद्भावात् विशेषनिष्ठकेच्छाप्रवृत्त्यनुपपत्तेः। अतः तद्वि-शेषरूपवाक्यार्थस्य लाक्षणिकत्वं युक्तम्। स्फुटीकरिष्यते चैतत् तद्भूताधिकरणे (१।१।७)। मणि. पृ. ८०–८३.

■ **वाक्यार्थाधिकरणसिद्धान्तस्तु**–तथा च वाक्यानां वाक्यार्थे शक्तिरपि नापेक्ष्यते। तात्पर्यं च न पुरुषे-च्छाघटितं किंतु तत्तदर्थप्रतीतिजननानुकूलस्वरूपयोग्यतारूपं वाक्य पदार्थज्ञानसहकारेण तत्तत्कार्यान्वितभावनारूपं वाक्यार्थं बोधयति इति न चोदनानामप्रामाण्यं इति। कस्तूरि. १।१।७। वाक्यार्थज्ञानं न पदार्थोपस्थितिमन्तरा भवति, किंतु पदेभ्य उपस्थितानामर्थानां योग्यतया परस्परसम्ब-न्धमन्तरा वाक्यार्थज्ञानं तत्र च ■ लोकसापेक्षता इति चोदना धर्मे प्रमाणम्। वृत्ति.

■ **वाक्यार्थावगमः** न वाक्यग्रहणमूलकः किंतु पदार्थावगममूलक एव, पदार्थानामेव अन्वीयमानत्वात् तद्व्यतिरेके अन्वयानुपपद्यमानत्वात्। वेंकटनाथः १।१।७। ५८ पृ. ५८

■ **वाक्यार्थैकत्वे** यत्र एकवाक्यता संभवति, तत्र सर्वविशेषणविशिष्टैकभावनाविधिः। यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्युक्ते सर्वेषामेकवाक्यविषयत्वम्। वा ३।१।६।१२ पृ ६९१.

■ **वाक्यार्थत्वं भावनायाः**। सु. पृ. ६८३

■ **वाक्यार्थप्रतिपत्तिन्यायः**। साहस्री ८६२.

■ **वाक्यार्थप्रतिपत्तिन्यायेन** लक्षणिपत्ति–(समन्वय-प्रतिपत्ति)। समवेत तत्र शक्तिकल्पने गौरवात्। मीन्या.

■ **वाक्यार्थप्रतीतौ** पदार्थानां करणत्वम्। बाल पृ. ७०.

■ **वाक्यार्थबोधः** समभिव्याहारेण इति नैयायिकाः। मणि. पृ. ८२.

■ **वाक्यार्थबोधप्रकारः** कार्यत्वनिर्णये अपेक्षितः गुरुमते प्रदर्श्यते। एके 'तृप्तिकामः पचेत्' इत्यादौ प्रत्ययार्थकार्यत्वस्य प्रकृत्यर्थपाकेऽन्वयवत् 'स्वर्गकामो यजेत' 'शुचिः संध्यामुपासीत' इत्यादिवैदिकविधौ प्रत्ययार्थकार्यत्वस्य न प्रकृत्यर्थयागादौ अन्वयः संभवति, प्रकृत्यर्थप्रतीतियोग्यताविरहात्। तथाहि, यागादिक्रियायां कार्यत्वान्वये नियोगत्वान्वयो हेतुः, नियोगत्वविशिष्टायामेव यागादिक्रियायां कार्यत्वान्वयदर्शनात्। अन्वयप्रयोजक-रूपवत्त्वस्य तन्मते योग्यतात्वात्। प्रकृते स्वर्गकामस्य नियोज्यत्वेन नियोगस्य स्वर्गफलकामनाप्रयुक्तकार्यताज्ञान-विषयत्वेन सम्बन्धेन यागादिक्रियायामन्वये स्वर्गसाधनत्वं स्वर्गसाधकत्वेन ज्ञायमानस्य वा योग्यता। तच्च न संभ-वति साक्षात् स्वर्गसाधनत्वस्य बाधात्, परम्परया तत्सा-धनत्वस्य परम्पराघटकापूर्वज्ञानं विना दुर्ज्ञेयत्वात्। तथा च यागे नियोगान्वयासंभवात् न कार्यत्वान्वय इति।

अथ 'शुचिः संध्यामुपासीत' इत्यादौ नित्ये यथा इष्टसाधनत्वज्ञानं विनाऽपि 'शुचिनियोज्यक संध्यावन्दन-विषयकं कार्यं' इति बोधः तथा 'स्वर्गकामनियोज्यको यागः कार्यः' इति बोधः स्यात् इति चेन्न, प्रकृते कामनाविशिष्टस्य नियोज्यत्वेन नित्यविधितो विशेषात्।

न च कामना उपलक्षणमस्तु आत्ममात्रस्यैव नियो-ज्यत्वम्, काम्यसाधनताविशिष्टकार्यताज्ञानस्य प्रवर्तकत्वेन नातिप्रसङ्ग इति वाच्यम्। नहि 'स्वर्गकामः' इत्याद

* वाक्यगतिः । गेनाधीनावधारणा वाक्यगतिः । नोके च प्रत्युदेश विधिवाक्यपरिसमाप्तिः । न खलु येनैव प्रयत्नेन एकमर्थं विधातुं एकमुद्दिशामः तेनैव अपरमपि उद्देष्टुं ईश्महे इति स्वानुभवसिद्धमेतत् । तस्मात् द्वयोरुद्देश्ययोः नैकवाक्यत्वमवायसम्भव. । कणिका. पृ. ३७३.

* वाक्यगम्य 'यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात्' इति सामानाधिकरण्य 'यदि कामयेत' इति आत्मनेपदश्रुत्या वाचितम् । वा. ३।८।५।११. * वाक्यगम्यस्य आरुण्यस्य एकहायनीद्वारा 'अर्थैकत्वे द्रव्यगुणयो.' (३।१।६।१२) इत्यत्र उक्त । सु पृ. ११९२.

* वाक्यत्वं नाम जाति. भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्यवर्णानेकपदसमूहे अन्वयार्थे वा भिन्नवाक्यपदार्थसम्बन्धमन्यथाकाङ्क्षायमानात् अभ्रगतादिन्यायेन कल्पयितु तद्भूताधिकरणे (१।१।७) न अभ्यनुज्ञातम् । वा. १।१।१।' पृ. ८०५, सु पृ. १२७०

* वाक्यशेषः 'श्रूयमाणस्य वाक्यस्य०' इति विन्दौ द्रष्टव्यम् ।

* वाक्यपरिसमाप्ति प्रत्येकं दृष्टा । भा. ३।१। ६।१२ पृ. ९५६ । समुदाये वाक्यपरिसमाप्तिः । १०। ३।४।८.

* वाक्यपाद नाम द्वादशलक्षण्या तृतीयाध्यायस्य तृतीय पादः । बाल पृ. १०१.

* वाक्यप्रकरणे क्रमात् बलीयसी । भा ३।६। ५।३०, * वाक्यप्रकरणयोः प्रकरणं अर्थविप्रकर्षात् दुर्बलम् । शा. ३।३।७।१४, मीको. पृ. २९३५ 'बलाबलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * वाक्यप्रकरणयोर्विरोधे दोपानेकत्वे 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्युदाहरणम् । प्रकरणेन हि हविरभिवासनोत्तरकाल यद्विधान तस्य ग्रहणं प्राप्नोति । अमावास्यासमभिव्याहारेण तु पूर्वेद्युः । वा ३।३।७।१४ पृ ८३९. * वाक्यप्रकरणयोर्विरोधे दोपानेकत्वे पूषानुमन्त्रणमन्त्रगतस्य 'अहं देवस्य पूष्णः पुष्टिमान् भूयासम्' इति पदसमुदायस्य प्रकरणाद्दर्शाङ्गत्वे प्रसक्ते पूषपदैकवाक्यत्वात् पूषदेवत्यकर्माङ्गत्वम् । (सूक्तवाकोदाहरण तु प्रसिद्धमेव) । इद अविकाराख्यगौणप्रकरणोदाहरणम् । मुख्यप्रकरणोदाहरण तु वैमृधस्य प्रयाजादिवत् दर्शाङ्गत्वप्रसक्तौ वाक्येन पौर्णमासमात्राङ्गत्वम् । दोपानेकत्वे तु वेदिकरणस्यचिद्धविरभिवासनोत्तरस्य अधिकाराख्यप्रकरणात् मुख्यप्रकरणादेव वा दर्शाङ्गत्वे सिद्धे 'पूर्वेद्युरमावास्यायां' इत्यनेन पूर्वेद्यु काल । कौ. ३।३।७।१४. * वाक्यप्रकरणयोर्विरोधोदाहरण 'अग्नीषोमाविदं हविरजुषेताम्०' इत्यादिः सूक्तवाकमन्त्र. । वि. ३।३।९.

* वाक्यप्रकरणाधिकरणम् । वि. ३।३।९.

* वाक्यप्रमाणत्वं यथार्थज्ञानजनकत्वम् । इति वैयाकरणा । मणि. पृ. ८१.

* वाक्यप्रयोगः वक्तॄणा परप्रत्यायनार्थं. । वा. २।१। १४।०६.

* वाक्यभेदः । 'अथ शब्दस्वलक्षणा विप्रकीर्णां ततस्ततः । वाक्यभेदमिदा. याता संक्षिप्येह प्रदीप्यहम् ॥' तत्र द्विविधः तावत् वाक्यभेद. आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति । आवृत्तिलक्षणोऽपि त्रिविधः प्रकृत्यावृत्तिः, प्रत्ययावृत्ति, उभयावृत्तिश्चेति । प्रकृत्यावृत्तिरपि द्विविधा प्रातिपदिकावृत्ति. धात्वावृत्तिश्चेति । प्रातिपदिकावृत्तिरपि द्विविधा समासासमासभेदात् । प्रत्ययावृत्तिरपि चतुर्विधा– सुप्–तिङ्–कृत्–तद्धितभेदात् । तदुक्तं 'अर्थैकत्वादेक वाक्य' (२।१।१४ ४६) इत्यत्र वार्तिके 'पदतदेकदेशावृत्तमूहावृत्तिप्रकारात्मक तद्विभागलक्षणो वाक्यभेद' इति । तथा 'विभागलक्षणो वाक्यभेदलक्षणयोग अनेकादृष्टकल्पना च दोष., इतरत्पूर्वं अवेदत्वादप्रामाण्य' इति । एतद् व्याख्यातं भट्टसोमेश्वरेण (सु पृ. ६८२) "वाजपेयगुणविधौ आख्यातपदावृत्ति, प्रदेकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्ति., हविरार्तिं उभयत्वेन विशेषणे 'हविरार्तिमार्च्छेत्' इति पदसमूहावृत्ति., आरुण्यस्य कृत्स्नप्रकरणनिवेशे अरुणया इतिपदस्य पिङ्गाक्ष्यादिवाक्यात् विभाग. " इति । विभागलक्षणवाक्यभेदस्य तु प्रकारान्तरभेदा न सन्तीति नोक्ताः ।

पृ ६८०, * प्रत्ययावृत्तिलक्षणो वाक्यभेद । २।२।१२।२७ पृ. ५५२. * प्रत्येकवाक्यपरिसमाप्तिनिमित्तः वाक्यभेद. । तु. पृ ११६४ * पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदः । वा. १।४।२।३ पृ. ३१०. * परस्परनिरपेक्षविधाने वाक्यभेदो भवति । 'अग्नये च प्रजापतये च सायं जुहोति' इत्यत्र 'च'शब्दश्रवणात् परस्परसापेक्षत्वेन पदद्वयस्य आरम्भाच्चान्यथा न वाक्यभेद । एवं 'गौश्च अश्वश्च अश्वतरश्च' इत्यादावपि न वाक्यभेदः । मीन्या * प्राप्ते कर्मणि अनेकार्थविधौ वाक्यभेदापत्तिः । सु. पृ. ९२६, * प्राप्ते कर्मणि गुण-फल-रूपानेकार्थविधौ वाक्यभेदापत्तिः । पृ. ९२७. * प्राप्ते कर्मणि सम्बन्धद्वयकरणात् वाक्यं भिद्येत । वा ३।१।१२।२१ पृ. ७३४. * प्राप्तोद्देशेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेद । संकर्ष. ३।१।१६. * यानि एकक्रियाविशेषणानि भवन्ति, तानि तया विधीयमानया (क्रियया) अर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने, तया क्रियया सम्बन्धरहितया आक्षिप्यमाणे वाक्यं विधायकस्य आवृत्तिरेष्टव्या इति वाक्यभेद. प्रसज्येत । वा.२।२।१२।२७ पृ ५५६, * यत्र सकृदुच्चरिते द्वे विवक्षिताविवक्षितत्वे भवतः तत्र वाक्यभेद. । ६।२।२।४ पृ १३९२, * यदा त्वि भावनारूढ विधिरत्र भावनार्थत्वेनैव गृह्यते तदा अर्थाद्विशेषणविधौ भवि अवाक्यभेदं वक्ष्यामः । यदा तु तद्विशेषणार्थमित्यवधार्यते तदा भावनायाः सत्यपि प्रोषितत्वात् अनेकविशेषणयोगे सति यदर्थं विधित्सया सीयते तस्यैवैकस्य विधानं नैतरस्य उद्देशस्यापि इति वाक्यभेदो भविष्यति । २।२।५।१६ पृ ५०३, * यदि तत्र द्वावपि साकल्यविशेषसम्बन्धौ इत्येव वाक्यं कुर्यात् ततो वाक्यं भिद्येत । ३।१।८।२२ पृ. ७९९ * यदि फलं दध्ना कुर्यादिति ब्रूयात् न दध्ना होमम् इति । अथ दध्ना होमं भावयेदिति ब्रूयात् न फलमिति । उभयवचने भिद्येत वाक्यम् । मा. २।२।१।२।२६ पृ.५४६. * युगपदुपलक्षणविधिकल्पने वाक्यभेद । वा. २।१।३।६ पृ. ४८७. * वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते । भा. ९।३।१२।३४. * वाक्यपरिसमाप्तिलक्षणः तावत् एको वाक्यभेदः । वा. ३।१।७।१४ पृ. ७२०. * वारवन्तीयस्य आश्रयान्यविधिनिमित्त वाक्यभेदवत् आश्रयस्य अग्निष्टुद्विशेषणविधिनिमित्तोऽपि वाक्यभेदः स्यात् । तु पृ. ८५७, * विधिप्रत्ययावृत्तिलक्षणः वाक्यभेदः । पृ. ८४५. * विधेयभेदादपि वाक्यभेदो भवति । मीन्या. * विभक्तिवैरूप्यादिनिमित्तः अपरः वाक्यभेद. । वा. ३।१।७।१४ पृ. ७२१. * विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेदो यथा– 'यदाग्नेयोऽष्टाकपालः अमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । अत्र विवक्षितोऽर्थः द्रव्यदेवताकालद्वयविशिष्टयागविधि तदपेक्षया न्यूनोऽर्थ. विवक्षावशविहितयो यागयो. द्रव्यदेवतयोरेव विधीयते न यागविधिः इति । तदभ्युपगमे वाक्यभेद इति । बाल. पृ. ३. * विशिष्टानुवादो न वाक्यं भिनत्ति । वा. २।२।१२।२७ पृ ५५७. * विशिष्टानुवादलक्षणो वाक्यभेद । सु पृ. ८३६. * विशिष्टार्थभेदेन वाक्यभेदात् यजुर्मन्त्रभेद', यथा 'इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' । 'आयुर्यज्ञेन कल्पताम् प्राणो यज्ञेन कल्पताम्' इत्यादौ च । [illegible] २।१।१५. * विशिष्टभावनाविधानस्य एकत्वे न वाक्यभेदो भवति । सु पृ ८६८ * विशिष्टविधाने वाक्यभेदो न भवति द्वाभ्यां तु विशेषणाभ्यां विशिष्टमेकमाख्यातं विधास्यते तेन भविष्यति वाक्यभेद. । भा. २।३।३।४. * विशेषणवैशिष्ट्याद्वे विशेष्ये च यदि विधि आपाद. तर्हि वाक्यभेदः । सोम.७।३।१. * विरुद्धमर्थद्वयम्, विभागे च निराकाङ्क्षता, तेन वाक्यभेद । भा ३।२।१।१।२५. * वैरूप्यनिमित्तो वाक्यभेदः 'न. सौमं चमति, यस्य सोम उच्छिष्येत् भवति' इति । वा. ३।८।१३।२५, * वैरूप्यलक्षणः वाक्यभेद । ३।२।१०।२१, * 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ॥' १।४।३।३ पृ ३२९. * सकृदुच्चरितस्य विधायकस्य अनेकार्थविधायकत्वानभ्युपगमात् आवृत्तिलक्षणवाक्यभेदपरिहारेऽपि एकस्य अनेकार्थे तात्पर्यात् गौरवलक्षणवाक्यभेद· अपरिहार्य. । सु. पृ. ९३१, * सकृदुच्चरितस्य विधायकस्य

विध्यनुवादवैरूप्यलक्षणवाक्यभेदापत्तिः । पृ. ९२८. * समासोपात्तविशिष्टार्थविधौ नास्ति वाक्यभेदः । बाल. पृ. १०२. * सूत्रे वाक्यभेदः यथा— ' अश्रयश्च स्यकालत्वाद्, देयधर्मापयातनम् । व्याख्यात वाक्यभेदेन ॥ ' श्लोवा. १।१।५७ । ' ते सर्वार्था प्रयुक्तत्वादसरश्च स्वकालत्वात् ' ( ३।७।१९।२९ ) इत्येकं सूत्र वाक्यभेदमाश्रित्य अधिकरणान्तर व्याख्यातम् ।

तथा ' अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ' ( ६।५।१०।४१ ) ' शृतोपदेशाच्च ' ( ६।५।१०।४२ ) इति सूत्रद्वयेन अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्मा कर्तव्याः इत्युक्त्वा ' अपनये वाऽर्थान्तरे विधानात् चरुपयोवत् ' ( ६।५।११।४३ ) ' व्यूढणार्था शृतश्रुतिः ' ( ६।५।११।४४ ) इति सूत्रद्वयेन प्रदेयधर्माणा अपयातनमुक्तम् । तदिदं पूर्वयोः सूत्रयोः अनयोश्च वाक्यैकभावेन ऐकाधिकरण्यात् अभ्युदितेष्ट्यामेव प्रदेयधर्मापयातनमुच्यते इति प्रतिभासमानमपि ततो भित्त्वा अधिकरणान्तरं पशुकामेष्टिविषयं व्याख्यातम् । रत्नाकरः.

* वाक्यभेदात् लक्षणा वरम् । लक्षणायाः पदवोषत्वात् वाक्यभेदस्य च वाक्यदोषत्वात् । मीन्या. * वाक्यभेदात् व्यवहितकल्पनाश्रयणं वरम् । वा. ३।६।७।१२ पृ. १०४९.

### ऊ वाक्यभेदाधिकरणम् ॥

समेषु वाक्यभेदः स्यात् । २।१।१५।४५ ॥

भाष्यम्— ' इषे त्वा, ऊर्जे त्वा ' इति । तथा ' आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम् ' इति । अत्र सदेहः किमेवमादिषु भिन्न वाक्य उत एकमिति । एकमिति ब्रूमः । इषे त्वा इत्येवमुक्ते न किंचिद्दृष्टं प्रयोजनम्, तथा ऊर्जे त्वा इत्यपि च । वचनसामर्थ्याद् दृष्टम् । तदुभाभ्यामेकं कल्पयितुं न्याय्यम् । एवं अल्पीयस्यदृष्टानुमानकल्पना भविष्यति । तस्मादेकं वाक्यम् । एवं प्राप्ते, ब्रूमः । समेषु वाक्यभेदः स्यात् । समेषु परस्परानाकाङ्क्षेषु वाक्यं भिद्यते । ' इषे त्वा ' इत्यनेन एकोऽर्थः क्रियते, ' ऊर्जे त्वा ' इत्यनेन अपरः । ननु इदानीमेव उक्तं नात्र दृष्टोऽर्थ इति । यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते ' इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि ' इति । तथा ' आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम् ' इत्यायुःकल्प्तिरन्या प्राणक्लृप्तिः । ननु सामान्यमात्रमिदं तत्र विशेषणभेदात् भेदमर्हतीति । यथा ' अग्नये जुष्टं निर्वपामि ' इति निर्वाप एकस्तस्य विशेषाः ' सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ' इति, न तेषां भेदात् निर्वापस्य भेद इष्यते । एवमिहापि क्लृप्तिर्नाम एकोऽर्थः, नासौ आयुरादिभिर्विशेषैः भिन्नो भविष्यतीति । उच्यते । इह 'क्लृप्तीर्वाचयति' इति बह्व्यः क्लृप्तयः श्रूयन्ते । ताश्च वक्तव्याः । तत्रैका आयुःक्लृप्तिः ' आयुर्यज्ञेन कल्पताम्' इत्येष मन्त्रः शक्नोति वदितुम् । 'प्राणो यज्ञेन कल्पताम्' इत्ययमपि प्राणक्लृप्तिपरम् । एवं तु सर्वे क्लृप्तिविशेषवचनाः । तत्र दृष्टं प्रयोजनम् । तस्मात्, अनेकार्थत्वात्, तत्रापि वाक्यभेद इति । ननु सामान्यवचनादेकत्वं यथा विभागे । नैतदेवम् । विभागे दृष्टार्थं सामान्यमिह न । अपि च क्लृप्तीर्वाचयति इति विहितम्, ' आयुर्यज्ञेन कल्पताम् ' इति चाऽऽयुःक्लृप्त्यभिधानमभिनिर्वर्तते प्रत्यक्षम्, ' प्राणो यज्ञेन कल्पताम् ' इति न प्राणक्लृप्तिः । तस्मात् वाक्यभेदः ।

वा— येषां अदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावेन वचनाद्विनियोगः, तेषां प्रागदृष्टार्थमन्त्रावधेरेकमन्त्रत्वं युक्तम् । तथाहि 'कल्प्यस्तेषामदृष्टोऽर्थः स चाल्पः स्यात्प्रमाणवान् । कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्नियोजिताः ॥' यदा हि बहुदृष्टकल्पना नियमाविधिः इत्येकमदृष्टं सर्वेभ्य कल्पितं भवति तदा प्रत्येकं तत्साधनशक्त्यभावात् विभज्यमानसाकाङ्क्षत्वमस्तीत्येकवाक्यता । कथ पुनरासेव पक्षे प्रतीकभेदेन विनियोगः ' इषे त्वेति शाखां छिनत्ति ' ' ऊर्जे त्वेत्यनुमार्ष्टि ' इत्येवमादि । कथं च ' क्लृप्तीर्वाचयति ' इति बहुत्वनिर्देशः । तदुच्यते ' एकोऽपि बहुभिर्मन्त्र' प्रतीकैर्विनियुज्यते । पुनः पुनः प्रयोगाच्च क्लृप्तीरित्यभिधीयते ॥ ' आदिमध्यावसानग्रहणेन एकोऽपि मन्त्रस्तत्र विनियुज्यमानोऽपि न पीड्यते । यावद्विनियोगं हि सकलं आम्नायते, तत्कृतस्य अप्रयोजन-

तत्प्रकाशनेन च भिन्ना एव मन्त्रा मन्त्रा दृष्टार्था भवन्तीति वाक्यभेदः ।

शा— 'अदृष्टार्थत्वमेतेषां अनुष्ठेयाप्रकाशनात् । नैवं यत्र साकाङ्क्षा. सर्वं इत्येकवाक्यता ॥' अदृष्टं हि कल्प्यमान एकमेव युक्तं तावतैव उपपत्तेः । अतः सर्वे तावत् एकार्थाः । तत्र परेण सह कल्पितमिति सभूयकारित्वात् निमन्त्रमाणाः साकाङ्क्षा भवन्ति इत्येकवाक्यता । निश्चिते च मन्त्रैकत्वे यद्यपि प्रतीकभेदेन अनेकत्र विनियोगः 'इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति, तथापि वाक्यविनियोग एकत्र आश्रीयते । (इति प्राप्ते,) उच्यते— 'यद्यप्येषामदृष्टोऽर्थस्तथापि न तदेकता । स्पष्टो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः ॥ अन्योन्यानादरेणैव प्रार्थ्यन्ते प्रयोजनम् । यथापेक्षमतस्तेषां भिन्नादृष्टप्रकल्पनम् ॥ यथा विश्वजिदादीनां भेदेन फलकल्पना । यथा च समिधादीनामपूर्वं भिन्नमिष्यते ॥ तद्वदत्र न चाभिप्रायदृष्टार्थत्वागमः । शाखाच्छेदप्रकाशेन दृष्टार्था हि विभेदमी ॥' 'इषे त्वेति छिनत्ति' इति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते । क्रियानिर्वर्तकं च करणं भवति । न च मन्त्राणां क्रियानिर्वर्तकत्वम्, अन्यतः प्रमाणात्] तेन विनियोगात् एषां प्रकाशनार्थत्वम् । तत्र यावता विना नोदितस्य प्रकाशनं न सम्भवति तत् अध्याहर्तव्यं छिनद्मीत्यादि । तत्र एकेन छेदनं प्रकाश्यते, अन्येन अनुमार्जनं इति अर्थभेदात् मन्त्रभेदः । तथा 'आयुर्यज्ञेन कल्पताम्' इत्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् 'कॢप्तीर्वाचयति' इति च कॢप्तिबहुत्वस्य चोदितत्वात् तत्तत्परत्वे आयुरादिविशिष्टकॢप्तिभेदप्रकाशनपरत्वात् अर्थभेदेन मन्त्रभेदः ।

सोम— पूर्ववत् इह यजुर्भेदस्याभावात् न अत्र तद्भेद इति प्रत्यवस्थानात् सङ्गतिः बोध्या । सूत्रार्थस्तु सर्वेषु परस्परनिरपेक्षतया तुल्येषु यजुर्भेदः स्यादिति ।

वि— 'इषेत्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे । असत्त्वांसाकाङ्क्षत्वादेकवाक्यत्ववर्जनात् ॥, छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे । अध्याहृते साकाङ्क्षत्वाभावभेदोऽर्थभेदतः ॥'

भाट्ट— यत्र तु नोक्तविध विभज्यमानसाकाङ्क्षत्व यथा 'इषे त्वा ऊर्जे त्वा' इत्यनयोः, यथा वा 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम्' इत्यादौ तत्र सत्यपि एकत्वे 'प्राणो वा' इत्यादिवत् मन्त्रभेदः । किन्तु यत्र विनियोगानुसारेणार्थभेदः एव प्रमाणान्तात् । तदा मन्त्रैकत्वे प्रमाणाभाव एव । अत्र हि 'इषे त्वेति शाखां छिनत्ति' 'ऊर्जे त्वेत्यनुमार्ष्टि' इति विनियोगभेदात् इषे त्वेति छिनद्मि इति क्रियापदाध्याहारेण भिन्नमेव मुख्यार्थत्वोऽस्यम् । एवं 'ऊर्जे त्वा उन्मार्ज्मि' इति । एवं 'कॢप्तीर्वाचयति' इति बहुवचनात् कॢप्तिभेदावगमेन अर्थभेदः । अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ।

मण्डन— 'भिन्नं यजुः स्याद्विनियोगभेदात् ।'

शंकर— 'यजुर्भेद इषेत्वादौ ।'

* वाक्यभेदापत्तिर्न, विशिष्टविध्यन्यथानुपपत्तिकल्पितैः विधिभिः अनेकार्थविधानेऽपि प्राधान्येन विधेयस्य प्रयोजनत्वात् तस्य चात्र एकत्वात् । सु पृ. ८६८. * वाक्यभेदापत्तिः पौरुषेये वाक्ये अदोषः इत्यभ्युपगमः । ऋजु. पृ. ७०.

* वाक्यभेदापत्तिलक्षणः न्यायः अविवक्षासाधकः । सु पृ. १०१५.

* वाक्यभेददोषः. अविवक्षा सतो भूतार्थस्य कल्पने यथा— 'वषट्कर्तुः प्रथमभक्षः' इति । अत्र प्राथम्यमात्रविधौ भक्षानुवादात् प्रथमस्य च विधानात् एकपदे वाक्यभेदप्रसङ्गात् । बाल. पृ. ४.

* वाक्यभेदपरिहारार्थं दुर्बलपेक्षाऽपि उपपन्ना । सु पृ ११३०.

* वाक्यवाक्यार्थयोः सम्बन्धः औत्पत्तिकः । ऋजु पृ १०३.

* वाक्यविनियुक्तेषु प्रोक्षणादिष्वनियम्योपकारेषु अपूर्वप्रयुक्तत्वम् । ९।१।२।२-३.

* वाक्यविनियोगः संप्रति प्रस्तूयते । वा. ३।३।१।१.

कल्पना यावच्छाला समाख्या बाध्यते । वा. ३।३।७।१८ पृ. ८३१. ● वाक्यसमाख्ययोर्विरोधे (दोषानेकत्वे) मध्यानुरागगतचमसकर्मिणादेः लिङ्गाद् ग्रहणादौ विनियोगे अजगते तदेकवाक्यतापन्नदोषपदाना समाख्यया मध्याह्नस्वश्रवतो वाक्यात् ग्रहणाद्यत्वम् । दोषानेकत्वे तु प्रैषानुवचने समाख्यया होतृप्राप्ते, वाक्येन मैत्रावरुणविधानम् । कौ. ३।३।७।१४ पृ. २६१–६२.

● वाक्यसमासौ भिन्नार्थौ । वाक्येन (राजपुरुष.) पुलिङ्गैकत्वविशिष्टस्य पुरुषः प्रतीयते । समासे तु न ज्ञायते किं द्वयोः पुंसो, उत बहूनाम्, उत स्त्रियाः, उत नपुंसकस्येति । तस्मात् वाक्यसमासौ नैकार्थौ । टुप्. १०।८।११४ पृ. २०६०.

● 'सामर्थ्यं धर्मणक्षादेकं लिङ्ग मिलक्षितम् । अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात् ॥' वा. ३।४।१।११ पृ. ९६५. ● वाक्यसामर्थ्यात् नानार्थमेव छेदनं न उपबेपार्थम् । टुप्. ४।२।३।८.

● वाक्यस्थं उपसर्जनं 'राज्ञः पुरुषः' इतिवत् विशेषणः सम्बध्यमानं दृष्टम् । समासस्थं तु न सम्बध्यते । वा. ३।८।४।१३ पृ. ११८.

● वाक्यस्फोटः । अखण्डमेव वाक्यम्, न सावयवम् । न पदसमुदायस्य वाक्यत्वम्, किन्तु अवयविरूपम् । तस्यैव विशिष्टार्थे शक्तिः स एव वाक्यस्फोटः । इति वैयाकरणाः । तत्र इति मीमांसकाः । मणि. पृ १७१. ● वाक्यस्फोटः 'वाक्यार्थे शक्तिः वाक्यस्य' इति विल्डौ (मीको. पृ. ३८६४) द्रष्टव्यः ।

● वाग् यन्तव्या । 'वैष्णवीमनूच्य वाग् यन्तव्या, सारस्वतीमनूच्य वाग् यन्तव्या, बार्हस्पत्यमनूच्य वाग् यन्तव्या' इति । भा. १२।८।२।१

✠ 'वाचे हविष्कृत्' इति वाचो हविष्कृत्त्वं अर्थवादः ॥

'हविष्कृदेहि' इति मन्त्रे हविष्कृत्पदेना नुसन्धाते । हविरवगणमात्रवर्जत्वात् मन्त्रस्तु परेण प्रयोक्तः । पैषेषु न पदविकारात् । वाग्देव्येव वा हविष्कृत् । 'वाग्वै हविष्कृत्तामेव तदाह्वयति' इति ब्राह्मणशेषात् । न च एतदाते आग्नेयवाचा यानानामविशेषेन दैवी कर्मोपत्तन इति वाच्यम् । पशुपुरोडाशे 'हविष्कृता वाचं विसृज पशुं विशासित' इति अवयेन औषधमात्रहविःकर्तृत्वावगतेः । आज्यनिर्वापस्य पूर्वं कृतत्वेन तदर्थमाहूताया वाग्देव्याः पुनराह्वानाभावेन वाग्विसर्गे हविष्कृत्वैष कालिकत्वविध्यनुपपत्तेः । न च प्राप्तान्त्याधिकरणन्यायेन प्रैषावृत्तिः । एतत्पक्षे प्रैषस्यादृष्टार्थत्वेन प्रधानानामिव प्रसङ्गोपपत्तेः । तस्माद्दोषवद्धविष्कृद्देवत्वम् । इति प्राप्ते, 'पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन् पितृन् शाश्वद्गया वहन्ति' इति वाक्यशेषात् हव्यार्थत्वात् वाचो हविष्कृत्त्वमर्थवादमात्रम् । संकर्ष. ११२।११.

● वाचः एकार्थत्वमिलात् युगपत्प्रयत्य. । भा. ३।३।७।१८ पृ. ८२३ । क्रमवर्तित्वात् वाचः युगपदशक्तेः । वा. ● वाचो विसर्गो हविष्कृद्ग्रहण कालज्ञापनार्थमित्युक्तम् (३।२।३) । भा. ११।३।७।१५. ● वाचो मने द्वे शमनी अनूके । याज्ञ. पृ. ७२.

● वाङ्नियमः ज्योतिष्टोमादौ । स सर्वाङ्गः, तेन जिह्वाचापल्ये निवारिते अति मनस एकाग्राय सर्वकर्मसु योग्यत्वम् । वि. ३।१।१८, ● वाङ्नियमः दर्शपूर्णमासयोः हविष्कृदाह्वानप्राचीनापूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः । ९।१।७, ● वाङ्नियमः नाङ्गार्थः किन्तु कर्तृसंस्कारार्थः । ११।३।८. ● वाङ्नियमस्य प्रणीताप्राचीनस्य हविष्कृदाह्वाने त्यागः । वाङ्नियमस्य च मध्यकालीनाह्वानापूर्वमेव प्रयोजकं न परमापूर्वम् । शा. ९।१।६, वि. ९।१।७.

✠ वाङ्नियमन्यायः । साहस्री. ८६०.

● 'व्रीहीनवहन्ति' इत्यत्र, परमापूर्वस्य व्रीहिसाधनत्वमेव प्रदेयपदार्थसम्बन्धेन लभ्यते । अस्ति च आग्नेयादे तत्त्वस्यापि साम्यता । अत एव न वाङ्नियमन्यायोऽपि । भाट्ट. ३।१।४, ● 'आग्नेय्या आग्नीध्रमुपतिष्ठते'– समन्त्राति च प्रकृतानामपि आग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमपूर्वसम्बन्धेऽपि कार्यान्तरद्वारा स. । आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावत् अपूर्वसम्बन्धावगमः । ३।२।८. ● 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्र

मान वाचयन्ति ) शिष्यार्थोऽपि यज्ञस्यैवाधिकारात् तस्य च शिष्यानर्हत्वेन तद्विपक्षसामर्थ्याभावात् लिङ्गात् उच्चारणसमर्थस्मरणवाचनारम्भप्रयुक्त्यर्थः । सु पृ. ६२.

* वाचनिक ऊहः यथा 'मरुद्भ्यहन्ति' इति । बाल. पृ. १२६, * वाचनिक विकल्पः अष्टविध.– १ जात्योः २ द्रव्ययोः ३ गुणयोः ४ क्रिययोः ५ जातितद्भावयोः ६ द्रव्यतद्भावयोः ७ गुणतद्भावयोः ८ क्रियातद्भावयोश्चेति । एते पुन. क्रत्वर्थाः पुरुषार्थाश्च । पुनश्च पुरुषार्थ. वाचनिको विकल्पः एकादशविध –१ जातिद्रव्ययोः २ जातिगुणयोः ३ जातिक्रिययोः ४ द्रव्यगुणयोः ५ द्रव्यक्रिययोः ६ गुणक्रिययोः ७ जातिद्रव्यगुणानाम् ८ जातिद्रव्यक्रियाणाम् ९ जातिगुणक्रियाणाम् १० द्रव्यगुणक्रियाणाम् ११ जातिद्रव्यगुणक्रियाचतुष्टयविषय एकः इति । पृ. १५२–१५३, * वाचनिक व्यवस्थितविकल्प. सप्तधा– देशत , कालत., कर्तृतः, धर्मतः, फलतः, निमित्तत., अधिकारिश्चेति । पृ. १५९–१६१, * वाचनिकः समुच्चयः क्रत्वर्थः पुरुषार्थश्च । क्रत्वर्थः पञ्चदशभेदाश्च । पृ. १७०–१७३, * वाचनिकाः विकल्पभेदाः अष्टादश । पृ. १५८, * वाचनिकाः समुच्चयभेदाः न्यायसम्मतम् क्रत्वर्था. पञ्चदश, पुरुषार्थाश्च पञ्चदशैवेव निश्चत् । अथ क्रत्वर्थाः उच्यन्ते (१) जात्योः– 'मेषाश्वश्च' इति ज्योतिष्टोमे दक्षिणासु । (२) द्रव्ययोः– 'आग्नेय गवमग्निष्टोम आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्'। अत्र तत्तद्देवताविशिष्टपशुद्रव्याणां समुच्चयो विधीयते । (३) गुणयोः– महापुराणे 'मृष्टस्निग्धानि यानि स्युरीषत् कट्वम्लकानि च । स्वादूनि देवभोग्यानि तानि श्राद्धे नियोजयेत् ॥' (४) क्रिययोः– 'गमन उभे कुर्यात्' 'गोसव उभे कुर्यात्' इति । (५) जातिद्रव्ययोः– देवलः 'नानोज्ञ मधुसंस्कार नैकव्यञ्जनमक्षरत् । चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेत् ॥' अत्र अन्नशब्दोक्ता जातिः, चोष्यादिशब्दोक्तं च द्रव्यम् । (६) जातिगुणयोः– 'अथ पिण्डावशिष्टान्नं भोजयेत् प्रयतो द्विजान् । भोजनैः सलिलैः स्नेहैर्भक्ष्यपूपविशेषितैः ॥' इति देवलः । अत्र स्नेहैरिति गुण तिलजातिश्च सहादेशोपस्थापितशब्देन चशब्दसमानार्थेन प्राप्ते श्राद्धे समुच्चित्य विधीयते । (७) जातिक्रिययोः– शङ्खलिखितौ 'तदस्मिंस्तैलमांसै. शाकैः पूपैः कृशरपायसापूपैर्विमर्दैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टमन्न दद्यात्' अत्र पयसा घृतं पायसं इति भक्षार्थतद्विहितोपात्ता श्रपणक्रिया पयआदिजातिश्च प्राप्ते श्राद्धे चशब्देन समुच्चित्य विधीयते । (८) द्रव्यगुणयोः— ब्रह्मपुराणे 'पूरिका च रसाला च गोक्षीरं च नियोजयेत् । यानि चाभ्यवहार्याणि स्वादुस्निग्धानि यो द्विजाः ॥ ईषदुष्णान्यन्नेव देयानि श्राद्धकर्मणि ॥' इति । अत्र रसालाशब्देन द्रव्य स्निग्धोष्णादिगुणश्च समुच्चित्य चशब्देन विधीयते । (९) द्रव्यक्रिययोः– पूर्वोक्ते शङ्खलिखितवाक्ये पायसशब्दगततद्धितोक्तश्रपणक्रिया भक्षशब्दोक्त द्रव्यं च समुच्चित्य विहितम् । (१०) गुणक्रिययोः– सौरपुराणे 'विविध पायस दद्यात् भक्ष्याणि विविधानि च । लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना ॥' इति । अत्र पायसशब्दगततद्धितोक्ता श्रपणक्रिया उष्णगुणश्च । एवं क्रत्वर्थसाध्यादिविषया वाचनिकसमुच्चयभेदा दश उक्ताः । एवमेव दश पुरुषार्थसाध्यादिविषया वाचनिकसमुच्चयभेदा' यदा स्यु. यदि उदाहरणानि सम्भवेयु. । न तु तानि सम्भवन्ति । शेषोदाहरणानि तु अन्वेष्याणि । एवं वाचनिकसमुच्चयभेदा. ३० उक्ता. । पृ. १७०–१७३. * वाचनिकस्य सर्वत्र कार्यशेषभावः । भा. १०।६।१९।३४, * वाचनिके नियमाणे न दोषः । १२।४।७।२१.

* वाचनिकप्रयाजादिविनियोगस्थले न स्याद्वाक्यादा (चयने) । माहू. ४।१।७.

* वाचनिकमक्षविपर्यकं अधिकरण पञ्चमं षष्ठं नवम दशम च (३।५।५–६, ९–१०) । के.

* वाचनिकविकल्पे अष्टौ दोषा न सन्ति । बाल पृ. १६१

* वाचनिकव्यवस्थाविधि सप्तविध – देशतः, कालत., कर्तृत, सम्प्रदानत., कर्मत, फलतः, निमित्ततश्चेति । बाल. पृ. १८.

घोषेण न बर्हिषः तन्मन्त्रस्य च बाधः इति **पूर्वपक्षः** । बर्हिषस्तन्मन्त्रस्य च भाव एव परंतु घोषेणकोभयोर्बाधः । घोषस्तु रथस्यैव दुन्दुभेरेव वा, नान्यस्य कस्यचित् घोष इति सिद्धान्तः । १०।४।२ वर्णक २, ● वाजपेये निरुक्तिनिरूपः सप्तदशशरावश्चरुः श्रुतः । तत्र निर्वापे 'चतुरो मुष्टीन् निर्वपति' इति प्राकृती श्रुतिः तदनुरूपं च अस्ति इति एकः पक्षः । उभयं बाध्यं इति द्वितीयः । अन्यतराबाधः इति तृतीयः । धर्मस्य शराबस्य एव लोपः इति चतुर्थः । मुष्टिरेव चरमभूतो बाध्यः, प्रथमभूता मुष्टयः न बाध्याः, चतुर्भिः कुडवादिभिः शरावपूरणं कर्तव्यं इति सिद्धान्तः । ( सप्तदशत्वेन चतुष्ट्वस्य अपवादेन च मुष्टेर्बाध । नागवेषेण निर्वापः, निर्वापमन्त्रश्च तावत्कृत्वः आवर्तनीय , सप्तदशकृत्वः इति पेयस्थानन्दस्य भाति ) । १०।२।२८, ● वाजपेये 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' । ५।२।१ ● वाजपेये श्रुतेन यजुर्युक्तरथेन आज्यधौराम्यादिभागान्तरस्य समुच्चयः । १०।३।२१।७४–७५. मीको. पृ. ३१८५ 'यजुर्युक्ताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाजपेये 'सप्तदश प्राजापत्यान् पशून् आलभते' इत्यत्र किं सप्तदश एतानि कर्माणि, अथ सप्तदशपशुगुणकं एकं कर्म इति संशये सप्तदश यागा एते इति सिद्धान्तः । भा २।२।७।२१. ● वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' । एतेन प्रकृतानामाग्नेयादिकतुपशूनां बाधः इति पक्षः, समुच्चयः इति सिद्धान्तः । वि. १०।८।४, ● वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' । अत्र पर्यग्निकरणानन्तरं उत्सर्गः पशूनाम् ( कर्मतोपलिप्सा इत्यर्थः ) । ब्रह्मसामकाले च कर्मान्तरं विधीयते इति पक्षः । पर्यग्निकरणानन्तरं उत्सर्गो नाम कर्मविरामः, ब्रह्मसामकाले तु तेषामेव पशूनामनुष्ठानमिति सिद्धान्तः । ११।२।१२ ● वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' । तेषु पशुषु नैन्द्रमासा. प्रोक्षणादयो धर्माः । तत्र प्रथमः पदार्थः यतः तुल्यमारभ्यः । द्वितीयादिषु भवति संशय । किं तत एव द्वितीयोऽपि पदार्थ आरभ्यत. उत द्वितीयादिषु अनियम इति । निर्णयस्तु यत पूर्वं आरब्धः तत एव द्वितीयादयोऽपि पदार्था आरब्धव्या इति । भा. ५।१।७।८–१२. मीको पृ. २८६८ 'प्रावृत्तिकक्रमन्याय' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाजपेये 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति श्रूयते । इयं सप्तदशारत्निता वाजपेयाङ्गभूतपशोरङ्गे यूपे निविशते न तु क्रत्वंशाने धोडशीति । भा ३।१।९।१८. ● वाजपेये सप्तदशारत्नित्वं सप्तदशत्वात् तदङ्गभूतयूपद्वारा आनर्थक्यतदन्यायेन वाजपेयाङ्गतामश्नुते । 'वाजपेयस्य' इति षष्ठ्या अङ्गद्वाराऽपि उपकारकत्वेऽपि सम्भवात् । कु. ३।२।१२।२७. ● वाजपेये सप्तदशप्राजापत्यपशूनां एकैव देवता प्रजापतिः । तथैव एकादशिनेषु पशुषु देवताभेदः । तथापि समवत कुम्भ्यादीनां तन्त्रम् । वि ११।४।९, ● वाजपेये सप्तदशप्राजापत्यपशुषु एकस्मिन् पशौ उपाकरणनियोजनादीन् सर्वान् संस्कारानसुष्ठाय द्वितीये पशौ सर्वे कर्तव्याः, एवं तृतीये इत्यादि । सोऽयं काण्डानुसमयः इति पूर्वः पक्षः । पदार्थानुसमय एव कर्तव्य इति सिद्धान्तः । पङ्क्तिपरिवेषणवत् पदार्थानुसमयः । तथा च एक संस्कारः सर्वेषु विधाय द्वितीयः संस्कारः सर्वेषु, एवं तृतीयः सर्वेषु कर्तव्य इत्यादि । 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति साहित्यश्रवणात् । वि. ५।२।१, वाजपेये सप्तदशप्राजापत्यपशुकुम्भ्याः, हृदयशूलस्य, वपाश्रपण्याश्च भेदः स्यादिति पक्षः । पशूनां बहुत्वेऽपि मौद्गकुम्भ्यादेर्ग्रहणेन प्रधानादिश्रपणस्य सम्भवात् तन्त्रं इति सिद्धान्त । ११।४।८, ● वाजपेये सप्तदशप्राजापत्यपशुप्रचार आर्भवपवमानकाले इति एकः पक्षः । दक्षिणा वैश्वदेवग्रहान्तानां सोमानामुपरि इति द्वितीयः पक्ष । प्रकृतसोमानामुपरिष्टात् नवकोपयाम्नः उपरिष्टात् इति तृतीयः पक्ष । प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् प्राजापत्यपशुप्रचारः इति सिद्धान्तः । ११।३।१५, ● वाजपेये सप्तदशरथदाने कस्य को रथ. इति चिन्तायां यजमानेच्छैव नियामिका । १०।३।२०. ● वाजपेये सप्तदशशरावश्चरुः श्रुतः । तत्र निर्वापे मुष्टे-

र्षध॰, चतुःसङ्ख्यायास्तु न बाध । तथा च चतुर्भिः कुक्ष्यादिभि. शरावं पूरयित्वा सप्तदशशरावात्मको निर्वापः कार्यः । वि. १०।२।२८ । यस्तवस्तु उपात्तपूरणपर्यन्तं मुष्टिचतुष्टयावृत्तिः कर्तव्या, किञ्च यावद्भिर्मुष्टिभिः शरावपूरणं तावन्तो मुष्टयो ग्राह्याः । भाट्ट (मुष्टि. शरावेण नाप्यते, चतुष्ट्वं च सप्तदशेन बाध्यते, शरावेणैव सप्तदशकृत्वो निर्वापः निर्वापमन्त्रावृत्तिः सप्तदशवार इति केवलानन्दो मन्यते, अन्यथा शरावो व्यर्थ एव स्यात् ) । ● वाजपेये सप्तदशशरावे चरौ मुष्टिलोपेन चतुःसङ्ख्यानुग्रहः कर्तव्यः । १०।२।२८।६५–६८. ' शरावमुष्टिन्याय. ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाजपेये सप्तदशसङ्ख्याका प्राजापत्यपशवो या यागाः तत्र भेदेनानुष्ठान इति पक्षः । पाक प्रदान च सहैव कर्तव्यं इति तथा( सा )- होमोऽपि सहैव, तथा च कर्म इति सिद्धान्तः । वि. ११।२।५.

■ वाजपेये सर्वसोमोपरि प्राजापत्याङ्गप्रचारः ॥

**उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः । ११।३।१५। ४८ ॥**

भाष्यम्— वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते ' उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति ' इति । तत्र विचार्यते किमारम्भकाले प्रचरितव्यम्, उत अल्पस्य सोमानामुपरिष्टात्, उत विनाशस्थाने, अथवा सर्वसोमानामुपरिष्टात् इति । किं प्राप्तम् ? आरम्भकाले इति । कुतः ? प्रकृतौ आरम्भकाले प्रचारो दृष्टः । प्रकृतिवत् इतरत् तत्रैव कर्तव्यः । एवं च अङ्गविपर्यासो न कृतो भवति । यदि सर्वसोमानामुपरिष्टात् प्रचारः क्रियेत, ततः ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति ' प्रहृत्य परिधीन् हारियोजनम् ' इति एतदुभयमपि विपर्यस्येत, नाग्निमारुतादूर्ध्वं अनुयाजैश्चरेत्, हुत्वा च हारियोजनं परिधयः प्रह्रियेरन् । सोऽयं अङ्गानां विपर्यासो विना वचनेन क्रियेत । अथ तु आरम्भकाले प्रचारः, ततो नैव दोषो भवति । एवं प्राप्ते, उच्यते । ' उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति ' इत्युक्ते सर्वसोमानामुपरिष्टात् प्रचर्येत । कुतः ? अविशेषात् । सोमानां इत्युक्ते सर्वसोमानां ( इति ) अविशेषवचनात् प्रतीयते । यत्तु आरम्भकालः प्रकृतितः प्राप्यते इति, अवाच्यो हि प्रकृतिकालः, चोदकेनैव प्राप्तः । तदर्थो हि विधिः क्रियमाणः अनर्थकः स्यात् । तस्मात् सर्वसोमानामुपरिष्टात् प्रचारः ।

टुप्— यदि आरम्भकाले प्रचारः क्रियेत अप्रवृत्तिविशेषकरं वाक्यं स्यात् । ननु ( चोदकप्राप्तत्वादेव ' तीर्थे वै प्रातःसवनं, यत् प्रातःसवने पशून् आलभन्ते तीर्थे एवैनानालभते ' इति, ' तान् पर्यग्निकृतानुत्सृजन्ति यज्ञस्याव्याप्त्यै ' इति च ) वचनेन प्रातःसवने माध्यंदिने वा कालान्तरेण कर्तव्याः प्राप्नुवन्ति । तेन सर्वसन्निकर्षकाले अङ्गप्रचारनियमार्थं अर्थवद् वचनम् । ( तस्मिंश्च सति यावत्सोमाना पूर्वयोः सवनयोः निष्पत्तिः न भविष्यति । अङ्गप्रचारस्तु आरम्भकाले ) उच्यते । प्रातःसवने माध्यंदिने वा सवने ये पशवः ( मन्त्रोक्ते ) वाक्ये ते संस्कारवाक्ये, आलभ्यमानत्वात् । अङ्गप्रचारस्तु आरम्भकाल एव, ( चोदकप्राप्ते कर्म ए. ) नान्यस्मिन् ( काले ) । तस्मात् ( वचनार्थवत्त्वात्, ननु अल्पमतः सोमानामुपरि आयातकाले किमिति न भवति इत्यत आह– ) अविशेषात् सर्वसोमानामूर्ध्वम् ।

**अङ्गविपर्यासो विना वचनादिति चेत् । ४९ ॥**

भाष्यम्— अथ यदुक्तं एवं सति अङ्गविपर्यासो विना वचनेन कृतो भविष्यतीति । तस्य कः परिहार इत्याशङ्कान्तं सूत्रम् ।

टुप्— ननु ' अग्निमारुतादूर्ध्वम्, प्रहृत्य परिधीन् ' इति च क्रमविपर्यासः प्राप्नोतीत्युक्तम् ।

**उत्कर्षः संयोगात् कालमात्रमितरत्र । ५० ॥**

भाष्यम्— नैष दोषो यदुक्तमङ्गविपर्यास इति । कथं कृत्वा ? पशुप्रचारे तावदुत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य चोत्कर्षो न्याय्य, संयोगात् । तानि हि पशुप्रचारेण सम्बन्धं संयुक्तानि । न च आग्निमारुतस्य अनुयाजैः सह, हारियोजनस्य वा परिधिप्रहरणेन, क्रमो निर्दिष्टः । न हि परिधिप्रहरणं हारियोजनस्याङ्गम्, हारियोजनो वा परिधिप्रहरणस्य । उभौ वा कस्यचिदेकस्य प्रधानस्य । एवं आग्निमारुतमनुयाजाश्च यदि पर-

स्वस्थानस्थानि भवन्तु, एकस्य वा प्रधानस्य, तेन एतेन क्रमेण उत्कृष्यन्तीति निश्चित क्रम स्यात् । अथ पुन पशोरङ्गमनुयाजा, आग्निमारुत सोमस्य, तथा परिधिप्रहरणं पशोरङ्गम्, हारियोजन सोमेज्या । तेषा क्रमो निष्प्रयोजन । तस्मादनिश्चित । कालमात्र मितरत् । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति, प्रहृत्य परिधीन् जुहोति हारियोजनमिति, एतस्मिन् काले इति लक्षणमाग्निमारुत परिधिप्रहरण च । अनपेतश्च लक्षणा यार्थे काल । यथा अग्निहोत्रेणेष्ट्वा भुञ्जीयमिति । यत्र अग्निहोत्र नास्ति, तत्राप्यनपेत काल । नैव लक्षणा भवति । नहि । काल एवेह ग्रहार्थ । कस्या तावत् पूर्वकाले एतत् स्मर्यते । ऊर्ध्वशब्दोऽपि देशं काल वा ब्रूयात् । देशस्यासम्भवात् कालार्थो विज्ञायते ।

टुप्—उच्यते । आग्निमारुत सोमाङ्गम् । अनुयाजा पश्वङ्गम् । अनयोरङ्गाङ्गिभावस्तावन्नास्ति, येन आग्नि मारुत कृत्वा अनुयाजा क्रियमाणा सगुणा भवेयु । न चैते एकेन प्रयोगवचनेन गृह्यन्ते, येन आग्निमारुत कृत्वाऽनुयाजा क्रियेरन् । (अत क्रमलोपेऽपि न दोष । किं तर्हि 'आग्निमारुतादूर्ध्वं' इत्यनेन क्रियते ? अत आह–) प्रकृतौ परिव्याणिग्माजैनशौचोत्तरकाल अनु याजा द्वितीय क्षणे प्राप्नुवन्ति । (तदेव) ईदृश चोदकेन प्राप्त (सति) इह द्वितीये क्षणे अनुयाजा न कर्तव्या, (किंतु) क्षणमात्र (आग्निमारुतकाल यावत्) स्थित्वा कर्तव्या (इत्येककालविधानेन) चोदकस्यैव एतद्वचनम्, न तु (आग्निमारुता नुयाजयो क्रमविधानार्थं सत्) चोदक बाधते । द्वितीयेऽप्येवमेव ('प्रहृत्य परिधीन्' इति वाक्ये काल विधान मन्तव्यम्) । ननु एव लक्षणा भवति (शङ्का भाष्यानुसारेऽसङ्गम्) । नहि । (निराकरणमाष्यानुभाष्य मिदम् । तत्र कारणभाष्योक्त अर्थोऽनुभाष्यते–) क्त्वाशब्द कालवचन एव स्मर्यते । स तावत् परिधि प्रहरणस्य पूर्वकालतया श्रुत्या वर्तते । तद्यथादेव परि धिप्रहरण कृत्वा तत उत्तरकाल हारियोजन कर्तव्य (इति गम्यते । अत) सर्वाण्येव (पदानि) श्रुति वृत्तानि । (तथा) आग्निमारुतशब्दोऽपि स्वार्थमेव अभिवदति, ऊर्ध्वशब्दोऽपि (श्रुत्येव कालमाह) । न तु किंचित् पद लक्षणावृत्तम् । (क तर्हि लक्षणा भवत्, अत आह–) ईदृशे तु (विषये) लक्षणा भवति, यथा 'गौर्वाहीक' इति गोशब्द वाहीके (मन्दत्वजाड्य गोधर्मा ह) निष्ठमूत्रभक्षणादि यत्तल्लक्षयति । यथा वा आहवनि व्यधिकरणाया । एवमत्र न काचित् लक्षणा पश्याम ।

(एव भाष्यमनुभाष्य चोदयति–) एतेन व्याख्या तेन 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति (अत्र) यो दोष उक्त (अङ्गप्रयोजनमस्य वक्तव्य) सिद्धान्तवादिना पूर्वपक्षवादिन ('कालविधिश्चेत्ततो लक्षणा स्यात्' इति ४।३।१७।२९), स नास्ति, सर्वेषा श्रुतिवृत्तत्वात् । (इत 'अग्नि चित्वा' इत्यादावपि) उच्यते । नैतदेवम् । अत्रापि हि (प्रहृत्य परिधीन् इत्य त्रापि) लक्षणा । नेत्यपि (वाजपेयेनेष्ट्वा इत्यादिष्वपि लक्षणा काचिदस्ति) । कथम् ? पदस्य उच्चार्यमाण (आग्निमारुतादि, तस्य) स्वरूप मा कथ र ब्रवीति । अन्यत्र वा कर्तव्यम्, तत्र वा कर्तव्यमिति । इह तु स्वरूप न कर्तव्यम्, तस्य (वचनान्तरेण) निर्वर्तितत्वात् । (तथा) अत्रापि न (स्वरूप कर्तव्य अनूयाजाद्यङ्गत्वानभ्युपगमात्) तत्रापि (स्वरूपेऽपि) न किंचित् (कर्तव्यम्, अनूयाजाना एतदङ्गत्वाभावात्) । किमर्थं तर्हि उच्चारणम् ? पराथम् । तस्य (अनूयाजस्य) य काल , त लक्षयितुम् । (एव सर्वत्र लक्षणा वाज पेयादिष्वपि द्रष्टव्या । स्वार्थस्य वाक्यार्थान्वयाभावात् पदविशेषणत्वेन उच्चारणात् लक्षणेत्युक्तम् । पर तु 'गङ्गाया घोष ' इत्यादिवत् नाथर्व शब्द किंतु श्रुत एव 'क्त्वा'शब्द कालवचन इति मत्वीवलक्षणारोप इति ज्ञेयम्) ।

प्रकृतिकालाऽऽसत्ते शङ्खवत्तामिति चेत् ।५।।।

भाष्यम्— इति चेत्पश्यसि सर्वसोमानामुत्कर्ष एवाय इति, नैतदुक्तम् । शङ्खवत्ता सोमानामुत्कर्षात् प्रकार्ये युक्त । कुत ? प्रकृतिकालासत्ते । एव प्राकृतस्य कालस्य आसत्तौ कृत प्रकारो भविष्यति । अत्र निर्णयोऽयम

पार्थसारथिस्तु मनोतामन्त्रस्य पूर्वपक्षे नत्वेत्याह। तत्तु विभिन्नदेवतास्थले एकस्य पशोर्देवताद्वयोद्दिष्टकृतैकावदानत्रयपूर्वकं होमं कृत्वा अपरस्यापि कार्यमिति स्वयमेव पञ्चमे (५।३।५) व्यवस्थापितत्वात् कालभेदेन अवदानकालीनमनोतामन्त्रस्यावृत्तेः पूर्वपक्षे अपि न्यायानत्वादुपेक्षितम्।

मण्डन— 'प्राजापत्याः सर्वसोमोपरिष्टात्।'

शंकर— 'कृत्स्नहोमोऽर्थ्याः पशवः।'

* वाजपेये सोमग्रहाः सुराग्रहाश्च। वि. १०।४।३.

* वाजपेये हिरण्यमालिन्वं मर्त्येषामृत्विजाम्, नाध्वर्योरेव। ३।८।८।१२. मीको. पृ ३३८९ 'लोहितोष्णीषाधिकरणम्' इत्यत्र द्रष्टव्यम्। * 'एतस्य खादिर एव कार्यः' यूप. इति वाजपेये। भा. १२।३।४।१४.

* वाजपेयाङ्गं बृहस्पतिसव.। भा. ४।३।१२।२९, १०।२।१२।१९.

* वाजपेयाङ्गत्वेऽपि बृहस्पतिसवस्य स्वकाल.(वसन्त.) कर्तव्यता। भा. ४।३।१७।४०.

ⵊ वाजपेयाधिकरणम्। वाजपेयशब्दः कर्मनामधेयम्।

नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्। १।४।५।६॥

भाष्यम्— 'वाजपेयेन स्वाराज्यकामो यजेत' इति श्रूयते। तत्र किं गुणविधिः कर्मनामधेयमिति संदेहः। एवं चेत् संदेहः, उच्यते गुणविधिः। न संदेहः, श्रूयते हि गुणः। सोऽश्रूयमाणो न शक्यो नास्तीति वदितुम्। तस्मात् गुणविधिः।

वा— तत्रसमर्थेन आख्यातपदस्य धात्वर्थं फलं प्रति करणं गुणं च प्रति साध्यो भवन् विधास्यते। तेनोद्भिदा यागं यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्विनैव मत्वर्थलक्षणया अनन्यसिद्धिः। तथा आख्यातादिपदस्य तन्त्रेण द्वोऽश्रवणादित्योय.। तस्मात् सर्वत्र स्वस्वरिकल्पिते नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमाच्च विधानमेव भवतु अत नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाक्षेपेण इदमारभ्यते। तेनेदमपि वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः। सर्वाण्येव त्विहोदाहर्तव्यानि। आह च— 'करणेषूपदिष्टेषु साऽर्थोत्साध्यत्वकल्पना। तथा गुणविधानेन नास्ति मत्वर्थलक्षणा॥'

तुल्यत्वात् क्रिययोर्न। ७॥

भाष्यम्— नैतदेवम्, तुल्ये हीमे क्रिये स्याताम्। या च वाजपेयक्रिया या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको विध्यन्तः स्यात्। तथा च दीक्षणामुपसदां न दर्शनं नावकल्पेत 'सप्तदशदीक्षो वाजपेयः' इति, 'सप्तदशोपसत्को वाजपेयः' इति।

अथवा तुल्यत्वात् क्रिययोर्नेति। यदि न गुणविधिः, सतस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया। तत्र दीक्षाणां उपसदां च दर्शनमुपपन्नम्। तस्मात् कर्मनामधेयमिति। लिङ्ग स्येतदासि. पुनरुत्तरसूत्रेण।

वा— वाजपेये तावदयं विशेषोऽभिधीयते— 'वाजपेयं यवागूः स्यादौषधद्रव्यता तत'। द्रव्यसामान्यात् ऐष्टिकत्वं प्रसज्यते॥'

ऐकशब्द्ये परार्थवत्। ८॥

भाष्यम्— यदि गुणविधिः स्यात्, स्वार्थवत् परार्थस्याभिधानं विप्रतिषिध्यते यजेनेत्यस्य शब्दस्य। यदि 'स्वाराज्यकामो यजेत' इति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते न तर्हि वाजपेयेन गुणेन तं धुं परार्थमनूद्येत यागेन वाजपेयगुणकेनेति। भिद्येत हि तथा वाक्यम्। ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे 'स्वाराज्यकामो यजेत' इत्येतदेकं प्रत्यक्षं पदद्वयम्। 'यजेत वाजपेयेन' इत्येतदपि प्रत्यक्षमेव। नैतदेवम्। एवं सति चत्वारि पदान्युपलभेमहि त्रीणि त्वेतान्युपलभ्यन्ते। उच्यते। यजेतेत्येतदुभाभ्यां सम्बध्यते। कथं सकृदुच्चारितं सत् उभाभ्यामेष्यतीति। रूपाभेदात्। ईदृशमेवास्य रूपं स्वाराज्यकामेन संबध्यमानस्येदृशमेव वाजपेयेन। अतस्तदुभाभ्यां संबध्यते इति। नैतदस्तीदृशेनैव रूपेणेति। यद्यज्ञातस्ततो विधिः, यदि ज्ञातस्ततोऽनुवादः। न च ज्ञातोऽज्ञातश्च युगपद्भवतीति। आह— यदिदमुक्तं गुणविधिपक्षेऽनुवादो यजेतेति। यत्रायमनुवादः तेनेदानीं गुणो विधीयते। वाजपेयशब्देनेति मा बोचः। न ह्याख्यातमन्तरेण

गुणस्यैव फले निवेशनमात् । सु- पृ- ८२४.

● यदि च ('वाक्यगतपदेषु') एवं फलसंबन्धि इतराणि च तदङ्गभूतानि इति कल्प्यते तर्हि वाजपेयाधिकरणन्यायेन एकस्य फलं प्रति उपादान–विधान–गुणभावात्, इतरस्तु प्रति उद्देश–अनुवाद–प्राधान्यात् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । (तस्मात्तत्र युक्तम्) । वा. ४।१।१।२ पृ. ३७३.

❋ वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां खादिरत्वादीनां मध्ये अन्यतमपुनःश्रुतौ नियमविधिन्यम् ॥

विरोधिनामेकश्रुतौ नियमः स्यात् ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् । १०।८।१६। ५१ ॥

भाष्यम्— अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति । अत्र श्रूयते 'खादिरो यूपो भवति' इति । तत्र संशयः, किं खादिरो वा, पालाशो वा, रौहितको वा, उत खादिर एवेति । तथाऽन्यत्र श्रूयते 'बृहत्पृष्ठं भवति' इति । तत्र संशयः किं बृहद्वा पृष्ठम्, रथन्तरं वा, उत बृहदेवेति । तथाऽन्यत्र श्रूयते 'यवमयो मध्यमः' इति । तत्र संशयः किं यवमयो वा, व्रीहिमयो वा, उत यवमय एवेति । सर्वेष्वेव किं प्राप्तम् ? विरोधिनामन्यतमे श्रूयमाणे नियमः स्यात् । खादिर एव यूपः, बृहदेव पृष्ठम्, यवमय एव मध्यम इति । कुतः ? ग्रहणस्यार्थवत्त्वात् । एवं बृहत्खादिरयवानां ग्रहणमर्थवद्भविष्यति । इतरथा प्राप्तानुवादमात्रमनर्थकं स्यात् । श्रुत्या विशिष्टाः खादिरादयश्चोदकप्राप्तान् पलाशादीन् बाधेरन् । शरवत् । यथा 'शरमयं बर्हिर्भवति' इति शरेषु श्रुतेषु कुशा निवर्तन्ते, एवमिहापीति ।

उभयप्रदेशान्नेति चेत् । ५२ ॥

भाष्यम्— इति चेत्पश्यसि, उभयं हि प्रदिशति चोदकः, खादिरं पालाशं च, बृहद् रथन्तरं च, व्रीहीन् यवांश्च । नैतदस्ति चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्तिताः । खादिरग्रहणमन्यत् परिसंख्यातुम् । विरोधात् परिसंख्याया इत्युक्तम् । तस्मान्न नियमः, विकल्प एवेति ।

शरेष्वपि । ५३ ॥

भाष्यम्— यदुभयप्रदेशादुभयं भवतीत्यध्यवसीयते, शरेष्वपि श्रुतेषु कुशा नैव निवर्तेरन्निति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति स्म ।

विरोधग्रहणात्तथा शरेष्विति चेत् । ५४ ॥

भाष्यम्— इति चेत्पश्यसि, एवं न्याय उच्यमानः शरेष्वपि दोषं प्रसञ्जयतीति । न शरेषु किंचन दोषमपि । यत्तेन कुशा निवर्तन्त इति, तथा स्यात् । कुतः ? विरोधग्रहणात् । न हि विरोधिषु शरेष्वङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेन उपादातुम् । तस्मात् कुशा निवर्तन्ते इति ।

तथेतरस्मिन् । ५५ ॥

भाष्यम्— तथा इतरस्मिन्नपि खादिरादौ विरोधिन्यङ्गीक्रियमाणे न शक्याः पलाशादयोऽङ्गत्वेन उपादातुम् । तस्मात् निवर्तिष्यन्ते इति ।

श्रुत्यानर्थक्यमिति चेत् । ५६ ॥

भाष्यम्— इति चेत् पश्यसि, विरोधग्रहणात् पलाशादीना निवृत्तिर्भविष्यतीति । चोदकश्रुतेः आनर्थक्यं स्यात् । प्रापयति हि चोदकः पलाशादीनि । स तुल्यः खदिरादिषु पलाशादिषु च । तदुक्तम्– अग्रहणादिति चेत्, न तुल्यत्वादिति । न च शक्यं वक्तुम्, खादिरादिभिः प्रयोगवचनं एकवाक्यतामेतीति । अन्यानिप्रयोगवचनेन हि श्रूयमाणः परम्परया पशुयागं यास्यतीति । अथेदानीं वाक्यप्रयोगवचनस्य विधित्वात् यागान् यास्यति । तेषु पलाशादयो विरोधाच्चोदकप्राप्ता न खादिरादिभिर्निवर्तिताः । तस्माद्विकल्प इति ।

ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् । ५७ ॥

भाष्यम्— अन्यातिप्रयोगवचनो हि मन्त्रश्रुतेन खादिरेणैकवाक्यतामेति । तस्मिन् निराकाङ्क्षे न पलाश प्रवर्तिष्यते । तस्मात् खादिरविशिष्टः पशुयागो यागप्रयोगवचनेन गृहीतो न पलाशविशिष्टः । तस्मात् खादिरस्यैव प्रवृत्तिर्नियमः । एवं रथन्तरे, यवमये च । तस्मात् खादिरादीनां नियमः । नैषा पलाशादिभिर्विकल्प इति ।

वि—'प्राजापत्यैः पशुना किं गव्यो यज्ञे समुच्चयः ।,
अग्निषोमीयः पशुरस्ति स्याद्विकल्पस्तत्र बाधनम् ॥ पशू-
नुद्दिश्य सङ्ख्याया देवतस्य च विधौ भिदा । कर्मान्तरे
ग्रहवाक्यदोषनाच्च समुच्चयः ॥'

भाट्ट—वाजपेये 'सप्तदश प्राजापत्यान् पशून्' इति श्रुतः यागः पूर्ववदेव न प्रकृतानां क्रतुपशूनां गुणत्वेनाधीनपशुयागान्तरत्वात् निरपेक्षः । सत्यपि साहस्रे अदृष्टाय यैनैककार्यतानयगमे साहस्रयस्य कार्यकल्पनोपस्थितीनत्वीनिरपेक्षः । न चात्र अतिदेशप्राप्तपशुयागाश्रयेण पशूद्देशेन देवताप्राप्तिविधानानावश्यकः । सङ्ख्याया अपि विधाने वाक्यमेवापत्तेः कर्मान्तरावश्यकत्वात् । अतोऽत्र समुच्चय एव । अत एव वाजपेये 'यदाग्नेयं पशुमालभते तेनाग्निमेवावरुन्धे' इत्यादिवत्पशुयागपरत्वमप्युपपद्यते ।

मण्डन—'प्राजापत्या न बाध्यन्ते ।'

शङ्कर—'प्राजापत्ये नतु पशु ।' (न वाच्य अत्यय ) ।

● वाजपेयगत-प्राजापत्यपशवङ्गत्वाद्बिपणार्थं कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८।२३ मीको पृ. ११३५ 'तत्र कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● यत्र षोडशिस्तोत्रोत्तरं वाजपेयस्तोत्रं क्रियते सा षोडशिसंस्थैव वाजपेयपदवाच्या । अत्र सप्तदश स्तोत्राणि । भाट्ट ३।६।१६

● वाजपेययूपन्याय ( ३।१।१।१८ ) । 'वाज पेयस्य यूप' इति वाजपेयाङ्गपशुयागगतयूपवत् । सोम ८।१।३ ● यथा आदिक तु दीक्षणीयाद्यङ्गानि वाजपेययूपन्यायेन एकत्वसङ्ख्या आम्नानुयते इति नास्ति सोमेऽतिदेशः । शा ८।१।३

● वाजपेयशब्द कर्मनामधेय न गुणविधि । १।४।१।६–८. मीको पृ ३४८८ 'वाजपेयाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● वाजपेयशब्दस्तावत् सोम यागविशेषवचन । भा ३।११।१८.

● वाजसनेयिभिः शङ्खलिखितोक्तमेव धर्मसूत्रं परिगृहीतम् । पा १।३।७।१५ पृ २४४

● वाजसनेयिशाखाया माध्यन्दिन (अस्य) चरकशाखासु च सूत्रे । वा १।३।८।२७ पृ २८६

● वाजिना आवाहनं वैश्वदेवे पर्वणि न कर्तव्यम् । सकर्ष ।४।४।८

※ वाजिमन्दुरान्याय । 'वाजिशाला तु मन्दुरा' इति कोशात् । तथा पूर्व–( २०६ )सत् । साहस्री २१३

※ वाजिन उपसेचनार्थं यागार्थात् पृथङ् नोत्पाद्यम् ॥

'चातुर्मास्येषु वाजिभ्यो वाजिनम्' इत्यत्र तादर्थ्यं चतुर्थ्या यागोत्पत्तावेव सर्वस्य वाजिनस्य यागे विनियोगेनावयवानां पुनर्विनियोगस्य 'शेषात्स्विष्टकृत' इत्यादाविव शेषपदाभावे स्वेच्छया कर्तुमशक्यत्वात् 'वाजिनेनोपसिञ्चति' इति विहितमुपसेचनं च प्रयोजक सद्यः वाजिनमुत्पादयति । इति प्राप्ते, यागोपसेचनयोः विनियोगे धनेऽपि परार्थात्ऽऽमिक्षाऽनुनिष्पन्नस्य वाजिनस्य विनियोगाकाङ्क्षया यागोपसेचनयोः समकालप्रवृत्तेरसंयुक्तौ यागोपसेचनयोरुभयत्र विनियोगसम्भवात् वाजिनान्तरमुत्पाद्यम् । सकर्ष १।४।१

● वाजिनम् । 'तप्ते पयसि दध्यानयति' तत्र घनीभूतः पिण्ड आमिक्षा, अवशिष्टं जलं वाजिनम् । त्रि २।२।९ ● वाजिनं न प्रयोजकं तप्ते पयसि दध्यानयनस्य किन्तु आमिक्षैव प्रयोजिका । ४।१।१।२२–२४ ● वाजिनं यागे उपसेचने चैकमेव विनियुज्यते न वाजिनान्तरं उपसेचनार्थमुत्पादयितव्यं चातुर्मास्येषु । सकर्ष १।४।१. ● वाजिनं सान्नाय्यविकृतम् । भा ८।१।१।५ ● 'वाजिभ्यो वाजिनम्' इति वाजिनगुणकर्मान्तरविधि, न तु आमिक्षागुणके कर्मणि गुणविधि । २।२।१।२३–२४ मीको पृ १५८० 'गुणन्याय' इत्यत्र द्रष्टव्यम् । ● वाजिनस्य । तप्तस्य पयसो दध्यानयनसंस्कृतस्य आमिक्षाशब्देन घनीभूतस्य वैश्वदेव्यागे विनियोगात् तदनुनिष्पादितो द्रवस्य वाजिनशब्दोच्चार्योपयुक्तशेषत्वात् प्रतिपत्त्यपेक्षस्य प्रतिपत्तिमभिध्याति । सु पृ ८२४ ● वाजिनस्य पर ( आमिक्षा) प्रयुक्तदध्यानयनोपजीवित्वात् गौणं दध्यानयनप्रयोजकत्वम् ।

हि उभयथापि वाजिनन्यायेन कर्मान्तरत्वाशङ्का समस्ति। २।२।१२।२६ पृ. २९०, ● पाठक्रमेण प्रधानविधे. एकवाक्यतागमोत्तर अन्यसम्बन्धयोगात् वाजिनन्यायेन भेदोपपत्तिः। प्रधानविधेः पर्यग्नि अङ्गवाक्यद्वयस्य एकादशे (११।१।८) निषिध्यमानत्वेन पाठस्यानियामकत्वात्। अतः सर्वेषां युगपत्सम्बन्धात् न वाजिनन्यायेनापि भेदकत्वम्। २।३।१०।२३ पृ. १६४. ● स्वर्गकामवाक्ये वाजिनन्यायेन चन्द्रनादिद्रव्यविशिष्टकर्मान्तरविधानात् न कश्चिद्दोषः। सोम ६।१।१.

● वाजिनन्यायकल्पकम्– दध्यानयनस्य आमिक्षार्थत्व वाक्यीयम्, न वाजिनार्थत्वम्। अतः आमिक्षाप्रयुक्तदध्यानयनानुनिष्पन्नत्वात् वाजिनस्य, न दध्यानयनप्रयोजकता इति हि तन्न्यायः। कौ.२।२।४।१ पृ ६८.

● वाजिनयाग., पयश्च्य स्वोपकारित्वेऽपि दध्यानयनस्य अप्रयोजक.। बाल पृ. १०७, ● वाजिनयागः वाजिनस्य उत्पत्तौ. अप्रयोजकः उपादानपाकनयोगतु प्रयोजक.। पृ १०६, ● वाजिनयागमनुनिष्पन्नस्य वाजिनस्य प्रतिपत्ति चातुर्मास्यवैश्वदेवे। भाट्ट. ४।१।९, ● वाजिनयागस्य आज्येन समापन वाजिनयागे चातुर्मास्यवैश्वदेवपर्वणि। ८।१।९, ● वाजिनयागस्य आमिक्षायागविकारेऽतिदेशः अनुनिष्पन्नप्रतिपत्तित्वात्। ४।१।९ ● वाजिनयागस्य प्रधानतया अङ्गत्वायेन अतिदेशात् वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तम्। इति कृत्वाचिन्तया इदं इति केचिदाहु। तदयुक्तम्। वाजिनयागस्य वाजिनापचारे द्रव्यप्रयोजकत्वाशक्तया अनित्यस्य नित्ये. आमिक्षायागादिभिः सहातिदेशाविधिविषयत्वाभावेन वाजिन. प्रतिपत्त्यर्थतया लिङ्गकार्यवत् अङ्गत्वस्यैव युक्तत्वात्। मीम. ७।१।१०. ● वाजिनयागे सामान्यधर्माणामतिदेशः। ८।२।३।१-९

● प्रतिपत्तिकर्मत्वेऽपि निराकाङ्क्षत्ववाजिनयागन्यायेन इतिकर्तव्यताकाङ्क्षायां सोमवद्यायाग्न्यत्रस्य ऐन्द्र अतिदेशोपपत्तिः. (सोमाभावाद्याग्रे)। कौ ३।२। ५।३२ पृ २९७.

● वाजिनयागवत्। न न वाजिनयागवत् गुणाद्भेद. संभवति स्वर्गशब्दस्य फलपर्यवसानवाऽपि उपपत्तेः। (कर्मान्तरमेव दर्शपूर्णमासलक्षक स्वर्गविशिष्ट विधीयतां इति शङ्कया उत्तरमिदम्)। रत्न ६।१।१।२. ● वाजिनयागवत्। वाजिनयागो यथा कर्मान्तर प्राप्नोति तथा 'सौमे दद्याती अग्निमाद्धीयाता' इत्यत्र पुत्रिरं विवक्षया कर्मान्तर प्राप्नोति। रत्न. ६।१।५।२२ वर्णके २.

● वाजिनयागसुराग्रहयोः ऐष्टिकधर्मातिदेशः। ८।२।१।१–९. मीको. पृ. २१८ 'अतिदेशः वाजिनसुराग्रहयो. ऐष्टिकधर्माणाम्' इत्यत्र अधिकरण द्रष्टव्यम्।

● वाजिनवत्। वाजिन यथा अनुषङ्गात् उत्पन्नं प्रतिपत्तिं आहुतिरूपां निष्पादयति तथा अध्ययनाङ्गभूतनयन अनुषङ्गात् अध्यापनमानार्थकं निष्पादयति। रत्न. ६।८।६।२४ वर्णके २,

● वाजिनशब्दस्य कारकविभक्त्यन्तत्वात् नामि न नाम्ना अन्वय. सम्भवति। सु. पृ. ८३१.

● वाजिनहोम' चातुर्मास्येषु वैश्वदेवपर्वगत. आमिक्षाहोमात् (आमिक्षायागात्) कर्मान्तरम्। मी २।३।९.

● वार्तं नाध्येयम्, अध्ययनधर्मोऽयं न कर्मणि प्रयोगधर्मः। १२।३।७।१८–१९

● वातादिन्यायः। सन्निपातश्लेष्माण परस्पर विरुद्धा अपि देहधारणादि एक कार्यं कुर्वन्ति। न्यास. ● वातप्रदीपन्यायः। वातेन दीपनिवृत्ति। साहस्री ३७६.

● 'यावमात्रं सार्थकम्' (अर्थवादशेष. तदानर्थक इत्यर्थ)। १।२।२।१९ सूत्रम्.

● वादित्रे अस्ति महाव्रते 'दिशु दुन्दुभयो वदन्ति' इत्येवमादि। मा. १०।४।५।९.

● वाप्यथयानां (वर्ष्यशाना सोमनार्थपाठ.। वापी स्नाना इति केचित्। वाप्यास्य इति अश्वलयनभीलसूत्रे १२।१०) नाराशंसे द्वितीय प्रयाज.। वि. ६।६।१.

● वानप्रस्थ'। वानप्र., परिव्राट्, वानप्रस्थ इति धर्मभेदान् सङ्ख्यापरा। भा. ८।२।५।२४.

● वामदेवेन स्तुयाः पञ्चदशर्चो। तत्र पञ्चदशानामृचा मध्ये एकादशा सामिधेन्य. अन्त्याग्रतसः यागानु-

वाक्याः, न तु समुदायः । संकर्ष. ४।४।२.

● वामदेवाधिकरणम् । संकर्ष. ४।३।२. मीको. पृ. १४ 'अगस्त्यस्य कयाशुभीयादौ एकादशैव सामिधेन्यः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वामदेव्यं नाम साम । भा. ९।२।६।२८ वर्णकं २, ● वामदेव्यं साम आग्नाने गायति । 'स एव विद्वान् वामदेव्यं गायति' इति । ३।३।२।१९. ● वामदेव्यं साम 'कया नश्चित्र०' इति गायत्रे तृचे गीयते । तच्च माध्यंदिने पृष्ठस्तोत्रेषु द्वितीयम् । वि. ३।४।३, ● वामदेव्यं साम 'कया नश्चित्र०' इति तृचे गीयते अध्ययनतः । परन्तु 'ककुभीषु रथंतरं गायति' इति विधानेन प्रगाथतृचे रथंतरं गेयम् । ७।२।१, ● वामदेव्यं साम 'कया नश्चित्र० कस्त्वा सत्यो० अभी षु ण.०' इति तृचे (६८२, ६८३, ६८४) गीयते । तत्र प्रथमा ऋक् योनिर्नाम । ९।२।१ वर्णक २.

● वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । मीको पृ २६०८ 'पृष्ठानि' इति निर्देशो द्रष्टव्यम् । भा १।४। २।३ पृ. ३५२.

● वामदेव्यादिसामानि स्थाने विहितानि, तत उद्गातृ.गानं विकल्प्यते । वि. १०।८।६ । ब्रह्मा उद्गात्रा सह गाने विकल्प्यते कल्पसूत्रानुसारेण, तथापि गानमेव विकल्प्यं ब्रह्मणो गाननिषेधात् इति । भाट्ट १०।८।६ । वारवन्तीयादिसामानि गेयानि इति । शा. १०।८।६

● वामदेव्यसामस्तोभो योनौ द्रुमोरथंगोर्मे ये 'औ औ हो हायी' इति स्तोभः । यथा स्वर., वर्णविशेषः, विराम, इत्येते गीत्युपयोगित्वात् अतिदिश्यन्ते तथा स्तोभा अपि अतिदेश्याः । तथा च तेन साम्नि उत्तरयोर्ऋचोः स्तोभस्य उक्तस्य अतिदेशः कर्तव्यः । वि ९।२।१०.

● वायवीयौ संयोगविभागौ शब्दाभिव्यञ्जकौ । (उच्चारयितुर्मुखोद्गतवायवीयसंयोगविभागाना स्तिमितवायवीरणापसारणेन शब्दाभिव्यञ्जकत्वम् । न तु शब्दादिस्थाना तेषाम् । वैद्यनाथः) अभिधानेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगं अभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु । भा. १।१।६।१३.

● 'वायव्यं श्वेतमालभेत भूतिकामः' । अत्र किं दर्शपूर्णमासिक आलम्भ. गुणविधि. उत आलम्भान्तर किंवा यागान्तर इति विचारे यागान्तरमिदं न गुणविधि. नापि आलम्भान्तरम् । २।३।५।१२–१५. मीको. पृ. १००६ 'आलम्भनिर्वापन्याय:' इत्यत्र अधिकरण द्रष्टव्यम् । ● 'वायव्य श्वेतमालभेत भूतिकाम.' इत्यत्र श्वेतगुणस्य विधि । न अनुवाद. । ४।१।१०।२५. मीको. पृ. २१०७ 'द्रव्येषु गुणश्रुति. नियमविधानार्था' इत्यत्र अधिकरण द्रष्टव्यम् । ● 'वायव्य श्वेतमालभेत भूतिकाम.' इत्यादौ छाग एव, नान्यः पशुः । भा. १०।२।३०।६९. ■ 'वायव्य श्वेतमालभेत भूतिकाम' इति द्रव्यदेवतासंयुक्तत्वात् कर्मान्तरविधिः । वि. २।३।५. ● वायव्ये पशौ विहितेन आघारमन्त्रेण प्राकृतान्मन्त्रस्य न बाध. । १०।३।१२–१९.

● वायव्यादिपशौ मनोतामन्त्रस्य नोहः ('त्वं ह्यग्ने प्रथम' इत्यत्र 'त्वं हि वायो प्रथम.' इति नोहः) अविकारेण प्रयोक्तव्य. । १०।४।२१।८३. मीको पृ ३०८९ 'मनोतान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● वायव्यपशौ अग्नीषोमीयपशुविकृतौ अग्नीषोमीयदेवताया निवृत्तायां तदीयपशुपुरोडाशोऽपि स निवर्तते । वि. १०।१।९. ● वायव्यपशौ उपाकरणे हिरण्यगर्भमन्त्रस्य निवेश । १०।३।२।१३–१७. 'हिरण्यगर्भमन्त्रन्याय.' इत्यत्र अधिकरण द्रष्टव्यम् । ● वायव्यपशौ उपदिष्टश्वेतगुणेन प्राकृतालद्रव्यस्य न बाध. । १०।२।३०।७०. मीको पृ. २१५४ 'द्रव्यस्य गुणेन न बाध.' इत्यत्र अधिकरण द्रष्टव्यम् । ● वायव्यपशौ 'हिरण्यगर्भ.' इत्याघारमन्त्र । तत्र चोदकप्राप्तेनिकर्षस्यता नास्तीति पक्ष. । मन्त्रान्तरेण पूर्वमन्त्रबाधेऽपि चोदकप्राप्तेतिकर्तव्यता अस्त्येवेति सिद्धान्त । वि. १०।३।२, ● वायव्यपशौ 'हिरण्यगर्भ. समवर्तताग्रे इत्याघारमाघारयति' ।

प्रथमाघारे 'प्रजापतिं मनसा ध्यायन्नाघारयति' इति प्रकृतौ। द्वितीयाघारमन्त्रस्तु प्रकृतौ 'ऊर्ध्वोऽध्वर' इत्यादि. तत्र वायव्यपशौ प्राकृतमन्त्रं बाधित्वा हिरण्यगर्भमन्त्रो द्वितीयाघारे इति सिद्धान्तः। १०।३।२.

● वायव्यश्वेतपशौ आघारे प्राकृतेतिकर्तव्यता प्राप्नोति। प्राप्ताया च मन्त्रविशेषरूपगुणविधिः। १०।३। ११-१२.

● वायुः अपि स्पार्शनप्रत्यक्ष.। स्पार्शने च उद्भूतस्पर्शो हेतुः न तु रूपमपि। मणि. पृ. २१. ● वायुः न गम्यत., वायोरप्रत्यक्षत्वात्। भा. १।१।६।१३.

☒ वायुर्नावमिवाम्भसीति न्याय.। यथा, नद्याः परं पारं गच्छन्ती नौका प्रतिकूलो वायुर्दीरितो महावर्ते पातयति, अकेनापूर्वं वा मज्जयति, महावाणेनाभिहत्य भञ्जयति, पुनरपारं विषमस्थानं वा गमयति, सर्वथाऽनर्थवतीमेव करोति, तथा विदुषोऽपि प्रज्ञा विवेकबुद्धिमनाद्यविद्यावासनाभिरुत्थापिताभिरावृत्य मनो विषये वा कर्मणि वा योगे वाऽप्युपास्तौ वा व्यवहारे वाऽन्यत्र वा पातयित्वा वायुः नावमिव निमज्जयतीत्यर्थः। साहस्री. ५२५

● वायुर्निरप.। भा. १।२।१।१०. ● 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ अर्थवादेऽपि प्राशस्त्यमनिषपत्ये वाक्ये एव लक्षणा अङ्गीकार्या, प्रत्येकपदात् तदनुपपत्ते.। न च तत्र कर्मणि क्षिप्रदेवतापदादेवानुमानस्यानुगत पशुअर्थगतप्रयोजनकत्वमेव, न तु तदन्यप्राशस्त्यलक्षकत्वमिति वाच्यम्। पदार्थमात्रमर्गबोधे 'वायुः क्षीप्रतमः' इत्येव धी. स्यात्, न कर्मप्राशस्त्यविषया सा स्यात्। अद्वैत. २।१।५५४-५५६ ● वायोश्च धर्म. (चलनम्) सर्वत्र हि व्यजनादिषु चलना स्पन्देन उपलभ्यते। बृहती. पृ. १६१ ● वायोः सद्भावे किं प्रमाणम्? असति तस्मिन् व्यजनादिचालने वायूपलम्भाप्रसङ्गापत्ते.। नहि तेनासौ जन्यते पार्थिवस्य वायूत्पादनत्वायोगात्। वैद्यनाथ:. १।१।६।१२ पृ.७०.

☒ वायुभक्षणन्याय.। साहस्री २०१.

☒ वायुशैत्यौष्ण्यन्याय.। वायोः शैत्यं औष्ण्यं वा औपाधिकम्। साहस्री. २०२.

● वारणं प्रतमनपात्रं नित्यं गोदोहनादि नैमित्तिकमेव दर्शपूर्णमासयोः। भा. ४।३।२।४. मीको. पृ. २३९८ 'नैमित्तिकानि ■ नित्यान्प्रकृतानि' इत्यत्र अधिकरणं द्रष्टव्यम्। ● वारण. यज्ञावचरः सर्वतोऽ। यज्ञान्तचर यज्ञप्रचारहेतुः पात्रम्। वि. ३।१।१९

☒ वारणाधिकरणम्। वारणवैकङ्कताधिकरणम्। वारणवैकङ्कतपात्राणि सर्वयागेषु निविशन्ते॥

गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्। ३।१।१२।२२॥

भाष्यम्---अग्न्याधेये वारणवैकङ्कतपात्राणि अहोमार्थानि होमार्थानि च श्रूयन्ते। 'तस्माद्वारणो वै यज्ञावचरः स्यान्न त्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्यात् जुहुयादेतेन' इति। न च वारणवैकङ्कतानां पात्राणां अग्न्याधेयेन सम्बन्धः। कुत.? यज्ञावचरत्वनात्। यज्ञार्थैतानि पात्राणि वाक्येन प्रकरणं बाधित्वा भवन्ति। तत्रैष सन्देह., किं पवमानेष्टिषु निविशन्ते उत दर्शपूर्णमासादिषु सर्वयागेषु इति। किं तावत् प्राप्तम्? पवमानहविःषु इति। कुतः? उक्तमेतत् (३।१।९।१८) प्रधाने असम्भवन् पदार्थः तद्गुणे कल्प्यते इति। अग्न्याधेयप्रकरणे च समाम्नानात् पवमानहविषां तद्गुणता। तस्मात् पवमानहविःषु इत्येवं प्राप्तम्। एवं प्राप्ते, ब्रूम.। गुणाना समत्वात् पवमानहविषा अग्न्याधेयस्य च न परस्परेण सम्बन्ध.। यथा आधानं अग्नेर्गुणः संस्कारार्थ., एवं पवमानहवींष्यपि अग्नेरेव गुणभूतानि। तस्मात् परस्परेण सम्बन्ध इति। यदुक्तं आधानस्य प्रकरणे समाम्नायन्ते इति, यद्यपि समाम्नायन्ते तथापि प्रकरणं बाधित्वा वाक्येन अग्निमनुयन्ति। किमिदं वाक्यम्? 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। ननु आहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूतः श्रूयते। सत्यम्, अधिकरणमाहवनीय., तथापि तु आहवनीयार्थ एव याग., प्रयोजनवत्त्वादाहवनीयस्य निष्प्रयोजनत्वात् पवमानहविषाम्। कथमेषां निष्प्रयोजनता? फलाश्रवणात्। कल्प्य फलमिति चेत्, सर्वं कल्प्यम्, अग्निसंस्कारस्तु तत्फलम्, न स्वर्गः। स्वर्गे कल्प्यमाने द्विरदृष्टं कल्प्येत, होमाच्च स्वर्गो भवति, तस्य

वि— 'वैकङ्कतादिक पात्र पवमानहवि:ष्वथ । यज्ञेऽखिले प्रकरणादाधानेऽजिनमस्तु तत् ॥ अनर्थकं तदङ्गेषु हवि:ष्वेवानतिष्ठते । , नाधानहविषा साम्यात् चाथवा यज्ञेऽखिले भवेत् ॥'

भाट्ट— आधाने पवमानेष्टिप्रदेशान्तरे 'वारणो यज्ञावचर, वैकङ्कतो यज्ञावचर ' इति श्रुतम् । तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षात् अयज्ञरूपाधाने निवेशासंभवात् आनर्थक्यतदङ्गन्यायेन ( ३।१।९। १८ ) पवमानेष्टिरूपे यज्ञे एव निवेश । इति प्राप्ते, भाष्यकारेण नास्त्येव सिद्धान्तितम् । आधानप्रकरणे पठितेन 'यदाहवनीये जुहोति' इति वाक्येन पवमानहविषाम् अङ्गत्वावगते आधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासंभवात् स्वरूपेण च पवमानेष्टीनां अप्राकृतत्वात् वारणवैकङ्कतादीनां सर्वप्रकृतिषु सर्वयज्ञाङ्गत्वं वेति । वार्तिककारस्तु न तावदनारभ्याधीतत्वेन पवमानहविषाम् अङ्गत्वम् । तेन सर्वहोमानुवादेन आहवनीयविधानात् पवमानेष्टीनामेव विशिष्य उपस्थित्यभावे तस्या प्रधानत्वलक्षणाया प्रमाणाभावात् । नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्ते । अस्तु वा आधानप्रकरणे तत्, तथापि तेन आधानाङ्गभूतहोमानां आहवनीयाधिकरणत्वमेव, न तु अङ्गान्तरसिद्धि । तस्मात् आधानाङ्गत्वाभावे अत एव तस्य आहवनीयपद आधानजन्यसंस्कृताग्निपरत्वमेव, परमापूर्वविशिष्टाग्निस्वरूपस्याहवनीयस्य तदानीमभावात् । न चैव पवमानेष्टिहविःश्रपणादौ गार्हपत्यादिप्रापकाभावः, तत्र मुख्यगार्हपत्याधिकरणन्यायेऽपि सति संभवे प्रकृतिहोमगार्हपत्यादिवाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनां अप्रकृतत्वे प्रमाणाभावात् आधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थत्वं सूपपादनीयम् । सर्वत्र स्वोद्देश्यस्य अपूर्वस्य पभिचारे अपूर्वसाधनलक्षणार्थं प्रकरणानुप्रवेश । यथा व्रीहीन् इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्याय । प्रकृते तु यज्ञपदेनैव अव्यभिचरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानार्थत्वस्यैव न्याय्यत्वात् न तदङ्गानन्तर । एवं सत्यपि यदि पवमानेष्टिसंनिधौ पात्राणि श्रूयेरन् तदा अनुवादस्य सति संभवे संनिहितगामित्वात् 'व्रीहिभिर्यजेत' इत्यादिवत् भवेत् प्रकृतमात्रविषयत्वम्, न त्वेवं दृष्टम् । पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव । प्रयोजनम्— पवमानेष्ट्यन्तर्गतपात्राणां नाशे दर्शाद्यर्थं अग्न्यन्तराणामुत्पत्ति पूर्वपक्षे, सिद्धान्ते तु वारणादीनामेवेति ।

मण्डन— 'वारणं यज्ञमात्राङ्गम् ।'

शङ्कर— 'नेष्ट्यङ्गं वारणादि च ।'

* वारणाधिकरणापोदितस्य अनारभ्याधीतस्य अनुवादाधिकरणेन उन्नीतत्वम् । मु पृ १०७२

* वारयते ( अथ ) वृत्रेभ्यः योगात् वृक्तिका । भवि पृ १४०

, वारवन्तीय साम आधाने गायति । भा ३।३।२।९ * प्रकृतौ ज्योतिष्टोमे यज्ञायज्ञीयस्य अग्निष्टोमाख्यस्तोत्रसाधनत्वेन अग्निष्टोमसामान्तरागत्वात् तत्कार्यापत्ति वारवन्तीयस्य । मु पृ ८७२

* वारवन्तीयादीनां कर्मान्तरत्वम् । २।२।१२।२७ मीको पृ ३३२८ 'रेवत्यधिकरणम्' इत्यत्र अपि क्रमेण द्रष्टव्यम् ।

* वारवन्तीयसंस्कार यदि कश्चित् विधीयेत तर्हि कथंचित् व्रीहिप्रोक्षणादिषु इव प्रकृतप्रत्ययो भवेत् इति पूर्वाधिकरणाभिहितन्यायेन उपादीयमानत्वे प्रकृतग्रहणायोगाशङ्का । मु पृ ८८१

* 'वाराही उपानहौ उपमुञ्चते' इति श्रूयते । तत्र वराहशब्देन आर्यप्रसिद्ध्या शूकर एव भाव्यो न कृष्णशकुनि म्लेच्छप्रसिद्ध्या । भा १।३।४।८-९

* 'वराहं गावोऽनुधावन्ति' इति वाराहोपानद्विधिप्रयोजनार्थवाद । वि १।३।५

* वारुणं एककपालं अवभृथे प्रधानम् । यद्यपि सम्भव अप्सु कर्तव्यम् । 'अप्स्ववभृथेन चरति' इति । वि ११।२।८, * वारुणं कृष्णं ऐकादशिनेषु एकादश पशुषु अश्वमेधे ज्योतिष्टोमे च । ८।१।७

* वारुणा चतुष्पात्र पुरोडाशा बहूनामश्वानां प्रतिग्रहे अश्वप्रतिग्रहेष्ट्याम्, तत्र प्रतिपुरोडाशं कपालचतुष्कभेद ।

११।४।२।१।३१–३६. मीको. पृ. ७३५ 'अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालसंख्याभेदः' इत्यत्र द्रष्टव्यम्। ० 'वारुणेनैककपालेन' इत्यादिना अपूर्वस्यावभृथस्य विधानम्। सू. १०।७।१५।४७–५०. ● 'भूमान्तरान्तरेण लोमेनैव निर्मितिना० । श्रयन्ते वारुणे लोके देहा. स्वच्छानुरूपा० ॥' या. ३।१।७।१२ पृ. ७०२. ० वारुणेषु चतुष्कपालेषु बहुधर्मविग्रहानुसारेण बहुषु श्रेयेषु कालानुसमयेनैव पुरोडाशधर्माः कर्तव्याः, अन्यथा पुरोडाशानारम्भात्. । वि. ५।२।२. ० वारुणी आमिक्षा वरुणप्रघासेषु । सा द्विधा प्रदीयमाना दृश्यते । एकदेशः अन्या. आनापत्ने (आज्यभागाग्नेयहव्यो० वन्ता) एकदेशः समिष्टयजुरूर्ध्वम् । भा. ११।२।१५। ६३. ● वारुणी इष्टिः अश्वदाने । ३।४।११।३०–३१ मीको पृ. ७३६ 'अश्वप्रतिग्रहेष्ट्यधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। ● 'वारुण्याः निष्कासेन तुषैश्चावभृथ यन्ति'। इत्य ११।२।१४। वारुण्या आमिक्षाया स्थालीलग्नेन शेषेण पिष्टमयोपमतुल्यभूतयागेन तुषैश्च इत्यर्थ इति केचित्। पिष्टमयमेवास्य आमिक्षामस्का० वर्धनया प्रधानहविष्ट्वाभावात् पुरोडाशादिरूपप्रधानहविर्मात्रा तुषैः इत्यन्ये । अनिनैषादुभयेनामित्यत्रे । सोम. ११।१।१८. ● 'वारुण्याः निष्कासेन तुषैश्च' इत्यत्र (११।२।१५) निरपेक्षरन्यायः। वारुयार्थ. पृ. २०. ● वारुण्याः निष्कासेन पुरोडाशो बाध्यते अवभृथे। बाल. पृ. ११७.

● वारुणाधिकरणम् (वारुणी इष्टिः वैदिके अश्वदाने)। ३।४।१०।२८–२९. मीको. पृ. ७३० 'अश्वप्रतिग्रहेष्टिः वैदिके अश्वदाने' इत्यत्र अधिकरणं द्रष्टव्यम्।

● अप्सु वारुण्याधिकरणोपपादितरीत्या तुषाणि योगरूढत्वनदीत्वात् समाम्नाया योगिकत्वम्. तथापि नाम्ना. स्यानत्वेन मानत्वम्। पूर्वपक्षे। कौ. ३।३। ६।१३ पृ. ३४४.

● वारुणचतुष्कपालाः वैदिकाश्वदाने कार्याः। वि. ३।४।१४. ● वारुणचतुष्कपालानां प्रयोगस्तु भेदेन न सह, साहित्यस्यानिरक्षितत्वात्। परंतु वार्तिके तन्त्ररत्ने च 'वचनान्तरेण साहित्यप्रतिपादनं द्रष्टव्यम्' इत्युक्तं अश्वप्रतिग्रहे। सोम. ५।२।१.

● वारुणचतुष्कपालपुरोडाशेषु अधिश्रयणाद्यभिघारणान्तेन काण्डेन अनुसमयः। वि ५।२।२.

● वारुणप्राघासिकैककपालधर्माणां साकमेधीयैककपाले अतिदेशः। ७।१।४।२३. मीको. पृ २२९ 'अतिदेश. आग्नेयीयैककपाले वारुणप्राघासिकैककपालधर्माणाम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

● वारुणीनिष्कासतुषप्रक्षारस्य अर्थकर्मता। भाट्ट. ११।२।१८.

● वार्त्रघ्नौ आज्यभागौ पौर्णमास्याम्। 'अग्निर्वृत्राणि जङ्घनत्०' 'त्वं सोमासि सत्पतिः०'। भा. ३।१।१३।२३.

● वार्त्रघ्नी पौर्णमास्यामनूच्येते (आज्यभागयोर्याज्यानुवाक्ये)। या. ३।१।३।३ पृ. ८७५. ० 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' अयं व्यवस्थाविधि श्रवर्थः। बाल पृ १७. ● 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इति कालार्थं संयोगः। 'तस्मात् कालार्थं एताः संयोगो- न्नाङ्गिकल्पनात्। न्याय्यः पूर्ववदीक्षणात् काले हि तुनिक्रमः॥' वा ३।१।१३।२३ पृ ७४०. ० 'वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायाम्' इत्यत्र मन्त्रलिङ्गविनियोगस्य वाक्यबाध्यता, वाक्यस्य च लिङ्गापेक्षया दुर्बलत्वेन, तत्रान्यो लिङ्ग आधिक्य मन्त्रत्वस्यासाधनत्वात्। कु. ३।१।१३।२३.

**१ वार्त्रघ्न्यधिकरणम्** । अनुवाक्याधिकरणम्। पूर्णमासे वार्त्रघ्नीयुगलं अमावास्यायां वृधन्वतीयुगलं च आज्यभागाङ्गम्। वार्त्रघ्नीवृधन्वत्योरनुवाक्ययो. आज्य- भागाङ्गत्वम्॥

लिङ्गस्यार्थसंयोगात्। ३।१।१३।२३॥

भाष्यम्— दर्शपूर्णमासयो श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति। सन्देह. किमनुवाक्याद्वयस्य स्थाने नियमः, उत

'वासिष्ठो ब्रह्मा' इति तु अर्थवादः । 'रश्मिरसि क्षयाय त्वा' (तैसं. ४।४।१) इत्यादिस्तोमभागसंज्ञकमन्त्रवेत्ता वासिष्ठोऽत्र, न तु तद्गोत्र इति । वि. ६।६।८. * 'वासिष्ठाना नाराशंसो द्वितीय प्रयाज तनूनपादन्येषाम्' अयं अन्यत्रप्राप्तो व्यवस्था विधि । बाल पृ १८.

ऽ वासिष्ठानां ब्रह्मत्वस्य नियमात् । ६।६।४। २४ ॥

सत्रे ब्राह्मणानामेवाधिकार इति पूर्वं समभिगतम् । तत्रापि वासिष्ठाना तत्समानकल्पाना चैव सत्राधिकार. स्यात् नान्येषा ब्राह्मणानामपि । कुत ? 'वासिष्ठो ब्रह्मा भवति' इति ब्रह्मत्वस्य वासिष्ठाना नियमात् इति पूर्वः पक्ष. । अत्र यद्यपि कुतूहलवृत्तिषु सर्वेषु पुस्तकेषु वाशब्द. पठ्यते तथापि व्यर्थत्वात् कुतूहलानुसारी पाठ. स्वीकृतोऽस्माभि. । वाशब्दपाठपक्षे तु तद्ग्रहणसामर्थ्यं तत्र स्वीकर्तव्यम् ।

सर्वेषां वा प्रतिप्रसवात् । २५ ॥

वासिष्ठाना तत्समानकल्पाना चैव सत्रेऽधिकार. इति पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन निरस्यन् सिद्धान्तमाह । सर्वेषा सत्रेऽधिकार. स्यात् । ननु तर्हि 'वासिष्ठो ब्रह्मा' इति कथमुच्यते, तत्राह–प्रतिप्रसवात् 'य एव कश्चन सोमभागमधीयीत स एव ब्रह्मा भवेत्' इति ब्रह्मत्वस्य प्रतिप्रसव. कृत । तेन नात्र वसिष्ठगोत्रोत्पन्नस्य वासिष्ठत्व किंतु स्तोमभागाख्यमन्त्रज्ञानवतो अवासिष्ठस्यापि वासिष्ठत्व विहित च । इद च स्तोमभागमन्त्रज्ञानस्तुत्यर्थं वचनम् । तस्मात् सर्वेषा ब्राह्मणाना सत्राधिकार. । तत्रापि विशेषस्तु 'वैश्वामित्रस्य०' इत्युत्तरसूत्रे वक्ष्यते । स्तोमभागा नाम मन्त्रास्तु 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व' इत्यादय तैत्तिरीयके पठ्यन्ते (तैसं. ४। ४।१)।

वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकार. । २६ ॥

यद्यपि ब्राह्मणानां सर्वेषा सत्राधिकार. तथापि भृगुशुनकवसिष्ठाना सत्रे अनधिकार न अधिकार. किंतु तद्भिन्नानाम् । कुत. ? 'विश्वामित्रो होता भवति' इति वैश्वामित्रस्य हौत्रनियमात् । सत्रे वैश्वामित्रस्य हौत्रं तावत् नियतम् । 'वासिष्ठो ब्रह्मा भवति' इत्यपि नियमो भाति । उभयोश्च अयमानकल्पत्वात् विरोध. । तत्र स्तोमभागाख्यमन्त्राध्यायिन. गौण वासिष्ठत्व उक्तम्, वैश्वामित्रत्व तु न गौणम् । तस्मात् वैश्वामित्रतत्समानकल्पाना सत्रेऽधिकारः । वैश्वामित्रभिन्नकल्पाना तु भृगुशुनकवसिष्ठाना न सत्राधिकार. इति सिद्धान्त. । के.

* वासुदेवार्जुनयो. प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनम्, 'उभौ मध्वासवक्षीबौ' इति सुरापानाचरणं च धर्मातिक्रमः । बा पृ. २०४.

यत्तु वासुदेवार्जुनयो. मद्यपानमातुलदुहितृपरिणयन स्मृतिविरुद्धमुपन्यस्तं तत्र अत्रविकारसुरामात्रस्य त्रैवर्णिकाना प्रतिषेध । 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥' इति । मध्वीप्रभृतेस्तु सुरापर्यायस्य नैव प्रतिषेध, त्रैवर्णिकविषयत्वात् 'मद्य नित्य ब्राह्मणस्य (वर्ज्यं)' इति वचनात् । यदप्येतत् 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥' इति, एतदपि ब्रह्मवादिशब्दस्य तच्छीलत्वधर्मतत्साधुकारितानिमित्तत्वात् प्रवचनाश्रवणेन श्रुतवदरयोः एकार्थत्वात् 'प्रब्रूयाद् ब्राह्मणस्त्वेषां' इति नियमात् यथैव प्रवचन स एव तच्छील तद्धर्म. तत्साधुकारी वा भवति । तस्मात् ब्राह्मण एव ब्रह्मवादिन । तथा च मद्यसामान्यप्रतिषेधार्थनिन्दार्थवादे अभिहितम् 'अकार्यमन्यत् कुर्याद्धि ब्राह्मणो मदमोहितः ।' इति । तस्मादेतदुक्त भवति, यथैव एका अन्नसुरा सर्वाणामपि अपेया, तथा सर्वा ब्रह्मवादिभिरपेयेति । इतरथा 'यथैवैका' इति च 'ब्रह्मवादिभि ' इति च उभयमपि अनर्थकमेव स्यात् । श्रोतान्तरनिर्देशेनैव वर्णत्रयप्रतिषेधलाभात् । तेन 'उभौ मध्वासवक्षीबौ' इत्यविरुद्धम् । तथा सान्यार्थदर्शनं ब्राह्मणानुशासनवचन 'बन्माल्यमासीत् तत् पश्चात् पर्यौहत, सुरा वै माल्यम्, ततो राजन्यमसृजत, तस्मात् ज्यायाश्च स्नुषा च श्वशुरश्च सुरा पीत्वा विलपन्त आसते, पाप्मा वै माल्यम् । तस्मात् ब्राह्मण. सुरा न पिबेत्

• यद्यपि तुल्यकार्यत्वे नास्ति विकल्पः, भिन्नविषयत्वात् । ८।१।१५।४०. • समानविषयत्वे हि विकल्पो भवति । वा. २।१।१५।४७ पृ. ४५१. • समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये । भा. १०।३।८।२६. • विकल्पाः निरालम्बनाः । नहि नाम वस्तु जात्यादिभिः ( जाति-नाम-गुण-क्रियाद्रव्यैः ) योजयितुं शक्यते, तस्य विकल्पैरस्पर्शात् । किन्तु तद्-गृह्णन्तोऽपि विकल्पाः तद्ग्रहाभिमानिनो भासन्ते । तदभिमानानुरोधेन सदालम्बना इत्युच्यन्ते । परमार्थस्तु निरालम्बना एव ( इति बौद्धाः ) । ऋजु पृ. ४०. • विकल्पाः पुनः यथार्थं भावाभावविषयाः पञ्चधा । ( १ ) प्रकृतिगमा एव ( २ ) विकृत्युपदिष्टपदार्थविषयाः ( ३ ) अप्रकृतिविकृत्यात्मककर्माङ्गोपदिष्टपदार्थविषयाः ( ४ ) विकृतौ उपदिष्टातिदिष्टपदार्थविषयाः ( ५ ) विकृतौ अतिदिष्टमात्रविषयाः इति । बाल पृ. १६२-६३. • एकस्मिन् कर्मणि भूयोगन्मकत्वे मन्त्राणां विकल्पेन प्रयोगः । संकर्ष. १।२।३. मीको. पृ १०००. ' भूयोमन्त्राधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । • एकस्मिन् कर्मणि नानामन्त्रेण मन्त्राम्नाते विकल्पेन विनियोगः । संकर्ष. १।२।२. ' नियतकर्ममन्त्रन्यायः ' इत्यत्र अधिकरणं द्रष्टव्यम् । • ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति । विरोधिनां च न सह प्रवृत्तिः । लोकवत्—यथा ' मांसपाक न पचता समभीयात् ' इति । यद्यपि बहुशो मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । भा. १०।७।१९।६६. • विकल्पस्य अष्टदोषग्रस्तत्वेऽपि गत्यन्तराभावात् स्वीकारः, यथा व्रीहियवयोः, अतिरात्रे षोडशिग्रहे च । तथा हि प्रथमप्रयोगे व्रीहयः स्वीकृताः, न यवाः इति यववाक्ये प्राप्तप्रामाण्यपरित्यागः अप्राप्ताप्रामाण्यस्वीकारः इति दोषद्वयं प्राप्तम् । कालान्तरे द्वितीयप्रयोगे यवाः स्वीकृताः न व्रीहयः तेन यववाक्ये एव त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागः इति अपरौ द्वौ दोषौ इति यववाक्ये चत्वारो दोषाः सिद्धाः । तद्वैव च व्रीहिवाक्ये प्रथमौ द्वौ दोषौ उत्पन्नौ । पुनः कालान्तरे प्रयोगान्तरे व्रीहयः स्वीकृताः न यवाः, तदा व्रीहिवाक्ये तृतीयचतुर्थौ दोषौ उत्पन्नौ इति चत्वारो दोषा व्रीहिवाक्ये सिद्धाः । इति प्रयोगत्रयानुसारेण विचारे प्रतिवाक्यं चत्वारः चत्वारः अष्टौ दोषाः सिध्यन्ति । वि. १०।८।३. • ' विकल्पस्याष्टदोषत्वात् न तावत् स्वम्युपेयता ' । तुल्यकार्यविकल्पो हि तावत् अष्टदोषत्वात् अगतिकगतिन्यायेन कश्चिदेवाश्रीयते । ' एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥ सति त्वन्यतरे त्वेतद् नैव कल्पनमर्हति ॥ ' वा. १।३।२।३ पृ १७४-१७५. • विकल्पस्य चान्दाध्यत्वात् । अन्याय्यश्च विकल्पः । तत्र हि अभावः पक्षे । नित्यवच्च ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इति श्रूयमाणे यदभावः पक्षे परिकल्प्यते तदश्रुतं भवति, श्रुतं च हीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषः तावानश्रुतपरिकल्पनायाम् । उभयत्र हि प्रसिद्धिर्बाध्यते । भा ३।३।७।१४ पृ. ८४६, १०।८।१४, १०।८।८।१६. • विकल्पस्य तुल्यार्थत्वमात्रेण वक्ष्यमाणत्वात् ' एकार्थास्तु विकल्पेरन्० ' ( १२।३।१० ) इत्यत्र । सु. पृ ८००. • विकल्पे अष्टौ दोषाः । परिसंख्यायां दोषत्रयम् श्रुतहानि., अश्रुतकल्पना, प्राप्तबाधश्चेति । वि. १०।७।१२ • विकल्पे अष्टौ दोषाः— प्रतीतप्रामाण्यत्यागः, अप्रतीताप्रामाण्यकल्पनम्, त्यक्तप्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, अप्रतीतस्य अप्रामाण्यस्य कल्पितस्य त्यागः एवञ्चतुष्टय वाक्यद्वये इत्यष्टौ दोषाः । ( वस्तुद्वयविकल्पे ) । वाक्यत्रये द्वादश । वाक्यचतुष्टये षोडश इत्येवं रीत्या वाक्यानेकत्वे दोषचतुष्टयस्य वृद्धिः । बाल पृ. १५१-१५२. • विकल्पे अष्टौ दोषा भवन्ति परन्तु न्याय्यगम्ये एव विकल्पे ते ते द्रष्टव्याः, न तु ऐच्छिकविकल्पे व्यवस्थितविकल्पे च । पृ. १६१-१६२. • विकल्पे ऐच्छिके अष्टदोषदुष्टत्वम्, न तु व्यवस्थितविकल्पे । संकर्ष. ३।३।१. • विकल्पे च पक्षे बाध. । भा. २।३।८।२२ पृ. ५३०. • विकल्पे बीजनैकार्थतामात्रम्, द्वारैक्ये सत्येव तस्य तद्धेतुकत्वात् । कु. ३।१।६।१२ पृ. ५५५. • विकल्पे हेतुः एकार्थत्वम्, समुच्चयप्रमाणाभावश्च । प्रथम. १२।

प्रसर्पेत्। अन्योन्यस्यच्छेदकारणे 'यदि प्रस्तोताऽपच्छिन्द्यात् ब्रह्मणे वरं दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गाता अदक्षिणो यज्ञः, परिसमाप्य तेन पुनर्यजेत यत् पूर्वस्मिन् दास्यन् स्यात् तद् दद्यात्' इति निमित्त-दानादिनैमित्तिकविधीनां युगपदपच्छेदे विकल्प इति षष्ठे (६।५।१७-२०) उक्तम्। [५, ६] जातितदभावयोः द्रव्यतदभावयोश्च विकल्पयोः क्रत्वर्थयोः उदाहरणे यथा- वाजसनेयिनाम् 'ऋतु-नक्षत्र-सम्भार-वास्तु-प्राश्य-जागरण-इध्म-पूर्णपात्र्यारम्भण-अर्धपात्रीणं वा कुर्वीत' इत्याधाने श्रुतम्। तदिह नक्षत्रशब्देन कृत्तिकाद्युक्ते जातितदभावयोर्विकल्पः। सम्भार-वास्तु-प्राश्यशब्दयोश्च यौगिकत्वेन द्रव्यवाचित्वात् द्रव्य-तदभावयोर्विकल्पः। अत्र वाक्यद्वयप्रणेताऽपि न वाच-निको विकल्पः, किंतु निर्विनियोगकत्वात् व्यवस्थ एव इति वाक्यस्योऽनुवादः। [७] गुणतदभावयो-र्विकल्पः क्रत्वर्थो यथा- दर्शपूर्णमासे वाजसनेयिना-मेव वेदिपरिमाणविशेषतदभावयोः, 'व्याममात्री पश्चात् स्यादित्याहुः' इति 'नात्र मात्राऽस्ति' इति च समाम्नानात्। [८] क्रियातदभावयोर्विकल्पः क्रत्वर्थो यथा- 'अतिरात्रे षोडशिनं गृह्णाति' 'नाति-रात्रे षोडशिनं गृह्णाति' इति।

तदेवमष्टविधो न्यायप्राप्तो विकल्पः। सोऽयं न्याय-प्राप्तो विकल्पः क्रत्वर्थपुरुषार्थभेदेन द्विविधः। तत्र अष्टविधोऽपि क्रत्वर्थः उदाहृत एव। स च अष्ट-विध एव जातिद्रव्ययोः, जातिगुणयोः, जातिक्रिययोः, द्रव्यगुणयोः, द्रव्यक्रिययोः, गुणक्रिययोः इति द्विक-विषयाः षट्। तथा जातिद्रव्यगुणानां जातिद्रव्य-क्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणां चेति त्रिक-विषयाश्चत्वारो भेदाः, तथा चतुष्टयविषय एकः इत्ये-कादशभेदाः न सम्भवन्ति ऐकार्थ्याभावात्। पुरुषा-र्थस्य तु एतेऽपि एकादश सम्भवन्ति। पूर्वोक्ताश्चाष्टौ इति एकोनविंशतिविधोऽसौ। [१] तत्र न्यायप्राप्तः पुरुषार्थजात्योर्विकल्पो यथा- 'वानस्पत्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति वाजसनेयिनामुक्तम्। 'कांस्येन ब्रह्मवर्चसकामस्य प्रणयेत्' इति तु चतुर्थे उदाहृतम् (४।३।२।८ भाष्ये)। अत्र हि जातिरेव फलार्थं विधीयते। यथा हि 'औदुम्बरो यूपो भवति' इत्यत्र अविशेषेण 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र च 'जुह्वा जुहोति' इत्यनेन द्रव्यप्राप्तेः जातिमात्रं क्रत्वर्थत्वेन विधीयते, तथा कांस्यवानस्पत्यवाक्ययोरपि 'चमसेनापः प्रणयेत्' इत्यनेन आकारविशिष्टद्रव्यप्राप्तेः जातिरेव फले विधीयते। अत एव वानस्पत्यकांस्य-मये चमसाकारे एव पात्रे गृह्येते। तदुक्तं तन्त्ररत्ने चतुर्थे 'नैमित्तिकं विकारत्वात्' इत्यधिकरणे (४।१।२।८) 'ननु प्रणयने विशेषत एव चमसो विहितः। सत्यम्। न तु स कांस्येनापि विरुध्यते। आकारवाची हि चमसशब्दः, न प्रकृतिविशेषमपेक्षते। शक्यते हि कांस्येनापि तदाकृतिकं पात्रं सम्पादयितुम्, सामान्यविहितं दोहार्थं वारणेन तेन विरुध्यते' इति ग्रन्थेन। तस्मात् चमसाकारस्यात्र एकस्मिन् फले विहितयोः न्यायप्राप्तो विकल्प इति। [२] न्यायप्राप्तः पुरुषार्थद्रव्यविकल्पो यथा- 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् यौगि-केनैव शब्देन द्रव्यान्तरस्य पशुफलार्थत्वेन विहितस्य विकल्पो भवति। [३] न्यायप्राप्तः पुरुषार्थगुणविकल्पो यथा- 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात्' इति वृष्ट्यर्थविहितनीचैर्मानाख्यगुणेन सह पुरुषार्थविहितगुणान्तरस्य विकल्पः इति। [४] न्यायप्राप्तः पुरुषार्थक्रियाविकल्पो यथा- एतासां काम्येष्टीनाम्। [५-७] न्यायप्राप्तस्य पुरुषार्थजाति-तदभावयोः, द्रव्यतदभावयोः, गुणतदभावयोश्च विकल्पस्य उदाहरणानि मृग्याणि। [८] पुरुषार्था हि जातिद्रव्यगुणाः गुणफलसम्बन्धेनैव सम्भवन्ति, तेषां च विकल्पविधयो निषेधाः यद्यपि अभावविधिप्रतिषेधसूत्रे (१।२।१।५) वार्तिक-कृता वैयर्थ्याच्चिरस्ताः, तथापि यत्र तद्विषयाः गुणफल-सम्बन्धविधयः सामान्यतः प्रवृत्ताः, सामान्यत एव च तन्निषेधाः, 'अभिचारमहीनं च कृत्वा चान्द्रायणं चरेत्' इति काम्याहीननिषेधवत् तत्र पुरुषार्थस्यापि ज्वरादिफलस्य विकल्पः सम्भवति। वार्तिककृदुक्तं तु वैयर्थ्यं निषेधस्य अनुष्ठानमात्रफलत्वाभ्युपगमेन। तस्य तु दोषार्थत्वात् वस्तुतो न वैयर्थ्यम्। निषेधाभावे हि कांस्यस्य कामना-

विकल्प । [ ४ ] तथा 'चित्रया यजेत पशुकाम' इति पश्वर्थविहितचित्रेष्टिक्रियातद्भावयो ऐच्छिको विकल्प इति ॥

एवं ऐच्छिकविकल्पस्य एकोनविंशति क्रत्वर्थविषया एकोनविंशतिश्च पुरुषार्थविषया इत्येवं अष्टात्रिंशत् ऐच्छिकविकल्पभेदाः, पूर्वोक्ताश्च सप्तविंशति शास्त्रगम्यविकल्पभेदाः, अष्टात्रिंशच्च वाचनिकविकल्पभेदा इति सर्वे मिलित्वा त्र्यधिकं शतं ( १०३ ) विकल्पभेदा सिद्धाः ।

पुनरपि द्विविधो विकल्पः पूर्वोक्तो यथासंभवं व्यवस्थितो व्यवस्थितश्च । आद्यो यथा– अग्निहोत्रे दध्नादय विकल्प । द्वितीयो यथा– 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवैरेव यजेत आ व्रीहिभ्य' इति व्रीह्याग्रयणोत्तरं व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ यवाग्रयणावधि, यवाग्रयणोत्तरं च यवैरेव दर्शपूर्णमासौ कार्यौ व्रीह्याग्रयणपर्यन्तं इति । यदा तु 'अग्निहोत्री वै तावदविद्वान् तस्या पयसा जुहुयात्' इति व्रीह्याग्रयणकाले, यवाग्रयणकाले च यवानग्निहोत्रार्थेषु सादयित्वा तत्पयसा अग्निहोत्रहोमे कृते आग्रयणसिद्धिपक्षः तदा आग्रयणाभावादेव व्रीहियवयोरपि अव्यवस्थितविकल्प एव ॥ व्यवस्थितविकल्पस्तु द्विविधः शास्त्रगम्यो वाचनिकश्च । तत्राद्यो यथा 'स्रुवेणावद्यति' 'स्वधितिना ऽवद्यति' 'हस्तेनावद्यति' इति सहत-द्रव-मांसावदानेषु अव्यवस्थितविकल्पे स्रुवादे प्राप्ते न्यायतो व्यवस्था उक्ता 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यत्र ( १।४।१८।२५ )। स्मार्तोदाहरणं तु 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् । तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा' इत्यत्र ब्रह्मचर्ये द्वादशाब्दानि, पञ्च वा, ग्रहणान्तिकम्' इत्य व्यवस्थितविकल्प उक्त स्मृतिपादे ( १।३ ) वार्तिककृता समर्थासमर्थभागादिस्थयोग्यायोग्य विषयोऽयं व्यवस्थितविकल्प इति न्यायेन स्थापितम्, 'वेदान् अधीत्य, वेदौ वा, वेदं वाऽपि, यथाक्रमम् । सामर्थ्यासमयोग्यत्वमङ्गीकृत्येतदुच्यते ॥' इति ( वा पृ १९२ )।

वाचनिकस्तु व्यवस्थितविकल्प सप्तधा सम्भवति । देशत, कालत, कर्तृत, प्रभवत, फलत, निमित्तत, अवस्थितश्चेति । [ १ ] तत्र देशतो वाचनिको व्यवस्थितविकल्पो यथा— तैत्तिरीयाणां श्रौतसूत्र 'अथ परिधीन्' इति परिधिषु विहितेषु पश्चाद्देशादिस्थत्वे स्थविष्ठादीनां परिधीनां अव्यवस्थितविकल्पे प्राप्ते 'स्थविष्ठं पश्चात्, अणीयान् द्राघीयान् दक्षिणार्ध्ये अणिष्ठो ह्रसिष्ठ उत्तरार्ध्ये' इति देशतो व्यवस्थितविकल्प उक्त । स्मार्तोदाहरणमपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादौ यत्र वसन्तकालाद्यस्य तत्र विकाण्डमण्डनेन 'श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसेन तु' इति चान्द्रनियमे कृते 'अमावास्यया मासान् सम्पाद्य अहरुत्सृजन्ति, अमावास्यया हि मासान् सम्पादयन्ति पौर्णमास्या मासान् सम्पाद्य अहरुत्सृजन्ति पौर्णमास्या हि मासान् सम्पादयन्ति' इति श्रुत्युक्तस्य द्विविधस्य चान्द्रस्य सर्वदेशेषु अव्यवस्थितविकल्पे प्राप्ते त्रिकाण्डमण्डनेन, चान्द्रोऽपि शुक्लपक्षादि कृष्णादिश्चेति च द्विधा । कृष्णपक्षादिकं मासं नाद्रियन्तेति केचन । येऽपि चेच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' इति देशतो व्यवस्थितविकल्प उक्त । [ २ ] कालतो वाचनिको व्यवस्थितविकल्पो यथा–दर्शपूर्णमासयोराज्यभागयो क्रमे वार्त्रघ्नीयुगलं वृधन्वतीयुगलं च इति याज्यानुवाक्यायुगले पठिते तयो पौर्णमास्या अमावास्याया च अव्यवस्थितविकल्पे प्राप्ते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति वाक्यात् कालतो व्यवस्थितविकल्प । पौर्णमास्यमावास्याख्यौ कर्मवाचिनौ अङ्गीकृत्य कर्मतो व्यवस्थितविकल्पोऽय इति सोमेश्वरमत ( सु पृ ७२७) अस्माभि शास्त्रदीपिकानुसारी निरस्तम । [ ३ ] कर्तृतो वाचनिको व्यवस्थितविकल्पो यथा– यजमाने व्रते तत्प्रकाशकस्य दर्शपूर्णमासप्रकरणपठितस्य 'अग्ने व्रतपते॰' 'वायो व्रतपते॰' 'आदित्य व्रतपते॰' इति मन्त्रत्रयस्य ब्राह्मणक्षत्रियवैश्येषु अव्यवस्थितविकल्पे प्राप्ते ब्राह्मणादिकर्तृत्वेन क्रमेण व्यवस्थितविकल्प उक्त । स्मार्तोदाहरणमपि आश्वलायनगृह्यसूत्र, 'यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो, माञ्जिष्ठं क्षत्रियो, हारिद्रं वैश्य' इति । अत्र वृत्तौ 'वासांसि वसीरन्' इति अजिनेन पूर्वविहितेन सह वैकल्पिको वाससोविधि इत्युक्तम् । तथा 'यदि रक्तानि वसीरन्'

विकल्पेऽपि अष्टौ दोषा न सन्ति, कस्यापि शास्त्रस्य प्रतीतप्रामाण्यस्याप्रामाण्याभावात्। 'पशुना यजेत' इति हि एकमेव शास्त्रम्, तत्र च एकत्वविवक्षावशेन कदाचित् कस्यचित् पुंस्त्वस्योपादानेऽपि सकल एव शास्त्रार्थः अनुष्ठीयते एवेति न तस्य शास्त्रस्य प्रामाण्यत्यागादि। एवं स्वेच्छया त्यक्तस्य तस्योपादानेऽपीति। एवमेव वाचनिकेऽपि विकल्पे अष्टौ दोषा न सन्ति। 'रथन्तरं वा पृष्ठं भवति' 'बृहद्वा पृष्ठं भवति' इत्यादौ हि उभयोः पाक्षिकत्वं वचनेन प्रतीयते, न व्रीहियववत् कदाचित् उभयकर्तव्यता इति नात्र तदननुष्ठानेऽपि इतरस्याप्रामाण्यादि कल्प्यमिति। तस्मात् न्यायगम्यविकल्पस्य एवाष्टदोषग्रस्तत्वमिति सिद्धम्।

पूर्वोक्ताश्च विकल्पाः पुनः यथासम्भवं भावाभावविषयाः पञ्चधा। केचित् प्रकृतिगता एव, केचित् विकृतावुपदिष्टपदार्थविषयाः, केचित् अप्रकृतिविकृत्यात्मककर्मोपदिष्टपदार्थविषयाः, केचित् विकृतौ उपदिष्टातिदिष्टपदार्थविषयाः, केचित् विकृतौ अतिदिष्टमात्रविषया इति। तत्र [१] प्रकृतौ उपदिष्टपदार्थमात्रविषयो भावविकल्पो भावाभावविकल्पश्च यथा— मासाग्निहोत्राकृतौ नित्याग्निहोत्रे पयआदिद्रव्याणां विकल्पः। दध्यभिषवणतदभावयोश्च विकल्पः 'न दध्यभिषवेत् अपि अपेक्षिते के' इति बह्वृचब्राह्मणम्। [२] विकृतौ उपदिष्टयोर्भावयोः भावाभावयोश्च विकल्पो यथा— वाजपेये प्राजापत्यानां नवपशूनां सहालम्भो ब्रह्मसामकाले वा इत्युपदिष्टयोः कालयोर्विकल्पः, 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति षोडशिग्रहतदभावयोर्विकल्पः। [३] अप्रकृतिविकृत्यात्मककर्मोपदिष्टयोर्भावयोः अभावयोश्च विकल्पो यथा— आधाने पवमानेष्टीनां पूर्णाहुत्या सह विकल्पः, तत्रैव वाजसनेयिनां 'ऋतु-नक्षत्र-समाप्त-वास्तु-मह्य-चावरण-इष्टापूर्त-वारस्मण-सार्पराज्ञीभिर्वा कुर्यात्' इति पूर्ववदुदाहरणम्। [४] विकृतौ उपदिष्टयोरतिदिष्टयोर्भावाभावयोश्च विकल्पो यथा— 'इष्ट्या पशुना सोमेन यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इत्यत्र इष्टिसन्दोपाचायाम् अमावास्याविकृतौ अतिदिष्टाया अमावास्यायाः, उपदिष्टायाश्च पौर्णमास्या विकल्पः, एवं इष्टिसन्दोपाचायां पौर्णमासीविकृतौ अतिदिष्टायाः पौर्णमास्याः, उपदिष्टायाश्च अमावास्याया विकल्पः। भावाभावोदाहरणं तु 'न तौ पशौ करोति' इति पशुयागरूपायां विकृतौ अतिदिष्टयोः आज्यभागयोः, उपदिष्टस्य च तन्निषेधस्य विकल्प इति। [५] विकृतौ अतिदिष्टमात्रविषयस्तु भावयोर्विकल्पो यथा 'जाघन्या पत्नीः संयाजयन्ति' इति। तत्र पत्नीसंयाजानां जाघन्याः साधनत्वं न भवति, अप्राकृतत्वात्, किन्तु प्रकृतितो वैकल्पिकतया प्राप्ताया आज्यस्य नियमार्थम्। तत्र चोपादेयत्वात् जाघन्या एकत्वं विवक्षितम्। ततश्च पशुगणे प्रतिपशुकार्यं सम्मार्जनश्रुतिः इति जाघनीसमुच्चयन्यायात् मतेन (१२।४।६।१०–१६) या काचित् जाघनी उपादेया इति निर्णयः। इदं च द्वादशे 'प्रतिनिधौ तु पूर्ववदर्थकर्म स्यात्' इत्यधिकरणे उक्तम् (१२।४।६।१०)। विकृतौ अतिदिष्टस्य आज्यस्य अनुपदिष्टेन अतिदिष्टेन भावेन विकल्पे उदाहरणम्। अत्र च कश्चिदाह प्रकृतौ अवैकल्पिक एव, विकृतौ तु नियमानुपदेशेऽपि पदार्थान्तरविकल्पवशात् अर्थात् स्वाभावेन सह विकल्पं भजते, तादृगुदाहरणं अन्यो भेदे। तद्यथा— अग्नीषोमीये प्रयाजशेषाभिघारणं वपाया अवैकल्पिकमेवासीत्, प्राजापत्येषु पशुषु तु वाजपेये विहितं चतुर्धाकरणकाले ब्रह्मसामकाले वेति। तत्र प्रयाजशेषाभिघारणं प्राजापत्यवपानां वैकल्पिकं भवति ब्रह्मसामकालपक्षे प्राजापत्यवपाऽभिघारणार्थं प्रयाजशेषस्याभावात्। चतुर्थे निरूपितम् (४।१।१४।३३–३९) इति।

तदेवं प्रकृतिविकृतितदुभयात्मककर्मनिष्ठा उपदिष्टातिदिष्टभावाभावविषया दश विकल्पभेदा निरूपिताः।

अथेदमुच्यते, ये कथिता पूर्वं भावाभावविषया विकल्पभेदा उक्ताः, ते सर्वे पदार्थविषयाः तत्प्रतियोगिकाभावविषया एव। केचित्तु पदार्थविषयाः, तत्प्रतियोगिकाभावव्यतिरिक्ताभावविषयाः अपि सन्तो भावविषया अपि अभावान्तरविषया अपि विकल्पाः सम्भवन्ति। तद्यथा अग्निष्टोमसंस्थेव विश्वजिदादिरहर्गणः, अथवा काम्या। संस्था च अत्यग्निष्टोमादिसंस्थान्तरप्रकृतिरूपा उक्थ्यादिसंस्थान्तरोपरमाभावरूपा। न चात्र समुच्चयः सम्भवति, विहितस्य

तव्यः, न वेति विचारे सिद्धान्तमाह। यजमानप्रधाने यजमानप्रधाने कर्मणि विकारः यजमानपदस्यैकवचने ऊहः 'यजमानो आयुराशास्ते', 'यजमाना आयुराशासते' इति यथायथं स्यात्। यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं तत्संस्कारको वा प्रकाशयति। प्रहरणफलं च आयुराशास्त यजमानस्य इति यजमानस्य प्राधान्यम्। तस्मात् यत्र अनेके यजमानाः तत्रोहः कर्तव्यो भवति वचनस्य। के.

* विकारो न अग्नियुप्रैवागानस्य 'प्रास्मै' इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे। ९।३। ८।१३. मीको. पृ. ३३९. 'अग्नियुप्रैवागानस्य प्रास्मै इति पदस्य०' इत्यत्र अधिकरणं द्रष्टव्यम्। * विकारः नाम कार्यान्तरप्रमाणम्। बाल. पृ. ८.

■ विकारः सन्नुभयतोऽविशेषात्। ६।७।१। १८॥

विश्वजित् यागः ज्योतिष्टोमस्य विकारः, ज्योतिष्टोमे च द्वादशशतं दक्षिणा। तेन द्वादशशतधनेन यजमानेन ज्योतिष्टोमस्य विकारः सन् विश्वजित् कर्तुं शक्यते एव। अथ द्वादशशतात् धनात् न्यूनधनेन अधिकधनेनापि वा उभयत न्यूनाधिकोभयपक्षयोरपि कर्तुं शक्येत। अविशेषात् विशेषाभावात्। तत्र हि सर्वस्वं देयम्। यस्य च यावत् धनं तत् सर्वं स्वम्। तस्य परिमाणेन द्वादशशतात् न्यूनं वा स्यात् अधिकं वा स्यात्। यावत् धनं तावति सर्वस्मिन् दत्ते सर्वस्वदानस्य न विशेषोऽस्ति। तस्मात् द्वादशशतात् न्यूनधनेन अधिकधनेन वा सर्वस्वं दत्त्वा विश्वजित् कर्तव्यो भवति इति पूर्वपक्षः।

अधिकं वा प्रतिप्रसवात्। १९॥

द्वादशशतात् अधिकधनेन न्यूनधनेनापि वा विश्वजित् कर्तव्यः इति प्राप्ते पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह। यस्य द्वादशशतात् अधिकं धनम् आनानीयं स्यात् तेनैव विश्वजित् कर्तव्यः, न तु ततो न्यूनधनेन। प्रतिप्रसवात्। ज्योतिष्टोमे तावत् सर्वस्वस्य प्रतिप्रसव उच्यते। द्वादशशतं निधाय तत्र आह 'एतावता वाव ऋत्विज आनमनीया अपि वा सर्वस्वेन' इति। तत्र यदि ऋत्विजः द्वादशाधिकेन शतेन नानमन्ति, नानमितास्तनो न्यूनेन धनेन। तथा च अत्र सर्वस्वदानेन अधिकमेव ग्राह्यं भवति। यथा च ज्योतिष्टोमे तथैव विश्वजित्यपि। तस्मात् द्वादशशतं ततो अधिकं सर्वस्वम्। तस्मात् न्यूनधनस्य नाधिकारः। अत्र भाष्यात् द्वादशशतधनेन ततोऽधिकधनेन वा विश्वजित् कर्तव्य इति सिध्यति। सूत्रस्वारस्येन तु द्वादशशतादधिकधनेनैव विश्वजित् कर्तव्यः इति सिध्यति इति विशेषः।

अनुग्रहाच्च पादवत्। २०॥

यस्य द्वादशशतादधिकं धनं तेन विश्वजित् कर्तव्यः इति उक्ते सिद्धान्ते हेत्वन्तरस्य कथनपरं सूत्रम्। इतश्च सर्वस्वं नाम द्वादशशतादधिकं धनम्। अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति। तत्र सर्वस्वदाने अधिकाय धनस्य अनुग्रहो भवति। पादवत्। यथा कार्षापणे दत्ते कार्षापणपादोऽपि दत्तो भवति। तत्र कार्षापणदानं पाददाने अनुग्रहं विधत्ते। तद्वत्। तस्मात् द्वादशशताधिकधनस्यैव विश्वजिदधिकार इति सिद्धान्तः। पादः चतुर्थोऽध्या. ६ के.

* विकारास्तु कामसंयोगे ■ नित्यस्य समत्वात्। ३।६।१६।४३॥ नित्यस्याश्रयस्य अवश्यादि कामो गुणो विकार इति नित्यतन्त्रस्य सामान्येन आश्रयस्य नित्यधर्मानुगतानिरोधात् इति न्यायःसन्दरम्। सरस्वाधिकरण सिद्धान्तसूत्रमिदम्। सु पृ. ८४८. * 'तत्सोपकार साकाङ्क्षा. प्रथम प्राकृते. सह। यत्रध्यन्ते, तमीपस्थ विकारा. प्रोक्तस्य चोदितम्॥' वा ३।१।४।१२पृ ४१४. * विकारेण प्रकृतिलिङ्गसंयोगो यथा–'नैर्ऋतअश्वनेगावपूतानाम्' इति। भा १०।४।१।१। तत्र तुषकणविमोक दृष्ट्वा फलम्, नूतमवघातकार्ये पर्तते नानात्वमिति। तुप् * 'विकाराश्च न भेदः स्यादर्थस्याविकृतत्वात्। १२।१।१।८॥ गुणकालविकारात् न तन्त्रभेदः स्यात् सत्यपि तद्विकारे अर्थस्य अङ्गजन्योपकारस्य अविकृतत्वात् इत्यर्थः। सोम. १२।१।२ पृ ८४७. * यदि च सत्यपि प्रयोजनत्वे कार्याभावादनुष्ठानं ततो वरुणप्रघासेषु उत्तरवेदिकैरवाद्वैर्मासत्वात् नार्यसिद्धे, सत्यपि देशभेदे कर्तृभेदे च 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात्' इत्यनेन न्यायेन पृथग्भक्तानि न क्रियेरन्। शा. १२।१।२. * विकाराणां सोमस्य दर्शपूर्णमासोचा-

कालता । ५।८।१।२६. ' सोमविकाराणां दर्शपूर्णमासाभ्यां प्राक् नानुष्ठानम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

ꣽ विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६॥

अग्नीषोमीये पशौ ' पृषदाज्येन अनुयाजान् यजति ' इत्युक्तम् । तत्र प्रयाजानुयाजाज्यधारणार्थं यत् उपभृन्नाम पात्रम्, तदेव पृषदाज्यमपि धारयेत् उत पृषदाज्यधारणार्थं भिन्नं पात्रं स्यात् इति विचारे उपभृत्पात्रं प्रकृताविव एकमेव पात्रं स्यात् इति उक्ते पूर्वपक्षे प्राप्ते तुशब्देन तं निरस्य सिद्धान्तमाह । अनुयाजानां विकारे प्राकृतत्र पात्र् नैकपात्रत्वात् अग्नीषोमीये पशौ पृषदाज्यद्रव्यकत्वे सति पृषदाज्यधारणार्थं पात्रभेदः भिन्नं पात्रं स्यात् । अर्थभेदात् घृतस्य आज्यस्य प्रयाजार्थत्वात् पृषदाज्यस्य च अनुयाजार्थत्वात् । अर्थभेदात् द्रव्यभेदात् इति वा । नहि द्रव्यद्वयं मिथ एकपात्रे ग्रहीतुं शक्यम् । के.

● विकारेषु प्रकृतिवदुपचारः । शा. २।३।६।१७ पृ. ५१२.

● विकारपक्षे तु ज्ञायते प्रकृतस्य पूर्वेतरं वस्तुतः इति प्रत्यक्षतः अन्यतरस्मिन् कर्मणि निमित्ते प्राकृत एव हात मं भवति इति लाघवप्रसङ्गः । शा. १।६।१६।४२ पृ. १०६५.

● विकार्यं ईप्सितं कर्म । गङ्गादशाविशदोत्पादन विकृतिः । यथा ' कीकृतेनहणि ' । मणि. पृ. १२१.

● विकृतिः अग्नीषोमीयपशुः सान्नाय्यस्य । ८।२।२।१०–१८. मीको. पृ १०० ' अग्नीषोमीय पशु सान्नाय्यविकार ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकृतिः अग्नीषोमीयपशुः सान्नाय्यस्य । तथापि पयसः न दधः । ८।२।३।१५–१८ मीको. पृ १०० ' अग्नीषोमीयः पशुः पयोविकारः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकृतिः नामेन, निमित्तेन वा चोद्यते । भा. १२।२।६।२१, ● विकृतिः नामे वा निमित्ते वा सत्यते आगच्छति । १२।२।१२।३।११. ● विकृतिः प्रकारमपेक्षते । स चैकः प्रकारः ( विकृत्या अपेक्ष्यते )। प्रकारापेक्षाया प्रमाणमस्ति। न शास्त्रापेक्षायाम् । गौणेन साधयेत् । कथं ह्यपेक्षाया सादृश्येन आग्नेये बुद्धिर्भवति । आग्नेयेनापि प्रकार. ( सगतः प्रथममुपस्थाप्यन्ते )। तत्र एतानि विकृतिः । ते चापेक्षिता. । तत्रापि पदार्थाश्च अनपेक्षितानि, व्यवहितानि च । तस्मात् कृत्स्नं चोदकः प्रापयति । कृत्स्नप्राप्तिरदानोपसंहारः । टुप्. १०।७।१।३१.

ꣽ विकृतिः प्रकृतिधर्मत्वात् तत्काला स्याद् यथाशिष्टम् । ५।३।११।१९ ॥

वाजपेयाख्ये तृतीये पर्वणि प्रथमदिने ' अग्नयेऽनीकवते प्रातरष्टाकपालः , मरुद्भ्यः सान्तपनेभ्यो मध्यंदिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इति इष्टित्रयं विहितम् । इदं यहकाल सन्दकाल वेति विचारे पूर्वपक्षमाह । विकृतेः प्रकृतिधर्मत्वात् अनीकवत्यादिविकृतिः यथाशिष्टं तत्काला प्रकृतिकाला स्यात् । प्रकृतेरेव धर्मा यस्या सा प्रकृतिधर्मा विकृतिः । प्रकृतिधर्मैः सांयः प्रकृतिधर्मैरत तस्मात् । विकृतौ अतिदेशेन प्रकृतेर्धर्मा एव भवन्ति । प्रकृतिश्च दर्शेष्टिः द्व्यहकाला । कालोऽपि धर्मविशेषः । तस्मात् यथाशिष्टं चोदकेन शिष्टं विहितं प्राप्ति अनतिक्रम्य द्व्यहकालत्वमनतिक्रम्य तत्काला तस्याः प्रकृतेः काल इव कालो यस्याः विकृतेः सा विकृतिः तत्काला द्व्यहकाला स्यात् । तस्मात् आनीकवतीसान्तपनीयागृहमेधीयाः द्व्यहकालाः स्युः इति पूर्वः पक्षः ।

अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् । २० ॥

वाजपेयेषु अनीकवत्सान्तपनीयाः द्व्यहकालाः स्युः इति पूर्वपक्षे प्राप्तेऽथे. अपि वा– शब्दः । आनीकवती, सान्तपनी, गृहमेधीया च इष्टिः क्रमकालसंयुक्ता । क्रमश्च कालश्च ताभ्यां संयुक्ता । वाक्यिता इत्थ. क्रमेणोक्ताः । प्रातः मध्यंदिने सायं इति तासां कालाः उक्ताः । तस्मात् ता सा इष्टि. सद्य एव क्रियेत । तत्र सद्यःकालत्वे साक्षाद् विहितेऽपि ' सद्य कार्या ' इति विधेः क्रमकालविधानेन अनुमानात् । यस्मादेताः विशिष्टक्रमकालसंयुक्ताः तस्मात् सद्य कार्या इति अनुमीयते । तस्मात् प्रकृतेः दर्शेष्टेः यो धर्मो द्व्यहकालत्वम्, तस्य लोपः स्यात् अनीकवत्यादिषु । तथा च एता अग्न्याकाला न द्व्यहकालाः ।

कालोत्कर्ष इति चेत् । २१ ॥

साकमेधीये तृतीये पर्वणि पूर्वदिने अनीकवतीसान्तपनीयागृहमेधीया इष्टयः क्रमेण प्रातः, मध्यंदिने, सायं चेति विहिताः । ताः सद्यस्काला भवेयुः इति सिद्धान्तिना उक्ते पूर्वपक्षी आह । ननु कालस्य उत्कर्षः स्यात् । पूर्वदिने प्रातर्मध्यंदिने सायं चेति इष्टयः उपसंख्यास्ते, परेद्युः प्रातर्मध्यंदिने सायं चेति भवन्ते । न च चोदकस्य प्रातरादिकालविशेषे विरोधोऽस्ति । तस्मात् ग्रहकाला एता इति ।

न तत्संबन्धात् । २२ ॥

साकमेधाख्ये तृतीये पर्वणि पूर्वदिने प्रातर्मध्यंदिने सायं इति विहितानां अनीकवतीसान्तपनीयागृहमेधीयानामिष्टीनां कालोत्कर्षेण ग्रहकालतां पूर्वपक्षिणा पुनरुक्तं सिद्धान्ती निषेधति । न कालोत्कर्षः भवितुं अर्हति । तत्संबन्धात् अङ्गैः सह प्रधानानां एकेनैव प्रातरादि कालेन संबन्धात् संबन्धस्य भवनात् । तत्र अन्यकालेषु अङ्गेषु अन्यकालेषु च प्रधानेषु कृतेषु न स्यात् तेषु कालेषु कृत स्यात् । तस्मात् न ग्रहकालता किंतु सद्यस्कालतैव । के.

* विकृति. प्रकृतान् धर्मान् चोदकेन गृह्णाति । भा. ५।४।७।२२ * विकृति । यत्र न समग्राङ्गोपदेशः सा विकृतिः । यथा सौर्यादिः । विकृतौ हि प्रायः प्रधानमेव, तदीयं हि विधीयते अङ्गकलापस्तु अन्यतो गृह्यते । यतो गृह्यते सा प्रकृतिः, यत्र गृह्यते सा विकृतिः । प्रकृतिविकृतित्वं चेदं पारिभाषिकमेव । न तु सूत्रत् पदवत्य वाक्यम् । मीन्या. * विकृतिर्हि उपकाराकाङ्क्षिणी कल्प्तोपकारान् पदार्थान् उपमितलक्षितप्रापणेन गृह्णाति । टुप्. ४।८।८।७. * प्रकृत्या हि विकृतिः तुल्यशब्दा भवति । भा ८।२।५।२५. • विकृतयः ऐन्द्राग्नादयः साङ्गा. पौर्णमास्याममावास्याया वा कर्तव्याः 'य इष्ट्या पशुना॰' इति वचनात् । तेन सद्यस्काला विकृतयः । ५।४।७।२२–२४. मीको. पृ. ११२॰ 'ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनां सद्यस्कालता' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतय. महाप्रकरणोपनिपातिन्यः क्रमप्रकरणयोः क्रमस्य अर्थविप्रकर्षे उदाहरणम् । तासु हि यत् प्राकृताङ्गमध्यपातित्वेन नोत्पन्नं तत् पुरस्तात् परस्तात् वा अनास्थितक्रमभाग् भवति, प्रकरणस्य कल्प्तोपकारे प्राकृते व्यापृतत्वात् । वा. ३।३।७।१४ पृ. ८३३, * विकृतयः यागान्तरापेक्षित्वात् स्वप्रकरणस्थानमपि अतिक्रम्य प्राकृतं वदन्ति इति सर्वत्र स्थापितम् । ३।६।१।८. * विकृतयः सद्यस्कालाः । भा.५।४।७।२४, * विकृतयः सर्वाः पूर्वपक्षाः, चोदनावाक्यानां असत्त्वात् । ८।१।१६।२८. * विकृत्या प्रकृते. प्रधानप्रसङ्गसिद्धिः यथा तीर्थश्राद्धेन दर्शश्राद्धस्य । बाल. पृ. १४९, * विकृते. नक्षत्रान्तरप्रकरण सदशोद्भूतिक वरुणप्रघासानामुक्तं सप्तमे प्रयत्नाधिकरणं । तत्र हि 'उपाम वपन्ति' इति वरुणप्रघासाम्नातप्रकरणपाठीतमपि 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासैकवाक्यता प्रकृतदेशावगतप्रकरण बाधित्वा चातुर्मास्यानामेव 'अत्र' इति वाद इत्युक्तम् । पृ ११–११. * विकृते. उपकारकपदार्थाकाङ्क्षा न तु प्राकृतपदार्थमात्राकाङ्क्षा । मीन्या.

※ विकृतेः प्रकृतिकालत्वात् सद्यस्कालोक्ता विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् । ५।४।७।२३॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिः उक्ता दर्शपूर्णमासाभ्यामुपरिष्टात् कर्तव्या विकृतिः इत्युक्त्वा स्यात् । वेदिकरणादि च इतराङ्गसहित प्रधानं च एकस्मिन्नेवाहनि कर्तव्यम् । तयोः अमावास्यापौर्णमासी रूपकालयोः 'य इष्ट्या पशुना वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इति वचनेन प्रत्यक्षेण शिष्टत्वात् विहितत्वात् । ग्रहकालत्वे गृहीते तु प्रकृतिकालत्वग्रहणात् दर्शपूर्णमासप्रकृतेर्येन ग्रहकालेन चोदकेन प्राप्तम् । तस्य अनुष्ठाने ग्रहणप्रसङ्गः । परंतु तत् आनुमानिकत्वात् प्रत्यक्षविधानेन बाध्यते । तस्मात् सद्यस्कालत्वं इति सिद्धान्तः ।

'उत्तरा विकृतिः' इत्यत्र 'उत्तरा सृतिः' इति मोम–यू–कु–पाठः । तनु विस्तारे इति धातोरतिशयनिष्पत्तिः । सृति इष्टिसमुदायः इत्यर्थः । इति ग्रन्थभेदे अपि अर्थः समानः ।

'उत्तरा तति.' अत्रैव पाठो युक्तः। विकृतिः इति पाठे तु उत्तरा इति विशेषणं व्यर्थं भवेत्। तस्मात् भाष्ये ततिशब्दाभावेऽपि सूत्रगतोत्तरेति विशेषणत्वात् 'वृ' पुस्तकपाठ एव साधीयान्।

द्वैयह्नकाल्ये तु यथान्यायम्। २३ ॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिः उक्ता विकृतिः सद्यस्काला इति मतेन सिद्धान्ते उक्ते तुशब्देन तं निरस्यन् पूर्वपक्षमाह। सद्यस्कालत्वं न युक्तम्। द्वैयह्नकाल्ये द्व्यहकालत्वे तु स्वीकृते यथान्याय अतिदेशस्य न्यायप्राप्तिकस्य अनुष्ठानं स्यात्, तच्च युक्तम्। तस्मात् इष्टिप्रकृतौ कर्तव्ये एव। द्व्यहकाल-मतिनिर्वपेत् तदहरेव द्वितीयप्रकृतस्य तृतीयेऽहनि समापनीया इत्यादि। द्वे अहनी कालः यस्याः सा द्व्यहकाला, द्व्यहकालाया भावः द्वैयह्नकाल्यम्। 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' (पा. ७।३।३) पदान्ताभ्यां यकारवकाराभ्यां परस्य आदेरच वृद्धिर्न स्यात्। किंतु ताभ्यां यकारवकाराभ्यां पूर्वौ ऐजागमौ ऐकारौकारौ क्रमेण स्तः। इत्यनेन 'द्व्यह' इत्यस्य 'द्वैयह' इति निष्पन्नम्। 'द्वैयह्ने वा यथान्याय' इति म-कु पाठे वाशब्दः सिद्धान्तपक्षनिरासार्थः। द्व्यह्नस्य भावः द्वैयह्न इति विग्रहः। अर्थस्तु उक्त एव।

पचनाद्वैककाल्यं स्यात्। २४ ॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम' इत्यादयः दर्शपूर्णमासाभ्यामुत्तरा विकृतयः द्व्यहकालाः स्युः, न सद्यस्काला इति सूत्रेण पूर्वपक्षे प्राप्ते पुनः सिद्धान्तमाह। वाशब्दः पूर्वपक्षनिरासार्थः। 'य इष्ट्या पशुना सोमेन वा यजेत स पौर्णमास्याममावास्यायां वा यजेत' इति वचनात् अङ्गसहितप्रधानानुष्ठितस्य प्रयोगस्य विधायकात् वचनात् ऐककाल्यम्, एकः अहोरूपः कालः यस्याः सा एककाला, तस्याः भावः ऐककाल्यम्, एकाहकालत्वं सद्यस्कालत्वं स्यात्। अनेन चोदकस्य बाधः इति भावः। के.

सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्। २५ सिद्धान्तसूत्रम् ॥

सान्नाय्यं शृतं दधि च अमावास्यायाम्। तद्विकारा आमिक्षा पयस्या इति। अग्नीषोमीयपुरोडाशस्य विकाराः 'अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाक' इत्यादयः सोमात् अग्निष्टोमानुष्ठानोत्तरं स्युः, न प्राक्। प्रकृतिवत्। दर्शगतसान्नाय्यरूपा प्रकृतिः। पौर्णमासीगताग्नीषोमीय पुरोडाशरूपा प्रकृतिश्च यथा इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति तद्वत्। प्रकृतिवत् विकृतिः इति न्यायात्।

तथा सोमविकारा दर्शपूर्णमासाभ्याम्। २६ ॥

अतिदेशेन सिद्धान्तमाह। यथा सान्नाय्याग्नीषोमीयपुरोडाशविकाराः सोमादूर्ध्वं तथा सोमविकाराः ज्योतिः गौः आयुः इत्येवमादयः, ते दर्शपूर्णमासाभ्यां ऊर्ध्वं स्युः। प्रकृतिवत्। यथा प्रकृतिः अग्निष्टोमः, इष्टिपूर्वाधानपक्षे सोमादूर्ध्वं भवति, तद्वत् विकृतिरपि। के.

● विकृतेः प्रधानकरण सकृद्देशेन असकृद्देशेन च भवति। शाब. पृ. ९, ● विकृतेः प्रधानकरणं सकृदुद्भूतिकं प्रकृतेस्तु असकृदुद्भूतिकम्। पृ. ११, ● विकृत्योः प्रधानतन्त्रं यथा– आहिताग्नेः युगपदग्निगृहदाहादौ क्षामवत्यादीनाम्। पृ. १८८, ● विकृत्योः प्रधानप्रसङ्गो यथा– या विकृतयो निमित्ते कामे च विहिताः, तत्र काम्यप्रयोगेण नित्य–(नैमित्तिक) प्रयोगस्य प्रसङ्गसिद्धिः। स्मार्तोदाहरणं तु दर्शश्राद्धविकृतिभूतयोः महालय– नित्यश्राद्धयोः. पूर्वेण उत्तरस्य प्रसङ्गसिद्धिः। पृ. १८९, ● विकृतीनां अविकृतवच्च दीक्षा प्राकृती स्वरवर्य प्रमप्रत्यक्षोपदेशवशेन प्रधानतेऽसत्यपशक्तौ 'तद्ग्रहणाद्वा स्वधर्मः स्यात्' (३।७।२४।५१) इत्येतेन न्यायेन प्रयोगवचनस्य चोदकापेक्षितत्वेन दुर्बलत्वात् चोदकप्रापितस्वरूपमेवेष्टम्। शा. ३।३।२।५ पृ. ८२१ ● विकृतीनामैन्द्राग्नादीनां सद्यस्कालता। ५।४।७। २३–२४, मीको. पृ. ११२० 'ऐन्द्राग्नादीनां विकृतिरूपाणां' इत्यत्र द्रष्टव्यम्। ● विकृतौ अग्निचयनस्य अतिदेशः। १०।८।११।२३–२८. मीको. पृ. १२७ 'अग्न्यतिग्राह्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। ● विकृतौ अग्निशब्दस्य ऊह निर्वापमन्त्रे। ९।१। १३।३८–३९ मीको. पृ. १२२६ 'ऊह अग्निशब्दस्य विकृतौ निर्वापमन्त्रे' इत्यत्र अधिकरणं द्रष्टव्यम्। ● विकृतौ अतिदिष्टानां प्रकृतानामपनोवादिना बाधः। आपू. १०।१।१, ● विकृतौ अतिदिष्टपदार्थे

विषय. समुच्चय. 'मसने उभे कुर्यात्', 'गोसवे उभे कुर्यात्', 'अपचितो अपि एकाहे उभे बृहद्रथन्तरे कुर्यात्' इति। बाल. पृ. १७७ ● विकृतौ अपि उद्देशदेशानतमेन उपलक्षण न्यायेन अनुगयट्कारे। वि. ३।७।१६. ● विकृतौ अपूर्वपदार्थाहरणं प्राकृतधर्माणां नास्ति। ३।८।१६।३१. ● विकृतौ अर्थश्चोदकेनातिदिश्यते, न शब्दो वाचक स्तैन्द्र यव्याम। टुप्. ९।१।१।२।१०. वर्णकं २. ● विकृतौ इडानिगदे यजपति शब्दस्य न ऊहः। भा. ९।१।१८।८०. मीको पृ. ३१९३ 'यजत्यधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम्। ● विकृतौ उत्तरस्तम्भः। सु पृ ८५५. ● विकृताबुपदिष्टे-पदेशवत्ताद्विभि प्राकृत पदेपदार्थानां बाधः। १०।७।१७।५८–६०. मीको. पृ. १८८३ 'काम्यासु विकृतिषु उपदिष्टे.' इत्यत्र अधिकरणं द्रष्टव्यम्। ● विकृतौ उपदिष्टातिदिष्टपदार्थविषय समुच्चय. यथा–उक्थ्यादौ पशुद्वयस्य समुच्चय, मारुत्वेध्वदक्षिणासमुच्चय.। वाजपेयादिषु मेषभुगस्य अजादिजातेश्च समुच्चय.। दीक्षाहुतिमन्त्राणां आकूतिगामि प्रयुजे स्वाहा–आकूत्यै प्रयुजेऽग्नये स्वाहा इति षण्णां पण्णां मन्त्राणां समुच्चयः। वाजपेये पशुर्णुक्तरथेन सह अभ्यर्थुभागस्य समुच्चयः। नवनेष्टी उपहोमाना नारिष्टहोमानां च। गृहस्पतिमन्त्रे अतिदिष्टस्य बार्हस्पत्यग्रहस्य अतिदिष्टग्रहाणां च समुच्चयः। वाजपेये प्राजापत्यपशूनां सप्तदशपशूनां च समुच्चयः। सारस्वत्य आमनहोमानां अनुयाजे सह समुच्चय.। सदःप्रवे उपमानीय पत्नीनां अतिदिष्ट उद्गातृ-कर्तृत्वा च समुच्चय। अञ्जनाभ्यञ्जनीये गौगुल्वाभ्यञ्जनेन नवनीतेनातिदिष्टेन समुच्चय। महाग्नौ वार्णेण अहतस्य समुच्चय.। महाग्नौ उपदिष्टश्रोत्रादिसमुदायस्य अतिदिष्टशाखाग्रादिभाष्या च समुच्चयः। स्तोमविवृद्धौ उपदिष्टातिदिष्टसाम्नां समुच्चयः। पशुगणे उपनट् होमे गुदानां समुच्चय. प्रतिविचिन्तात् इति। बाल. पृ. १७७–१७८, ● विकृतौ उपदिष्टपदार्थविषय. समुच्चय यथा–दशपेये 'दश ब्राह्मणाः सोमान् भक्षयन्ति' इति ब्राह्मणजाते. 'दश दश एकैकं चमसमनुप्रसर्पन्ति' इति तातार्थ्यायाश्च समुच्चय.। पृ. १७७, ● विकृतौ एव दशमोद्भूतिक अवान्तरप्रकरणम्। पृ. ११, ● विकृतौ औपदेशिकयोः मारणे बाध्यबाधकता यथा–गादिरनैस्यूपयो.। पृ. १३३, ● विकृतौ औपदेशिक्यो भावाभावयोः बाध्यबाधकत्व यथा–अतिरात्रे षोडशिग्रहणाग्रहणे। पृ. १३३. ● विकृतौ वर्धमानात्प्राप्ता उपानत्पादन अतिदिश्यते। मीन्या ● विकृतौ क्वचित् प्रकृतिधर्मानतिदेशः। वि. ७।१।१९, ● विकृतौ क्वचित् 'बृहत् पृष्ठं भवति' इति श्रूयते। तत्र विधिचोदकाभ्यां बृहद्रथन्तरयोर्विकल्पः इति पूर्वपक्षः। पृष्ठे बृहत एव नियमः ■ विकल्प. इति सिद्धान्त.। १०।७।१६

## ● विकृतौ चापि तद्वचनात्। ५।३।७।२२॥

द्विपत्नीके बहुपत्नीके च विकृतिप्रयोगे 'पत्नी सन्नह्य' इति मन्त्रः ऊहितव्यो न वेति विचारे विकृतौ चापि प्रकृतौ इव नोहितव्यः, 'यथा प्रकृतौ तद् विकृतौ' इत्यतिदेशवचनात्। प्रकृतौ च एकत्वमविवक्षितम्। द्विपत्नीकत्वादावपि द्वित्वं बहुत्वं एकत्वं च न विवक्षितम्। तस्मात् पत्नीशब्दे अविकारः इति सिद्धान्त। ●

## ● विकृतौ त्वनियमः स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणमार्गं यथेति स्यात्। १०।७।२९।६४॥

विकृतौ 'सौमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यादौ विकृतौ व्रीहियवयोः अनियम विकल्प स्यात्। ग्रहणस्य व्रीहिनिर्देशस्य गुणार्थत्वात् व्रीहिनिर्देश. शुक्लत्वादिगुणग्रहणार्थं न यागसम्बन्धार्थ.। व्रीहयश्चेत् शुक्ला, यागस्तु व्रीहिभिर्यवैर्वा। पृषदाज्यवत् यथा 'पृषदाज्येनानुयाजान् यजति' इत्यत्र आज्य पृषत्तासम्बन्धार्थं भवति तद्वत्। तस्माद् विकल्प। उभयोश्च व्रीहियवयो चोदकेन प्रदिष्टत्वात् प्राप्तित्वात् विकल्प। गुणमार्गं 'शुक्लानां व्रीहीणां' 'कृष्णानां व्रीहीणां' इत्यादि गुणश्रवणे तु 'यदा इति स्यात्' ('यदि वे स्यात्' इत्यपि पाठः) यदा व्रीहय. तदा शुक्ला इति विधानार्थं स्यात्। तस्मात् विकल्पः इति पूर्व. पक्षः।

चेदनात् अधिकमेव आज्यभागाख्यं कर्म चोदकप्राप्त-प्राकृताज्यभागानुष्ठानोत्तरं कर्तव्यं स्यात् तस्य अर्थवत्त्वात् कर्मान्तरकल्पनात् । तेषु श्रुतिगुणविधिशाकलधर्मवाक्येषु हि सत्सु अपूर्वत्वात् वचनस्य अपूर्वार्थत्वात् तादर्थ्यं स्तुत्यार्थकत्वं स्यात् । न तु इह तत् किमपि । तस्मात् प्राकृताज्यभागाभ्याम् आज्यभागरूपमेव कर्मान्तरम् उप-दिश्यते ।

सिद्धान्ते तु— आज्यभागकर्मणी अधिकारे अभ्यावृत्ते कर्मान्तरे प्राप्येते ये । अर्थवत्त्वात् कर्मान्तरत्वे तस्यैव पुनः श्रवणस्य अर्थवत्त्वात् । ते च कर्मणी अधिके प्रधानयागादुपरिष्टात् कार्ये पाठक्रमात् । अर्थवादः-गुणाभावे वचनात् अर्थवादगुणस्य अर्थवादत्वस्य प्रयो-जकधर्मस्य विध्येकवाक्यत्वस्य अभावे असत्त्वे वच-नात् आज्यभागयोः पुनर्वचनात् विध्येकवाक्यत्वाभावेन अर्थवादत्वासंभवात् इति चेत् । तेषु हि तादर्थ्यम्, हि यत्. तेषु ‘आज्यभागावाज्यभागौ’ इत्यादिवाक्येषु गुण-विधानं युज्यते– इति व्याख्यातम् ।

प्रतिषेधः स्यादिति चेत् । २८ ॥

आज्यभागौ इति तत्कर्मकत्वे लक्षणाप्रसङ्गात् न कर्मा-न्तरवचनम् । किंतु परिसंख्यया आज्यभागेतरयोः अङ्गानां प्रतिषेधः स्यात् । तस्मात् समाख्या इति पक्षान्तरम् ।

नाश्रुतत्वात् । २९ ॥

चतुर्थपञ्चमाभ्यां पञ्चमं पक्षं दूषयति । न प्रतिषेधः, अश्रुतत्वात् । नहि अत्र प्रतिषेधवाचि किंचित् पदं श्रूयते । तस्मात् परिसंख्या । किंतु कर्मान्तरवचनम् ।

अग्रहणादिति चेत् । ३० ॥

न कर्मान्तरचोदना । अत्र आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषामङ्गानां चोदकेन ग्रहणम् । स्वशब्देन गृहीतयोः आज्यभागयोः चोदकेन अग्रहणात् । तथा च प्रकृतिवदेव सर्वमनुष्ठानम् । तस्मात् चोदकेन अग्रहणात् आज्यभागौ यजतीति ग्रहणम् । इति षष्ठः पक्षः ।

न तुल्यत्वात् । ३१ ॥

नैतदेवम् । चोदको यथा अपूर्वतया इतराण्यङ्गानि गृह्णाति तथा आज्यभागावपि । तस्मात् अन्येषां तुल्य-त्वात् चोदकेन अगृहीतयोराज्यभागयोर्ग्रहणं इति वक्तुं न युक्तम् ।

तथा तद्ग्रहणे स्यात् । ३२ ॥

ननु चोदकेन आज्यभागावेव गृहीतौ तथा च आज्य-भागाख्येन चोदकस्य आज्यभागयोः संकोचः इति सप्तमः पक्षोऽस्तु इति चेन्नेत्याह । तद्ग्रहणे चोदकेन आज्य-भागयोरेव ग्रहणे तथा स्यात् अग्रहणेन तुल्यं स्यात् । चोदको यथा आज्यभागौ गृह्णाति तथा इतराण्यपि अङ्गानि गृह्णीयात् चोदकस्य तथात्व तुल्यत्वात् ।

अपूर्वतां तु दर्शयेत् ग्रहणस्यार्थवत्त्वात् । ३३ ॥

‘आज्यभागौ यजति’ इति वाक्यं गृहमेधीयस्य अपूर्वतां दर्शयेत् । ग्रहणस्य आज्यभागपदोच्चारणस्य गृहमेधीयापूर्वतायामेव अर्थवत्त्वात् सफलत्वात् । पूर्वत्वे तु तत् अनर्थकं स्यात् । तस्मात् गृहमेधीयं कर्म अपू-र्वम् । न प्रकृतिर्न विकृतिः । तुशब्दः पूर्वपक्षनिरासार्थः । के

● विकृतौ प्रकृत्येकदेशग्रहणे प्राथमिकानामेव ग्रहणम्, अन्यानां लोपः । १०।८।११–६. मीको. पृ. ११५५ ‘कपालन्यायः’ इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकृतौ प्राकृतकाम्यगुणानां नातिदेशः । ८।१।१४।२३–२५. मीको. पृ. १५२ ‘अतिदेशो न विकृतौ प्राकृतकाम्य-गुणानाम्’ इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकृतौ प्राकृतधर्मानुवादेन विधीयमानयोः धर्मयोः अन्तराले अपूर्वमपि अङ्गं पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमनहोमेषु । मीन्या. ● विकृतौ प्राकृतयागा-नुवाक्ययोः बाधः । भाट्ट १०।४।२१. ● विकृतौ मन्त्रे सर्वनीताधिपदानां ऊहः । भाट्ट. ९।३।१। ● विकृतौ यजमानशब्दस्य दर्शपूर्णमासप्रकरणपठितस्य ऊहः । ९।१।१५।४२. मीको. पृ. ९६९ ‘आयुरादि-फलन्याय’ इत्यत्र अधिकरणं द्रष्टव्यम् । ● विकृतौ यत् प्रकृतिप्राप्तानुवादेन गृह्यते तत् प्रकरणात् गृह्यते । यथा ‘औदुम्बरो यूपो भवति’ इति यूपानुवादेन औदुम्बर-त्वम् । मीन्या. ● विकृतौ यस्य प्राकृत विविदक्ष संकीर्तितं तस्य पुरस्तात् पश्चाद्वा चेत् तमङ्गमाम्नायते तत्र कर्मस्थानग्रहीतान्नमध्यपठिताद् ( अनन्तर- ) प्रकरणादौ

प्रकारेणानिर्दिष्टेषु पश्चात्तज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगतिदेशकल्पनम्। न चैवं विकृतौ तादृशोपकारस्यार्थेऽपि पदार्थानामेवोपकारान्तरकल्पनया करणापत्तेः ऊहबाधोच्छेदापत्तिः। उपकारजनकापेक्षायामेव पदार्थातिदेशस्य कल्पनेन तद्बाधे तस्यैवाकल्पनात्, पदार्थातिदेशस्यैव प्रथमतः कल्पनेऽपि वा वचनातिदेशनामातिदेशयोरिव निरूपितरूपाणामेव पदार्थानामतिदेशात् प्राकृतोपकाराभावे उपकारान्तरकल्पनानुपपत्तेश्च।

परन्तु उपकारजनकापेक्षायामपि पृथक्पदार्थातिदेशकल्पने गौरवात् पदार्थविशिष्टोपकाराणामेक एवातिदेशः। प्रकृतिवत् तत्तत्पदार्थजन्यात्तत्तदुपकारान् विकृतौ कुर्यादिति। वाक्यस्य तु पृथक्पृथगेवाऽतिदेशकल्पने नैव किञ्चित्प्रमाणं पश्यामः। तत्र तु प्राकृतयोस्तज्जनकैरपि नियोग्यता प्रकृतिवचनयैव विस्पष्टातिदेशः। तत्र उपकारवत् पदार्थेऽप्यविशिष्टविधेयक एवोभयोरतिदेशः। अतिदेशलक्षणं च पदार्थमादायोपपन्नतरम्। अत एवापेक्षितत्वादिनोपकाराणामेवातिदेशः। पदार्थानां तु तद्वारेव करणमिति न तेषां विकल्पादत्रमित्यपास्तम्, तथात्वे उपकारत्वस्यावच्छेदककोटिप्रवेशे गौरवापत्तेः। उपकाराणां प्रकृतावपि करणनिष्ठयोग्यतारूपफलमुखपदार्थानुनिष्पन्नानामिह पदार्थोपकारकल्पने गौरवाच्च। अतिदेशेकेऽपि च प्रकृतिवदित्यस्यातिदेशात् पदार्थानामुपकारमनुतत्त्वातिदेशः। एत च यत्र प्राकृतोपकाराभावस्तत्र तज्जनकपदार्थस्य नैवातिदेशः।

न चैवमपि उपकारं प्रतिपदार्थं नाऽनन्तातिदेशस्य कल्पने गौरवदेवस्यैवातिदेशस्य पदार्थान्तरप्राप्त्यर्थमावश्यकस्य बाधितार्थप्रकरणापत्तिः, एकस्यैवातिदेशस्य बाधितपदार्थांशे तात्पर्यविषयकत्वाकल्पनात् अत एव तादृशविषये न तच्छास्त्रम्। वस्तुतस्तत्तदतिरिक्तविषयमेव।

न चैवं पदकल्पकत्वात् बाधानापत्तौ पुनः प्राप्ताबाधानापत्तिः, विशेषादर्शननिमित्तकभ्रान्तिप्रसक्त्यैव तदुभयाङ्गीकारात्। अत एव बलवत्त्वस्य बोधकस्य विशेषविषयत्वाप्रतिबन्धकत्वमेव प्राप्तबाधत्वमित्युक्तं कौस्तुभे। स चायं बाधोऽस्त्रिविध इत्युक्तम्। तत्रान्त्ययोरुदाहरणं वक्ष्यते।

अर्थलोपाद्बाधस्य तु विकृतिविशेषे "स्वयं दिनं बर्हिर्भवति" इति। अत्र स्वयंदिनबर्हिष्यपि लवनप्रयोजनस्य स्वरूपयोग्यतामूलप्राप्तस्य प्रयोजनाभावस्य प्रतियोग्यभावेनानुत्पत्तेरर्थलोपेनाध्वर्युकर्तृकस्य प्रयोगान्तःपातिनो वैधस्य लवनस्य तदङ्गमन्त्रादिदानादेश्च बाधः। (इत उत्तरः कृष्णलचरुविषयो भाष्यग्रन्थः मीको. पृ. ६८०- 'अवघातस्य कृष्णलचरौ बाधः' इति विन्दौ पठीत इति शेषम्)। के.

मण्डन— 'लुप्तार्थस्य यत् विकृतौ न तत् स्यात्।'

शंकर— 'लुप्तार्थस्य नो विकृतौ।'

ऊ विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात्। १०।३।१।१॥

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रूयते। तदिदं अप्राप्ताया प्राकृतेतिकर्तव्यताया कर्मान्तरं विधीयते इति पूर्वः पक्षः। तत्राह- विकृतौ प्राकृतगुणविलक्षणगुणस्याकृतानुपपत्ते: अग्नीषोमीयपश्वादौ शब्दवत्त्वात् एकादशत्वादिविशिष्टप्रयाजादिविधायकशब्दवत्त्वात् गुणानां अधिकोत्पत्तिः। अप्राकृतगुणानां अधिकानां स्थानान्येन उत्पत्तिः स्यात्। प्रधानस्य सन्निधानात् मुख्यविशेष्यस्य भावनायाः सन्निधानात्। यदुक्तवा धात्वर्थविधिः इत्यर्थः। इति सुबोधिनी। विकृतौ अग्नीषोमीयपश्वादौ भावनायां प्रधानस्य करणीभूतयागमात्रस्य शब्दवत्त्वात् प्रत्यक्षश्रुतत्वात् गुणानां प्रयाजानां अधिकोत्पत्तिः एकादशत्वसंख्याविशिष्टतया उत्पत्तिः। न तु प्रयाजानुवादेन केवलगुणविधिः। ननु विशिष्टविधौ गौरवं स्यात् तत्राह- संनिधानात् एकपदश्रुतिसामर्थ्यादित्यर्थः। तस्मात् विशिष्टविधिः आश्रयणीयः इति कुतूहलम्।

प्रकृतिवत्त्वस्य चानुपरोधः। २॥

अग्नीषोमीये पशौ 'एकादश प्रयाजान् यजति एकादशानुयाजान्' इति श्रुतम्। तदिदं अप्राप्ताया प्राकृतेतिकर्तव्यतायाम्, कर्मान्तरं विधीयते इति पूर्वपक्षे हेत्वन्तरमाह। एकादशत्वसंख्याविशिष्टप्रयाजविधौ सति प्रकृतिवत्त्वस्य 'प्रकृतिवत् कर्तव्य' इति चोदकशब्दस्य अनुपरोधः, न उपरोधः, बाधा न भवति। वैकृतैरेव सन्निहितैः प्रयाजैः उपकाराकाङ्क्षाशान्तेः।

* विकृतिगता पर्युदासविधिप्रकारा मीको पृ २४८० पर्युदासविधि योदयाभि ' इति विन्दौ द्रष्टव्या । * विकृतिगतानां अपूर्वाङ्गानां उपहोमादीनां प्रकरणं न विनियोजकम् । सीन्या

* विकृतिगत नियमनिषेधप्रकारा मीको पृ २७३० स्तम्भ १ इत्यत्र द्रष्टव्या ।

* विकृतिगतद्रव्यादिबाधकपदस्योह शौर्याद्- विकृतौ अतिदिश्यन्ते । ९।३।१।१-२ मीको पृ ३११८ ' मन्त्रोहन्याय ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिगत-भावाभावविषयकविकल्पोदाहर णानि मीको पृ ३०१२ ' विकल्पभङ्गा ' इति बिन्दौ द्रष्टव्यानि ।

* विकृतिगत-सन्निपत्योपकारकक्रियानिषेध- प्रकारा मीको पृ २७३६ स्तम्भ १ इत्यत्र द्रष्टव्या ।

* विकृतिस्य चोदकेन कल्पकम । वि ३।२।१६

* विकृतिनिगमेष्वपि चैवशब्देनैव देवताभि धानम् । वि १०।४।१०

* विकृतिप्रकृत्यो समानतन्त्रे विकृतितन्त्रेण प्रकृते प्रसङ्गसिद्धि । १२।२।१३।३२ मीको पृ २६९७ ' प्रकृतिविकृत्यो समानतन्त्रत्वे० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिप्रकृत्यर्थता आघानस्य । ३।६।५। १४-१७ मीको पृ ९१४ ' आधान स्वकर्मार्थम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिप्रधानेन अङ्गस्य प्रसङ्गो यथा–आम्य भरणादिश्राद्धेन याम्याङ्गभूतश्राद्धस्य । वाद्य पृ १०, * विकृतिप्रधानस्य स्वाङ्गविशेष्या सह प्रधानाङ्गत्वम् यथा– ऐन्द्रस्य आमिक्षायागस्य प्रधानभूतस्य आमभागनौ अतिदिष्टेन तदङ्गभूतेन विकृतिरूपेण नानाव्यहृविरर्थन निमित्तकेन्द्रपञ्चशरावयागेन सह तन्त्रम् । पृ १४८

* विकृतियागेषु केषुचित् अग्निचयनस्य अति प्रदेशः चातिदेश । १०।८।१।२३-२८ मीको पृ ११७ ' अग्न्याधिआधानाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* विकृतिरूप वैदिक कर्म यथा– मासाग्निहोत्रादि । बाल पृ ८५

* विकृतिविशेषे ' कौन्त्सं भवति ' ' काण्वं भवति ' इति श्रूयते । अत्र कौत्सादिसाम प्राकृतेन साम्ना समु- चित इति पक्ष । प्राकृतस्य बाध इति सिद्धान्त । परन्तु एकवचनेन एकमेव प्राकृत साम बाध्यं न सर्वाणि । एवं द्विवचनेन द्वे बाध्ये, बहुवचनेन बहूनि बाध्यानि । वि १०।५।१०–११ * विकृतिविशेषे कौत्सादि सामभि प्राकृतसाम्नां बाध । भा १०।४।८।१७ वर्णक २ मीको पृ १४०३ ' कौत्सकाण्वनरलिङ्गस्त्यानिशादि सामभि ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे प्रगीतयैव ऋचा आहवनीयोपस्थानम् । ९।२।८।२९–३० वर्णक २ * विकृतिविशेषे श्रूयमाणै कौत्सादिसामभि सर्वसर्वमर्थकप्राकृतसामबाध । १०।४।९।१८–१९ मीको पृ २४९६ ' कौत्सादिन्याय ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विकृतिविशेषे सामिधेनीषार्थे अपेक्षितानामेव मनुष्टिप्रानन्मुखामेकादशानां सामधेनीम्य समानयनम् । भा १०।८।१९।७३–७९

* विक्रय प्रतिषिद्ध अश्वानाम् । स्मर्यते च ' अश्व विक्रीणीत ' इति । भा १०।६।११।४७ * विक्रयेऽपि हि स्वत्वपरित्यागपरस्वत्वापादनसद्भावात् स क्रतो ददात्यर्थो विद्यते । तथा च लोके विक्रीय वक्तारो भवन्ति अस्माभिरयं दत्तमिति । क्रीतार वदन्ति अस्माभिरयं गृहीतमिति । भा ३।७।१०।२८ पृ ९६१

क्क विक्रयी त्वन्य कर्मणोऽचोदितत्वात् । ३।७।१५।३१॥

अस्ति सोमविक्रयी । तत्र सन्देह कि अध्वर्य्वादीनां मध्ये , उत एतेभ्योऽन्य एवेति । पूर्वपक्षदेशाय विचार । अत्राय पूर्वपक्ष – यद्यपि सोमविक्रयी साक्षा चदङ्गत्वेनाविहित । न च विक्रयं विना क्रयो भवति । तेन क्रयविधिनैव अर्थाक्षिप्तो विक्रयविधिरिति सोऽपि कर्माङ्गत्वा । स च प्रकृत एवोपात्त इति प्रकृतानां मेनान्यतम सोमविक्रयीति । एवं प्राप्ते, अभिधीयते– भवेदेव यदि क्रयविधिर्विक्रयविधिमपेक्षेत । स तु राग-

* लोकमप्युदाहरति– 'वितीर्य हि महाजानु भुवि सम्भिप्य चाब्रवीत् । इह हि विदुषां लोके समासव्यासधारणम् ॥' इति । भा ८।१।२।॰

* विदग्ध अव्यक्तपक्व । वि २।४।७

* विदहन ( पुरोडाशादे ) यावद्धि श्रपणे परस्तादस्फाटिकि तावद्धोऽविस्फरणानुकूल श्रपणाय । सु वृ १३६१

🕉 विदेवनाधिकरणम् । राजसूये विदेवनादीनां कृत्स्नयागाङ्गता ॥

मध्यस्थं यस्य तन्मध्ये । ४।४।२।३ ॥

भाष्यम्— राजसूये अभिषेचनीयमध्ये 'अक्षैर्दीव्यति' इति विदेवनादय समाम्नाता । ते किं अभिषेचनीयस्याङ्ग उत कृत्स्नस्य राजसूयस्य इति संशय । उच्यते । मध्याम्नानात् अभिषेचनीयस्येति । तथा आनन्तर्यमनुग्रहीष्यते इति ।

वा— विदेवनादय अभिषेचनीयान्तर्वे समाम्नायमाना क्रमादभिषेचनीयाङ्गम् । विशेषे च प्रकरणं नेति इत्युक्तम् । तस्मात् निर्णीतत्वात् अनारभ्यम् । उच्यते । प्राङ्गाङ्गसम्बन्धेन श्रूयमाणा अवधानाकाङ्क्षाया अत्र पूराया ये पदार्था उपनिपतन्ति ते तैरा अपनायन गृह्यन्ते । एते च माहेन्द्रस्तोत्रकालत्वान् उपनिपतन्ति प्राङ्गाङ्ग मध्ये । तस्मात् अवान्तरप्रकरणात् अभिषेचनीयाङ्गम् । महाप्रकरणाद् राजसूयाङ्गम् । तत्र दुर्बलम् । तस्मात् अभिषेचनीयाङ्गत्वात् विदेवनादय तदङ्गभूता इति ।

सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये । ४ ॥

भाष्यम्— सर्वासां च अनुमत्यादीनां चोदनानां मध्ये विदेवनादि स्यात् । कुत ? चोदनानां समत्वात् । समाना एता अनुमत्यादय चोदना । ता सर्वा फलवत्यश्च प्रधानभूता । सर्वासां तासां प्रकरणम् । नहि अभिषेचनीयस्य वैकल्प्य । क्रमादभिषेचनीयस्य वैकल्प्य । कमात् अभिषेचनीयस्य प्राप्नुवन्ति । प्रकरणात् सर्वासाम् । प्रकरणं च क्रमात् बलीय । तस्मात् नाभिषेचनीयस्य वैकल्प्येति । अभिषेचनीयस्य तु मध्ये स्थाने विदेवनादीनां तत्र क्रियमाणा सर्वासामुपकुर्वन्तीति ।

वा— यनैवोत्पद्यते तेनैव प्रयोजनमपेक्षमाणा राजसूयप्रकरणगृहीता निराकाङ्क्षा भवन्ति । तस्मात् अयथोत्पन्नानां प्रकरणात् सर्वार्थानां तेनैव उत्पत्तिदेशे करणे प्राप्ते 'माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते' इति वचनात् अभिषेचनीयमध्ये नियम्यते । न च अवान्तरप्रकरणेन गृह्यन्ते यथोक्तराज्यप्रसक्तेन तस्मात् राजसूयप्रयुक्ता विदेवनादय । अत अवान्तरप्रकरणे नियन्तुं तृतीये चिन्ता ।

शा— ( सिद्धान्त– ) 'तत्र प्रयोजनापेक्षा सर्वेषां यत्र चोदना । विदेवनादिकानां तु न मध्ये प्राप्तो विधि ॥' अभिषेचनीयानन्तरं विहिता प्रयोजनानपेक्षा सन्निधिमात्रमभिषेचनीयाङ्गत्वमापादयन्त प्रकरणात् राजसूयाङ्गतां नैव नापकर्षसमर्थं भूय प्रयोजनमपेक्षन्ते, येन अवान्तरप्रकरणविषयतां प्रतिपद्येरन् । तस्मात् राजसूयाङ्गम् ।

मोम— विदेवनादीनामङ्गाङ्गभावदुक्तं तस्य विशेषव्यवस्थापनेन स्थिरीकरणात् सङ्गति ( एकविषयत्वम् ) ।

वि— 'एकस्यैवाभिषेकस्य मध्ये निविष्टस्य वा । राजसूयस्यापवर्गाङ्गानि, प्रकृतियोगत ॥'

भाट्ट— विदेवनादीनां तत्र अङ्गत्वे सिद्धे सन्निधानात् अवान्तरप्रकरणाद्वा अभिषेचनीयमात्राङ्गत्वस्य तृतीये एव निराकृतत्वात् सर्वाङ्गत्वस्यैव महाप्रकरणादवगते स्वीकृतत्वम् । तदीयाधिकरणप्रयोजनकथनार्थं च इदमधिकरणम् ।

मण्डन— 'देवनमप्य गुण सकलस्य ।'

शङ्कर— 'विदेवनादि सर्वाङ्गम् ।'

🕉 विदेवनाधिकरणम् ( द्वितीयम् ) । राजसूये विदेवनादीनां अभिषेककालवतित्वम् ॥

उत्पत्तिदेशात्तु पूर्वेण स देश स्यात् तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् । ५।२।१०।२१ ॥

भाष्यम्– राजसूये श्रूयते 'अक्षैर्दीव्यति' 'शौन शेपमाख्यापयति' 'अभिषिच्यते' इति । [illegible] सन्देह किं विदेवनादीनां अन्ते प्रयोग उत अभिषेचनीयात् पूर्वं इति । किं प्राप्तम् ? 'अन्ते तु बादरायण ' इत्यन्ते प्रयोग कर्तव्य इति । एवं प्राप्ते, ब्रूम । उत्पत्तिदेशात्

त्वसम्भवे वाक्यभेदापत्तेः विधिभेदो न स्वीक्रियते । पराक्रम ५०।१ * विधायकत्वे समाप्ति अनुवाद करत्वमाश्रयम् । मोम ९।२।१६

* 'विधायकवाक्ये, कर्तरि छन्दोगवादिविशेषणविशिष्टत्वग्राहकप्रमाणाभावे सर्वविषयत्वमेव न्यायात्मत्वस्य' इति हि न्याय । 'सर्वधर्मतामाहकन्याय' भयम् । कस्तूरि १।३।७।२०

* 'विधायिष्यते तु नैर वचनेन' इत्यनेन न्यायेन विध्यनुमानम् । अग्निप्रकरणे यत् सत्तवत्वद्वी- सुपदधाति अग्नमेवोभयतो दधाति, तस्मादुभाभ्या हस्ताभ्या परिगृह्य पुरुषोऽन्नमत्ति' इत्यत्र । वा १।३। ४।१ पृ २२१

* विधि अज्ञातज्ञापकम् । सु पृ ८४५ * 'विधिरत्यन्तमप्राप्तौ नियम पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥' अपूर्वविधि, नियमविधि परिसंख्याविधि । धा १।२।४।२४ पृ १५२, * विधि अत्यन्तवृत्तेऽपि तदर्थाना मन्त्राणाम् प्रतिपदेन तु प्रयोगो भवतीति 'प्रतिषेध प्रदेशेऽनारभ्य विधाने च०' (१०।८।१) इत्यत्र वक्ष्यते । सत्यम्, यस्य प्राक्तनाद्वारेण अप्राप्तिरस्ति तत्रैवैषम् । १।३।१।२, * विधि अनुक्तो हि सन् अथवादादेव कल्प्येत यदि अन्यथा नोपपद्येत । १।२।१।७ पृ १२० '

विधिरप्येकदेशे स्यात् । ६।३।२०।४०॥

पूर्वत्र प्रम श्रीहय अवधानमात्रपर्याप्ता लभ्या । नीवाराश्च शेषकार्याणामपि पर्याप्ता लभ्या । तदा एकदेशे अपि निर्वर्त्यमाने मुख्यद्रव्येण अवदानानिर्वर्तन सम्भवेऽपि शेषकार्याणामपि समर्थस्य प्रतिनिधेर्नीवार द्रव्यस्य विधि विधान स्यात् । तदा प्रतिनिधिर्ग्राह्य इति पूर्व पक्ष ।

अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्येतार्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् । ४१ ॥

दर्शपूर्णमासादौ व्रीहयो द्रव्यवदानमात्रपर्याप्ता लभ्या । नीवारास्तु शेषकार्याण्यपि पर्याप्ता लब्धु शक्या । एवं स्थिते प्रतिनिधिरेव ग्राह्य इति पूर्वपक्ष मत्वा प्राप्त अर्थ- यागत्वेन निरस्यन् सिद्धान्तमाह । उक्तार्था स्थितौ प्रतिनिधिर्न ग्राह्य । अर्थस्य द्रव्यदानमात्रस्य प्रधानस्य उपलब्धे अल्पैरपि व्रीहिभि शक्यत्वात् । एकदेशेन प्रधानकार्यशेषकार्यपर्याप्ताना बहूना व्रीहीणा एकदेशेन उपलब्धेन मुष्टिमात्रेणापि द्रव्यदानमात्र प्रधान निर्वर्त्येत नियेन सर्वेऽर्थमित्यर्थ । अर्थाना प्रधानाना यागेन अविभक्त भवत् विभक्तत्वाभावात् । द्रव्यदेवतात्मको याग । तेन द्रव्यदानस्य द्रव्य यागेन अविभक्तम् । द्रव्यदान- ग्रहणेन च यागो निर्वर्तित एव भवति । इतरत् प्रधाना द्रव्यन् स्विष्टकृदादिशेषकार्यं तु तदर्थत्वात् प्रधानार्थत्वात् गुणमात्रम् । तस्मिन् लुप्तेऽपि न यागलोपो भवति । तस्मात् प्रधानाद्गुणविपर्यये मुख्ये लब्धे प्रतिनिधि सर्वपर्याप्तोऽपि न ग्राह्य इति सिद्धान्त ।

कुतूहले तु निर्वर्त्येत इत्यत्र वर्तेत इति पाठ । एकदेशेन वर्तेत यागो व्याप्रियेत इति तदर्थ । अर्थाना विभक्तत्वात इति पाठ । अर्थाना अवघातफलपरिमाण शेषकार्यरूपाणा व्रीहित्वस्य च विभक्तत्वात् वैलक्षण्यात् । व्रीहित्व हि प्रधानगुण 'व्रीहिभिर्यजेत' इति विधा नात् । इतरत् अवघातफलपरिमाण शेषकार्ये च सर्वं गुण मात्र यागाङ्गभूतपुरोडाशगुण एव । तदर्थत्वात् पुरोडा शार्थत्वेन विधानात् । इति ।

सूत्रार्थं समाप्य पुन कुतूहलम् । 'अमद चित्यम् । व्रीहय एव पुरोडाशभावमापन्ना यागद्रव्य इत्यनुपपन्नम्, तण्डुलानामेव व्रीहिशब्दार्थत्वात् । तुषाणा च पुरोडाशे अनुप्रवेशाभावात् । 'रक्षसा भागोऽसि इति तुषोपवाप कपालेन तुषानुपवपति' इति विधानात् । व्रीहयस्तु तण्डुलानामेव पिष्टप्रणाद्या पुरोडाशानुप्रवेशात् व्रीहि- शब्दस्य तण्डुलपरत्वे लक्षणाप्रसङ्ग । ततश्च 'व्रीहि भिर्यजेत' इति यागसाधनपुरोडाशप्रकृतित्व यत्रविधेया यम् । उत्पत्तिवाक्यानवगतपुरोडाशद्रव्यस्य प्रकृतिद्रव्या पेक्षत्वात् । यत्रेत्तु प्रकरणप्रमाणानुसार एव । ततश्च व्रीहित्वमपि अवघातफलपरिमाणशेषकार्यवत् अङ्गमेव इति कथ व्रीहित्वस्य ततो विशेष । एव च 'अर्थाना विभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात्' इत्यनुपपन्नम् ।

औत्सर्गिकी तत्र चाप्यत्र च प्राप्ति, न तु साऽपि उपपद्यते इति ध्येयम्। अत एव एकस्मिन् कार्ये अनृतस्य सत्येन सह पाक्षिकप्राप्तावपि 'नानृतं वदेत्' इति परिसंख्यैवेयम्, न तु नियमविधि। अत एव यस्य गमनं फलतो वा पाक्षिकप्राप्ति यानुवृत्त्यर्थो नियम नास्त्यविषय स नियमविधि। यथा 'सत्यमेव वदेत्' 'व्रीहीनवहन्ति' इत्यादौ। अत्र नियमस्यैव प्रयोग व्यावृत्त्यर्थकेन एवकारेण विधेयत्वात्, आक्षेपत पूर्वं प्रवृत्तस्याप्रधानविधेर्नियमफलं वाच्य। नियमे पाक्षिकप्रयोगश्च समानविधित्वप्रवृत्तिनिमित्तको विध्यन्तरप्रवृत्तिनिवृत्तिद्विध्य प्रवृत्तिनिमित्तकश्च इत्यादिप्रकारेण बोध्य। व्रीहीन वहन्ति' 'उत्तरेऽहन् द्विरात्रस्य गृह्णते' इत्यादौ आद्य, धान्यादिव्यभावे आक्षेपेण अतिदेशेन वा नखदलनस्य पौनर्पिपृहणस्य च पक्षप्राप्तत्वात्। 'व्रीहिभिर्यजेत' इत्यादौ द्वितीय, यवविध्यन्तरप्रवृत्तिनिवृत्तिद्वित्वभावे व्रीहीणा मालस्पेण पक्षप्राप्तत्वात्। एवंविधमेदमन्तरेऽपि प्रयोग प्रवृत्तिमात्रस्य लक्षणे प्रवेशात् कोऽपि दोष। यत्तु दृष्टार्थेऽत्र नियमविधिरिष्यते केश्चिदुक्तं तत् 'उत्तरेऽहन्' इत्यादौ अयाक्षराद्युपेक्षितम्, षोडशिग्रहणाभ्यासस्या दृष्टार्थत्वात्। अत एव नियमपरिसंख्यातिरिक्तफलको विधिरपूर्वविधि। यथा 'व्रीहीन् प्रोक्षति' इत्यादौ। अत्र प्रोक्षणादिप्राप्तेरेव फलत्वात्। एतेषां बोधाधीना कश्चिदुदाहरणे साङ्कर्येऽपि न दोष इति न विधित्रय नोक्तलक्षणदूषणावकाश। विस्तरेण चैतत् अस्म न्मीमांसाकौस्तुभे द्रष्टव्यम्। उपनिषद्भाष्यसन्देहा तत्तत्र विवेचयिष्यते। भाट्ट १।१।१

* विधि द्विविध [पृ १२] प्रत्यक्ष कल्प्यश्च। प्रत्यक्षोऽपि अनेकधा वक्ष्यते।

कल्प्योऽपि (१) नानास्मृतिकल्प्य (२) आचारकल्प्य (३) लिङ्गकल्प्य (४) अर्थवाद कल्प्य (५) मन्त्रकल्प्यश्च। तत्र विधिकल्प्यो यथा विनीतपणविधि। अर्थवादकल्प्यस्तु द्विविध स्तनार्थवादकल्प्य, विध्यन्तरशेषार्थवादकल्प्यश्च। आद्योऽपि त्रिविध — फलार्थवादकल्प्य, सिद्धवत्कीर्तनार्थवाद कल्प्य, उपाख्यानार्थवादकल्प्यश्च। अन्त्योऽपि द्विविध — एककर्तृकोपाख्यानरूपपरकृतिकल्प्य, अनेककर्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च।

तत्र फलार्थवादकल्प्यो यथा — 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति। सिद्धवत्कीर्तनार्थवादकल्प्यो यथा — 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् च अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति। परकृतिकल्प्यो यथा — 'तास्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति। इन्द्रस्यदमुपाख्यानं तस्मादिन्द्रोऽविभेदिति उपक्रमात् तस्य प्रायच्छदिति क्रियाया कर्तृत्वेन अनुषङ्गात्। पुराकल्पकल्प्यो यथा 'तावमृतामग्नीषोमौ आ यस्यैव नौ उपांशु पौर्णमास्या यजन्' इति। विध्यन्तरशेषार्थवादकल्प्यो यथा — 'उपरि हि देवेभ्यो धारयति' इति।

मन्त्रकल्प्योऽपि द्विविध मन्त्रगतार्थस्यान्यैव लेङ्गकल्पनात् विधियुक्तवाक्याद्यसकल्पनाच्च। तत्राद्यो यथा — 'वसन्ताय कपिञ्जलानालभते' इति। द्वितीयो यथा — ज्यायुष्मयादौ याज्यानुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवताविधि। यथा वा 'उन्ना दिवि दक्षिणावन्तो अस्युर्ये अश्वदा सह ते सूर्येण' इत्यश्वदानकल्प्यविधि।

[पृ १३] अत्र प्रत्यक्षविधिभेदा प्रायश उच्यन्ते। ते च केचित् स्मार्ता अपि सम्भवन्ति प्रत्यक्षमेवप्रदर्शनेनैव उक्तप्राया इति न पृथगुच्यन्ते। केचित् स्मार्ता एव सम्भवन्तीति तत्तत्र कथ्यन्ते।

विधि पुनर्द्विविध — अर्थकर्मविधि गुणकर्मविधिश्च। गुणकर्मविधिरपि त्रिविध — अदृष्टार्थ, दृष्टार्थ उभयार्थश्च। उक्तौ द्विविधौ — प्रतिपत्तिरूपो अप्रतिपत्तिरूपो च। तत्र दृष्टार्था प्रतिपत्तिर्यथा — 'चात्वाले कृष्णविषाणां प्रास्यति' इति। उभयार्था प्रतिपत्तिर्यथा — आश्रयिकर्म स्विष्टकृदादि। अप्रतिपत्तिरूप दृष्टार्थे गुणकर्म यथा — 'व्रीहीनवहन्ति' इति। अप्रतिपत्तिरूप उभयार्थे गुणकर्म यथा — पशुपुरोडाशयागादि आश्रयिकर्म।

विधि पुनरपि चतुर्विध — उत्पत्तिविधि विनियोगविधि, प्रयोगविधि, अधिकारविधिश्च। तत्र उत्पत्तिविधि चतुर्विधोऽपि प्रत्येक द्विविध — कर्मस्वर्थ

पुरुषार्थश्च । तत्र क्रत्वर्थः उत्पत्तिविधिर्यथा– 'समिधो यजति' इत्यादिः । पुरुषार्थ उत्पत्तिविधिर्यथा–'अग्निहोत्रं जुहोति' इत्यादिः । क्रत्वर्थो विनियोगविधिर्यथा 'व्रीहीन् प्रोक्षति' इत्यादिः । पुरुषार्थो विनियोगविधिर्यथा– द्रव्यार्जनविधिः । क्रत्वर्थः प्रयोगविधिर्यथा, आरम्भणीयादिविधिः आतिदेशिककालदेशाङ्गकलापता-ऽऽपन्नः ।

पुरुषार्थः प्रयोगविधिरपि द्विविधः – अवान्तरप्रयोगविधिः, महाप्रयोगविधिश्च । तत्राद्यो यथा– 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यादि । अत्र च फलासम्बन्धे करणत्वेन प्रयोगावच्छेदेन कर्मणो विधेयत्वात् तस्य करणत्वाभिमत अङ्गाङ्गिभावा-न्योन्यमपि विवक्षितम् । कालस्यापि च विधेयत्वात् तदेकत्वमपि विवक्षितम् । महाप्रयोगविधिर्यथा– 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । अत्रापि प्रधानैकप्रयोगतावच्छेदकः पूर्वोक्तोऽतिरिक्तोऽपि न्यायस्तुल्यः । तस्य फल एकः स्वर्गः ।

[पृ. १४] क्रत्वर्थ अधिकारविधिरपि द्विविधः – नैमित्तिकः सन् अदोषनिर्घातार्थः, अनैमित्तिकः सन् दोषनिर्घातार्थोऽपि च । तत्राद्यो यथा– 'भिन्ने जुहोति' इति । द्वितीयो द्विविधः – विहिताकरणनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'यदि अग्नौ यत्र आर्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात्' इत्यादि । क्रत्वर्थादिनिषिद्धाचरणेऽपि अस्य प्रवृत्ते द्वितीयोदाहरणमपि इदमेव ।

पुरुषार्थ अधिकारविधिस्त्रिविधः – काम्यः, नैमित्तिकः, नित्यश्च ।

काम्योऽपि द्विविधः – कर्मफलसाधनपरः गुणफलसाधनपरश्च । तत्राद्यो यथा–'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि । द्वितीयो यथा– 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादि ।

नैमित्तिकोऽपि द्विविधः– नियतनिमित्तकः अनियतनिमित्तकश्च । [पृ. १५] तत्राद्यो यथा–'यावज्जीवमग्निहोत्रं जुहोति' इत्यादि । द्वितीयो यथा–'यस्याहिताग्नेरग्निर्गृहान् दहेत् क्षामवतेऽग्नये पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादि ।

तृतीयोऽपि द्विविधः –निमित्तजन्यदोषनाशफलशालिन्, इतरफलशालिनश्च । तत्राद्योऽपि द्विविधः – विहिताकरणनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । तत्राद्यो यथा– 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इत्यादिः । निषिद्धाचरणनिमित्तको यथा–'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इत्यादि । इतरफलशालिनो यथा–'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यारभ्य 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यन्तो जातेष्टिविधिः ।

विधिः पुनरपि एकादशविधः–(१) सामान्यविधिः, (२) विशेषविधिः, (३) प्रतिप्रसवविधिः, (४) अभ्यनुज्ञाविधिः, (५) उपसंहारविधिः, (६) व्यवस्थाविधिः, (७) पर्युदासविधिः, (८) प्रधानविधिः, (९) साधारणविधिः, (१०) उत्कर्षविधिः, (११) अपकर्षविधिश्चेति ।

इह च अभ्यनुज्ञाविधिः प्रतिप्रसवविधितोऽप्यस्ति, यथा– 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति । तथा प्रतिप्रसवरूपोऽप्यस्ति 'क्रीतराजकोऽभोज्यान्न' इति । तथा प्रतिप्रसवोऽपि अभ्यनुज्ञाविधिभिन्नोऽप्यस्ति 'पूषा प्रपिष्टभाग' इति । अतस्तौ पृथगुक्तौ । यद्यपि च उपसंहारविधिः विशेषविधिरेव, प्रतिप्रसवविधिरपि न सामान्यविशेषविधिभेदौ समस्त, तथापि भेदं विनाऽपि सामान्य-समत्वात् गोबलीवर्दन्यायेन पृथगुद्देशः ।

एकादशविधोऽपि विधिर्द्विविधः – क्रत्वर्थः पुरुषार्थश्च । तत्र क्रत्वर्थः सामान्यविधिर्यथा–'यदाहवनीये जुहोति' इति । पुरुषार्थः सामान्यविधिर्यथा– पुत्रकामेष्टिः । क्रत्वर्थो विशेषविधिर्यथा – 'पदे जुहोति' इति । पुरुषार्थो विशेषविधिर्यथा – 'य कामयेत वीरो म आजायेतेति, स चतुर्होत्रा जुहुयात्' इति । वीरपुत्रकामनाया हि चतुर्होतृहोमेन बाधात् पुत्रसामान्यकामस्यैव पुत्रेष्टिः । क्रत्वर्थः प्रतिप्रसवविधिर्यथा – 'पूषा

उपसंहारः पुनरपि द्विविध – उपसंहार्यस्य उपसंहारविषये नियमतः प्राप्तौ, अनियमतः प्राप्तौ चेति। आद्योदाहरणानि उक्तान्येव ॥ द्वितीयोदाहरणं तु 'वज्रयुक्तं रथमध्वर्यवे ददाति' इति ॥

व्यवस्थाविधिः क्रत्वर्थो यथा– 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्' इति। 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्यायाम्' इति च ॥ [ पृ. १८ ] पुरुषार्थो व्यवस्थाविधिर्यथा– शरदि पार्वणेनेष्टिं यस्यापि ॥

व्यवस्थाविधिः पुनः त्रिविध – उभयप्राप्तौ, अनुभयप्राप्तौ, अन्यतरप्राप्तौ चेति। आद्यो यथा- वार्त्रघ्नीवृधन्वत्योः। आज्यभागक्रमे पाठात् लिङ्गाच्च उभयप्राप्तेः ॥ द्वितीयो यथा चतुर्होतृपञ्चहोतृमन्त्रयोः, तयोः प्रकरणे अनाम्नानात्। यथा वा 'अग्नये च प्रजापतये च सायं जुहोति' 'सूर्याय च प्रजापतये च प्रातः' इति। ब्राह्मणेन देवताविधिपक्षे अग्निसूर्ययोः अप्राप्तेः ॥ तृतीयो यथा– 'वाजिभ्यो वाजिनेष्टिः द्वितीयः प्रयाजः तनूनपादन्येषाम्' इति। अत्र हि विधिपाठक्रमात् तनूनपादेव द्वितीयः प्राप्तः, न नाराशंसः ॥ तथा 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति। अत्रापि हि पाठात् ऐन्द्रवायवाग्रत्वमेव प्राप्तम्, न शुक्राग्रता इति ॥

व्यवस्थाया द्वैविध्यम् पुनरपि द्विविधो व्यवस्थाविधिः – न्यायगम्या व्यवस्था वाचनिकी च। तत्राद्या यथा– अवघाताघाते, आग्नेयादयो. ॥

वाचनिकी तु व्यवस्था महती, तेन सप्तविधस्य विधि – देशतो व्यवस्था, कालतो व्यवस्था, कर्तृतो व्यवस्था, संस्कार्यतो व्यवस्था, कर्मतो व्यवस्था, फलतो व्यवस्था, निमित्ततो व्यवस्था इति। (१) देशतो व्यवस्था यथा– 'वरुणप्रघासेषु उत्तरे विहारे अध्वर्युर्दक्षिणामादधाति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। स्मार्तमुदाहरणं यथा– 'नर्मदोत्तरभागे तु कर्तव्य मिद्ग्युक्तके। कुशैर्य संस्थिते भानावुत्तरायणे दक्षिणे ॥' इति बृहस्पतिः ॥ (२) कालतो व्यवस्था यथा– 'वसन्ते ब्राह्मणोऽग्निमादधीत' 'ग्रीष्मे राजन्यः' 'शरदि वैश्यः' 'वर्षासु रथकार आदधीत' इति। स्मार्तमुदाहरणं यथा– 'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः। कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥' इति ॥ (३) कर्तृतो व्यवस्था यथा– 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति। तथा– 'आर्द्रकृष्णकिर ब्राह्मणस्य [ पृ १९ ] अश्लागम कुर्यात्, पार्थुरश्मं राजन्यस्य, गवोत्राजीय वैश्यस्य' इति। तथा– 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति ॥ (४) संस्कार्यतो व्यवस्था यथा– आग्नेयपक्षाज्यधर्माणाम्। स्मार्तं तदाहरणम् 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥' इति ॥ (५) कर्मतो व्यवस्था यथा– 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्, बृहति समुद्रं मनसा ध्यायेत्' इति। स्मार्तोदाहरणं तु बृहस्पतिः 'इष्टिश्राद्धे क्रतुर्दक्षः, सत्यौ नान्दीमुखे वसुः। नैमित्तिके कालकामौ, काम्ये च धुरिलोचनौ।, पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥' इत्यादि। मनुः– 'विप्रे स्वचित्ते मित्येव वाच्ये गोष्ठे तु शुभनम्। सपात्रमित्यमुद्रमे दैवे रोचितमित्यपि ॥' इति ॥ (६) फलतो व्यवस्था यथा– 'मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य' इति। स्मार्तोदाहरणं तु, ब्रतयज्ञ एव फलविशेषार्थं काम्यकुम्भाग्न्यगनविधिः ॥ (७) निमित्ततो व्यवस्था यथा – 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति। स्मार्तोदाहरणं तु 'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता। निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥' इति मनुः ॥

तथा अन्यतरकोटिव्यवस्था या कोट्यन्तरस्य आर्थिकी व्यवस्था भवति साऽपि भावविषया अभावविषया चेति द्विविधा। तत्राद्या यथा– 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः तत् तर्हि अनुनिर्वपेत्, तर्हि स उभयदेवतो भवति' इति अग्नीषोमीयपुरोडाशे कृतसोमयागपुनिरपेक्षत्वेन व्यवस्थापिते अर्थात् तदभावे अकृतसोमयाग-

यागप्रयोगकत्वेन दृष्टार्थत्वात् पर्युदासविधि दृष्टार्थ इत्युच्यते ॥ अमावस्याविधिस्तु पूर्वोदाहृतयोर्मध्ये यदर्थो य स दृष्टार्थः पुरुषार्थस्तु अदृष्टार्थः ॥

सामान्यादिविध्येकादशक पुनरपि जाति-द्रव्य-गुण-क्रिया-विषयत्वेन प्रत्येकमपि चतुर्धा । जात्यादिविषयमपि उद्देश्यांशे, विधेयांशे, उभयांशे चेति जात्यादि विषयमपि विध्येकादशकं प्रत्येकं त्रिविधं इति द्वाविंश दुत्तर शत भेदा भवन्ति । एषामुदाहरणानि अनेकानि ग्रन्थगौरवभयात् न प्रदर्शितानि ॥ [ पृ २२ ] विधि पुनरपि अष्टविध – ( १ ) धात्वर्थमात्रविधि ( २ ) सगुणधात्वर्थविधि ( ३ ) निर्दिश्य धात्वर्थविधि ( ४ ) तेनैव विशिष्टधात्वर्थविधि ( ५ ) धात्वर्थेनैव अन्वयविधि ( ६ ) धात्वर्थे अन्वयो सम्बन्धविधि ( ७ ) धात्वर्थानुबन्धेन प्रत्ययेन अन्वयो सम्बन्धविधि ( ८ ) मुख्यतः धात्वर्थं अन्वयेनैव सम्बन्धविधिश्चेति । अत्र भूषणभूषण द्वितीयाध्यायार्थप्रस्तावे वक्ष्यते ॥

विधि पुनरपि त्रिविध – अपूर्वविधि , नियमविधि , परिसंख्याविधिश्च ॥ विधिर्योऽयमपूर्वो चतुर्विध – जाति विधि , द्रव्यविधि , गुणविधि क्रियाविधिश्चेति । तत्र जातेरपूर्वविधिर्यथा – ' खादिरं वीर्यकामस्य यूपं कुर्यात् ' इति ॥ द्रव्यस्यापूर्वविधिर्यथा – ' गोदोहनेन पशुकामस्य प्रणयेत् ' इति गोदोहनशब्दस्य यौगिकत्वेन द्रव्याभिधानात् ॥ गुणस्यापूर्वविधिर्यथा – ' यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयात् ' इति ॥ क्रियाया अपूर्वविधिर्यथा – ' अग्निहोत्रं जुहोति ' इति ॥ देवताविधि , होमाधिकरणीभूताहवनीयादिविधिश्च अपूर्वविधानेन अन्तर्भूत । देवताया यागसिद्धया दृष्टार्थत्वेऽपि विध्येकप्रमाणत्वात् । आहवनीयादेरपि अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वस्य आधानविधोक्तविकरणमतिकि उक्तत्वात् । तदेव द्विविधोऽपि अपूर्वविधि दृष्टार्थ अदृष्टार्थश्च ॥ देवताविधिरपि तद्धित–चतुर्थी–मन्त्रवर्ण–द्वितीया–अर्थ-वादभेदात् पञ्चविध । तदाग्नेयं स्पष्ट । आर्थवादिक अर्थवादभेदेषु वक्ष्यते ॥ अध्ययनविधिरपि अपूर्वविधि दृष्टार्थश्च । नहि अत्र नियम ॥

अपूर्वविधि पुनरपि द्विविध – क्रत्वर्थं पुरुषार्थश्च । तत्राद्यो यथा–[ पृ २३ ] ' समिधो यजति ' इत्यादि ॥ द्वितीयो यथा– ' अग्निहोत्रं जुहोति ' इत्यादि ॥

नियमविधिस्तु त्रिविध – प्रतिनिधिनियम , प्रति-पत्तिविधि , तदुभयव्यतिरिक्तश्चेति ॥ प्रतिनिधिनियमो-ऽपि तावत् अपूर्वविधिरिव जाति–द्रव्य–गुण–क्रिया–विषयत्वेन चतुर्विध । तत्र जातिप्रतिनिधिनियमो यथा– पूतीकविधि ॥ द्रव्यप्रतिनिधिनियमो यथा–षष्ठे 'यदि सनाय दीक्षितानां प्रमीयेत सोऽस्य नेदिष्ठ स्यात् स तस्य स्थाने दीक्षयितव्यः ' इति । नेदिष्ठशब्दस्य यौगिकत्वेन द्रव्याभि-धानात् । ' यजुर्यायुक्तं पशु पशव्येन अस्य तद्वशम् ' इति च कातीयम् ॥ गुणप्रतिनिधिनियमो यथा– कातीयाना कृष्णसारङ्गाभावे लोहितसारङ्गविधि अग्नीषोमीये पशौ ' यदि कृष्णसारङ्ग न विन्देत्तथो अपि लोहितसारङ्ग स्यात् ' इति वचनात् ॥ क्रियाप्रतिनिधिनियमो यथा– आपस्तम्ब " यदि यजमान प्रवसेत् ' प्रजा-पतेर्विभान्नाम लोक ' इति मुच्यमानया यजमानभाग-मवधाय समिद्धयुपा सह जुहुयात् " इति । अत्र होम प्रत्यक्षाय देवताऽभावात् । तथा आहिताग्निपात्र प्रतिपत्ति ' दक्षिणे हस्ते जुहूमासादयति ' इत्याद्या प्रतिनिधि पतिताहिताग्निपात्रेषु अन्य स्मर्यते ' पात्राणि तु दहेदस्य यजमान वृथा मृते ' इति । तथा द्विजा भावे श्राद्धानभोजनस्य प्रतिनिधि स्मर्यते । हेमाद्रौ देवल – ' निधाय वा दर्भवटूनासनेषु समाहित । प्रैषानुप्रैषसंयुक्त विधान प्रतिपादयेत् ॥ निर्दिश्याश्वम-मुद्दिश्य यत्र पात्र ततो गति । पात्राभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा ॥ ' इति ॥ प्रतिनिधिनियम सर्वं क्रत्वर्थ एव, न पुरुषार्थं अपि इति न द्विविध । तथा प्रति-निधिनियम सर्वोऽपि दृष्टार्थ एव, नादृष्टार्थोऽपि इति न द्विविधस्त्रिविधो वेति ।

प्रतिपत्तिविधिस्तु क्रियाविधिरेव, न जातिद्रव्यगुण-विधि इति न चतुर्विध । तथा प्रतिपत्तिविधि द्रव्यो द्देशक एव, न जातिगुणक्रियोद्देशक इति न उद्देश्य चातुर्विध्यादपि चतुर्विध ॥ प्रतिपत्ति पुन क्रत्वर्थ एव [ पृ २४ ] न पुरुषार्था इति न द्विविधस्तद्विधि ॥ प्रति-

दिश्यते। न च गोदोहनादीनां क्रत्वर्थता' (८।१।१४।२४ सू १ १७) इति। इह तु विकृतिश्रुतस्यौदुम्बरस्यापि गुणस्याविद्यमानत्वात् फले निधान विनियोग इति वैषम्यम्।

अत एव वैधिप्रानुपयोगेन पूर्वपक्षं कृत्वा विध्युपयोगेन सिद्धान्तित तैरभिहितः गुणाविरनिराकृत एव स्यात्। न च विध्युपयोगाज्ञानमध्ययन न कृतम्, तस्यौदुम्बरविषयत्वेनैव प्रथमपाद एव वर्णितत्वात्। तदुक्तं तत्रैव 'निधानाश्रिते साध्य गुणपार्थो न लभ्यते। श्रुतानर्थविचारेण वाक्यार्थं साध्यता व्रजेत्॥ विधौ तु तमतिक्रम्य स्वर्गादि साध्यतेऽयतः। तत्साधनस्य धर्मत्वमेव सति च लभ्यते॥' (श्लोका)

तेन पक्षद्वियस्यमानत्वं कृत्वा वार्त्तिककारः तदेव विचारं पुनः भाष्यैरनुमितमपि नादरणीयमभवति।

प्रयोजनम् – पूर्वपक्षे गुणफलार्थित्वेन परमौदुम्बरो यूप स्यात्। सिद्धान्ते त्वौदुम्बरताया प्राकृतजातिसाधनेन कथं वाधित्वमेवौदुम्बरो यूप कार्य इति।

सूत्र तु — स्तुतिपदानां 'वाक्यशेषत्व' अर्थवादाधिकरणे दर्शितमिति। (नीता)

॥ विधिर्वा स्यादपूर्वत्वाद् वादमात्र ह्यनर्थकम्। १।२।२।१९ ॥

औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुद्ध्यै असौ इति षष्ठपर्यं नानुगी। अस्य यूपस्य ऊर्जा ऊर्गुरूपेण उदुम्बरेण यत् तद्रूपेण ऊर्गुरूपान् पशूनाप्नोति। ऊर्क् अन्नं जीवनं वा। अत्र 'ऊर्ग् वै उदुम्बर' इत्यादि 'आप्नोति' इत्येत अर्थवाद इति विधिवादम्, नैतावतापि मावत् वर्तमानापदेशात्। औदुम्बरो यूपो भवति ऊर्जो वरुद्ध्यै इति तु विधि स्यात्, वाक्यस्य प्रयत्नस्थाने। अपूर्वत्वात् पूर्वं प्रापकं प्रमाणान्तरं नास्ति। तथा च अपूर्वमर्थं विधास्यति। इतरथा स्तुतिवादमात्रं आर्थकं स्यात्। हि यस्मात् वादमात्र अनर्थकं तस्मात् च विधि स्यात्। इति पूर्वपक्षः।

लोकवदिति चेत्। २०॥

स्तुतिवादमात्र अनर्थक इति पूर्वपक्षिणा उक्तम्। तत्र सिद्धान्ती शङ्कते। यथा लोके 'इयं गौः क्रय्या देवदत्तीया, एषा हि बहुक्षीरा, स्वल्पगा, अनष्टप्रजा च' इति वदति। तेन या इत्युक्ता अपि तत्र न प्रवर्तन्ते यथा गुणाभिधानात् प्रवर्तेरन्नेतराम्। इति चेत् सिद्धान्ती ब्रूयात्।

न पूर्वत्वात्। २१॥

सिद्धान्तिप्रत्युक्तनिराकरणार्थं पूर्वपक्षसूत्रम्। लोकवत् स्तुति सफला इति न वाच्यम्। पूर्वत्वात् 'इयं गौः क्रेतव्या, एषा हि बहुक्षीरा, स्वल्पगा, अनष्टप्रजा च' इति गुणाः पूर्वं प्रमाणान्तरेण ज्ञाता भवन्ति। पूर्वत्वाद् तु युक्त लोके। वेदे तु न प्रमाणान्तरेण ज्ञातुं शक्यम् इति व्यर्था स्तुतिः। यो हि विधिं न गमयति स कुत्र सो धर्मावगमे। अत्र पूर्वत्वात् इति कुतूहले पाठः। अर्थस्तु समान एव।

उक्तं तु वाक्यशेषत्वम्। २२॥

'औदुम्बरो यूपो भवति, ऊर्जोऽवरुद्ध्यै' इत्यत्र विधिरेव स्यात् न स्तुति इति सूत्रत्रयेण पूर्वपक्षे प्राप्ते सिद्धान्ती आह। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। उक्तमस्मामिरर्थवादस्य वाक्यशेषत्वं प्रथमपादस्य 'विधिना त्वेकवाक्यत्वात्' (१।२।१।७) इति। तस्मात् 'औदुम्बरो यूपो भवति' इत्यस्य 'ऊर्जोऽवरुद्ध्यै' इत्यत सर्वोऽपि अर्थवादः। 'औदुम्बरं यूपं कुर्वीत' इति तु विधिः कल्प्यः।

विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम्। २३॥

'औदुम्बरो यूपो भवति, ऊर्जोऽवरुद्ध्यै' इत्यत्र विधिसंभवे लक्षणया स्तुतिकल्पनमन्याय्यम् इत्याशङ्काया आह सिद्धान्ती। विधिः क्वचित् क्रियमाणः सन् अनर्थको भवति तस्मात् स्तुतिः प्रतीयेत। तत्सामान्यात् वस्तुदर्शनात् इतरेषु अपि वाक्येषु तथात्वं स्तुतिपरत्वमेव स्वीकार्यम्। इत्यन्वयः।

अप्सुयोनिर्वा अश्वः अप्सुजो वेतसः' इति अप्सुयोनि अश्व वर्तेत इति विधेः अशक्यत्वात्

मानर्थक्यम् । तत्र अवश्य स्तुतिः कल्पयितव्या । शमयिष्यामि. अद्भिः अभ्रस्य अवकाशः च सम्बन्धोऽस्य यजमानस्य कष्टं शमयति इति । तत्सामान्यात् इतरेषु 'यजमानः प्रस्तरः' इत्यादिषु तथात्वम् । यथा इति यावत्, तावत् वक्तव्यमिति । किं तत् सामान्यं विध्यसम्भव. स्तुतिप्रयत्नश्च ।

प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति । २४ ॥

दर्शपौर्णमासप्रकरणाम्नाते 'यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स सदेवः, तस्मादविदहता शृतङ्कृत्यः सदेवत्वाय' इत्येतद्वाक्ये 'यो विदग्धः स नैर्ऋत' इत्यादेः 'अविदहता' इत्यादिविधिशेषतया अर्थवादरूपस्य चेत् प्रकरणे स्वीये दर्शपूर्णमासप्रकरणे एव संभवन् सन् निविशेत, अपकर्षः प्रकरणादन्यत्र निवेशश्च न कल्प्येत । नैर्ऋतयागानुवादेन विदग्धस्य विधाने हि तत्र स्वीक्रियमाणे अपकर्षः स्यादेव । हि यतः तं प्रति प्रकरणविहित दर्शपूर्णमासयागमुद्दिश्य विध्यानर्थक्यं विदग्धत्वाख्यविधेः असंभवदर्थकत्वं स्यात् प्रकृतयोगे निर्ऋतिदेवताविरहेण नैर्ऋतपदेन प्रकृतकर्मानुवादासंभवात् । इति कस्तूरिरङ्गाचार्यो. ।

योऽवधारणे । केषाञ्चिन्मुनिवादाये तत्रैव विदग्धस्य नैर्ऋतत्वनिन्दया 'तस्मादविदहता शृतङ्कृत्य' इति विधेः शेषीभवत् 'यो विदग्ध' इति वाक्यलोपः दर्शपूर्णमासयोः प्रकरणे इति नैर्ऋतयागाद्यालम्बने संभवन् स्वस्य निवेश. सन् अपकर्ष., कर्मणि यत्, अपकृष्यमाणः दर्शपूर्णमासान्यत्र विकृतिषु निविशमानो भवितु न कल्प्येत (भवति इत्यस्य स्थाने) न समर्थो भवेत् । विधिकल्पकत्वे तु विकृतिषु अपकर्षः प्रकल्प्येत इति यावत् । कुत. ? हि यस्मात् तं प्रति दर्शपूर्णमास कर्मविशेष प्रति दर्शपूर्णमासयोरिति यावत् । विध्यानर्थक्य 'यो विदग्ध. स नैर्ऋत.' इति विधेः असंभवनिवेशत्वम्, 'तस्मादविदहता शृतङ्कृत्य.' इति अविदाहविधानेन 'यो विदग्धः' इत्यनुवादसाधकत्वात् । इति कुतूहलम् ।

ननु 'यो विदग्ध स नैर्ऋत' इत्यत्र यो निर्ऋतियागः तमुद्दिश्य विदग्धद्रव्यविधिसम्भवे अर्थवादत्वकल्पनमन्याय्यम् अत आह । प्रकरणे दर्शपूर्णमासप्रकरणे सम्भवन् निविशमान. अर्थवादरूपेण अपकर्ष. प्रकरणवियोग. न कल्प्येत, विधिपक्षं मुक्त्वा प्रकरणसम्बन्धकल्पनपक्षो न सम्भवति । अतः विधिकल्पनानर्थक्यं दर्शपूर्णमासे निर्ऋतियागाभावात् । इति सुबोधिनीवृत्तिः ।

यदि स्तुतिः दर्शपूर्णमासयोरेव शृतः स्थाप्यते । तथा सम्भवन्नपकर्षो न कल्प्येत ( अपकर्षकल्पनाप्रसङ्गो न स्यात् ) । अकल्प्यते ह्यपकर्षः । विधिपक्षे यत्र नैर्ऋतं. तत्र विदग्धता गीयेत ( अपकर्षः स्यात् ) । तथा सति प्रकरण बाधित भवेत् । दर्शपूर्णमासकर्म प्रति ( संकल्पः ) नैर्ऋताभावात् विदग्धविधानं अनर्थकं स्यात् । तस्मात् स्तुतिरेव । इति भाष्यम् । सिद्धान्तसूत्रमिदम् ।

विधौ च वाक्यभेदः स्यात् । २५ ॥

"औदुम्बरो यूपो भवति' इति विधौ ( यूपस्य विधौ ) आश्रीयमाणे 'ऊर्गोऽवरुद्ध्यै' इत्येतस्मिन्नपि ( फलस्य विधौ आश्रीयमाणे ) वाक्यं भिद्येत । एष औदुम्बरो यूप प्रशस्त. ( इत्येक ), च ऊर्जः अवरुद्ध्यै ( इति द्वितीयमिति ) । तस्मात् विधिवचनमपि स्तुतिरेव कार्या अर्थवादाना इति । इति भाष्यम् । के.

● 'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्' (१।२।२।१९) इत्यनेनैव सूत्रेण विधिः ( निर्णीते ) । शा. १।२।२।१ पृ ८९० ● 'विधिर्वा स्यादपूर्वत्वात्' ( १।२।२।१९ ) इत्यौदुम्बराधिकरणपूर्वपक्षसूत्रन्यायेन नैकल्पिको यजमान भावनत्वेन विधीयते प्रस्तरेण पालनार्थे, इति पूर्वपक्षः । को. १।४।१३।२३ पृ २७२. ● विधि विधाने तदङ्गानां प्रयोग । भा १।२।१।१. ● विधि विधेयान्तररहित अनन्यपरः कर्मस्वरूपमेव विदधत् पूर्वोक्तविवादनस्यैव कर्मान्तर करोति ( इति प्रथमाध्यायोक्त- ) विधिवर्णनीयफलोपजीवनम् । शा. १।१।२।१ पृ. ६४०. ● विधिः वेदभाग. पञ्चसु अन्यतमः । स च धर्मे मुख्यं प्रमाणम् । नामधेयान्यपि 'अग्निहोत्र' इत्यादीनि विध्येव अन्तर्भवन्ति । वि.

मुपपाद्य प्रामाण्यसमर्थनं कृतम् । १।१।१।२ पृ. ८० प्रम् . ॥ विधिना स्वविषये इष्टसाधनत्वाक्षेप क्रियते । भाट्ट. १।८।८ ॥ नार्थविधीयमाने अर्थवाद सम्भवति 'विधिना त्वेकवाक्यत्वात्' इति न्यायात् अविधेर्गस्य अनर्थकत्वात् । शा. ७।३।६ पृ ५२८. ॥ यत्त 'विधिना त्वेकवाक्यत्वात्' ( १।२।१।७ ) इति तत् अङ्गप्रधानवाक्यानामिव पश्चात् सम्बन्धद्वाराभिप्रायेण इति केचित् । वा १।४।१३।२८ पृ. ३६६. ॥ विधेः अनोधकत्वात् न धर्मे प्रामाण्य इति पूर्वोक्ता. । अबोधकत्व-सापेक्षत्वयोः अप्रामाण्यकारणयोः अभावात् विधे. स्वत सिद्ध प्रामाण्ये इति सिद्धा त. । वि. २।१।५. ॥ विधे अर्थवादसम्बन्धस्य श्रुतार्थपरत्या अर्थवादस्य फलम् । तु. पृ. ८१. ॥ विधे अवस्था. उत्पत्तिविनियोगप्रयोगरूपा. द्वितीयतृतीयचतुर्थाध्याये. निरूपिता. । षष्ठेन च अधिकारो निरूप्यते । पञ्चिका पृ. ८२१. ॥ विधे एकस्य अनेकफलसम्बन्धोगात् एकमेव विशेषणं विधेरत्र पर्यवसित 'चोदिते हि तदर्थत्वात्.' ( २।२।३।६ ) इत्यत्र दर्शितम् । सु पृ ७७२ ॥ 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायेन विधेरेव प्ररोचनार्थत्वसम्भवात् ॥ तदर्थं विधेरर्थवादापेक्षा । सोम १।८।१९. ॥ 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायेन विधिरेव प्ररोचनासमर्थेन ( प्ररोचनाया समर्थेन इति विग्रह ) विधे. अर्थवादानपेक्षत्वेन, विधित सामान्याक्षेपेपक्षयोः । कु. १०।१९।२०

☸ विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् । ४।२।१४।२९ ॥

पूर्वपक्षसूत्रम् । ज्योतिष्टोमे 'यदातिथ्याया बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति श्रुतम् । तत्र आतिथ्याया यद् बर्हिः विहित तत् तत आच्छिद्य उपसदादौ विनियोगो विधीयते इति प्रथम पूर्वपक्ष । तत्रायं सूत्रार्थः, विधे. विधानस्य कर्मापवर्गित्वात् कर्मेण. आतिथ्याकर्मणा सम्बन्धात् अपवर्गित्वात् अपच्छेदकत्वात् अपच्छेदनपरत्वात् अर्थान्तरे उपसदादौ विधिप्रदेशः विधे. विधानस्य उपयोगस्य प्रदेश नियमनं स्यात् इति । आतिथ्यायामेव बर्हि सम्पादनीयम्, परन्तु तस्य तत्र नोपयोगः दृष्टार्थः किन्तु अदृष्टार्थं तत्र सम्पादनम्, उपयोगस्तु उपसत्सु अग्नीषोमीये पशौ च इति ।

अथ आतिथ्याया बर्हि सम्पादनीय विनियोक्तव्यं च । तत्र विनियुक्तस्यैव बर्हिषः पुन उपसदादौ विनियोग उक्तेन वाक्येन विधीयते । तथा च उपयुक्तस्य उपयोग इति द्वितीयः पक्ष. । तत्राय सूत्रार्थः– अर्थान्तरे उपसदादौ कर्मान्तरे विधिप्रदेश. विधीयते उपयुज्यते इति विधि., तस्य आतिथ्यायामुपयुक्तस्य बर्हिष प्रदेश विनियोग. स्यात् । विधे. आतिथ्याया बर्हिर्विधानस्य कर्मापवर्गित्वात् दृष्टफलावसायित्वलाभात् । अन्यथा केवलमदृष्टार्थता स्यात् इति ।

अथ आतिथ्याबर्हिषो ये धर्मा आश्वबालत्वादय. तेषा उपसदादिबर्हिषि अतिदेशार्थं उक्तं वाक्य इति तृतीय पूर्वपक्ष । तत्राय सूत्रार्थ – अर्थान्तरे कर्मान्तरे उपसदादौ विधिप्रदेशः विधे. विधीयमानस्य आतिथ्याबर्हिर्धर्मस्य प्रदेश· अतिदेश. स्यात् । विधेः विधीयमानस्य आतिथ्याबर्हिषः कर्मापवर्गित्वात् कर्मणा आतिथ्याकर्मणा सह अपवर्गित्वात् समाप्तत्वात् । आतिथ्यकर्मणा सह तदीय बर्हिरपि समाप्त सत् नान्यत्र विधातु शक्यते । तस्मात् तद्धर्म निर्देश एवाय इति । इद सर्वं कुतूहलवृत्त्यनुसारेणोक्तम् ।

सोमेश्वरेण तु तृतीयपक्षानुसारेण सूत्र व्याख्यातम् 'विधे विधीयमानातिथ्याबर्हिषस्य तत्कर्मातिथ्यापवर्गापवर्गित्वात् उपसदादिसम्बन्धकाले आतिथ्याबर्हिषोऽभावात् भूतपूर्वगत्याश्रयणे लक्षणाप्रसङ्गात् लक्षणाया धर्मलक्षणैव शिष्टत्वानुग्रहात् उचिता इति अर्थान्तरे उपसदादौ विधिप्रदेश. आतिथ्याविहितधर्मातिदेश स्यात्' इति ।

अपि वोत्पत्तिसंयोगाद् अर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतु स्यात् । ३० ॥

ज्योतिष्टोमे 'यदातिथ्याया बर्हिस्तदुपसदा तदग्नीषोमीयस्य' इति पठ्यते । तत्र यदर्थक आतिथ्याबर्हि तदर्थं उपसदामग्नीषोमीयस्य च इति तदर्थं इति पूर्वः पक्ष. । तन्निरासार्थ. अपि-वा- शब्दः । उत्पत्तिसंयोगात् बर्हिष आतिथ्योपसदग्नीषोमीयैः उत्पत्त्या एव उत्पत्तिविधिनैव संयोगात् सम्बन्धात्

अविशिष्टाना विशेषेण रहितानामेव अङ्गाना अर्थेन बर्हिषा संबन्धः । एकेन बर्हिषा अङ्गाना सम्बन्धे विरोधो नास्तीत्यर्थः । ■ च सम्बन्धः प्रयोगैकत्वहेतुः स्यात् । प्रयोगस्य बर्हिषः प्रयोगस्य यदेकत्व तेषु, तस्य हेतु स्यात् । तदर्थे बर्हिषः प्रयोग एक एव इति अविशिष्टाना अर्थसम्बन्धेन सिध्यति । तत्रत्वं तु ' अयन आधारादिधर्मेण सम्बन्धो नास्त्येव एव, किंतु अविशिष्टाना आग्नेयोपसदग्नीषोमीयानाम् । सो हेतुस्तमाह— प्रयोगैकत्वहेतुः । प्रयुज्यते इति प्रयोगो बर्हिः तदेकत्व हेतुर्यस्य स. तथोक्तः । बर्हिःसाधारणत्वं तदङ्गसम्बन्धोऽपि साधारण इत्यर्थः ' इति व्याख्यातम् । सर्वथाऽपि अङ्गाना साधारणं बर्हि. इति सिद्धान्त. । के.

● निर्ण. धर्मस्याद्गुणप्रयोगकरणात् । भा. १०।६। १२।११. ● विधे' । कामाधिकारे अन्वादीनामधिकारस्य अनिर्दिष्टस्यानायत्ते. नियमाधिकारे च आधानमानस्य इष्टत्वात् सामान्यतः प्रवृत्तस्य सामर्थ्यानुरोधेन सौचस्त्वनेऽपि नानैकाऽर्पितः । सु पृ. ५३२. ● विधेश्च व्यापार अङ्गकलापानामभिधानसिद्धः । ऋजु पृ. ५. ● ' विधेस्त्वेकश्रुतित्वादपर्यायविधानात्० ' इत्यत्र सर्वेषामेव अङ्गाना एकप्रयोगकल्पनया एव विधि वदति । वा १।८।१।१४ पृ. ९४८ । अत सुधा— सर्वाङ्गसमुच्चयसिद्धये सर्वेषामङ्गाना एक अनुष्ठानकाले प्रयोजनं इत्येतत्ताय अपर्यायविधानेन हेतुना विधिवाक्यादन्यस्य अङ्गमात्रस्य एकविधिश्रुतिवदेव महता सूत्रणा सर्वाङ्गविधायकः एको विधिर्दर्श्यते । पृ १४७०. ● ' विधेस्त्वेकश्रुतित्वात् ' इत्यनेन न्यायेन ( ११।१।२।१६ ) संभूय सर्वमङ्गाना युक्तम् । भा. ११।१।३।१८.

## विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसम्बन्धादर्थेन युगपत् प्राप्तेर्यथाप्रकृतत्वाशब्दो निर्वीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् । ११।१।२।१६ ॥

कार्ये अग्निहोत्रादिप्रयोगे एकदेशेनाप्यनुष्ठान सर्वाङ्गोपसंहारेणैव वा इति विचारे सर्वाङ्गोपसंहारेणैव इति सिद्धान्त प्रतिपादयितुं सूत्रम् । अत्र भाष्यम्— न नु एवदेवं एकदेशेनापि अङ्गाना प्रयोग इति ( सोमतुशब्दस्यार्थोऽयम् ) । कथं तर्हि ? सर्वाङ्गोपसंहारेण । कुतः ? विधेः एकश्रुतित्वात् । एकेन शब्देन अङ्गाना प्रयोगो विधीयते ' दर्शपूर्णमासाभ्या यजेत ' इति सर्वापेक्षया क्रतुवचम् । सा तु अपेक्षा कृत्स्ने वा अग्न्यन्वाधानादिव्यापारे तदेकदेशे वा ? तत्र एकदेशापेक्षा न युक्ता । कस्मात् ? अपर्यायविधानात् । इमान्यङ्गानि न पर्यायेण विधीयन्ते, कदाचित् समिधो यजति, कदाचित् तनूनपातमिति । कथ तर्हि ? नित्यवत् यथाभूतानि च श्रुतानि तथाभूतानि अपेक्षया अभिसम्बध्यन्ते । यथोच्येत नित्यवत् श्रुतानामपि सता एकदेशोऽपेक्षिष्यते इति । नैतद्युक्तम् । कुत ? अर्थेन युगपत्प्राप्ते । अर्थेन प्रधानोपकारेण ' दध्ने वपोवन्त् ' युगपत् सन्निपतन्ति अङ्गानि । तत्र न गम्यते विशेषः, इदं प्राप्यते इदं नेति । अतः सर्वाणि प्राप्यन्ते । यथाप्राप्त च स्वमभ्यायो निर्वीतवत् । यथा ' निर्वीता ऋत्विज. प्रचरति ' इति ऋत्विग्विशेषाभावात् सर्वेषा च सन्निधानात् सर्वे ऋत्विज. निर्वीता भवन्ति । एवमिहापि सर्वप्रयोगे प्रवृत्ति स्यात् । इति ।

विधे. यावदङ्गानुष्ठानबोधकविधेः । एकश्रुतित्वात् प्रधानार्थविधानपरत्वात् नानाङ्गप्रयोगविधे । नित्यवच्छ्रुतात् नानाविधवाचकशब्दात् श्रुता परिमिता आकाङ्क्षा यथभानाकाङ्क्षा, तया अभिसम्बन्धात् ( अर्थेन प्रधानोपकारेण युगपदेककाल प्राप्ते सम्बन्धात् । यथाक्रमं ( यथाप्राप्त इत्यस्य स्थाने पाठोऽयम् ) प्रथम यथा आकाङ्क्षाप्रकारा अन्विता तथैव अनुष्ठानम । निर्वीतवत् इति दृष्टान्त. । तस्मात् इत्यादिना निगमनम् । इति सुबोधिनी ।

अत्र न्यायसुधा ( पृ. १४७६ )— प्रधानेन सह एकवेदविहितानामङ्गाना वाक्यैकवाक्यत्वापन्नवाक्यसम्भूतानाकाङ्क्षानाकाङ्क्षभूतानामङ्गप्रधानविशिष्टभावनाविषयत्वैकप्रयोगविधिप्रयोज्यत्वसम्भवेऽपि वेदान्तरविहितानामेकवाक्यत्वायोगात् न तत्प्रयोज्यत्वोपपत्तिरित्याशङ्कानिरासार्थं विदान्तम्यम् । साङ्गप्रधानप्रयोगविधे. एकप्रधानप्रयोगविधिश्रुतिनिरूपणत्वेन अपर्यायेण अनुष्ठानविधित्वेन सर्वाङ्गाना विधानाच्च । नित्यवच्छ्रुताना च तथाभूताना श्रुत्यादि-

उद्धननम्, खननम्, परिलेखनं च निवर्तन्ते। ' श्येन शीर्णा शाखा मरति ' इत्यत्र असिद्धत्य निवर्तते। मनाश्च एतेषु निवर्तन्ते।

इति प्रथम वर्णकम्। द्वितीयवर्णके तु कृष्णलेषु अवघातस्य बाध साधनीय सूत्राक्षरार्थस्तु न भिन्न। तृतीयवर्णके तु विष्णु उद्धनम नानाद्वयिष्ठ य इति सिद्धान्त। के

* विधे प्रयोजनविचार। प्रयोजन च्छ इह विधे वेदप्रामाण्यसिद्धिर्वा, पदार्थसंसर्गप्रतीतिर्वा, हिताहितसाधनताऽवगमो वा प्रवृत्तिनिवृत्तिनिमित्तम्। न तावत् प्रामाण्यसिद्धि, अन्तरेणापि विधि तत्सम्भवात्।

स्यादेतत्, विधिविरहे कार्यतद्व्यनया भूतार्थाव गाहिनो भूतस्य च मानान्तरविषयतया तदपेक्षत्वाद्वेदस्य प्रामाण्य विहन्येत, पुरुषवाक्यवत्। तद् अनुपपन्नम्। अनेद ▪ भवान् पृष्टो व्याचष्टाम्, यदेतत् पुरुषवचसा मानान्तरापेक्षत्वम्, तत् किं भूतार्थतया, आहोस्वित् पुरुषबुद्धिप्रभवतया, न तावत् भूतार्थतया प्रत्यक्षादीनाम् अप्रामाण्यप्रसक्ते। तेऽपि हि भूतार्थ्यैव। चैत्यवन्दना वियामत्य च कार्यार्थाभिधायिनो निरपेक्षतया प्रामाण्य प्रसङ्गात्। विनियोगप्रमाणत्वेन, न चासंगत इति च स्वतन्त्रसिद्धान्तश्रद्धामात्रविजृम्भितम्, न प्रामाणिक इति निवेदयिष्यते। तस्मात् च कार्यपेक्षमेव सापेक्षत्वे हेतु, तच भूतार्थेऽपि वैदिके नास्ति इति नास्ति सापेक्षता। सा च कार्येऽप्यस्ति पुरुषवचसाम्। तन प्रामाण्यसिद्धि अर्थो विधे।

नापि पदार्थसंसर्गप्रतीति, विनाऽपि विधिना 'स्थाल्यामोदन पचति चैत्र' इति पदार्थसंसर्गप्रतीते रुपपत्ते। यदि मन्येत ' निरवधीयवचनानि पुंसो वचनानि, नियता च मानान्तराधीना, मानान्तरं च पदार्थसंसर्गगोचरम्, न पदार्थमात्रगोचरम्, इति तत्प्रमत्र यथा पुरुषवाक्यान्यपि पदार्थसंसर्गमेव बोधयन्ति, न त्वेव वेदवाक्यानि अपौरुषेयाणि, इति पदार्थसंसर्गसिद्धयर्थं विधिरेष्टव्य ' इति, तदयुक्तम्। विनाऽपि तदुपपत्ते। 'अस्मिन् सति तदाकाङ्क्षानिबन्धन संसर्ग पदार्थाना ' इति चेत्, तदाकाङ्क्षैव कुत। 'तदर्थाव धानात्' इति चेत्, न क्रियादिष्वपि साम्यात्। यथा हि शब्दाभिहितो विधि विषयनियोज्यादिभिर्विना न पर्यवस्यति, तथा क्रियादयोऽपि पदार्था कारकादिभिर्विना इति ते एव पदैरुक्ता आकाङ्क्षायोग्यता सन्निधिशालिनीनाश्च संसर्गं गमयिष्यन्ति इति कृत विधिना। विशिष्टार्थप्रतीतिप्रयुक्तत्वेन च पदाना समभिव्याहारस्य लोके विदितत्वात् तदुपायत्वाच्च वैदिकार्थप्रतीते।

नापि हिताहितसाधनताऽवगम तस्य प्रयोजन सम्भवति, 'तस्मात्प्रयाजावेक्षणेन वत्सान् सं पुनर्वपति' 'इहति च त्वम्न अलोक यावालिङ्गन' इति वर्तमानाप देशादपि हिताहितसाधनताऽवगमात्। ततश्च ईप्सा जिहासाभ्या प्रमाणान्तरादिव प्रवृत्तिनिवृत्त्योरुपपत्ते व्यर्थो विधि इति।

(अत्रोच्यते) मा भूवन् अन्यानि प्रयोजनानि विधे पुरुषार्थसाधनतावबोधस्तु विधिनिबन्धन। नहि ' स्वर्गकामो यजेत ' इति विधौ असति स्वर्गो भावनाया भाव्य सम्भवति। सा हि भाव्यमात्रापेक्षिणी। भविता च भाव्य, याग्रादयश्च भवितार, इति प्रमाणपदोपादानतया मङ्करश्च तथा च तदनुरक्ताया एव भावनाया प्रतीते। स्वर्गस्य च पदान्तरोपादानतया पुरुषविशेषणतया च व्यवस्थानात् तमपहाय यागादीनेव भाव्यतया भावना गृह्णीयात्। कन्पे श्रितोपादानतापरित्रिप्युपहितमर्यादा पुनरियं भावना समानपदोपादानमपि प्रथमावगतमपि दुरन्ततया कर्तृनपेश्रितमपहाय धात्वर्थं असमानपदोपादानमपि पुरुषविशेषणमपि अपेक्षिततया स्वर्गमेव भाव्यमवलम्बते। तस्माद्धितत्वाद्विधिभाव्य च यागादीन् करणतया स्वीकरोति इति पुरुषार्थसाधनता तेषा सिद्धा भवति। कथं तर्हि वर्तमानापदेशेभ्यो लोके पुरुषार्थसाधनताऽवगति ▪ (उत्तर) प्रमाणान्तरवशात्, न शब्दसामर्थ्यात्। सत्य चैतत् तथा 'द्रव्यसंस्कारकर्मसु' इति च, 'अग्नयस्तु तादर्थ्यात्' इति च व्याचक्षाण उपपादयिष्यति स्वयमेवाचार्य। कणिका पृ १–४

* विधे प्रयोजनानपेक्षस्य प्रवृत्तौ असामर्थ्यात् अर्थवादनिधाने च स्वय अप्ररोचकत्वात् अर्थवाद

मानसयोरेव द्विधाभवनरूपमपरम्यान्छेदरूपद्वैधीकरण न्यपदेश्ययो उद्दिश्यभुवाच्ययो करणम्, तथेहापि अपूर्वीयनहूतपुरुषप्रयत्न याप्यभानो भावार्थ तस्मिनेव प्रयत्ने अपूर्वभावनारूपे करणम्। ननु क्य प्रयत्नस्याभावा भावार्थो भावनाया करणम्, भावमानत्वा हि कर्मैव स्यात्। उच्यते। तत्र न कर्म तावदपूर्वार्थकृतिविषय त्वात्। सनस्यैव हि कारकाणि कर्तृव्यतिरिक्तानि व्यापारयाप्यानि, न ततावता तानि कर्मता प्रतिपद्यन्ते। अनीप्सिततमत्वात्। कृतिविषयीभिप्सिते कर्मता इष्यते एव। यथा 'अग्निहोत्रं जुहोति' इति। करण तु यत्रापि स्वरूप निवृत्तो न सम्भवति। तथाप्यपूर्वभावनारूपता तदधीनापि नानुपपन्नम्। यथा परशोरेव। न हि परशु कर्म। करण तु भवति, अनीप्सितत्वात्। उद्यमननिपतनयो द्वैधीकरणमननरूपतया तदधीनत्वात्। पश्चुत्तरयप्रमाणेन उद्यमननिपतने द्वैधाभवनफलनिष्पादकतया द्वैधाभवने कारणता भजेते। अत 'उद्भिदा यजेत' इति तृतीयानिर्देशोपपत्ते। अपूर्वभावनाया कारणत्वात्तावगम्य तत्तामनन्यच्चोद्भिच्छब्दस्य। एव नापूर्वपक्षयोरप्येव भावना, एकत्वात्पुरुषप्रयत्नस्य एकत्वेन च कारण तत्कालत्वाच्च स्यात् एका एव भावना इति। अत एव च साध्यनिवृत्तिरिति प्राभाकरा। यदि विषयीभूतस्य करणता, इत तर्हि दर्शपूर्णमासाभ्यामित्यत्र तत्राभिहिताना न नैव प्रतिपदमनुपपत्तात् विषयभावस्यैकत्वादेकमेव कारण स्यात्। ततश्च भेदेनेतिकर्तव्यतान्वयो न स्यात्। उच्यते। न अत्राग्नेयादिभावस्याप्येकता प्रतिज्ञायते यत्र। यदेव निष्पन्नीभूत तदेव करण नान्यदिति। तस्मात्। प्रतीयमानपरतया च विषयभाव स यथाभिधानमाश्रयते अभिधानायत्तत्वाद् अभिधानस्य। अतस्तत्राभिधानात् सहितानां विषयभाव करण सिद्ध्यतु नयो नियोगस्य यथास्वभाव वेदितव्यम्। स्वभावाधीना हि साधनाना साधकता इति स्वभावभेदे हि भिन्ना साधकता। साध्यत्वे च कृतिविषयत्वात् कारणतेति भेदेन करण भाव। नन्वेव प्रत्येक करणमात्राश्रयणे कारणा तदनिरपेक्षणा किमिति नियोगसिद्धिहेतुता न भवति। नैवम्। यथाभूतकरणाधीनसिद्धिरप्रतियोगस्य। तत्र यद्यूनि करणानि तस्य श्रूयन्ते इति नयैव तस्य सिद्धि। अनेककरणकत्वाप्यताऽपि एकस्य दृष्टा। यथा गमनस्य अश्वेन शिबिकया वा गच्छतीति। भिन्नस्तत्र कारण व्यापार इति यदुच्येत। अनाप्युत्पत्त्यपूर्वीयवान्तरव्यापारभूतानि भिन्नानि समिदादीनि एव। अत एव तन्त्रेण गिरन्त्वाकारणभावस्य परमापूर्वप्रयुक्ते वेऽपि आग्नेयादीनाम्यकर्मणामसंकर। अपूर्वसाधननिवेशितत्वाद् धर्माणा तस्य च भेदात्। ये पुनर्यागादीनामपूर्वं भावना भावना नानुमन्यन्ते। तेषां यागादीना करणभावो दुर्घट। अव्यापाररूपत्वादपूर्वस्य, व्यापारमध्यप्रसक्तत्वाच्च करण मानस्य। गौणकरणत्वमिति चेत्। कथं तर्हि इतिकर्तव्यताकाङ्क्षा? करण हि इतिकर्तव्यतया सम्बध्यते। गौण च न करणम्, नहि गौणो मुख्यधर्मं लभते वेऽपि सर्वाख्यातेनैव भावनाभिधानमाहु, तेषामपि मतमसमञ्जसं न योवते। नहि कर्यानभिधायिषु लिङादिषु भावनाभिधाने प्रमाणमस्ति। यदपि करोति पचतीति उत्तरदर्शनप्रमाणमुपन्यस्तम्, तदपि न। साधकव्यापारविशेषप्रश्नो ह्ययं किं करोतीति पचतीत्युत्तरेणापि तदेव निर्दिश्यते। यत्तु व्यापारमात्रवाचिधातूच्चारणमात्र न क्रियते, तत्र सामान्यस्याप्रसक्तत्वात् अन्यथा तदुच्चारण च प्रश्नेन महासनभ। अत एवाचेतने व्यापारे वर्तमानापदेशादीना प्रयोग। लिङादमन्तु चेतनमेवाधिकृत्य प्रयुज्यन्ते न चाचेतनेषु गौण प्रयोग। मुख्यत्वेऽस्याविरोधात् कर्त्रादिगुणादिमात्रवचनत्वेन 'रथो गच्छति' इत्यादिषु लडर्थ तत्राचेतनेऽपि मुख्य एव लडर्थ इति। धातूनामेव क्रियावाचित्वात् प्रथमोपनिपाती व्यापार एव धात्वर्थो मुख्य। सयोगविभागौ विभागेनाव्यापारेण। केवलस्य सयोगस्याग्राह्यत्वात् संयोगेऽपि सयोगेऽपि गच्छतीत्यप्रयोगाद्विभागेऽपि विभागे प्रयोगानुपपत्तेश्च। न चेत्यस्य विभागस्य गमिवाच्यतेति निरूपणेन मनीषिभिर्निर्मितेन भालजल्पितेन मनोहारिणा निर्वचनेन।

'शालिकनाथेन कृत कृतिनामुपकारसिद्धये सम्यक्। समुद्वीक्ष्य वा गुरुमत सम्यगिदमकरणीयमिदम्॥'
प्रकरणपञ्चिका पृ १९७–२०१.

● विधेः सकृदुच्चरितस्य ऐकरूप्येण एकशाब्दबोधजनकत्वनियमात्। भाट्ट ७।१।१ ● विधेः संदिग्धत्वे अपवादो निर्णयहेतुः। 'अक्ताः शर्करा उपदधाति' अत्र अञ्जनद्रव्यं किमिति संशये 'तेजो वै घृतम्' इति अर्थवादात् घृतं अञ्जनद्रव्यम् इति निर्णयः। वि १।४।११ ● 'विधेः सर्वविषयत्वम्' इति न्यायः। 'अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य' (२।३।७।१६) इति सिद्धान्तसूत्रम्। तत्र तस्य सर्वधर्मस्य उपपादको न्यायः विधेः सर्वविषयत्वं यस्मिन् रूपे विधाने विधायकवाक्ये अस्ति तत् तन्न्यायम्। तस्य भावस्तन्न्यायत्वम्। सु पृ २४८ २०६, ● विधेः सामान्यमात्रे पर्यवसितस्य अपवादविशेषाणां विषयसंकोचात्मको बाधोऽभ्युपगम्यते। पृ ८६८, ● विधेः स्तुत्या अन्विताभावात् अन्यतरदर्शनेन अन्यतरदनुमाय वाक्यं पृथगेतयम्। पृ ४१ ● विधेः स्तुतेश्चैकवाक्यत्वं भवति पदानां साकाङ्क्षत्वात्। 'भूतिकामः आलभेत, क्षेपिष्ठा देवता वायुः' इति। भा १।२।१।७ पृ ११७ ● विधेः स्वतः प्रामाण्यम्, अर्थवादस्य सापेक्षत्वेऽप्रामाण्यकारणीभावात्। वि १।२।५ ● फलकामनायाः विधेः व्यापारभेदो भवति। एकफलनिरूपणा तु अनयोरुभयोरपि एकप्रयत्नसाध्यम्। वा २।२।५।१६ पृ ५०७ ● न च विधेर्विधिना एकवाक्यभावो भवति, यचनव्यक्तिभेदात्। भा ६।१।६।५ ● 'पशुमालभेत' इति सामान्यप्रवृत्तस्यापि विधेः 'छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रवर्णानुरोधेन संकोचः, विधिमन्त्रयोरेकविषयत्वात्, सामान्यस्य च कृत्स्नस्य छागेऽपि विशेषाविरोधात्, नियमश्च च अनियमानुपपत्तौ पक्षाभ्युपगम्यते। सु पृ ५२५ ● न च द्वयोः विध्योः एकवाक्यभावोऽस्ति। भा ६।७।१२।३० ● विधीनां अर्थे अन्यत्वापत्तिनिमित्तवैरूप्याभावप्रमाणकत्वम्। वा ३।८।११।२० पृ ९६८ ● विधीनां प्रवृत्तिजनकत्वसम्पादनाय प्रयोजनम्। भाणि पृ ५ ● निरोजकस्य विधेः किमपरम् प्रयोजनं सर्वविधीनाम्। ऋजु पृ १० ● सर्वविधीनां अप्रामाण्यप्रसङ्गात्। वा ३।८।१।२, ● सर्वविधीनां पुरुषार्थत्वाभावात् प्रयोजनाकाङ्क्षा स्वर्गादिना निवर्त्यते। ३।४।४।१२ पृ ९११, ● विधौ अर्थवादावगतविषये ऋगादिशब्दानां अनुवादकत्वात् लक्षणायामप्यदोषः। ३।३।१।२ पृ ८०७ ● विधौ अवाचकशब्दायोगः। सु पृ ७१ ● विधौ गौणत्वासम्भवः। वा ३।५।२०।५१ ● विधौ च लक्षणायोगः। सु पृ ९२ ● विधौ लक्षणाऽऽश्रयणीया। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति विधायकं ब्राह्मणम्। 'निवेशनः सङ्गमनो वसूनाम्' इति मन्त्रो यथार्थगतः इन्द्रपदं गार्हपत्यलक्षकम्। न तु विधिगते गार्हपत्यपदे लक्षणा। वि ३।२।२ ● विधौ शब्दार्थेन व्यवहारो भवति (न लक्षणया, न विधौ परः शब्दार्थः)। भा ८।३।६।२१। (क्वचित्) लक्षणयाऽपि विधानं भवति। यथा लोके — 'अमी सिंहपिण्डाः सिंहाः क्रियन्ताम्'। सिंहशब्दोऽत्र प्रतिकृतिवचनो दृष्टः। वेदेऽपि 'पृष्ठैरुपतिष्ठते' पृष्ठशब्दोऽत्र पृष्ठसाधनसामवचनः। २४, ● विधौ हि न परः शब्दार्थः प्रतीयते। ३।२।३।२९, ● अनुवादे हि लक्षणा न्याय्या, न विधौ। ४।८।८।१९ ● अलाभार्थविधौ च सर्वपदार्थान्वयसम्भवे बहुपरिधिर्न लभ्यते। सु पृ ८५४ ● पुरा शब्दश्च नैव विधौ स्वपदे। यथैव यत्र 'इव कृता इव कुर्यात्' इति श्रूयते, तत्र यदि तावत् तत्र सर्वथा क्रिया अन्यत्र एव प्राप्ता सती निमित्तार्थं श्रवणं भवति। अथ तु न प्राप्ता तत उत्तरस्याः क्रियायाः पूर्वनिर्वृत्तत्वात् पूर्वेण विहितं सामर्थ्यात् यथा (यथा विहितं तथा इत्यर्थः) कर्तुं न शक्यते इत्यर्थात् अन्यस्य कर्मणः सतो विहितवत् विधीयते। वा २।१।११।२७ पृ ५९८, ● यथा स्वार्थवादानामनुवादत्वात् लक्षणावृत्तिरदोषः। तथा अत्र (उपेक्षया क्रियते०) अपवादावगतविषय विधौ ऋगादिशब्दानां अनुवादकत्वात् लक्षणायामपि अदोषः। ३।३।१।२ पृ ८०७ ● 'विधिषु भाक्तो (भक्तानाम्) अधिकारी' इति न्यायेन विधिवाक्यान्वयेन प्रयाजादिषु विधिषु विहितेषु ... शब्दस्यैव विहितत्वानुपपत्तेः। अद्वैत प पृ ५०१

* विध्यधीनः परिग्रहः । वा. ३।१।७।१२. पृ. ७००.

* विध्यनुवादौ यौगपद्येन न सम्भवतः । भा. २।१।१।८, * विध्यनुवादयोः विधिविशेषात्, अपूर्वार्थत्वस्वरूपात् । यदि तु प्रमाणान्तरप्राप्तिर्नोपलभ्यते । १०।६।२।३ पृ. १९८६, * विध्यनुवादयोः विशेषः । कदाचित् किंचित् विधित्सितं भवति । ( कथम् ? ) कदाचित् उपसर्जनीभूतोऽर्थो विधित्सित , प्रधानीभूतोऽनुवादः । तद्यथा—'दण्डी' इत्युपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते । कदाचित्तु निरतिशये पुरुषे दण्डगुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति, यथा ( वा ) 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति । १।४।६।११ पृ. ६८७.

* विध्यनुवाद-उद्देश्योपादेय-गुणप्रधानानां शब्दविशेषः ( विरुद्धत्रिकद्वय नामैतत् ) । वा. ३।१।१२।१२.

* विध्यनुवादविचारः ( विधिरनुवादो वेति ) पशुसोमाधिकरणे ( २।२।६ मीको. पृ. २५२५ ) ( द्रष्ट. ) । सु पृ. ९२५

* विध्यन्तः अग्निष्टोमस्य शताग्निष्टोमादौ । ८।३।५।१०-११. * विध्यन्तः अग्नीषोमीयस्य द्विदेवत्येषु आग्नावैष्णवादिषु । ८।२।१।१-२. * विध्यन्तः अग्नीषोमीयस्य पशुषु सवनीयादिषु आलम्भचोदनासामान्यात्, पशुत्वचोदनासामान्याच्च । भा. ८।१।६।१३. * विध्यन्तः अग्नीषोमीयस्य साम्नाय्यात् । टुपू. १०।७।१।६. * विध्यन्तः आग्नेयस्य, ऐन्द्रे पुरोडाशे । भा. ८।१।१७।३४. * विध्यन्तः आग्नेयस्य कृष्णलचरौ । ८।१।१८।१५-३१. * विध्यन्तः आग्नेयस्य सौर्ये चरौ । ८।१।१६।२७-३१. * विध्यन्तः उपाकरणादेरस्य विक्रेतृमधुनि उदके च । ८।१।१९।४०-४३. * विध्यन्तः ऐकादशिनाना पशुगणेषु, 'प्रतिपशु यूपदर्शनात्' । भा. ८।१।८।१५. * विध्यन्तः । कः पुनरयं विध्यन्तो नाम । विधेरन्तो विध्यन्तः । अथ विधिः कः । यद् वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते अनेनार्थः । यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति । तत्र 'अभ्याज' इति विध्यादिः । इतरः अन्तः । वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः । विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम् । तेन समेतोऽयं विध्यादिः विशिष्टपूर्वनिर्वृत्ति प्रतिपुरुषं प्रवर्तयति । तस्मात् सोऽस्यान्तः । तथा 'सोमेन यजेत' इति विध्यादिः, सौमिकमपि ब्राह्मणं विध्यन्तः । एष विध्यन्तो नाम । भा. ७।४।१।१०, * विध्यन्तः गवामयनस्य 'आदित्यानामयन' इत्यादिषु संवत्सरसत्रेषु । ८।१।११।१८. * विध्यन्तः गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्माणाम् । ७।४।३।१३-२०. * विध्यन्तः गवामयनगतस्वरसाम्नां 'पृष्ठ्य. पवद्वौ द्वौ स्वरसामानौ' इत्यत्र स्वरसाम्नोः । ७।३।१०।२६-२७. * विध्यन्तः चातुर्मास्य-वैश्वदेविकस्यापामिक्षैककपालस्य वरुणप्रघासगतयोरेकपाले । ७।३।१०।२६-२७. * विध्यन्तः दार्शिकोऽग्नीषोमीये पशौ । ८।१।५।१२. * विध्यन्तः दार्शिकाग्निप्रणयनस्य चातुर्मास्यगतवरुणप्रघासयोः अग्निप्रणयने, न तु सौमिकस्येति भाष्यमतम् । न दार्शिकस्य न सौमिकस्य किंतु अपूर्वमेव तत् प्रणयनं इति वार्तिकमतम् । भा. ७।३।८।१९-२१. * विध्यन्तः दार्शपौर्णमासिकधर्माणाम् अग्नीषोमीये पशौ । ८।१।५।१२ * विध्यन्तः दार्शपौर्णमासिकधर्माणां ऐन्द्राग्नादिषु इष्टिषु । भा. ८।१।४।११. * विध्यन्तः द्वादशाहस्य द्विरात्रादिषु रात्रसत्रपर्यन्तेषु अहर्गणेषु । ८।१।१०।१७ * विध्यन्तः द्वादशाहस्य षोडश्युक्थ्य-ज्योतिष्टोम-अतिरात्रादिसंस्थागणेषु । परन्तु तत्र तत्र तदन्तरपवाद । ८।३।४।८-९. * विध्यन्तः द्वादशाहस्य सत्राहीनत्वस्य पञ्चदशरात्रकुण्डपायिनामयनयोः । ८।२।६।३०-३३. * विध्यन्तः द्वादशाहस्य सत्रात्मकस्य सत्रेषु, अहीनात्मकस्य चाहीनेषु द्विरात्रादिषु । ८।२।९।२४-२८. * विध्यन्तः द्वादशाहिकप्रथमाहर्गतस्य पौषस्य गवामयनप्रथमाह्नप्रायणीये नातिदिश्यते । ७।३।२।५ * विध्यन्तः द्वादशाहिकमध्यमानामह्नां क्रमेण जनकसप्तरात्रे । तत्राग्निस्त्वनुष्टुपि त्रिवृत्त्वं विधीयते । ८।३।२।३-५. * विध्यन्तः न यूपस्य, एकादशिनीगतोपाकरा-

यथा कौण्डपायिनामयने अग्निहोत्र इत्यभिधानं कर्मणो वाचकम्। तत् कर्मसहचरितान् धर्मान् आनयति। तेषु असत्सु एतत् अभिधानं इह न युज्यते इति तेषां धर्माणां तत्र भावो विज्ञायते। एवमिहापि प्रयाजादीनां दर्शनं असत्या वैदिक्या न युज्यते इति तस्या अपि इह भावो विज्ञास्यते। ननु असति न्याये लिङ्गमकारणम्। सत्यमेवम्, उक्तस्तु न्यायः नामित्वात् इति। यत्तु दृष्टप्रवृत्तिः लौकिकी इति, तत्र ब्रूमः। यद्यपि दृष्टप्रवृत्तिः स्यात्, तथापि वैदिकी एव नियम्येत। कथम्? यथा धेनुः किशोरेण। तद्यथा कृष्णकिशोरा धेनुरिति। यद्यपि धेनुशब्दो गोषु दृष्टप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वायामपि धेनुरिति किशोरेण लिङ्गेन अश्वा विज्ञायते। एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः तथापि इतिकर्तव्यतासामान्येन अभिधानात् लिङ्गेन वैदिकी विज्ञेया।

उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात्॥ ८॥

भाष्यम्— अथवा नैव लिङ्गेन नियम इति। कुतः? उत्पत्तीनां समत्वात्। धर्माणां प्रयाजादीनां उपक्रमः समः सर्वेषां आत्मप्राधान्येन, न परस्पराङ्गत्वेन। विषमः? यदि प्रयाजादीनां अनुयाजादय अङ्गानि स्युः, ततो 'यत्र प्रधानं तत्राङ्गानि' इति प्रयाजदर्शनेन अनुयाजादय अनुमीयेरन्। यदा तु सम प्रधानाः सर्वे, तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन्, प्रयाजधर्मा वा, न तु अनुयाजादयः। तस्मात् लिङ्गमनियामकम्। यत्तु अभिधानात् इति, अत्र ब्रूमः। युक्तं तत्र। यत्र हि परशब्दः परत्र प्रयुक्तः सन् तद्धर्मान् गमयतीत्युक्तम्। अपि च त्रिविधो अग्निहोत्रम् होत्रयतीति। अत्र पुनरुक्तम्। तेनात्र प्रयाजादीनामेव नामित्र प्राप्तिः, न तु अनुयाजादीनाम्। तस्मात् विषम उपन्यासः अभिधानवत् इति। अतो यथाधिकारं भावः स्यात्, ये धर्मा यस्य यागस्य अधिकारे आम्नाता ते तस्यैव भवेयुः।

उत्पत्ति शेषवचनं च विप्रतिपिद्धमेकस्मिन्॥ ९॥

भाष्यम्—एवं तर्हि 'सौर्यं चरुं निर्वपेत्' इत्यनेन आख्यातेन प्रधानस्य विधानोत्पत्तिः। शेषाणां च वचनं भवतु। कथं कृत्वा? नानेन प्रधानमुच्यमानं कस्मैचित् प्रयोजनाय कल्प्यते इति। तेन च प्राकृतानामङ्गानां एतेभ्यो लिङ्गेभ्यः विशेषावधारणं भविष्यति। तत्रेदमुच्यते 'उत्पत्ति शेषवचनं च विप्रतिपिद्धमेकस्मिन्'। एकस्मिन् शब्दे प्रधानस्य उत्पत्तिः, अङ्गानां च वचनं न सम्भवति। किं कारणम्? उत्पन्नं हि प्रधानं अङ्गानि अपेक्षते। अपेक्षया च तानि गृह्यन्ते। तस्मान्नैतदपि युक्तम्। यदि च 'निर्वपेत्' इत्यनेन शब्देन अङ्गान्यपि विधीयेरन्, ततः तेषामपि फलसम्बन्धः स्यात्, तथा अन्तरमेव व्याहन्येत। तत्र अयमपि पक्षो न घटते। तस्मात् यथोक्तो लौकिक एवाभ्युपायः।

विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम्॥ १०॥

भाष्यम्—विध्यन्तो वा सौर्यादिकायां चोदनायां प्रवर्तेत, न धर्मा लैङ्गिकाः। कः पुनरयं विध्यन्तो नाम? विधेरन्तो विध्यन्तः। अथ विधिः कः? यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते स विधिः। विधीयते हि अनेनार्थः। यथा लोके 'देवदत्त गामभ्याज शुक्लाम्' इति। तत्र 'अभ्याज' इति विध्यादिः। इतरः अन्तः। वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः। विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम्। तेन समेतोऽयं विध्यादिः विशिष्टार्थनिर्वृत्तिं प्रति पुरुषं प्रवर्तयति। तस्मात् सोऽप्यन्तः। तथा 'सोमेन यजेत' इति विध्यादिः। सौमिकमपि ब्राह्मणं विध्यन्तः। एष विध्यन्तो नाम। एतेषु च सौर्यादिषु विध्यादिरस्ति विध्यन्तो नास्ति। स चेदिह विध्यन्तः कल्प्येत। कथं कृत्वा? भावि पूर्वं यत् प्राकृतं तत् अध्याहारेण वा पूर्येत, व्यादिष्टकल्पनया वा। तत्र अध्याहारात् व्यादिष्टकल्पना ज्यायसी। अध्याहारे हि अश्रुतः शब्दः कल्प्येत। इतरत्र श्रुतेन सम्बन्धः। तस्मात् सर्वदिशो प्रधानस्य परिपूर्णं कल्प्यते। यथा 'समानमितरच्छ्येनेन'

'ग्रीष्माय कल्पविङ्कानालभते' इति । तेन वैदिकी इतिकर्तव्यता प्राप्यते । ननु यदि तत् ब्राह्मणं अस्य अन्यत् कल्प्यते, तत्र न भवति । तदेतत् मयूरस्त्वं आपद्यते । तद्यथा, मयूरस्य नृत्यतः अन्यदङ्गानिष्यते अन्यत् मन्त्रियते । एवमिहापि इदं लैङ्गिके तत् अपाक्रियते । नैष दोषः । प्रत्यक्षस्य तत्र भावः । इह पुनरानुमानिकः । न च आनुमानिकं प्रत्यक्षं बाधते । इह तर्हि न प्राप्नोति, प्रत्यक्षविरोधात् । स्यादेवम्, यदि विरोधः स्यात् । न तु अस्ति विरोधः । तत्रापि भविष्यति इहापि । नन्वेतदुक्तं 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत' इति (१० सू.) । उच्यते । प्रकृतिवदिति किम् ? आह, आग्नेये प्रकृतिनियमं करिष्यति, इयमस्य प्रकृतिरिति । तदुच्यते, विध्यन्तो वा प्रकृतिरिव प्रवर्तेत । यो यस्य कर्मणः प्रकृतिरिति, यस्य आग्नेयः प्रकृतिः, तस्य आग्नेयादेव । यस्य अग्नीषोमीयः, तस्य अग्नीषोमीयादिति । एवं सर्वत्र । अथ कस्मात् न लौकिको विध्यन्तः कल्प्यते ? उच्यते । लौकिकस्य विधेः अभावात् विध्यन्त एव नास्ति, कुतस्तत्कल्पनेति । आह, लौकिकी इतिकर्तव्यता प्राप्यतां किं विध्यन्तकल्पनयेति । उच्यते । वैदिकी हि अत्र इतिकर्तव्यता, न लौकिकी । कस्मात् ? तथाहि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति ।

टुप्— कथंभावाकाङ्क्षाया यत्र इतिकर्तव्यता न आम्नायते, तत्र कथंभावस्य अनुवृत्तत्वात् चोदना स्वर्गे वाक्यं बुद्धौ उपस्थापयति । तद् वाक्यमपेक्षितं वाक्यार्थमवबोधयति । स च वाक्यार्थः फलकरणेतिकर्तव्यतायुक्तः । तत्र फलकरणे अनाकाङ्क्षितत्वात् न सम्बध्येते । इतिकर्तव्यता तु अपेक्षितत्वात् संबध्यते उपमितलक्षितप्रापणेन । सादृश्यं च वैदिकेनैव भवति, न लौकिकेनेति ।

लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् । ११ ॥

भाष्यम्— यदि लिङ्गात् वैदिकोऽभ्युपायो भवति, तेन तर्हि ? अलिङ्गे लौकिकं स्यात् । यत्र कर्मणि किंचिल्लिङ्गं नास्ति, तत्र लौकिकं स्याद्विधानम्, यथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः' इति ।

लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थाली पुलाकेन । १२ ॥

भाष्यम्— अत्रोच्यते । स्यादेतदेवं यदि लिङ्गहेतुको वैदिक उपायः स्यात् । न तु असौ लिङ्गहेतुकः । किं हेतुकस्तु ? विध्यन्तहेतुकः । विध्यन्तोऽपि न्यायपूर्वः । स च न्यायस्तुल्यः सर्वेषां कर्मणां लिङ्गवतां अलिङ्गवतां च । कुतः ? चोदनाशब्दसामान्यात् । कर्मचोदनायां शब्दः समानः । सर्वत्र विध्यादिरस्ति, न विध्यन्तः । तुल्यश्च अपेक्षया अन्यत्र श्रुतेन विध्यन्तेन सम्बन्धः । तदेतत् न्यायपूर्वकं लिङ्गं एकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति । यथा स्थाल्यां तुल्यपाकानां पुलाकानां एकं उपमृद्य अन्येषामपि सिद्धतां जानाति तुल्यो हेतुरस्य च अन्येषां च सिद्धत्वस्येति । तस्मात् सर्वत्र वैदिकी इतिकर्तव्यता । अथ यदुक्तं दृष्टप्रवृत्तिः लौकिकी इतिकर्तव्यतेति । अत्र ब्रूमः । सामान्यतो दृष्टमेतदुपदिश्यते । सामान्यतो दृष्टं च यदव्यभिचारि तत् प्रमाणम् । सव्यभिचारि चैतत् । दृष्टा हि नागयागादयः अनेकाभिनिवर्तनीयाः । तस्मात् दृष्टप्रवृत्तिः स्यात् इत्यहेतुः । यत्तु वैदिक्या भाक्तित्वात् तदपूर्वाणि लिङ्गानि भविष्यन्तीति । अत्र ब्रूमः । भाक्तित्वस्य अपूर्वैतिकर्तव्यतायां किं हेतुः । तत्रानश्च तस्याः शब्दपूर्वम् । शब्देन च दर्शपूर्णमासयोः असौ इति श्रूयते, न सर्वेणेति । तस्मात् भाक्तित्वम् । अतो विध्यन्तेनैव इतिकर्तव्यता प्राप्यते नान्यथा ।

अथ कस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव नानुमन्यन्ते, किमेभिः पूर्यते ? न्यूनानि अनर्थकानि भवन्तीति । भवतु, को दोषः ? शिष्टैरपरिग्रहो न युज्यते । प्रमादात् भविष्यतीति । नास्त्यक्षरे मात्राया वा प्रमादः, कुत एतावति ग्रन्थे भविष्यति । कथम् ? 'तुल्यं च साम्प्रदायिकम्' (१।३।१।८) इत्युक्तम् । व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि नानुवर्तेत । बुध्येत चैषां अपेक्षया पूरणम् । तस्मात् ऊनानि नानुमन्यन्ते । अतो वैदिकी इतिकर्तव्यता इति सिद्धम् ।

संभवति हि तत्र राजप्रेरणाभावादावपि प्रयोग अन्यदीयप्रेरणाभावस्य च, तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिकारणयोग्यत्वात् ।

अत सिद्धं न तार्किकरीत्या इष्टसाधनत्वादेर्लिङाद्यर्थत्वम्, अपि तु पूर्वोक्तरीत्या प्रवर्तनेच्छाया एव । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' (पा. ३।३।१६१) 'लोट् च' (पा. ३।३।१६२) 'छन्दसि लिङर्थे लेट्' (पा. ३।४।७) इत्यादिपाणिन्यनुशासनात् अयमेवार्थो निश्चीयते । विधि – निकृष्टस्य प्रेरणम् । निमन्त्रणम् – अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्तनेच्छा । यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम् । तत्र प्रमाणान्तरेण श्राद्धाकरणे प्रत्यवायावगमात् । अत एव निमन्त्र्यते इह अभिमतोऽपि च लाभात् इष्टसाधनत्वानुमापकत्वमेव । कृतिसाध्यत्वानुमापकत्वं तु सर्वत्रैव । माऽस्तु वा तत् । आमन्त्रणं कामचारानुज्ञा । तत्र प्रेरकस्य कामचारानुज्ञापकत्वम् । अन्यत्र सर्वत्र आमन्त्रणेऽपि अधिको भासते । अधीष्टं सत्कारपूर्वकं उत्तमं प्रति प्रेरणम् । एतेषु चतुर्षु प्रवर्तनात्वस्य एकस्य अनुगतत्वात् तेनैव रूपेण एकैव शक्तिः । अन्यतमत्वस्य तु प्रमाणान्तरलभ्यत्वात् न शक्यत्वम् । संप्रश्नप्रार्थनयोस्तु अतिरिक्तैव शक्तिः 'किं व्याकरणमधीयीय' 'भवति मे प्रार्थना व्याकरणमधीयीय' इत्यादौ । तत्र प्रवर्तनात्वाभावात् । अनुज्ञा तु निषेधाभावः स्फुटा । 'हेतुहेतुमतोर्लिङ्' (पा ३।३।१५६) 'कामप्रवेदनेऽकच्चिति' (पा ३।३।१५३) इत्याद्यनुशासनेन हेतुत्वादौ प्रयुज्यमानेन प्रवर्तनात्वस्यैव शक्यतावच्छेदकत्वात् । प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वम् । अनुकूलत्वं च जनकत्वम् । तत्र लोके पुरुषाश्रयवृत्ति । वेदे च तदभावात् इच्छाभिन्नस्य कस्यचित् प्रवर्तनात्वं वाच्यम् । अथापि इष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङर्थः इति मण्डनमिश्राः । अर्थभावनाऽभिधानानुकूलया लिङादिनिष्ठचेष्टया अभिधारूपया प्रवर्तनात्वेन रूपेण लिङादिशब्दनिष्ठं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यते इति तु पार्थसारथिः । वस्तुतस्तु इष्टसाधनत्वादिज्ञानस्यापि विनिगमनाविरहः ।

तथात्वे वा लोकेऽपि तथैव तयापत्ते तार्किकमतोक्तदूषणापत्तिः । शक्तिप्रवर्तनावादिमतेऽपि उत्तरकाले शब्दाभिधानानुकूलशक्त्या लिङादिनैव वा विनिगमनाविरहः तदवस्थ एव । अत 'कल्प्येन विनिगमनाविरहे कल्प्यमन्यत् सिध्यति' इति न्यायेन अलौकिको धर्म एव लिङादिनिष्ठः, प्रवर्तनात्वेन लिङादिवाच्यत्वेन कल्प्यते । तज्ज्ञानं च प्रवृत्तिं प्रति कारणम् इति न्यायसुधाकृन्मतमेव वरं युक्तम् इति व्यक्तं कौस्तुभे ।

वस्तुतस्तु लोके नेच्छया स्वरूपेण प्रवृत्तिं प्रति कारणत्वम्, तदभावेऽपि तद्भ्रमेण प्रवृत्त्युदयात् । स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च । नापि तज्ज्ञानस्य कारणस्य इष्टसाधनत्वानुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैव अन्वयव्यतिरेकसिद्धौ कारणत्वकल्पने मानाभावात् । अतः प्रवृत्तिप्रयोजकत्वमेव प्रवर्तनात्वम्, तदपि च न लिङादेः शक्यतावच्छेदकं गौरवात् अन्यलभ्यत्वाच्च । प्रवृत्तिर्हि आख्यातादेव लभ्यते । प्रयोजकत्वं तु संसर्गत्वेन इति न तदपि शक्यतावच्छेदककोटिप्रविष्टम् । अपि तु लोकवद्व्यापाररूपेण व्यापारत्वमेव शक्यतावच्छेदकम् । अस्ति हि लौकिके लिङादिवाक्यप्रयोक्तरि पुरुषस्य प्रवृत्तिसाधनीभूतेष्टसाधनत्वानुमापकतया प्रवृत्तिप्रयोजकव्यापारत्वम् । वेदेऽपि शब्दभावनोत्तरकाले अनुमानेन तत्कार्यदर्शनात् इच्छायाश्च अपौरुषेये वेदे अभावात् कार्यानुमेय अलौकिक धर्म लिङादिनिष्ठ लिङादिवाच्य परिकल्प्य तस्य तदनुमापकस्वरूपत्वात् तथापि प्रवृत्तिप्रयोजकव्यापारत्वम् । अत उभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् ।

इत्थं च तत्र व्यापारानुविधायक सर्वमपि शब्दाभिव्यक्त्यसाधनत्वान् विशेषलाभ । तथाहि लिङ्पदात् व्यापारत्वेन व्यापारबोधेऽपि तस्य आख्यातोपात्तकृतौ निरूपकत्वसम्बन्धेन अन्वये बुद्धे पश्चात् तत्संसर्गत्वेन रूपेण बोधेऽपि तेनैव प्रकारेण विशेषलाभो न असम्भव । इत्थमेव हि 'भूतले घटः' इत्यादौ घटपदात् घटत्वविशिष्टमात्रबोधेऽपि तत्र दोषतः समर्पणे भूतले घटाश्रये बुद्धे तत्संसर्गस्य तदैव

नाशकालीनेति । यत्र 'कलञ्जभक्षणम् अनिष्टसाधनम्' इति वाक्यात् अनिष्टसाधनत्वादिशाब्दबोध तत्र तज्जन्य-सम्बन्धनाशकालीनाभावदशायां उक्तप्रयोगापत्तिवारणाय अनुमितिजन्येति लिङ्विशेषणम् । अनिष्टान्यत्वस्यैवा-नुविधायिना विहितत्वरहज्ञानजन्या निष्टसाधनत्वानुमितिसम्बन्ध-सम्बन्धनाशकालीनप्रवृत्त्यभावदशायां तादृशप्रयोगापत्ति-वारणाय स्वविषयत्वेन्यादि । अत्र निरुक्तसम्बन्धेन निवार-णाप्रयोज्याभावप्रवर्तनादशायां तादृशप्रयोगापत्तिः, अतः स्वविषयकज्ञानमपि स्वजन्यताशकालीनत्वमात्रोपपेक्षमेव विशिष्य तत्तद्व्यक्तित्वेन प्रविष्टं इति ज्ञापनाय विशेषपदम् । अत्र प्रथमं स्वपदं प्रवृत्तिकारणतावच्छेदकीभूतवत्त्वस्त्वभ-स्त्वक्तिपरम्, द्वितीयं स्वपदं तु पूर्ववत् लिङादिनत्तद्व्यक्ति-परम् । तेन निरुक्तसम्बन्धेनतसमभानाशकालीनलिङादिज्ञानो-पयोपयोतुज्ञानजन्यानुमितिविरह इत्यादि. फलितोऽर्थः । एव च अनुमितिविरस्य विशिष्यप्रवेशोऽपि न क्षतिः ।

तत् सिद्धं निवारणरूपस्य लिङर्थस्य अनेन सम्बन्धेन आख्यातार्थकृतौ अन्वयः इति । नञ्पदं तु स्वार्थस्य अभावस्य प्रतियोगितासम्बन्धेन आख्यातार्थकृतौ अन्वया-नुवादक सत् लिङाद्यर्थतात्पर्यग्राहक इति सर्वमनाकुलम् ।

तत् सिद्धं प्रवर्तना–प्रेरणा–विधि– अपरपर्यायभूता भावना तन्नुरुदितवाक्ये लिङाद्यर्थं । सैव च शब्दनिष्ठ-त्वात् वेदे शाब्दी भावना इत्युच्यते । तत्तच्छक्तताववच्छे-दक तु लिङ्त्व लोट्त्व च, न तु तव्यत्वादिकमपि, तेषां 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा. ३।३।१६३) इति स्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः । प्रमाणा-न्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैष । अतिसर्गः कामचारः । 'स्वाध्यायोऽध्येतव्य.' इत्यादौ तु अप्रामा-ण्यात् प्रयाधेन विधौ लक्षणा इति सांप्रदायिकाः । लिङाद्यादेशत्व वा शक्ततावच्छेदक अप्रमाणत्वात् । रहस्य. पृ. २–१९.

● विध्यर्थबोधक्रम । तदयं भाट्टमते बोध-क्रमः । स्वर्गकामनिष्ठा यागकरणिका स्वर्गकर्मिका प्रयाजादीतिकर्तव्यताका भावना इत्यर्थभावनाबोध ।

विधिनिष्ठा प्रतिपदकरणिका पुरुषार्थकर्मिका प्रव-र्तना इति शब्दभावनाबोधः प्रतिज्ञन्यत्वेन लक्षणया वा उपपद्यते । तत अर्थभावना निरुक्तप्रवर्तनाविषय इत्येक-वाक्यतया महावाक्यार्थबोधः । अत एव विध्युपरक्ता भावना लिङर्थं इति भाट्टसिद्धान्तः । विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा अर्थभावना लिङ्प्रतिपाद्या इत्यर्थः । अर्थभावनाविशेषणत्वेनैव शब्दभावनायाः अन्वयः । राजादिकृताज्ञादेः तथैवाभिगमात् । तदन्वयेन योग्यत्वेन प्रवर्तनायामपि तत्तदनिष्टाननुबन्धीष्टसाधनत्वं लभ्यते ।

'न सुरां पिबेत्' इत्यादौ प्रतिषेधवाक्यार्थोऽपि इत्थमेवोन्नेय । एवमन्येऽपि अन्ययशेषाः व्यवहार्याः इति । मणि, पृ. ९३.

● विध्यर्थवाद पयोहोमस्य, अग्निहोत्रे वर्जित यवाग्वादिनिषेध. । १०।८।४।७. मीको पृ १७४१ 'जर्तिलयवाग्वाय' इत्यत्र अधिकरण द्रष्टव्यम् । ● विध्यर्थवादः वैश्वानरस्यान्नः 'योऽस्युत्तरे' इति वाक्यम् । आक्षानुवादोऽन्यविध्यर्थे अग्निरसा इति । १०। ५।१३।५३–५४ पर्यङ्क २ मीको पृ १८१ 'अग्नि-रसा इति पौर्णमिक्यस्योपसंहार' इत्यत्र अधिकरणं द्रष्टव्यम् । ● विध्यर्थवादयो. एकवाक्यत्वम् । सु. पृ. ७८४ ● विध्यर्थवादयो. एकवाक्यत्वाभावात् अर्थवादस्य धर्मे नास्ति प्रामाण्य इति पूर्वपक्ष. । विध्यर्थवादयो. पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यता अस्त्येव । अर्थवादो हि विध्यपेक्षित प्राशस्त्य समर्पयति । ततश्च अर्थवादा अपि धर्मे प्रमाणम् । वि. १।२।१. ● विध्यर्थवादयोर्बलाबलम्— विध्येकवाक्यत्व विना अर्थवादत्वानवगमात् विधिविरोधसमवायेऽपि स्तुति-निन्दाभावानुपपत्तेः न विधिजन्येन ज्ञानेन अर्थवाद-जन्यस्य ज्ञानस्य बाध्यत्वलक्षण विध्यर्थवादयोर्बलाबल किंतु विध्येकवाक्यत्वानुसारेण अर्थवादस्वरूपावधारण एवास्य तच्च विरोधकारणत्वाभावात् न मुख्यबाधाद्यपेक्षम् । सु पृ १०७१ ● विध्यर्थवादयो. शक्तिः विषयावबोधने तुल्या । वा ३।४।११।२' पृ ९६७, ● विध्यर्थवादानां प्रधानगुणभावे सत्यपि पूर्वापरो-च्चारणकृतोऽन्यो विशेषो भवति । सर्वत्रैव तावत् पूर्वं विज्ञान अनुपजातविरोधि, द्वितीयविज्ञानान्तरानुत्पत्य-त्पन्नत्वात् आत्मलाभेन आत्मानं लभते । पश्चात्तनं तु

पूर्वविज्ञानावरुद्धज्ञानविषये उत्पाद्यमान सन्ना विरोधा-वस्थायां तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति अन्यथात्वमपि प्रतिपद्यते । 'पश्चात्तदर्थं यदेषु स्पन्दो जायते यथा । पुरस्तादर्थं यदेषु तत्पूर्वा निषि-कल्पना ॥' ३।४।१२।२१ पृ. १६६.

* विध्यर्थविचारः । नैयायिकाः इष्टसाधनत्वकृति-साध्यत्वबलवदनिष्टाननुबन्धित्वानां अन्यतमस्याभावेऽपि चिकीर्षाया अजननात् सर्वेषां तज्जनकत्वमविवादम् । अन्यथा चन्द्रमण्डलादावपि चिकीर्षोत्पत्तेः । एवं च प्रवृत्तिजनकलिङादीनां त्रितयमनाविरहेण त्रितयेऽपि शक्तिः । पुष्पवन्तशब्दस्य युगपदर्थद्वयबोधेन एका शक्तिः । शक्तिभेदेन वा युगपद् बोधः । अन्यथा तेषां धारणी । अतः त्रितय विध्यर्थः इत्याहुः ।

अत्रेदमवधेयम् । कृतिसाध्यत्वं न विधिगम्यम्, कृतौ यागानुकूलत्वबोधेन समानाधिकरणतयैव यागे कृतिसाध्य-त्वस्यापि मानात् ।

एवं इष्टसाधनत्वमपि न वाच्यम् । तस्यापि याग-स्वर्गयोः साध्यसाधनभावबोधेनैव मानात् । अनन्यलभ्यस्य च शब्दार्थत्वात् ।

न च तत्र तत्त्वप्रकारकबोधार्थं शक्तिकल्पनम्, इष्ट-साधनत्वप्रकारकत्वनिश्चयस्य ज्ञानस्यैव प्रवर्तक-त्वात् इति वाच्यम् । स्वर्गकामपदेन तत्र इच्छाविषयत्व-बोधात् यागे तत्साधनत्वबोधेनैव इष्टसाधनत्वस्यापि बोधात् । 'स्वर्गः अनिष्टः, यागो वा अनाधन' इति बोधे स्वर्गकामादिपदार्थबोधाभावेनैव वाक्यस्य प्रामाण्यानुप-पत्तेरुपपत्तेः ।

एवं बलवदनिष्टाननुबन्धित्वमपि न वाच्यम् । श्येन-वादेनैव तद्बोधात् । श्येनाद्यभिचारादिरूपानिष्टे इष्टोत्पत्ति-नान्तरीयकत्वाभिव्याप्त्यभावबोधनेनैव बलवदनिष्टाननु-बन्धित्वस्य लाभात् ।

किंच 'इष्टसाधनकृतिसाध्यबलवदनिष्टाननुबन्धि-त्वोभिन्नत्वाभिधानानुकूलविधायकम् सर्वत्र' इति बोधे आख्यातार्थेऽपि विशेष्यतया प्रकारतया च भाने वैरूप्या-पत्ति इति दिक् ।

अत्राभिधीयते । अभिधैव शब्दनिष्ठा प्रवर्तनाख्या विध्यर्थः । तथाहि, प्रवृत्तिर्द्वेधा स्वेच्छाधीना, पराधीना च । तत्र आद्यायां इष्टसाधनत्वादिधीः कारणम् । अन्त्यायां राजगुर्वादेः आज्ञाप्रेरणादिधीः । अनिच्छन्न-मपि 'राजा मा प्रवर्तयति' इत्यनुभवात् । तेषां च प्रवृत्तौ प्रत्येकरूपेण न हेतुत्वं व्यभिचारात् गौरवाच्च । किंतु इच्छाविनियुक्तप्रवर्तनारूपप्रकारकज्ञानं हेतुः । तथा 'अयं मां प्रवर्तयति' 'विधिर्मां प्रवर्तयति' इत्याकार-कम् । प्रवर्तना च प्रवर्तयितुः पाप्रवृत्त्यनुकूलव्यापार-विशेषः । स च चेतनस्य राजादेः आज्ञादिः । वेदे तदसंभवात् अचेतनस्य वेदस्य अभिधानात्मकः कश्चित् शब्दसमवेत अलौकिकः । तथा च राजाज्ञादिज्ञानात् यथा प्रवृत्तिः तथा विध्यभिधानज्ञानात् इति सैव लिङर्थः । सा च शब्दाश्रितत्वात् शब्दधर्मः । शब्दव्यापारत्वाच्च शाब्दीभावना इत्युच्यते । भावनापदस्य व्यापारवाच-कत्वात् । अत एव आख्यातार्थो भावनाऽपि व्यापार एव ।

ननु उक्तयुक्त्या अभिधाविषयाभिधेयत्वाविना ज्ञानात् अप्रवृत्तेश्च प्रवर्तनात्वेनैव अभिधाज्ञानं प्रवृत्ति-हेतुः । तेन तज्ज्ञानं च कथं स्यात् ? किंच अभिधायाः अचेतनवेदस्य सर्वशक्तित्वेन तस्या अनुपपत्तिरभ्रम इति चेन्न । प्रवर्तनात्वविशिष्टं लिङ्त्वसामान्यमनपेक्ष्य तेन प्रबो-धात् तत एव तज्ज्ञानात् तथैव युक्तेः । यथाहि । स्तनपानार्थं रुदन्तं स्व एव सन्तानं मातुः स्तन्यदानार्थं प्रवृत्तिमुपलभ्य तज्जनकज्ञानं विजानुः स्वरोदनेन स्वाभि-प्रायरूपप्रवर्तनानुमानमेव मातुः परिशेषात् तथा इति प्रतिपद्यते । तथा प्रयोजकवृद्धवचनश्रवणजन्य प्रयोज्य-वृद्धस्य प्रवृत्तिं दृष्ट्वा तस्य तद्वाक्यव प्रवर्तनाज्ञानं अनु-मिनोति । तत्र 'तस्य किं हेतुः' इति जिज्ञासायां वाक्यमेव तथा अवधारयति । तत्र भावार्थोद्भावान्या लिङ् तत्र शक्तिं कल्पते । तदुक्तं 'अभिधाभावना-माहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वा-ख्यातस्य गोचरः ॥' इति ( वा. पृ. ३७८ ) ।

कार्यतया अर्थविषयकत्वात् अर्थाभिधानं वा । तथा च अर्थनिष्ठत्वात् अर्थभावना फलोत्पत्त्यनुकूलाभिनोद्यत-

* विधित एव सर्वेन फलस्य कर्तृगामित्वसिद्धिः । सोम. ६।२।१, ६ यत्र साध्यत्ववाचि द्वितीयादिकं नास्ति तत्र साध्यत्वं उद्देश्यत्वं च द्वयमपि विधितः एव स्वर्गादेरवगम्यते । २।१।४.

* विधिवैविध्यनिरूपणं (कृतं) परिसंख्यानियम-अपूर्वविधिभेदेन । भाट्ट. १।१।६.

* विधित्वं अनुवादेन बाध्यते । बाल पृ. १४२. * विधित्व अथमत्र प्रवर्तना इत्याकारक प्रेरणाख्यो व्यापार-विशेषः । मीन्या. * विधित्व अर्थवादत्वेन बाध्यते । बाल पृ. १४४. * 'विधित्व श्रोतमात्रे च भावनावाक्या-श्रयम्' । श्रुत्या तावत् प्रयोजनभावना विधीयते । तद-न्यथानुपपत्तेस्तु अर्थात् कारकान्तराणि । वा ३।१।७। १३ पृ. ७०४ * अप्राप्तविषयप्रवर्तनस्य विधित्वम् । सु पृ ५७३. * यदा हि भावनाफलं निमित्त भावना र्थत्वेनैव गृह्यते, तदा अर्थात् विशेषणविधौ सति अवा-क्यभेद यत्नाम । यदा तु तत् विशेषणार्थमित्यवधार्यते, तदा भावनाया इतिकर्तव्यतात्वात् अनेकविशेषणयोगे सति यदर्थ विधित्वमवसीयते तस्यैव स्य विधानम्, नेतरस्य उद्देश्यस्यापि इति वाक्यभेदो भविष्यति । वा. ३।०।२।१६ पृ ५०२. * यद्यपि विधित्व प्रत्ययोपात्त न नामपदमुच्छन्न' इति भाषाग महानापि स्वनातिलोक-न्यायेन सर्वत्र 'फलस्य.भावना भावनैव विशेषा स्यात्...। सु पृ ४६९.

※ विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वा-द्विकृतावपि भेदः स्यात् । १०।४।१६।३२॥

ज्योतिष्टोमे 'अग्नीषोमीयः' इति विधौ अज शब्दः पठितः । प्रैषनिगमे तु छागस्य वपाया मेदसो-ऽनुब्रूहि' इति छागशब्दः पठितः । एवं प्रकृतौ विधौ निगमे च शब्दभेदात् विकृतावपि 'गौरनुबन्ध्यः' इत्य त्रापि भेदः स्यात् । विधौ गोशब्दे पठितेऽपि निगमे उस्रा, उस्रिया, अघ्नी, मही, अदितिः इत्यादेरन्यतमस्य पाठः स्यात् न तु गोशब्दस्यैव । एवं 'पृषदाज्येन वन स्पतिं यजति' इति विधौ वनस्पतिशब्दे पठितेऽपि निगमेषु वृक्षः, पादपः, द्रुमः, नगः इत्यन्यतमस्य नामधेयस्य पाठः स्यात् । तत्प्रकृतित्वात् अनुबन्ध्यस्य अग्नीषोमीयप्रकृतिकत्वात् वनस्पतियागस्य च अनुयाज प्रकृतिकत्वात् । तस्मात् विधिनिगमयोर्न शब्दैकत्वम् । इति पूर्वः पक्षः ।

यथोक्तं वा विप्रतिपत्तेर्न चोदना । ३३ ॥

'गौरनुबन्ध्यः' इत्यस्य प्रैषनिगमे यथोक्त शब्द उस्राशब्द पठेत् । न तु अन्यतम गोः पर्यायम् । 'उस्राया वपायै मेदसोऽनुब्रूहि' इति हि तत्र उस्राशब्द आम्नातः । विप्रतिपत्तेः इति षड्यन्तम् । "विप्रतिपत्तेर्न चोदना । न विप्रतिपत्ति चोदक प्रापयति । न च प्रकृतौ विधिनिगमभेदो विवक्षितः । 'छागस्य वपाये मेदसोऽनु-ब्रूहि' इत्येतत् वक्तव्यं इति निधीयते । तत्र अर्थात् विधिनिगमभेदो जातः । छागशब्दनिधान भेदात् गम्यते विधिनिगमभेदो लक्षणया । तस्मादाम्नानसामर्थ्यात् उस्रा-शब्देनाभिधानं कर्तव्यम् । तथा पृषदाज्ये देवताया यो विधिशब्दः उक्तः तेन वचनं कर्तव्यम् । विधिनिगम-विप्रतिपत्तिर्न चोद्यते । तस्मात् वनस्पतिशब्देन निर्देशः कर्तव्य । ' इति भाष्यम् । सुबोधिनी तु- विप्रति-पत्ते विधिवाक्यभूतशब्दात् अन्यस्य शब्दस्य न चोदना, अन्यशब्दः पठितव्य इति न विधिरस्ति- इति । कुतूहलं तु-श्रुतार्थविलक्षणतया प्रतिपद्यते गम्यते इति विप्रतिपत्तिः आर्थिकोऽर्थः- तस्य न चोदना नातिदेशः इति । " आर्थिकस्य विधिनिगमवैलक्षण्यस्य नातिदेश " इत्य-र्थोऽर्थः इति च । के.

* विधिनिर्णयः —'विधितत्त्वे विमन्यन्ते बहुधा वादिनो यतः । अतो वार्तिकसारीयैः क्रियते तत्र निर्णयः ॥' १ ॥ कः पुनरयं विधिः । केचिदाहुः प्रमाणान्तरागोचरो लिङादिशब्दप्रतिपाद्यमान कार्यात्मा धात्वर्थभावार्थयोरपरः स्वर्गकामादिनियोज्यमात्मानं प्रेरयन् नियोगो विधिरिति । कथं पुनरेवंविधे विधौ लिङादीनां व्युत्पत्तिः । अत्राहुः । लोके वृद्धलिङादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धं प्रवर्तमानमुपलभमानो व्युत्पित्सुः पार्श्वस्थो नूनमस्य कार्यावगति संजाता । कथमन्यथा स्वतन्त्रः प्रवर्तेत दृष्टो हि मे प्रवृत्तिः कार्यावगतिपूर्विकेव सर्वदा दृष्टा, अस्यापि सा विशेषात् तत्पूर्विकयैवानया प्रवृत्त्या भवितव्यम् । सा च कार्यावगतिः लिङादिशब्दानन्तर्यात्

तत्तत्पत्तिरेवेति लिङादिशब्दाना कार्याभिधायित्व सिध्यतीति । तत्र यद्यपि प्रवृत्तत्वप्रसर्गैरकगोचरत्वात् प्रवृत्तेश्च क्रियागोचरत्वात् कार्योत्पत्तिरी क्रियैवेत्र लिङादिभिर्जनितेति क्रियैव कार्यात्मिका लिङादि शब्दानामर्थः, न तु तदतिरिक्तमपूर्वमिति बुद्धिर्जायते तथापि वेदे पदार्थसिद्धान्तरात्मा कार्यं प्रति नियोक्तृत्वेन स्वर्गकामादेरात्मत्वेन हीन स्थितम् । नियोगश्च स उच्यते यः कार्ये स्वेन कार्यमिति बुध्यते । न चाकाम-साधन कामी कार्यतया बोद्धुमर्हम् । क्रियत्वं च क्रिया तत्र नेष फलान्तरार्थत्वज्ञानेन कामिन रमवतीति नान्यथा फलोपभोगार्थिनः कामिनो युक्त प्रवर्तन्तेन तदन्वयपरोऽथ स्यात्तु कार्यं क्रियातिरिक्त लिङादि-शब्दाभिधेयं निश्चीयते । तच्च प्रमाणान्तराप्रापितत्वाद-पूर्वमिति च व्यवहरन्ति पुरुष नियुञ्जान नियोग इति च व्यपदिश्यते । तस्मिन्नेव क्रियातिरिक्ते कार्ये सार्वे यो लोके लिङादीना नियोगः प्रयोगः न स्वाभाविको भवति, अलौकार्यत्वस्य व्यावृत्तत्वात् । एवं च नैमित्तिक-निषेधाधिकारयोरपि फलत्वे अपूर्वमेव वाच्यार्थो भविष्यति, तस्यैवाभिधेयत्वादिति । तदिदं नास्य मनोहर मोहनजालोपमं वा तत्त्वम् स्यादोषमनुभाव-स्यात्वात् । न यतोऽत्राय कल्पते । तथा हि । ‘ न कार्यं-पगति, कथाऽपि प्रवृत्तेः कारणं मता । कर्तुरिष्टाभ्यु-पायत्वबोधात्मा सर्वदा यत. ॥ ’ २॥ यत्तावत् कार्यमात्रम् प्रवृत्तिकारणमिति तत्र किं तत् कार्यं रिच तत्र प्रमाणानि वक्तव्यम्, तन्निश्चाय प्रधान च फलमित्युच्यते तत्र बुद्धिप्रापकस्य तावत् कृतौ तथा भावादन्यथा व्यासात् अन्वयव्यतिरेकाभ्यामवगम्यते । प्रवर्तते तु तदुद्देशेन कृतेः प्रवृत्तिः, मानसप्रत्यक्षो-पाधमपतत्रे । कृतिर्हि पुरुषप्रयत्न , स च मानस-प्रत्यक्षगतो यदुद्देशेन प्रवर्तते तद्विशिष्ट एव प्रत्यक्षे-णावगम्यते । सर्वो हि ‘ इदमुद्दिश्याहं यते ’ इति प्रवृत्तिरेव्यतामेव विशिष्टोद्देश्यतया प्रत्यक्ष प्रत्यक्षेण जानातीति । प्रत्यक्षानुमानप्रमाणक कार्यमिति चेत् किमितरो तदुद्देश्यमात्र कार्यत्वम् । यदेव वा यदेव किंचित् यागादिफलोऽस्मदादिभिरनर्थत्वपर्यायतयोद्दिश्य पुरुष. प्रवर्तते तत्सर्वं कार्यं प्राप्तम् । तत्र को दोष. ? नैसर्गिकार्यत्वमतिः प्रवृत्तिकारणं भवितुमर्हति, तत्रापि तस्या प्रवृत्तिदर्शनात् । यो हि मोहात् सर्पाद अङ्गुलि-मात्रमुद्दिश्य प्रवर्तमानो मन्ये तस्यानर्थत्व जानाति स तत्रत्वो विरमति, तत्र कार्यत्व तावदुद्दिश्य प्रवृत्तेरा-द्युद्दिश्यमानस्य सत्त्वात्, तस्मात्कार्यत्वाभावेऽपि ताथा । तथा च पश्चादनर्थत्वागमेऽपि न वाध्यते । न खलु जानन्नपि अनर्थमुद्दिश्य न च प्रवृत्ति सजातीयत्वम्यानि, किंतु अनर्थमेवोद्दिश्य मोहात्प्रवृत्तोऽस्मीत्यवगच्छति । तस्मात् प्रत्यक्षप्रमाणिका येयं कृत्युद्देश्यतामात्ररूपा कार्यता न तद्वगतिः प्रवृत्तिकारणमिति सिद्धम् ।

अथ कृत्युद्देश्यार्हता कार्यता सा केन प्रमाणेन गम्य-ते ? न तावत् प्रत्यक्षेण । प्रवृत्त्युत्तरकालमपि कर्मणः कार्यत्वरूपेणात् । भाति हि संदेहोऽपि क्वचित् प्रवृत्ति । तत्र च कार्यत्व संदिह्यन एव क्वचिद्व्यापारे प्रवृत्त स प्रवृत्तिकालमपि न कार्यता प्रत्यक्षप्रमाणात् निश्चिनोति । प्रवृत्ति हि न विना कार्यत्वमार्यं यदि संदेहादेव प्रवर्ता महे इति । मा भूत् प्रवृत्तिकाले प्रत्यक्ष कार्यत्व फल वेऽग्यपा भविष्यतीति चेत् कस्य पुनस्तदानी कार्यत्व प्रत्यक्षत्वम् । न तावत्क्रियाया. नष्टत्वात् , नापि फलस्य तस्य मुक्यमानोत्पद्यमानत्वात् । न हि कार्यत्व नाम किंचिदानुभवाय पश्यते । यो हि दैवान्निमित्तमेवच्छायाभासम्, तस्य प्रसन्नतमिमोत्तरमध्यावामस्यम् , तयोरुभयोरपि प्रत्यक्ष मुन्योर्न्यप्रत्युपेत्य, न तृप्ति कल्पे कुर्वे कार्यत्व नाम कश्चिदतिरेक. प्रत्यक्षमीक्ष्यते । भवतु वा पुरुष प्रत्यक्षस्य कार्यता, तत्साधनस्य तु व्यापारस्य न कदाचित् प्रत्यक्षेण कार्यताऽवगम्यते, न अनुमानेन न हि पुरुषस्य इष्ट कार्यत्व तत्साधनेऽनु-मातुं शक्यम् । व्यादेरत् । इत्थदृश्यता नाम कार्यता सा च यत्नाकार भवतु यथिवत् तदुद्देशेन पुरुषस्य प्रवृत्तौ मुखस्य आदते बदायरमाणितैव । स पुनरसा काकार ? सम्यक्त्वियान्तर तत्साधनता वा । तादृशं यथा भ्वानादेरु पुरुषस्य प्रवृत्तौ मुखस्य जायते । द्विविधं च सर्वोद्दिष्टम् । सुखं दु खाभावश्च । तत्र सुखं मन्दगम्यम् , दुःखाभावस्तु अनुमानगम्य. । तत्साधनता चान्वय-

व्यतिरेकाभ्यां न प्रमाणिकी कार्यतेति युक्तमेतत् । किन्तु एवं सति सुखदुःखप्राप्तिपरिहारातिरिक्तेषु तत्साधनत्वेन प्रवृत्तिकारणमङ्गीकृतं स्यात् । ततश्च 'गामानय' इत्यत्र गवानयनस्य सुखदुःखप्राप्तिपरिहारत्वाभावात् प्रवृत्तिहेतुभूतां कार्यतामभिदधानो विधिशब्दः समीहितसाधनताभिधायी स्यात् । तेन अयं गवानयनं कुर्यादिति यथाविधे पुरुषाणां कृतिः प्रवर्तते तथाविधमित्यर्थः । तथाविधता साधनस्य समीहिततया भवतीति तत्साधनत्वेन पारिशेष्यात् कार्यताविना शब्देनाभिहिता भवति । तथा न वेदेऽपि अपूर्वस्य स्वयं सुखदुःखप्राप्तिपरिहाररूपत्वाभावात् तत्साधनत्वेन कुर्यादिति कार्यरूपमपूर्वमभिदधानो लिङ् समीहितसाधनतामेवाभिदध्यादिति नैमित्तिकनिषेधाधिकारयोरपि साधनरूपापूर्वाभिधानात् तद्द्वारेणाश्रुतमपि फलं कल्पनीयं स्यात् । ननु न सुखस्य कार्यत्वम्, तत्साधनेऽपि भावात् । न साधनत्वम्, सुखेऽपि भावात् । तदुभयानुगतं कार्यत्वमुभयापेक्षया कार्यत्वं नाम प्रवृत्तिकारणमिति । नैवम् । न हि साधने कार्यत्वं नाम किञ्चित् प्रवृत्तिनिमित्तमुत्तरकाले वा प्रत्यक्षेणावगम्यते इत्युक्तम् । अतो नास्त्युभयानुगतं कार्यत्वं नाम कश्चिदर्थविशेषः । कर्तव्यताकारस्तु अन्यैकोपाधिकत्वात् उभयत्र प्रवर्तते, तद् इदमपि साध्यमानं स्वोद्देशेन पुरुषं प्रवर्तयतीति अनेनैवोपाधिना कार्यत्वप्रवृत्तिः । तस्मान्न कार्यतामात्रं क्रियायाः प्रवृत्तिकारणम्, अपि तु समीहितसाधनत्वज्ञानम् । अतः स्या समीहितसाधनत्वोपलक्षितमेव कार्यत्वम् । तत्तु क्रियायाः एवाभिधेयम् । तस्यैव प्रवृत्तिदर्शनात् । अत एव लोके क्रियैव कार्यतया शब्देन प्रतिपाद्यते, वेदे तु फलकामिनियोगान्यथानुपपत्त्या स्वर्गमेव कार्यं लिङादिभिरभिधीयते इति चेन्नैवम्, क्रियायामपि कामिनः कार्यतायाः अविरोधात् । नासौ फलसाधनीभवितुं समर्था आशुतरत्वात्, इति चेन्न, अपूर्वद्वारेणोपपत्तेः । तत्रद्वारेणान्यस्य साधनत्वं संभवति अतिप्रसङ्गात् । अवान्तरव्यापारो वा शक्तिर्वा साधनत्वमुपपादयति नापूर्वम् । तथा सति तर्हि व्यापारवति काष्ठे ते धनिव्यापारयो स्थित्यनुपपत्तिरिति चेत्, किमिदानीं काष्ठानां पाकसाधनत्वं नास्ति तथापि हि काष्ठेभ्यस्तेजसः परमाणवः समुद्भूताः स्थाल्युदरमनुप्रविशन्तस्तण्डुलान् विक्लेदयन्ति । न च तेषां द्रव्यरूपाणां काष्ठावान्तरव्यापारः तच्छक्तिर्वा वा समस्तीति न तद्द्वारेण काष्ठादीनां साधनभावः स्यात् । मा भूदिति चेन्न, सर्वलोकप्रसिद्धिविरोधात् । 'काष्ठैः पचति' इति निर्विवादप्रयोगात् । तस्माद् यदेव येन समीहितफलोद्देशप्रवृत्तेन तदुपायभूततया ज्ञायते तदेव तस्यावान्तरव्यापारत्वेन अभिधीयते । तेन यागे यस्यैवापूर्वस्य कर्मान्तरव्यापारत्वम् । यदि चैव नेष्यते ततोऽपूर्वे प्रत्यपि साधनस्य कर्मणो न स्यात् । तदपि न कर्मानन्तरं जायते क्षिप्रकृदाशूत्तरतत्कालानुष्ठानप्रतीभागात् । तत्रान्त्यमुत्तरापूर्वाणि अवान्तरव्यापारत्वेनैषितानि । उत्तरापूर्वाण्येव परमापूर्वस्य कारणानि, न यागादीनि, इति चेन्न, न, अधिकारवाक्यार्थत्वाच्च । अधिकारवाक्ये फलकामिनियोगान्यथानुपपत्त्यापूर्वाभिधाने स्थिते पश्चात्तमेवाङ्गवाक्येभ्यः पूर्वाभिधानसिद्धि प्राक्तन लोकावगतक्रियाभिधायित्वमेव तेषु संभवतीत्यसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वसाधनत्वेन अन्वयसंभवः । न च यागादेरपूर्वाभिधायित्वम्, येनाशनतापूर्वाणां प्रत्यवायपरमापूर्वं प्रति कारणत्वं स्यात् । तस्मात् यथैव कल्प्यम् । किञ्च कार्यत्वमेवापूर्वस्य नोपपद्यते कृतिसाध्यं हि कार्यमुच्यते । कृतिश्च पुरुषप्रयत्न । न च प्रयत्नसाध्यता अपूर्वस्य संभवति, निरवधिके प्रयत्ने तदुत्पादात् । प्रयत्नेन हि यागः, ततोऽनन्तरापूर्वम्, ततः पश्चात् अधिकारपूर्वम्, तस्मात् कार्यत्वानुपपत्तेर्न कार्याभिधायिलिङ्वाच्यता अपूर्वस्य संभवति । तत्रापरस्य प्रयत्नसाध्यत्वमपूर्वस्य यागावान्तरापूर्वद्वारमाश्रित्यम् । तद्वत् यागस्यापि फलसाधनत्वमपूर्वद्वारकमिति नेष्यते । मा वा भूत् फलसाधनक्रियापूर्वं साधनं तावदस्त्येव, तावतापि कार्यतया तदवगमानुमहत्येव पुरुषः, यस्मिन् असति समीहितं न प्राप्यते, कृते च प्राप्यते साक्षात्परम्परया वा तदेव कार्यतया बुध्यते, न तु साक्षात् स्वात्मविशेषस्तत्रोपयोगी । अतएव कामिनः क्रियायामपि कार्यतापत्तिरेषितव्या । कथमन्यथा स्वतन्त्रं प्रवर्तते । सत्यम्, अवश्येन तत्रापि कार्यावगतिः, न तु शाब्दी किन्तु

धार्थी, कामानुगुणापूर्वसाधनत्वात्। तामपि वा लिङा कामी प्रतिपद्यते, इति चेन्न, निरस्तत्वात्। किं फलप्रसूता कार्यतामतिः क्रियायामपूर्वप्रसूता। न तावदपूर्वप्रसूता, काम्येषु विधेरनुष्ठापकत्वानभ्युपगमात्। यदि हि विधिनिबन्धना कार्यतामतिः क्रियायाः स्यात्, तदा नित्याक्षिप्तानुष्ठानतया काम्यानामपि नित्यत्वप्रसङ्गः। फलप्रसूतत्वमपि भवदुक्तया नीत्या न सिध्यति, न हि फलं नाम पुरुष क्षणिकं कर्म कार्यतया अवगन्तुमर्हम्। तस्या साक्षात्साधनत्वायोगात् अपूर्वस्य चावान्तरव्यापारस्याभावात् तद्द्वारेणाप्यसाधनत्वात्। साधनसाध्ये न साध्यार्थिनः कार्यावगमानुपपत्तेः। तस्मात् क्रियायाः कार्यत्वावगतिः न फलायत्ता, नापि विध्यायत्ता सम्भवतीत्यनुष्ठानमेव तस्या अनुपपन्नम्। तस्माद्विधिप्रवृत्ता काम्यानुष्ठानं फलायत्तमिच्छता अवश्यं क्रियायाः फलसाधनता वा साधनसाधनेऽपि वा साध्यार्थिनः कार्यतावगतिरेषितव्या। ततश्च शब्देनापि शक्यते एव फलकामस्य कार्यतया क्रिया प्रतिपादयितुमिति नायुक्ताभिधानसिद्धिः। एतत्प्रपञ्चश्च तत्त्वे आशुनिर्णये एव वक्ष्यामः।

अन्ये तु समीहितसाधनत्वमेव भावनाया लिङा अभिधीयते। तदवगमेनैव प्रवृत्तिकारणत्वेन आत्मनि [illegible]। ननु इच्छैव प्रवृत्तिकारणम्। सत्यम्, सा तु केवला प्रवृत्तिकारणं नावगता। शब्दस्य च प्रमाणत्वादवगतिजननद्वारेण प्रवृत्तिकारणत्वमिति नेच्छाभिधायित्वमस्य। इच्छा हि सुखदुःखावाप्तिपरिहारोपायत्वबोधाय चाधिकृत्य प्रवर्तते, तेन लिङ्शब्दानन्तरं प्रवर्तमानस्य प्रयोजकस्य प्रवृत्तिहेतुभूतेच्छोत्पादकत्वेन समीहितसाधनत्वावगतिरेव क्रियाया व्युत्पत्त्युक्ता कल्प्यते। तस्याश्च शब्दानन्तर्यात् शब्दस्य तदभिधायित्वं निर्णीयते। ननु मदिरास्वादस्य समीहितसाधनत्वादनुष्ठानं स्यात्। न, प्रबलेन द्वेषेण निरुद्धत्वात्। यथैव हि इच्छा प्रवृत्तेः कारणं तथैव द्वेषोऽपि निवृत्तेः। द्वेषश्च दुःखपरिहारतदुपायानधिकृत्य प्रवर्तते। सुरापानं च महानर्थसाधनत्वेन निषेधेन प्रतिपादितं द्वेषगोचरतया नानुष्ठानमर्हति। यस्तु समीहितेनाल्पीयसाऽपि सुखेनाक्रान्तस्वान्तो महान्तमनर्थं नापेक्षते न वा आद्रियते स प्रबलेन रागेण प्रतिक्षिप्यमाणचित्तः प्रवर्तते एव सुरापाने। तस्मात् समीहितसाधनत्वेन भावना विधिना सामान्येन बोधिता पदान्तरसमर्पितेन स्वर्गादिना विशेषाकाङ्क्षी संबध्यत इति स्वर्गकामाधिकरणे (६।१।१) व्युत्पाद्यते। यत्र फलविशेषसमर्पकं पदान्तरं समानवाक्ये नास्ति तत्र प्रकरणादिना फलं कल्प्यं भवतीति प्रकरणाधिकरणे (३।३।८) व्युत्पाद्यते। प्रकरणादीनामप्यभावे अर्थवादोक्तेन फलेन समन्वय इति रात्रिसत्राधिकरणे (४।३।८) स्थितम्। तस्याप्यभावे अध्याहृतेन फलेनान्वय इति विश्वजिदधिकरणे (४।३।७) स्थितम्। भावार्थस्तु करणेन समानपदोपात्तोऽपि बलीयस्या विधिश्रुत्या साध्यांशात् प्रच्याव्य प्रत्यासत्त्या करणांशे निविशते इति भावार्थाधिकरणार्थः (२।१।१)। तथा चोक्तम् 'यथा धात्वर्थकार्यत्वं पदभूतोपदर्शिते। भावनायां विधिश्रुत्या पुरुषार्थोऽपकृष्यते॥' इति। 'श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते॥' इति च। तस्मात् इष्टसाधनतैव विधिर्लिङादिशब्दगोचर इति तदुक्तायां भावनायां फलमेव साध्यं धात्वर्थस्तु करणमिति। आचार्यैस्तु 'अभिधाभावनामाहुरन्यामेव लिङादयः' इति वदद्भिः शब्दभावना विधिरिति अभिमतं लक्ष्यते। किं पुनस्तदुच्यते। इदं तावत् सिद्धं यथा समीहितसाधनत्वावगतिमन्तरेण चेतनस्य स्वात्मना प्रवृत्तिर्न घटते इति लिङ्शब्दश्रवणानन्तरं प्रवर्तमानस्य पुरुषस्य समीहितसाधनतावगतिः शब्दात् संजातेति मन्तव्यम्। तत्तु समीहितसाधनत्वं किमभिधानेन प्रतीयते किं वाऽर्थान्तराभिधायिना विधिशब्देन तदनुपपत्त्या बोद्धव्यमिति चिन्तनीयम्। तत्र नाभिधायकता युक्ता, सविदिरोधात्। न हि यागानुरक्तो व्यापार इष्टार्थहेतुरित्यनयोर्ज्ञानयोः शब्दात् तुल्याऽवगतिः सहप्रयोगश्च। लोके हि समीहितसाधनताज्ञानो विधिशब्दश्च युगपत्प्रयुज्यमानौ दृष्टौ। प्रातरेव सन्ध्यामुपासीनस्य तेऽभ्युदयो भविता, तस्मात्सन्ध्यामुपास्स्वेति। न च पर्याययोः सह प्रयोगो भवति। लोकप्रमाणकश्च शब्दार्थविभाग इति नेष्टसाधनताभिधायित्वं लिङादीनाम्। तस्मात् भट्ट कार्याभिधायिता

नताऽभिधीयते इत्यभ्युपगमनीयम् । तथाऽस्मिन् पक्षे प्रत्ययश्रावणतलिङ्शब्दादिभ्यः प्रवर्तनावगतेः न शब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानविशेष इति । न्यायविदां हिसाधनत्वमेवाभिमतम् , न च सर्वाद्विशेष तेन स्वरूपेणाभिधानाभावात् । प्रवर्तनारूपेण तु शब्दोऽभिधत्ते प्रवृत्तिहेतुम् धर्मं प्रवर्तना । सा चापौरुषेये वेदे प्रैषादीनाम् असम्भवात् पारिशेष्यादिष्टाभ्युपायतैव निश्चीयते तेन अभिधाव्यापारप्रवर्तनाभिधानात् प्रवर्तनारूपेणेष्टसाधनता शब्दोऽभिधत्ते न स्वरूपेणेति न प्रतीतिविरोध । इदमेव भगवतो मण्डनमिश्रस्यापि ' पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥' ( विधि २८३ ) । 'एवकार च प्रवर्तनाप्रत्यय ' इत्यादिवाक्योऽभिमतम् । एव चाने कार्थत्वं कल्पितं न भवति तथा हि प्रेरणमध्येषणमथ पुनरनिष्टसाधनत्वं चेति स्फोटोऽर्थो शब्दस्य वाच्यो भवेत् । प्रवर्तनासामान्याभिधाने तु लाघवं स्यात् तथापि तु रागद्वेषमोहादीनां प्रवृत्तिहेतुत्वाभावाच्चवादे । यत्र यथोऽवगम्यमानतया प्रवृत्तिहेतुस्तदभिधायी लिङ्शब्द इति । न च धर्ममात्र स्यात् कथञ्चनोऽभि प्रतिपाद्यमान प्रैषादिव्यपदेशभाक् धनोऽनुगत शब्दार्थं इति सम्मतम् । अथार्थवादानुगमनेनैव व्याख्यातो लिङ्प्रयोगादित्युक्तम् । तस्मात् प्रवर्तनासामान्य शब्दार्थः । एव च विशेष एव शब्दार्थो इष्टसाधनत्वोऽपि हि । न च प्रवर्तनात्व इष्टसाधनत्वेनार्थाऽयान् ॥ ' इत्यत्र श्लोके पूर्वार्धेन परस्परमुपसंक्रान्तरार्धेन समन्वयमुपपादयामिति व्याख्यातव्यम् । प्रवर्तनासामान्यमभिदधता लिङ्शब्देन निर्दिश्यमानविशेषस्यानर्थव्यापारस्यापौरुषेये च वेदे पुरुषधर्मणां प्रैषादीनां विशेषाणामभावात् पारिशेष्यादिष्टसाधनत्वेनैव बोध्यते इति ' अभिधाभावनामाहु ' इत्यस्यापि वार्तिकस्यायमेवार्थः । अभिधीयते इत्यभिधा प्रवर्तना कर्तव्यता सा सैव च पुरुषप्रवृत्तिं भावयतीति भावना तामाहुरिति । अथवा अभिधायाः शब्दस्य भावना अभिधाभावना सैव प्रवर्तना परस्य वेनाऽपि शब्देन पुरुषः प्रवर्त्यते तदिष्टत्वेऽभिधीयमाना शब्दव्यापारत्वेनोच्यते तामाहुरिति । अथवा इष्टसाधनता-

ऽभिधानमभिधा सैव विधानं विधिरिति व्युत्पत्त्या विधिरित्युच्यते सैव न भूतिकर्तृत्वं प्रतिपद्यमानाश्च पुरुषप्रवृत्ते प्रयोजकस्य शब्दस्य व्यापारो भावना तामाहुर्वदन्तीति ओदनपाकं पचतीतिवद्व्याख्येयम् । तदेवं शब्दकर्तृक प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेति गीयते । तथा पुरुषप्रवृत्त्यर्थं प्रवृत्ते पुरुषप्रवृत्तिर्हि स्वर्गादिस्थानीया सा या समीहितसाधनताविज्ञान तु परम प्रवृत्तशब्दव्यापारजन्यतया यागादिवत् करण प्राधान्येन न इतिकर्तव्यतेति विवेचनीयम् । प्रवर्तनेति समीहितसाधनतैवोच्यते । तदुद्देशेन हि कृति प्रवर्तते इति दर्शितम् । एत च प्रवर्तनावचन मर्तव्यतावचन प्रत्यय इत्यादि ग्रन्थस्याविरोध । न च सहप्रयोगविरोध , प्रवृत्तिनिमित्तभेदात् पर्यायत्वाभावात् । इष्टसाधनशब्दो हि तत्साधनतामेव साक्षादभिधत्ते, लिङादयस्तु प्रवर्तनारूपेण इत्यर्द्धकृत्यं वेति नास्ति पर्यायता । यदिदं वर्तमानरूपप्रवर्तनारूप वा समीहितसाधनत्वमेव लिङादिभिरभिधीयते इत्येतावदेव रमणीयम् । स्वव्यापाराभिधान पुरुषपार प्रन्थानुगुण्यमपि नातीव दृश्यते । तथा हि निषेधवाक्येषु प्रतिषेधस्य वर्जनस्य नञाभिधेयस्य लिङादिभिर्विधेयो प्रतिषेध इति यत्तत्संगच्छमहीङ्य ' ब्राह्मण न हन्यात् ' इत्यत्र पुरस्ताभिधया प्रतिपाद्यता प्रतिषेधविधानविरुद्धतापाद निषिध्यतिनेत्यविरुद्धानुपपादयतोऽत निष्फलमपि द्वेषाद्यप्राप्तमनूदितं हननं प्रतिषिध्य चरितार्थो नञ् न लिङ्व्यापारं प्रतीति प्रतिपेदुमिति । यदि हि स्वव्यापारो विधेय स्यात तस्यानुवादोऽयुक्यते । न हि द्वेषादिनिमित्तया हननादिप्रवृत्तो लिङ्व्यापार प्रवर्तक प्राप्त या न हन्यादित्यादिषु लिङादिसूत्र ननां प्रतिषिध्येत । ननु कर्वं यताऽप्यनभिधेया स्वयमनूद्यते अननूदिता वा कथं निषिध्यते । ननु मन्मते समीहितसाधनता हननस्य विद्यते एवेति कथं निषिध्यते । उच्यते, प्रवर्तना निश्चयं कर्तव्यता च महानर्थं जनयत्सु हननादिषु यद्यपि स्वल्पसुखसाधनत्वं तेन प्रवर्तना कर्तव्यता या न हि तादृशी प्रेक्षापूर्वकारिणां कृति प्रसक्ते । ये तु महान्तमनर्थं न जानन्ति ते स्वल्पसुखसाधनत्वादेव भ्रान्त्या कर्तव्यता मन्यन्ते सा दर्शयते

**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३१ ॥**

अयमभिप्रायः । मन्त्रेष्वेव यदि यच्छब्दादिप्रयोगात् केषुचिद्विधिमत्त्वमुपपद्येत न भवेत् । तथाहि, सर्वत्र खलु यच्छब्दादियोगादनुवादता परिस्फुरति । तथा क्रियायोगात् यच्छब्दस्य यच्छब्देन यथागता क्रियामनूद्य तद्वाचा पुरुषप्रवृत्तौ विधीयमानायां न विधिशक्तिर्विरोधीयते । विधेयभूतायाः पुरुषप्रवृत्तेः अननुवादात् कर्तृयोगिनि यच्छब्दे यः करोतीति महत्त्वेऽवानूदितत्वात् भवति विधिशक्त्युपघात इति । तेन सत्सु 'यस्योभयं हविरार्तिमार्छेत्' 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादिकर्तृयोगित्वात् यच्छब्दस्य विधित्वानुपघातः ; 'यदाग्नेयोऽष्टाकपालः' इत्यादिषु क्रियायोगित्वात् यच्छब्दस्य विधिशक्तिर्बाध्यतेऽएवेति । तदुक्तं पौर्णमास्यधिकरणे -- 'क्रियापदैकयोगित्वे यच्छब्दो न स्पृशेद्विधिम् । कर्तृयुक्तः स एवाऽप्राप्तितार्थानुवादकृत् ॥' इति (वा. पृ. १८८) । स च कर्तृयुक्तयच्छब्दानुबन्धो मन्त्रे ब्राह्मणे वा अविशिष्ट एवेति तद्वशेन विधित्वानुपघाते सति कर्माभिधायकत्वमप्युपपन्नमपीति । तदुक्तम्-- 'येषामाख्यातशब्दानां यच्छब्दानुपबन्धनात् । विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥' इति (वा. पृ. ४३१) । अतोऽस्ति तृतीयोऽपि प्रकार इति । इदं तु इह वक्तव्यम्-- अत्र यच्छब्दानुपबन्धेन मन्त्रब्राह्मणगतानामाख्यातशब्दानामभिधायकत्वमभिमतं पदार्थे वाक्यार्थे वा । न तावत्पदार्थे, अभिधायकत्वाकथनात्, आख्यातशब्दस्य पदार्थाभिधायकत्वाविरोधात् । नापि वाक्यार्थे, सर्वत्रैव वाक्यार्थस्य गम्यमानत्वेनानभिधेयत्वात् । अथ एतदेव वाक्यार्थाभिधानं यत् सामान्यविशेषे विशेषणान्वययोग्यप्रधानीभूतपदार्थाभिधानम्, तदा ब्राह्मणे यच्छब्दानुपबन्धस्य... विशेषणीभूतार्थप्रतिपादकत्वेन तथाभूतार्थाभिधानेनाभिधायकत्वमिति । सत्यं ते सर्वत्राभिधायका इत्यनेन सर्वत्राभिधायकत्वमभिमतम्, किन्तु अभिधायकत्वेन विशेषार्थप्रतिपादकत्वमात्रम् । तच्च ब्राह्मणे मन्त्रे च समानमेव । तत्र 'न ता नशन्ति' इत्यत्र यच्छब्दः, 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्तिः, 'दामि, गृह्णामि' इत्युत्तमपुरुषः, 'यदि सोममपहरेयुः' इत्यत्र यदिशब्दः, यदित्येवमादयः । प्रायेण मन्त्रेष्विति सूत्रे मन्त्रोपन्यासः ; किन्तु एतावानत्र विशेषः ब्राह्मणमन्त्राणां स्वरूपमेवोपलभ्य विधित्वनिवृत्तौ सत्यां स्वरूपादेव कर्मसु प्रयोगानर्हत्वात् निमित्तादिव्याख्यापनार्थैव । मन्त्रगतानां तु दामि गृह्णामि निर्वपामीत्येवमादीनां स्वरूपमेवोपलभ्य शक्यमेभिः कर्म कर्तुमिति विनियोगबुद्धिर्भवति । तदुक्तम्- '**अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः । अनन्यसाधनानन्यकार्यैर्मन्त्रैर्नियम्यते ॥**' इति (वा पृ ४३३) । तेन सत्ययोगेऽत्र किं प्रधानरूपकर्मविधायकत्वमेव परं सर्वेन ? अथ विधायकत्वमपि ? कर्मणि प्रतिपादकत्वमपि तृतीयः प्रकारोऽस्तीति मन्तव्यम् । प्रयोजनं पूर्वपक्षे विधायकत्वे सर्वं नाख्यातानामस्वाध्यायकर्ममेवेऽनुष्ठानभेदः । सिद्धान्ते तु नैवम् । सूत्रं तु-- यच्छब्दानुपबन्ध स्यात् । मन्त्रग्रहणमुपलक्षणार्थम्, तेनायमर्थः -- यच्छब्दानुपबन्धसहितमाख्यातमभिधानवाचकं विधित्वप्रत्यायनमात्रेऽद्भुत प्रयोगसामर्थ्यादिति । वीवा

*** विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २।१।६। ३० ॥**

'न ता नशन्ति, न दभाति तस्करो, नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह' इत्याम्नायते । अयं मन्त्रः काम्यपशुप्रकरणे गोदेवतायज्ञार्थतया पठितः । याभिर्गोभिः देवान् यजते, याश्च ददाति ता गावो न नश्यन्ति, न च तस्करो हरति, न च अराता कश्चिदपि अमित्रकृतो व्याधिः उपद्रवः पीडयति । गोस्वामी च ताभिः सह ज्योक् चिरकालं सचते संयुक्तो भवति इति मन्त्रार्थः । अत्र च-- यजते-- ददाति इत्यत्र विचारः । किं यद्वत् ब्राह्मणे भावशब्दो विधायकः, तद्वत् मन्त्रेऽपि, उत मन्त्रे न विधायकः इति । तत्र पूर्वपक्षमाह । विधिमन्त्रयोः विधौ ब्राह्मणे मन्त्रे च विद्यमानस्य भावशब्दस्य ऐकार्थ्यं एक एवार्थः स्यात् । ऐक-

साधारणविधिविरोधित्वम् । दार्शिकादेरुत्तमपुरुषस्य च परप्रवर्तनरूपविधिविरोधित्वम् । अतो विधायकत्वासंभवात् मन्त्रगताना स्मारकत्वम् । ब्राह्मणगताना निमित्तादिप्रतिपादकत्व लक्षणयेति द्रष्टव्यम् ।

मण्डन— ' मन्त्रे स्थितं भवपदं विधिनो । '

शंकर— ' मन्त्रा. स्युः अभिधायकाः । '

● विधियुक्तवाक्यान्तरकल्पनात् मन्त्रकल्प्यः विधिर्यथा– उपांशुयाजादौ याज्यानुवाक्या-सूक्तवाकादि-मन्त्रकल्प्यः देवताविधिः । यथा वा– ' सत्रादिव दक्षिणावन्तो अमृतं भजन्ता. सह ते सूर्येण ' इति अश्वदानफलविधिः । एतत् विरोधाधिकरणभट्टटीकाव्याख्यानान्ते सोमेश्वरेणोक्तम् । याज्ञ. पृ. १२

● विधिरूपं मन्त्ररूपं च अवान्तरवाक्य द्विविधम् । भाड. पृ. ९.

● विधिरूपप्रमाणप्रतिपादनं प्रथमाध्यायगत-प्रथमपादार्थः । वि. प्रस्तावना श्लोक १३.

● विधिलक्षणे । नहि गौणत्वेन विधातु शक्यते, लक्षणत्वेन चोच्चारयितुम् । प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुम् । न च अविदितः एवंजातीयक शब्दावगम्य-प्रसिद्धसंबन्धो भवति । भा. ३।१।७।१४ पृ. ७३५

● विधिर्वाविशेषादस्य अर्थवादस्य ' औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः ' इत्यादे. किं विधि. कार्यं उत स्तुतिः इति संदेहे स्तुतिरेव कार्यं इति सिद्धान्त. । भा. १।२।२।१९–२५. ● विधिव-न्निगदाना अर्थवादत्वमुक्तम् । भा ३।६।७।२७.

● विधिवन्निगदाधिकरणम् । १।२।२।१९–२५. मीको. पृ. १३३६ 'औदुम्बराधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● ' विधिवत् प्रकरणाविभागे प्रयोग बादरायणः ' ( ११।१।१०।६५ ) । प्रधानैरपृथक्कारा-नामङ्गाना तन्त्रम् । एवं सहत्वस्य कल्प्य प्रयोगवचनोऽनु-ग्रहीष्यते, 'द्वादशाहेन प्रजाकाम याजयेत्' इति । तदुक्त 'विधिवत् प्रकरण०' इति एव प्राप्ते । भा. ११।४।६।२३.

● विधिवत् ( ' चोदिते तु परार्थत्वात् विधिवदविकार स्यात् ' ५।१।१३।४० ) । यथा यत्र यजमानो गुण-भूतो विधीयते, तत्र येन केनचित् यजमानेन स विधिः सिध्यति । यथा ' यजमानसंमितौदुम्बरी भवति ' ' स्रुकं यजमानोऽन्वारभते ' इति । भा. ९।१।१३।४०,

● विधिवत् ( 'विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः' ११।१।१०।६५ ) । यथा विधौ तुल्यत्वात् प्रकरणस्य सर्वार्थान्यङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । कस्मात् प्रकरणेन नाभिसंबन्धात् । भा. ११।१।१०।६५.

● विधिवाक्यं अर्थवादात् प्रबलम् । स्वार्थपरतया विधेर्मुख्यत्वम्, प्रथमश्रुतत्वाच्च असंजातविरोधित्वम्, अनधिगतार्थगोचरत्वात्प्रमाणार्थत्वं चेति विधेः प्राबल्यम् । अर्थवादस्तु स्तावकत्वात् गुण्यः । चरमश्रुतत्वात् संजात-विरोधी, ज्ञातार्थानुवादित्वात् अप्रमाणार्थश्च । विधे. संदेह-जनकत्वे तु अर्थवादोऽपि निर्णयहेतुः । वि. १।४।१९

● विधिवाक्यस्य विधायकत्वेनोपयुक्तस्यापि पदार्थ क्रमनियामकत्वं मन्त्राम्नानक्रमाभावे । भाट्ट. ५।१।४.

● विधिवाक्यानां फलपर्यन्तगमने क्रमः इत्येतत् अर्थवादाधिकरणे मीको. पृ. ६३९ वार्तिके द्रष्टव्य. ।

● विधिवाक्ये देवतायाः सगुणत्वे निगमेष्वपि सगुणाया एव देवताया अभिधानम् । 'अग्नये पवमानाय' इति विधिः । ' अग्निं पवमान यज ' इति वक्तव्यम्, न तु ' अग्निं यज ' इति । ' इन्द्राय वैमृधाय ' इति विधौ सति ' इन्द्रं वैमृध यज ' इति वक्तव्यम्, न तु ' इन्द्रं यज ' इति केवलम् । वि. १०।४।१६,

● विधिवाक्ये यावन्ति पदानि, तावन्ति प्रत्येकमपूर्वं प्रतिपादयन्ति इति पूर्वपक्ष. । विधिवाक्ये एकमेव पद अपूर्वप्रतिपादक इतराणि तु पदानि तच्छेष. इति सिद्धान्त । २।१।१, ● विधिवाक्ये संशयितोऽर्थः अर्थवादान्निर्णीयते । ' अक्ताः शर्करा. उपदधाति ' इति विधिवाक्ये शर्करा: केन द्रव्येण अक्तव्या. इति संशयः । ' तेजो वै घृतं ' इत्यर्थवादात् घृतेन अक्तव्याः इति अर्थवादान्निर्णय. । १।४।२३.

● विधिवाक्यसंनिधौ अर्थवादसत्त्वे स्तवनेन प्ररोचना, यदा नार्थवादः तदा विधिशब्देनैव प्ररोचना । इदं विस्तरेण अर्थवादाधिकरणे (मीको. पृ ६३९) द्रष्टव्यम् ।

● विधिविपरिवृत्ति शास्त्रात् उत्पद्यते. प्रति-षेधिका, नान्यथाग । सु. पृ. ९५९.

च प्रागभवीयोऽभ्यास अवश्यमभ्युपेय इत्यत्र दृष्टा तमाह– बालाना न निःक्षा नेति । नहि वेदा प्राग्भवीयभावना मन्तरेण प्रवृत्ति–निवृत्तिहेतुभूतार्थप्रतिभासप्रतियोग्योत्पादन सम्भव । अर्थाभासप्रतिभो पादकेन चार्थप्रतिपादनयुक्तम । ‘ अनागमश्च सोऽभ्यास ’ । आगमस्तो प्राप्यते अस्मात् इति कारणमागम । अविद्यमान आगमो यस्मिन् असौ अनागम अनादिरित्यर्थ । ‘ समय कैश्चिदिष्यते ’ । समय इति आदिमत्तामाह । नैयायिकादयो हि ईश्वर निर्मित शब्दार्थसम्बन्ध समय इत्याचक्षते । स चाभ्यासस्य भावनाया विषय इत्यभ्यास उक्त । इति ) ( अथ पूर्व पक्षी चोदकमाह– ) न च नूम सर्वो ज्ञापको ज्ञानापेक्ष, किंतु स एव नेतर बीजादिष्वदर्शनात् ( स एव ज्ञापक एव । नेतर कारक । कुत ? बीजादिषु अङ्कुरादि कारकेषु अदर्शनात् ज्ञानापेक्षाया ) । न च दृष्टविपरीत स्वभावकल्पना लिङादीना ऽनुपपत्त्या, नाड्गानु सारेणापि उपपत्ते । प्रत्ययस्य सहाभिधानात् प्रकृत्या, तदनुवादाद्वा, तद्द्योतनाद्वा, तत्सम यथा तथाभिधानाद्वा तथा समभि व्याहारमर्हति । ( प्रकृतिप्रत्ययगो सहाभि धान तदनुवादात् प्रकृत्यर्थानुवादाद्वा यथा एको द्वौ बहव इति, तद्द्योतनात् प्रकृत्यर्थद्योतनाद्वा यथा ‘ कुमारी ’ इति स्त्रीप्रत्यय स्त्रीत्व द्योतयति, तत्सम न्य र्थतयाभिधानात । यथा ‘ पचति, पाचक, दण्डी ’ इति तिप् – अक – इनय प्रत्ययार्थविशिष्टभावना कर्तृसम्बन्धार्था ) अन चकस्य तु ( लिङादे ) प्रवृत्ते कारकस्य स न युज्यते ( समभि व्याहार ) । ( शङ्कते– ) सत्यामभिधेया तदभिधान स इति चेत्, शान्तु । ( समभि व्याहारमात्रम् । विरोधस्तु न सिध्यती त्याह– ) प्रवृत्तस्य प्रत्ययेन अप्रतिपाद्यमानाया कथ प्रकृत्यर्थसम्बन्ध ? अभिधेयैव प्रत्ययस्य प्रकृत्यर्थयुक्ता प्रवृत्ति इति चेत् ( प्रवृत्तिर्गौरवा ) । ( निराकरोति– ) न तावत् भावना कार्यरूपा लिङाद्यभिधेया इति शब्द विधिवादिभि अभ्युपगन्तुम् । तस्यां तर्हि वाच्या ( कर्तव्यतारूपया प्रवृत्ती ) लिङादे कारकत्वम् गमति । समभिव्याहृतिस्तु तस्याः वाच्य त्वेन वा तथाविधेन ( वाच्येन लक्ष्येण वा ) सम्बन्ध उपपद्यते, अप्रतीतयो सम्बन्धाऽयोगात् । कार्याया तु प्रवृत्तौ न नियमनिमित्त समस्ति अनभिधेयस्य प्रवृत्तिहेतो ( विशिष्टसमभि व्याहारनिमित्त अविद्यमानविशिष्टाभि धेयत्व शब्दस्वरूपविधिवादिनो मते प्रवृत्तिहेतो लिङादे इत्यर्थ ) ।

( कार्यकथनात् इति विवृणोति– ) अपि च अश्रुतफलेषु ( पिण्डपितृयज्ञादिषु ) फलाध्याहार, क्वचित् ( समिदादौ ) क्रतूपकारकल्पना, श्रुतानामपि स्वर्गा दीना फलत्वाध्यवसाय इति सर्व एव महिमा विधे । स शब्दस्य तदभावे ( विधिभावे ) अनुपपन्न । नहि तदा शब्दादनवगम्यमान अन्यथा ( फल क्रतूपकार विना ) गम्यते । नहि लिङादिस्वरूपमेव अन्यथा- ऽनुपपत्ति । प्रवर्तकत्व इति चेत् ( प्रवर्तकत्वानुपपत्त्या फलादिकल्पना, इति शङ्का ) न, तस्यापि ( प्रवर्तक त्वस्य ) पचनादिवर्तिन इवोपपत्ते फलरूप कारक विना । ( द्वितीयकारिकार्थमुपसंहरति– ) तस्मात् न विधि शब्द तदपाये वा ॥ २ ॥

ननु अनभिधेये ( शब्दव्यापारे ) पक्षे दोषा । अभिधेये एव तु लिङादिशब्दाना पुरुष प्रति ( प्रयोज्य प्रवर्तमान प्रति ) प्रयोजक व्यापार आत्मीय प्रवर्तना । एव युक्त ‘ अभिधाभावनामाहुर न्यामेव लिङादय ’ ( वा २।१।१।१ पृ ३७८ ) ( अभिधाया शब्दस्य भावना प्रवर्तनामाहुरित्यर्थ ) तथा च व्यापारत्वात् आत्मीयम् । प्रवृत्तिहेतु बुद्ध्वा पुरुषस्येच्छा प्रवृत्ति ( तथा च प्रवृत्तिनियमोऽपि उपपन्न ), सम्बन्धापेक्षा च । ( तथा च समभिव्याहारोऽपि उपपन्नम् ), अभिधेय सम्बन्धनियमश्च अभिधेयत्वात् ( अभिधेययोर्धात्वर्थप्रत्यया र्थप्रवर्तनयो सम्बन्धनियमात् प्रकृतिप्रत्यययो समभि व्याहारविशेषोऽपि प्रवर्तनाया अभिधेयत्वात् उपपन्न इत्यर्थ ), प्रतीतप्रवर्तनाऽन्यथाऽनुपपत्त्या कार्यकल्पना ( अपि उपपन्ना ) इति । ( तदेतद् दूषयति– ) नैतत् सारम् । ‘ न प्रयोगानिरूप्यत्वाद् वैयर्थ्यात् पूर्व- दोषत । अप्रवृत्ते फलायोगाद् रूपोक्त्यापि श्रुते ॥ ’ ३ ॥ विधे इत्यनुषज्यते । नहि प्रयाणाऽ प्येतस्मादभ्यासलक्षण शब्दस्य व्यापारो निरूप्यते, तस्य

लवित्रस्य तृणादेः कर्मविशेषेण सान्यत्वात् तेनैव प्रवृत्तिः (न तु सर्वेन। तदेतद्दूषयति– ) का पुनरियं साध्यता? यदि रूपं फलस्य, सर्वेन प्रवृत्तिप्रसङ्गः (फलरूपसाध्यताया: साधनाधीननिरूपणताभावात् न साधने प्रवर्तयेत्। प्रवर्तयेद्वा सर्वेनैव अन्यत्वाविशेषात् इत्यर्थः। चोदयति– ) कारकविशेषः (प्रवर्तकः। विशेष्यते व्यावर्त्यते कर्मकारकं गगनकुसुमादिभ्यो येन शक्तिभेदेन स तथोक्तः) स हि फलस्य साधननियतः शक्तिभेदो रूपादिवत्। अन्यथा (फलस्य शक्तिभेदाभावे) कारकत्वाभावात् (कारकत्वाभावप्रसङ्गात्, शक्तिमत एव कारकत्वात्)। यथा हि रूपादीनां (कर्मकारकाणां) शक्तिविशेषात् ग्रहणे साधननियमः, तथा फलेष्वपि द्रष्टव्यः, गगनकुसुमादेरनुत्पादात् तृणादेश्च (फलस्य) धर्ममात्रेण। (तदेतत् विकल्प्य दूषयति– ) कदा पुनरयं शक्तिभेदः साध्यताऽभिधानः? फलस्य भावसमये न तावत्, वैयर्थ्यात् अप्रवृत्तिहेतुत्वाच्च। न खलु उत्पन्नस्योत्पादप्रयोगिनी शक्तिरर्थवती। नापि सिद्धे फले तत्साधने कश्चित् प्रवर्तते। अभावकालेऽपि असत् कथं शक्तिमत्? तदुपपद्यत्।

ननु सदेव कार्यमुत्पद्यते। इद तावत्सत्कार्यवादिनोऽनुमान्य वक्तव्यम्। अपि च नियतोपादानकार्याऽनुत्पादात्तदभावान्यतिरेकाभावादुपादेयस्योपादानरूपेण सत उत्पत्तिः कल्पते। सर्वात्मना तु सतो तदनुपपत्तेर्नैकान्तिकोपादेयवत्। साध्य नोपादानम्। कथं तर्हि कर्म कारकम्? नैव कर्मकारकं कारकाश्रितमिति केचित्। क्रियासाध्ययोर्गौ सामानाधिकरण्ये। नैविध्य तर्हि हीयते। काम न त्यक्त कारकस्य शक्त्याध्यवसानम्। कथं तर्हि घटं करोतीति प्रयोगः? उपादेयबुद्ध्या उपादाननिर्देशात्। बुद्धिसत्त्वं वा क्रियासम्प्रयोगात्तन्निर्वर्त्यस्य कारकभावः। यथोक्तम्– 'व्यक्तौ पदार्थे शब्दादेर्मन्यमानस्य कर्मणः। कारकत्व तथा सिद्धं बुद्धिरूपप्रकल्पितम्॥' एतेन साध्यसाधनयोः परस्परानुरूप्यं परास्तम् (एतेन फलगतशक्तिभेदसाध्यतानिराकरणमात्रेण साध्यसाधनयोः सिद्धिं प्रति परस्परानुकूल्यं शक्त्यं साध्यता परास्ता वेदितव्या। तथापि हास्यात् 'कदा' इति प्रश्नस्य)।

अस्तु तर्हि कर्म प्रवर्तकम्, अभिमतसाधनता तस्य प्रवर्तना (प्रयोजकव्यापारः) प्रवृत्तिहेतुरूपत्वात्। न, तस्य विषयत्वात् (प्रवृत्तिप्रयुक्तः प्रयोजकः प्रवर्तकः। सिद्धश्च स भवति। तदिह सिद्धं चेत् कर्म प्रवृत्तेः प्राक्, प्रवृत्तेर्भावनाया विषयः, न भावयम्। निगच्छेत् कर्म, असिद्धत्वात् कथं प्रवर्तकमित्यर्थः) अपि च 'प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना। प्रयोक्तृधर्मो, न निषो यथाऽनियतकर्तृका॥' ७॥ लौकिकी शब्दार्थविगम। तत्र च प्रवर्तना नियताधारा प्रयोक्तृसंश्रयैव लिङर्थं अवगम्यते। लिङर्थस्तु या अनियताधारा। न च निरूपयेत् लिङाद्यर्थोऽपि अनिर्तुमर्हति। यथालोकमतानं शब्दार्थं वर्णनात्॥ ७॥

यस्य तु (दर्शन इति परेणान्वयः। दर्शनमाह– ) "एव सति पुरुषयत्न. अनुगाहः, होमानुगतस्य व्यापार भूत्वा अध्यते इति (तेषु–तेषु शास्त्रप्रदेशेषु भाष्यकार– ) दर्शनात् चेतनवर्तुव्यापारात्मिका (प्रयत्नशब्दप्रवेदनीया), इतरथा वा स्पन्दास्पन्दसाधारण्येन औदासीन्यप्रच्युत्यात्मव्यापारमात्र भावना विधिशब्दपर्यायो लिङर्थः अपगतकालभेदा (ननु यदि भावनैव विधिः, भवति, अपाक्षीत्, पक्ष्यति इत्यत्रापि अस्ति भावना, इति प्रयोगेष्वपि तुल्यार्थत्वप्रसङ्ग। इत्यत आह– अपगतकालभेदा प्रवृत्तिहेतुर्भावना विधिः। सा च लिङर्थः। न तु परं लडाद्यर्थं इत्यर्थः)। लडादिषु तु (भावनायाः) सत्वेऽपि कालविशेषेण (वर्तमानादिना) विधिरूपप्रतिबन्धात् अप्रवृत्तिहेतुत्वात् यत्रादिभिरिव लिङभिधेयाया ('यदि रथान्तरसामा सोमः स्यात्' 'यस्योभयं हविरार्तिमार्च्छेत्' इत्येवमादिषु लिङभिधेयायाः प्रतिबन्धो यथा)" इति दर्शनम्, त प्रति उच्यते 'नैकं विरुद्धं, न च तद्विशेषयेत् स कथ्यताम्। कालभेदाऽपरामर्शो कथं नास्मात् प्रवर्तते॥' ८॥ (यदि हि भावना विधि इत्येकमेव तत्त्वम्, तत– ) लिङादिषु (लडादिषु?) कालभेदेन विधिस्वरूपस्य प्रतिबन्धे भावनास्वभावस्य (विधेः भावनायाश्च) अभेदात्। अविरुद्धे (वा भावनायाः नियतानियतविषयधर्माध्यासात्) भेदप्रसङ्गात्। न खलु एकं विरुद्धमविरुद्धं च

यदृच्छादौ समाप्तिरिति नियमसम्बन्धहेतौ नैकान्तत फलस्य परिकल्प्यम (फलस्यपरिकल्पनम्)। शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात् ( मोहयदृच्छादिपरिहरणात्– ) फलकल्पना इति चेत्। न, अशास्त्रत्वात्। उपदेशक हि शास्त्रम्। न चैतेषा उपदेशका 'यजेत' इत्यादय शब्दा। नहि यमि 'इद कुरु' इत्युपदिश्यते। अपि तु स्वर्गकामादे भगवतश्च ( यागेन स्वर्गश्च ) अवगम्यते ( गम्यते इति णिचि रूपम् )। दण्डादिश्रुतिमिरिव (अनुपदेशिकाभि) दण्डादिमतश्च ( देवदत्तादे )। न च श्रुते यत्नमतो वा अनुपलब्धिनिरोधन, इति अविरतम् अवशिष्यते (तत्र च फलमित्र मोहयदृच्छादयोऽपि हेतव, समाप्तेन इति नैकान्तत फलकल्पनासम्भव इति )। अपि च यत्र न प्रवृत्तपूर्व पुरुष प्रवर्तते शास्त्रनिदेशरूपात्र मत ( सामुद्रिकशास्त्रेण कथितमिव ) प्रतिनियतनिमित्त निशाचनमनुमीयेत। तथा च वचनवैरूप्ये पुरुषशा भावात् ( यदा तु वचनादर्थं प्रतिपद्यापि पुरुष कदाचित् तत्यम्, न प्रवर्तितव्यम्, तदा अनर्थक प्रवचनमित्यर्थ ) ॥ ११ ॥

( सम्प्रति टीकाकारीय मतमुपन्यस्यति– ) यदपि दर्शन "प्रमाणान्तरागोचर शब्दमात्रालम्बन ( शब्दमात्र आलम्बन आश्रय प्रतिपादकतया यस्य स तथोक्त। लिङादियुक्तवाक्यश्रवणसमनन्तर स्वर्गकामादिना नियोज्येन– ) 'नियुक्तोऽस्मि' इति मनसा वेदनीय सुखादिवत् अपरामृष्टकालत्रय लिङादीनामर्थ ( नियोग ) विधि" इति, अनोच्यते। 'पदार्थ एव वाक्यार्थो न च सोऽनन्यगोचर। नार्थ्यैका क्रिया कारनिविक्त च खपुष्पवत् ॥' १२ ॥ भवदुक्त शब्दप्रमाणक ( नियोग ) वाक्यार्थ, पदार्थो वा। ( प्रथमपक्ष निराकरोति– ) तत्र पदार्थस्यैव पदार्थान्तरोपकल्पितविशेषस्य वाक्यार्थत्वात् अपदार्थत्वे तदनुपपत्ति। सम्बन्धाकार्यवादिनोऽपि ( मते ) यदि नाम वाक्यार्थ, सर्वे धनञ्च पदार्था एव इति नापदार्थो वाक्यार्थ। अस्तु नहि ( नियोग ) पदार्थ। नैतत्। अनन्यप्रमाणगोचरस्य सम्बन्धग्रहणाभावेन पदार्थत्वानुपपत्ते ) सम्बन्धवेदनसापेक्षत्वात् ( पदार्थज्ञानस्य ), तस्य च

सम्बन्धपरिच्छेदपुर सरत्वात्, प्रमाणान्तरे च तस्यायोगात् ( अर्थमात्रपरिच्छेदस्यायोगात्। परिच्छेदो हि प्रमाणस्य फलम्, तत्र तदभावे भवितुमर्हति )।

ननु अस्ति शब्द प्रमाणम् न, इतरेतराश्रयत्वात्। प्रमिते हि शब्देन नियोगे ( तेन सह ) सम्बन्धग्रह, सति च तस्मिन् शब्देन तस्य प्रमा। ( यत्तु मन्यते, अस्ति खलु लिङादे तादृश सामर्थ्यविशेषो येन अगृहीतसम्बन्धो लिङ्श्रवणसमनन्तर कतिपयश्रवणसहकारी जनयति लिङ्श्रवणनियमनियोगम्। कतिपयश्रवणसमनन्तर तद्भावात्। न च मन्येन अगृहीतसङ्गतिनया शब्दा स्वार्थं मभिदधति इति अनेनापि तथा मन्तव्यम्, मा भूद् न्योग्य न साक्षात् कार्यैता इति अस्यापि तथा मन्तव्य। तत् निराकरोति– ) अगृहीतसङ्गते पदस्य मन्ते प्रत्यक्षस्य वाक्यार्थप्रकरणात् ( अयमभिसन्धि प्रथमश्रवणादिव सम्बन्धग्रहे सत्योऽपि श्रवणान्तरे निरुपणविषयगोचरत्वे, व्यवहारकर्मत्वस्य च अर्थस्यानभिव्यक्तिगर्भतया उत्पत्ते तदपत्ते, नाव्युत्पत्तिसामर्थ्यातिशयपरिकल्पनादौ नैसर्गिकशब्दमात्रार्थनिश्चयापेक्षत्वात् असति सम्बन्धावबोधनिपाते युज्यते इति। चोदयति– ) प्रेषणादीना लोके प्रतीते तद्गतस्य तदुपाये सम्बन्धग्रह। ( दूषयति– ) तेषामेव ( प्रेषादीनामेव ) नहि प्रतीते सम्बन्धज्ञानम्, न नियोगस्य ( अपूर्वस्य। यत– ) तदर्थाभावे, न शब्दार्थो व्यभिचारात्। ( नहि प्रेषादयो लिङर्था, सम प्रति आमन्त्रणेऽपि तत्प्रयोगात्। नामन्त्रणम्, व्यापार प्रति अध्येषणेऽपि प्रयोगात्। नाध्येषणम् हीन प्रति प्रेषणेऽपि प्रयोगात्। सोऽयं व्यभिचार ) प्रवर्तकत्वेषु अनुयायी शब्दस्य, सर्वभावपरित्यागात् ( सर्वेषु प्रेषादिषु कर्तव्यता एका समन्वेत्। अन्यथा सत स्वर्ग चेतनत्वानुपपत्ते। तस्मात् कर्तव्यताभिधायिनो लिङादय स्वर्गकामादसाधनत्वात् नियोज्यविशेषणीभूतस्वर्गानुकूलस्य आकुलक्रियाविशेषात्मनोऽन्यस्य अपूर्वस्य अभिधायिन। तदेव प्रमाणान्तरागोचरता लिङाद्यर्थता नियोगस्य इति सिद्धम्। एतद्दूषयति– ) नैतत्साम्यम्। उपायश्चेत् मानान्तरसिद्ध, नैकान्तेषु अन्वयी पदार्थो नियोग ( अपूर्वम्। अत– ) प्रमाणान्तरगोचरत्वात्

नियुज्यते ( नियोगान्तराभावात्, स्वात्मनि न विषयविषयिभावानुपपत्तेः, भेदाभिधानात् तस्य । शङ्कते– ) स्वरूपेणैव स कार्यः ( नियोगः ), न तत्र अन्यापेक्षा ( नियोगान्तरापेक्षा ) विषयवत् ( यथा हि विषयो विषयिनियोगकर्तव्यताऽऽक्षेपात् कर्तव्यः, नैव नियोगस्य कर्तव्यता, स्वभावत एव तस्य कार्यत्वात् । परिहरति– भवतु ) किंतु 'यजेत' इति 'याजयेत्' इत्यर्थः स्यात् । तथा च स्वर्गकामोऽन्यनियोगमात्रेण कृतशास्त्रार्थः स्यादिति साधु समर्थितं भवता । ( अयमभिसन्धिः– न खलु अपूर्वं भावार्थं विषयं कार्यतया अवगच्छन्नपि स्वात्मनि नियोज्यप्रेरणम्, नियोगो लिङर्थः इत्युपपादितमसकृत् । तथा च आज्ञादय एवाभिधीयन्ते इति यजेतेति लिङा कार्यं नियोगमभिदधता यागविषयाज्ञादिरर्थः कर्तव्यः इत्युक्तं स्यात् । तस्य चार्थोऽध्येये वेदेऽपि समानः । न चाज्ञादयो विषयानुष्ठानमन्तरेण आज्ञापयितुं कर्म शक्या । न ननु राजा विष्टिं नियुञ्जानः किञ्चिदावहने वहति स्वयं शिबिकाम् । ततश्च स्वर्गकामो यागनियोगकरणमात्रेण कृतशास्त्रार्थः स्यात् इति साधु सुष्ठु सम्पादितमभवता । अतश्च न नियोगः कार्यं स्यात्– ) नियोगार्थे च कार्ये स्वर्गयागयोः परस्परासम्बन्धः तद्वत्त्वात् ( कार्यत्वनियोगान्वयादुभयोः । चोदयति– ) एकनियोगसम्बन्धिनोः ( स्वर्गयागयोः ) अस्त्येकवाक्यत्व नियमात् ( परस्परसम्बन्धः स्यात् । न विनियोगोऽस्मदीयो नियोगः, तद्विषयतया तद्विशेषेण अवस्थानात् । परिहरति– ) सत्यम्, नान्यकामो यागनियोगे स्वर्गकामनियोगी न यागादन्यत्र । साध्यसाधनभावस्तु अयुक्तः ( स्वर्गकामो एकनियोगसम्बन्धिनोरपि स्वर्गकामयागयोरिव सम्बन्धोऽवगम्यते, न पुनः स्वर्गयागयोः । अनवगम्यमानश्च विनियोगो न नियोगविषय इत्यर्थः ) ।

ननु न नियोगो विषयनियोज्यसम्बन्धमनुभवेत् ( स्वयं ) कर्तव्यताऽवगमाभावे ( तदसम्बन्धे ) रूपाभावात् । कंचित् ( नियोज्यं स्वर्गकामादिं ) क्वचित् ( विषये यागादौ ) नियुङ्क्ते इति हि नियोगस्य रूपं 'अस्येदं कार्यम्' इति । न च ( स्वर्गस्य यागेन– ) सम्बन्धो गुणप्रधानभावादृते सम्भवति, इति नेदं पर्यनिष्पत्तये, इति स्वर्गस्य अपवर्गत्वात् यागस्य ( अनिष्टत्वेन ) तादर्थ्यम् ( स्वर्गार्थत्वम् ) । इष्टसमुत्थे तदर्थान्वयप्रतीतेः । ( इष्टप्रयुक्ते वाक्ये स्वयमनिष्टस्य तदिष्टार्थान्वयप्रतीतेः । दूषयति– ) कथं तु नियोगविषयत्वं नियोगः । विषयनियोज्यविशेषणमात्रस्तु कुतः ? ( यद्येकनियोगसम्बन्धः तयोर्भवतु परस्परान्वयनियमः स्वर्गकामयागयोः । स्वर्गयागयोस्तु किमायातम् ? नहि स्वर्गो याग इव नियोगेन संबद्धः, अपि तु नियोज्यविशेषण इत्यर्थः । चोदयति– ) विशिष्टसम्बन्धात् ( यद्यपि न साक्षात् स्वर्गो नियोगेन सम्बद्धः, तद्विशिष्टस्तु नियोज्यः नियोगसम्बद्धः इति स्वर्गोऽपि नियोज्यमुखेन नियोगसम्बद्धः इति एकनियोगसम्बन्धात् यागेनापि सम्बध्यते । तथा च साध्यसाधनभावसिद्धिः स्वर्गयागयोरित्यर्थः । दूषयति– ) जीवनादेरपि प्रसङ्गः ( जीवनादेरपि निमित्तस्य नियोज्यद्वारेण सम्बन्धद्वारेण नियोगसम्बन्धे साध्यत्वप्रसङ्गः । चोदकः पृच्छति– ) किमतः ? ( उत्तर– ) अङ्गत्वं वा निमित्तस्य, ( नियोगविषये यागादौ ) प्राधान्यं वा । ( तत्र ) अङ्गत्वे ( निमित्ते समिदादिवत् ) अविवेकप्रसङ्गो निमित्तस्य ( प्राधान्यं तु यागं प्रति साध्यत्वलक्षणं जीवनादेः निमित्तस्य सिद्धस्य न सम्भवत्येव । अभ्युपेत्योच्यते– ) प्राधान्ये काम्यनैमित्तिकाधिकारयोः अविशेषः, उभयोः फलनिष्ठत्वात् ( ततश्च ) न नैमित्तिकः प्रयोगविधिः स्यात् । तथा चोभयत्र ( काम्ये नैमित्तिके च ) सर्वाङ्गोपसंहारो न स्यात् । ( चोदक आह– ) नियोज्यभेदसमर्पणेन कृतार्थस्य जीवनादेः न विषयसम्बन्धः स्यात् ( नहि अस्य विषयसम्बन्धमन्तरेण वैयर्थ्यम्, नियोज्यावच्छेदकतया अर्थवत्त्वात् । यदि नियोज्यभेदसमर्पणेन चरितार्थं जीवनं न सम्बन्धान्तरमर्हति, तत्र भो निमित्तनैमित्तिकभावमपि न भजेत इति नेत्याह– नियोज्यभेदसमर्पणमस्यैव जीवनादेः– ) आर्थं तु निमित्तनैमित्तिकभावं । तस्मिंश्च सति तदाविचारात् । ( दूषयति– ) 'स्वर्गकामो यजेत' इत्यपि तर्हि एवं स्यात् ( नियोज्यविशेषणं कामः निमित्तत्वेन सम्बध्येत, न साध्यत्वेन । चोदक आह– ) न भविष्यति ( अनन्य

निमित्तभावः ) साध्यस्यैव विशेषणत्वात् ( साध्यत्वं तु— ) काम्यत्वात् । ( दूषयति— ) तथापि न ( कामस्य ) विषय सम्बन्धे प्रमाणं अन्यसाध्यस्यापि ( स्वर्गस्य नियोज्यावच्छेदकतया ) विशेषणत्वोपपत्तेः । ( परमार्थतस्तु साध्यताऽपि न प्रतीयते ) इच्छामात्रदर्शेश्च । ( प्रयत्नव्याप्यता हि साध्यता, न पुनः उद्देश्यतामात्रम्, नापि तदविनाभाविनी सा । न खलु कारणानि अवश्यं कार्यवन्ति व्यभिचारात् ) । ननु कामिनः अधिकारावगतिः कामोपाये ( स्वर्गाद्युपाये एव ) अवकल्पते । नान्यथा तत् ( कर्म ) नियोज्येन कृतं स्यात् । ( उत्तर— ) कामिना कृतं नियोज्येन कृतं स्यात् । न तु कामः प्रवृत्तिहेतुः, अधिकारहेतुस्तु ( नियोगावगमनहेतुस्तु नियोज्यावच्छेदकतया, इति न व्यर्थं कामश्रवणम् ) । अधिकारहेतुश्च च प्रवृत्तिरिष्यते, न फलहेतुका, प्रागधिकारात् तदभावात् । ननु कामिनोऽधिकारः ( स्वर्गकामादिपदसम्बन्धादवगम्यते ; तथा च कामो निमित्तमधिकारस्य ) कामानुपाये च न कामनिमित्तः ( नियोगः ) । अधिकारो न निर्निमित्तः ( कार्यरूपत्वेन स्वरूपहानिप्रसङ्गात् ) न वा अन्यनिमित्तः ( कामपदवैयर्थ्यात् । उत्तरमाह— ) कामनिमित्तः, सति अस्मिन् ( कामे ) अधिक्रियमाणत्वात् । ( चोदकः स्वाभिप्रायमाह— ) ननु अनुपाये अधिक्रियमाणस्य न फलार्थिता ( नियोगावगमस्य ) निमित्तम् । उपाये हि उपेयार्थिता नियोगनिमित्तम् ( नियोगावगमनिमित्तम् । दूषयति— यदि उपेयार्थिता अनुपाये नियोगावगमनिमित्तं— ) सिद्धं तर्हि उपायोपेयभावे नियोगः, न नियोगात् तत्सिद्धिः । ( चोदक आह— ) सिद्धः एवासौ नियोगात् प्रतीयते । ( अयमर्थः— न तदवगमपुरःसरं नियोगविज्ञानम्, अपि तु नियोगस्य स्वर्गकामस्य चामे नियोगावगमः अपर्यवस्यन् स्वर्गयागयोः साध्यसाधनभावमाक्षिपति । तेन सिद्धः एवोपायोपेयभावः कारणान्तरात् नियोगेन ज्ञाप्यते इति । दूषयति— ) न । सापेक्षत्वात् ( सापेक्षत्वप्रसङ्गात् ) । तथाहि यदि विशिष्टपुरुषनियोगः शब्दार्थः ( यो हि पुरुषः स्वर्गः उपायेन मे साध्यः इत्यवगच्छति, तदीयो नियोगः शब्दार्थः, तर्हि नियोगात् प्राक् अयं

विशेषः पुरुषस्यावगन्तव्यः, इति— ) कथं स नियोगात् गम्यते ? ( शङ्कते — ) अथ फलविशेषनिमित्तको नियोगः ( यागसाध्यता स्वर्गस्य विशेषः, तन्निमित्तको नियोगः शब्दार्थः । निराकरोति— ) नासौ प्रागसिद्धे तद्भावे ( यागसाध्यत्वे फलस्य भवितुमर्हति, इति मानान्तरेण— ) इति प्राक्सिद्धतद्भावापेक्षः शब्देनोच्यते इति प्रमाणान्तरापेक्षत्वप्रसङ्गः । ( यदि मन्येत नियोगनिमित्तत्वं अनुपेयस्य कामस्य न सम्भवति इति यागं प्रति उपेय एवेति, तत्राह— ) उपेयस्यैव च अधिकारनिमित्तत्वे जीवनादिषु अधिकाराभावः ( अधिकाराभावप्रसङ्गः । अपि च अधिकारनिमित्तता कामस्याभ्युपेत्य इदमुक्तम्, परमार्थतस्तु— ) निमित्तस्वप्रतीतिहेतु— ( लिङादि— ) शब्दाभावाच्च अयुक्तमेतत् । ( चोदयति— मा भूत् निमित्तत्वप्रतीतिहेतुः शब्दः किन्तु— ) नियोज्यविशेषणमेव तु, तस्मिन् सति नियोगात् अर्थात् निमित्तत्वमुच्यते । ( परिहरति— ) यदि च स्वर्गकामादयो निमित्तपराः, न तर्हि नियोज्यपराः । तत्र ( निमित्तपरत्वे ) अधिकारप्रतीतिप्रयोगाभावः । ( शङ्कते— ) अथ ( निमित्तपदादपि गम्यत अपेक्षितत्वात् ) अर्थात् ( निमित्तत्वेन ) अधिकारसिद्धिः । ( निराकरोति— तर्हि अधिकारसिद्ध्यर्थं ) मुधा कर्तृविशेषणपक्षनिरासः । ( कृतः सिद्धिरधिकारिणः इति चेत्तत्राह— ) यथैव हि ( भवता ) कामितया अधिकारोऽवगम्यमानः उपायभूते धात्वर्थे, तथा ( अस्माकमपि ) कामितया कर्तृत्वं नानुपाये । ( तथापि कुतोऽधिकारविशेषप्रतिलम्भः इत्यत आह— ) यस्य च कामोपायः तस्यैव कर्म इति अर्थात् कर्तृनियमसिद्धेः अधिकारसिद्धिः ( अस्माकम् भवता तु ) अधिकारविधेरिव कर्तृनियमसिद्धिः । ( दूषणान्तरमाह— ) इष्टसाधनत्वे च वाक्ये इष्टार्थे अन्वयः, न नियोगार्थे अन्वयः । उभयार्थे अन्वये ( तु ) वाक्यभेदात् ।

( सम्प्रति स्वमतमाकरणदामुपन्यस्यति— ) ननु न त्रिनियोगोपमर्दो नियोगः, विशेषाभावात्, यथाविनियोग व्यवस्थान् । तत्र परस्परान्विताः पदार्थाः नियोगविपक्षतामापद्यन्ते । न चान्वये गुणप्रधानभावम् तदेण । तत्र दृष्टत्वात् स्वर्गः प्रधानम्, कर्म गुणतः ( गुण',

सार्वविभक्तिकस्तसिः ) इति कर्मोपसर्जने ( कर्म उपसर्जनं यस्य तस्मिन् स्वर्गे यागसाध्ये ) स्वर्गकामः पुरुषो नियुज्यते इति न नियोगप्रधानता हीयते, कर्मफलसम्बन्धयोरप्यरस्वे । न च यागे ( यागोपसर्जने ) स्वतः प्रवृत्तो नियोज्यः पुरुषः, उपायरहिते अर्थिनोऽपि अप्रवृत्तेः । न च प्राङ् नियोगात् उपायोपेयज्ञानम् ( नियोगादेव तदवगतेः । तदेतत् स्वाभ्युपगतसिद्धान्तविरोधेन दूषयति– ) न खलु विधिप्रयोगनिबन्धना स्वर्गयागसंगतिः इष्यते ( भवद्भिः ) तार्तीयी सा ( विधिप्रयोगनिबन्धना ) नैयोगिकी सेवा ( पार्थसारथिमिश्रस्य–३।१।३–तृतीयेऽध्याये साधारणगतिमनिच्छन् टीकाकारस्य समता, इति शब्दान्तरयाभोग. । अपिच नोपायफलविषय नियोग अभ्युपगच्छतः इदमपर अनिष्टमापद्यते इत्याह– ) मानार्थेन ( केवले ) नियोगविषयः इति मयुरवृत्तमेव स्यात् । ( अपि च यदा फलं नियोगविषयः, तदा ) निरधिकारत्वं न स्यात्, विषयस्यानधिकारहेतुत्वात् ( अधिकारहेतुरेव विषयः कस्मात भवति इत्यत आह– ) विश्वजिदादौ तदकल्पन प्राप्ते (विषयस्याधिकारहेतोरनिरूपणत्वात् । ननु प्रयोजनमेतत्, प्रमाण तु वक्तव्यम्, तदिदमुच्यते– ) विधेरधिकारलक्षणयोर्विरोधात् प्राप्त्यप्राप्तिभ्याम् ( लक्षणस्य प्राप्त्या प्रसिद्धत्वात् अप्राप्तस्य च विधेयत्वेन विधिविषयत्वात्, नासौ तदनुपपत्तेः । नियोगावगमात् प्राक् स्वर्गकामः क्रियया संबध्यमानः कर्तृतयैव गम्यते, पश्चात्तु नियोगप्रतीतौ नियोज्यत्व इति कर्तुरधिकारत्व पुनरपि गच्छत्यन्यारोप एवेत्याह– ) कर्तृत्वा च अन्वयात् प्राक् नियोगात् नियोज्यताभावात् । ( इत यागस्वर्गसंबन्धमापन्नत्वे इत्याह– ) अनवश्यकर्तव्यताप्रसङ्गश्च ( यागात्मिकाक्रियायाः कर्तव्यताप्रसङ्गः कर्तव्यतया च स्वनियतस्वभाववश्यच्छेदात् अनवश्यकर्तव्यताप्रसङ्गश्च ओपायस्य स्वर्गादेः ) कामस्य अतन्त्रत्वात् । तन्त्रत्वेऽपि इच्छातोऽपि अनवश्यकार्यं स्यात् ( तद्विषयत्वान्नियोगस्य फलवित्त्वन् । उपसंहरति– ) तस्मात् परस्पर अनन्वितयोः ( याग–स्वर्गसम्बयोः ) नियोगान्वय । तदन्वये परस्पर वाक्यभेदात् [ यागस्वर्गकामयोः परस्परमन्वये च वाक्यभेदप्रसङ्गादित्यर्थः– इति केचन: ] ( तदन्वये च न परस्पर तन्त्रम्, फलस्यापि साधनतया द्वयोः वाक्यभेदात् ) एकनियोगसम्बन्धादपि साध्यसाधनभावः प्रत्युक्तः ।

ननु नियोगात् अस्य ( लिङादेः, पुरुषस्य ) इदमुपकारक इत्यवगम्यते, कथं तस्य ( अधिकारिणः ) कर्म स्यात् ( यदि नोपकारकं कर्म ) क इव अपरोपकारः अन्यत्र कार्यात् ( उपकारात् । ननु यागेन किमनेनोपकारः ? इत्यत आह– ) उपकारान्तरे ( कल्प्यमाने ) अविपर्ययमनर्थकं स्यात् ( अनिष्टसिद्धार्थम् । तथा च श्रुतहानिरश्रुतकल्पना चेति दोषद्वयमापद्येत । दूषयति–यदि लिङादेः अस्य पुरुषस्य इदं उपकारकं कर्म इति सिद्धमवगम्यते–) तत्कार्यो उपकारस्ते तर्हि नियोगार्थः ( लिङर्थः । चोदकः पृच्छति–) किमतः ? ( उत्तर– ) उपदेशकत्व ( प्रसिद्धं ) हीयते, लिङ्गाल्लिङ्ग्यनुमानात् ( ततः ) सापेक्षत्व च ( प्रमाणान्तरनिमित्त मूर्धाभिषिक्तं प्रसज्येत । उपसंहरति– ) तस्मात् अस्येदं कर्तव्यमिति नियोगार्थ ( न पुनः अस्येदमुपकारकमिति ) अनुष्ठानप्रतीतेः अन्यथाऽभाव ( उपकार्योपकारकयोस्तु नियोगार्थत्वे व्यभिचारः स्यात् ) नैमित्तिकनिषेधाधिकारयोः उपकाराभावयोगात् ( न चाप्यनुत्पत्तिरप्रकार, तस्यास्तु वस्तुतः दिव्याद्दृष्टप्राप्तिपरिहारसाधनस्य अनुष्ठेयत्वेनावगतस्याभावेन उपकारभावाभावात् । ननु वेदेऽपि नियोगविषयस्य कर्मणो नियोज्यार्थकर्मता उचिता, इत्यत आह– ) न च नियोगार्थ एव कर्मणि नियोग, अत एव ( नैमित्तिकनिषेधाधिकारयोः व्यभिचारादेव । ननु लोके प्रतीतिसामर्थ्यात् नैमित्तिकनिषेधाधिकारयोरुपकार कल्पयिष्यामः, इत्यत आह– ) लौकिके न अध्येषणादौ अभावात् ( नियोज्यार्थताया. कर्मण । पुनरपि स्वर्गे साध्यताया उपलक्षणवैलक्षण्येन नियोगविशेषणता प्रदर्शयति– ) ननु नियोगार्थं स्वर्गः, नोपलक्षणं ( येन आत्मानं न कार्ये निवेशयेत् । परिहरति– ) भवतु नियोगे अस्य ( स्वर्गस्य ) अन्वय ( यागस्य तु कथम् ? ) ननु नियोग एव याग संबन्धं ( स्वर्गस्य यागेन संबन्धं ) विदधाति ( तथा च स्वर्गयागयोः सम्बन्धः साध्यसाधनभावः इति । परिहरति–) तथा याग, येन. पुरुषो नियुज्यते इति (तथा च स्वर्गकामयोः संबन्धो नाम नियोगात्, न तु स्वर्ग.

यागया । नहि एतावता नियोगप्रवृत्तिसम्बन्धो कल्प्यते इति ) 'यस्याग्निर्गृहान् दहेत्' ( स यजेत ) इति यथा ( यथा आहिताग्नेर्गृहदाहत्व इष्टो नियोगो नैमित्तिकगृहदाह प्रति साधनतामवगमयति, तथा स्वर्गकामस्यापि यागनियोगो न यागस्य तद्विशेषण प्रति साधनतामवगमयितुमर्हति ) । ननु इष्टसिद्ध्युपायो भावार्थे नियोगात् फलसिद्धिः स्यात् । ( परिहरति- ) स्यात् यदि इष्टो भावार्थ । न तु अयमेवमुक्त भावनाविधेरे (तादृश चेत् कर्म नियोगविषय, तर्हि तन्नियोगात् प्रागवगतव्यम् । न खलु अनवगतगोचरो नियोगः तद्गोचर नियोगमवगन्तुमर्हते । न च स्वर्गाद्यपि यागः प्राङ्नियोगावगमात् मानान्तरेण पाक इवौदनादिवत् अवगन्तुम । न च नियोगात् तदवगम , परस्पराश्रयदोषप्रसक्ते , सति नियोगावगमे तद्विरूपणम् , तस्मिंस्तु सति तदवगम इति । यद्यपि यागस्य प्रमाण तत्सिद्धम्, तथापि भावना न तत् सिद्धम् । तेन च तद्विषय , न पुना स्व भावेन । तमाविश्य वा नियोगतत्समर्थने नास्य स्वर्गेच्छ स्यात् इति भाव ) नैमित्तिके च फल- ( कल्पना- प्रसङ्ग , इष्टोपाये भावार्थस्य काम्यत्वात् तत्राप्यविरोधात् । न चापूर्वमि-ज्ञागोचर ) यथा न अस्मिन् दर्शने न प्रकारान्तरेणापि कर्मफलसम्बन्ध , तथोक्त भावनाविवेके । अत स्वर्गादीनामसम्भवात् न पुरुषार्थसाधनतावगम, पुरुषार्थसाधन च विधायते प्रसज्यते । ( तदनेन ग्रन्थेन नवदर्शककारिकाविवरणेन गतेन स्वर्गयागयो परस्पराश्रयतिप्रसङ्गात् नियोगस्य कार्यता प्रतिषिद्धा पुनस्तामेव प्रकारान्तरेण निषेधति-) लोकाच्च शब्दार्थावगमात् न नियोगप्रधानता ( नियोगपरता प्रति ) तत्सिद्धौ अनियोगात् ( नियोगानुसार तत्सिद्ध ) नापि प्रतिपत्ता प्रत्येति ताम्, ( नियोगसिद्धिं नियोगानुसारितया ) नियम सिद्धावपि अननुष्ठानात् ( नियोगस्य प्रतिपत्तु ) नहि 'गामानय' इति नियोगसिद्धिर्विवक्षिता वक्तु , अपि तु विषयसिद्धि ( नहि अयेनानीतायां गवि अवगतदान यनमारभते । तस्मात् विषयसिद्धौ नियोक्तुर्नियोज्यो समर्थितः यजविषयस्यैव साधनतामवगमयति, न तु नियोगपरताम् । चोदयति-) न स्थिते गन्दवृत्त अर्थवेदे, विवक्षापरो हि समर्थयो लोके शब्दाना ( अर्थाना ), नियोगपरो वेदे । ( तेन वेदे नियोगस्यैव कार्यता । दूषयति- ) अप्रमाणो शब्दस्योपरि स्फोट । यदि खलु विवक्षापरे अन्यये शब्दसामर्थ्यं लोकेनोऽवगम्यते ( तत ) न ( विवक्षितात् ) अन्यपरत्व ( वेदस्य ) अनवगम्यमानत्वात् ( लोकप्रमाणत्वात् ) शब्दमार्गदर्शनं, ( नोपा यान्तर तदवगमाय वेदे सम्भवति । शङ्कते- ) वक्तृ रभावात् ( न विवक्षापरो वेदे ) इति चेत् ( निरा करोति- ) अयमेव विवक्षापरोऽन्यत्र तमनुमापयेत् इति प्राप्त पौरुषेयत्वम् । ( सोऽयं अस्मिन् पक्षे लोकविरोध लक्षणस्य शब्दस्योपरि पौरुषेयत्वप्रसङ्गलक्षण स्फोट । अथ इष्टतरमपौरुषेयत्वम्, तत ) प्रतिपत्त्यभावो वा ( स्फोट , तदुपायाभावात् । अथ व्युत्पत्तिसिद्धा वेद वाक्यप्रत्ययसमानता प्रतीति नापह्नोतुमर्हति, तदाह- ) गमनी वा प्रतिपत्ति न शब्दनिमित्ता सा गमिनी स्यात् ( स्वत सिद्धैव वेदवाक्येषु पुरुषव्यापारेणनिबन्धना तदनुसारतः अर्थप्रतीति । यदि तु तद्व्युत्पत्त्यभावात् न सर्वेऽतिप्रसङ्ग , तत ) सामान्यतोदृष्टा वा ( यथाहि परयुक्त हि वाक्य अर्थविशेषप्रत्ययनिमित्तमुपलब्धम्, वैदिक च तथा इति तदपि प्रत्यायकम्, इति सामान्यतो दृष्टात् अर्थप्रत्ययो वैदिकादपि वाक्यात् ) तस्मात् लाघ वेऽपि प्रयोगाय एव ( प्रयोगपरम एव इति कणिकापाठ ) तत्र प्रसक्तो नियमो 'नियोग कार्य' इति । ( एता वता नवदर्शककारिकाणा पूर्वार्धे 'नियोगान्तरेण स्वाभिधेयविषयभावागमलक्षणात्' इति व्याख्यातम् । अथ पश्चार्धं व्याचष्टे- )

अपि च न लोके नियोगमात्रं प्रवृत्तिहेतु सर्वस्य नियोगतः प्रवृत्ते , अनुविधेयनियोगाच्च तदभावात् ( तत्र वृत्तिभावात् । तस्मात्- ) अनुविधेयत्व नियोक्तु अन्य नियोगात् प्रवृत्तिहेतु । अनुविधायकत्व च अर्थानर्थ प्राप्तिपरिहारादि प्रमाणान्तरसिद्धम् । ( वेदेऽपि भवतु विधेयोऽस्तु लोकवत् इति चेत् तत्राह- ) न च वेदे ( अपौरुषेयेऽपि ) नियोक्ताऽपि ( दृश्यते ) । कुत पुनरनुविधेय । ( धर्मस्य अत्यन्तासिद्धे । चोदयति- ) ननु शब्दा ( नियोक्ता अनुविधेय । शब्दनियोक्तुर्त्वं

च न्यायनि प्रथमसेन ' 'प्रमाणत्वात्' –कारिका २ – इत्यादिना । अभ्युपगम्याह– ) भवतु नाम नियोक्ता, न तु अनुविधेयः ( अनुविधान– )हेत्वभावात् । न हि अर्थानर्थप्राप्तिपरिहारयोः शब्दानुविधाने प्रमाणमस्ति । नियोग इति चेत् ( शब्दानुविधाने सति अनुविधातुः पुरुषस्य हितप्राप्तिः अहितनिवृत्तिश्च भवति इत्यत्र नियोगः प्रमाणमिति चेत् ) न । तस्य ( नियोगस्य ) प्रमेयत्वात् ( न खलु प्रमेय प्रमेयत्वेन प्रमाणं भवति ) नियोगज्ञानं तर्हि ( नियोगस्य प्रमेयतया प्रमाणत्वाभावे प्रमाणमस्तु ) न । तस्य नियोगविषयत्वात्, तस्य च ताभ्यामन्यत्वात् ( नियोगस्य अर्थानर्थप्राप्तिपरिहाराभ्यां भिन्नत्वात् । ननु मा नाम भूत् नियोगः अर्थानर्थप्राप्तिपरिहारयोः प्रमाणम्, तज्ज्ञानवेद्यस्तु अयं चेतनप्रवृत्तिं विना अनुपपद्यमानः तस्याश्च अर्थानर्थप्राप्तिपरिहारमन्तरेण असंभवात् प्रवृत्तिः अर्थानर्थप्राप्तिपरिहारप्रयोजनं आक्षेप्स्यते, आक्षिप्यते च तदपेक्षया प्रमेयमपि प्रमाणताम्, कारणस्य आक्षिप्तप्रवृत्तित्वात् इत्यत आह– ) न कार्यादर्शनात्, अभ्यासनियोगदर्शनात् ( आपथमेव सुपथमाख्याय तत्र प्रवर्तयति भवान् ) 'क्षेत्रेऽस्य कर्षाः, गच्छ ग्रामान्तरेण' इति यथा ( चोदयति– ) यदा अर्थाप्रयत्नेऽपि ( अर्थानर्थप्राप्तिपरिहारोपायत्वाभावेऽपि ) नियोगः ( क्रियादि– नियुज्यते अनेनेति व्युत्पत्त्या ) लौके, तस्य च ( साध्यसाधनभावस्य ) प्रमाणान्तरविषयत्वात् तदपेक्षत्वात् ( प्रमाणान्तरापेक्षत्वात् ) तद्विज्ञाने प्रवृत्तिर्लोके ( अज्ञाते साध्ये न नियोगस्य मानान्तरेण बाधितत्वादप्रवृत्तिः । मानान्तरागोचर– ) नियोगनिष्ठस्तु ( प्रमाणस्य ) वेदे, असौ नान्यथेति । ( तदेतत् दूषयति– ) उक्तोत्तरमेतत् ( नियोगस्य निराकरणप्रस्तावे ) । अपि च ( लौकिको भवतु अलौकिको वा, सर्वथा नियोगः इत्येव– ) न नियोगमात्रं प्रवृत्तिहेतुः । ( चोदयति– न चेत् प्रवर्तयति– ) मिथ्या तर्हि नियोगज्ञानम् । न चैतत् युक्त कारणद्वयाभावात् । ( परिहरति– ) न वयं नियोगं मन्यामहे येन मिथ्यात्वं स्यात् ( वेदस्य ) । अत्रापि तस्मिन् पुरुषः प्रवर्तते लोके इव यस्य कस्यचिद्वियोगात्, नहि तत्र नियोगो नास्ति । ( अथ न तन्नियोगपरं लौकिकं अपि तु विनियोगपरं इत्यत आह– ) अतत्परत्वे ( अनियोगपरत्वे लौकिकस्य लोकाधीनावधारणार्थस्य वैदिकस्य ) तात्पर्यं अप्रमाणक इत्युक्तम् । ( ननु न वयं नियुक्तिमात्रं नियोगं ब्रूमहे, अपि तु कर्तव्यताम् । स च नियोगः प्रवृत्तेः हेतुर्न इत्यवगम्यते इति शङ्कते– ) ननु कर्तव्यतावगमात् प्रवृत्तिः । अवगच्छति च नियुक्तः 'इदं मम कर्तव्यम्' इति । यस्तु अवगच्छन्नपि अनुष्ठेयं नानुतिष्ठति, स तत्रेऽपि अर्थानर्थप्राप्तिपरिहारयोः अननुतिष्ठन्निव न दण्डमर्हति । ( दूषयति– ) तदेतत् अविमृष्टनियोगरूपम् ( वच. ), तथाहि ( लोकानुसारात् आख्यातरूपित ) प्रवर्तनामाह नियोग । स च लिङाद्यर्थः ( न पुनः प्रवृत्तिहेतुः कर्तव्यता ) इति 'प्रवर्तितोऽहमत्र' इति प्रतिपत्तिः शब्दात् ( प्रवृत्तिहेतु ) कर्तव्यताऽवगमस्तु नियोक्तुः अनुविधेयत्वात् । अनुविधेयनियोगे 'मयेदं कर्तव्य' इत्यवगमात् । इतरथा तु ( कर्तव्यताऽवगमरहित– ) प्रवर्तनामात्रमवसीयते । ( अथैर जरन्मीमांसकोक्तीनां त्रुटिं वक्तुं प्रस्तौति इत्याह– ) उक्तं च 'कर्तव्यताविषयो नियोगः, न नियोगः कर्तव्यतामाह' । ( कर्तव्यताविषयो नियोगः प्रवर्तना नियोक्तुर्धर्मः, तमभिदधाति लिङ्, न नियोज्यस्य धर्मं कर्तव्यं प्रवर्तनाया विषयमाह, विषयस्य विधिविषये अन्यत्वात् । नवीनास्तु वदन्ति, 'अनिरूपितनियोगयाथात्म्यस्येदं चोद्यं' इत्युपक्रम्य इदमुक्तं 'कर्तव्यताविषयो हि नियोगः, न ( पुनः ) कर्तव्यतामाह' इति [ बृहती १।१।२ पृ. २९–३० ] यागकर्तव्यता अनुष्ठानविषयो यस्य नियोगस्य स तथा । तेन हि नियोगः साध्यते, न पुनः नियोगो यागस्यानुष्ठानं ज्ञापयति । एतदुक्तं भवति, साक्षान्नियोग एव कर्तव्यतया अवगम्यते लिङादिभ्यः । स तु यागविषयः, तदनुष्ठानमन्तरेण कर्तव्यतया अपर्यवसानात् तदनुष्ठानमाक्षिपति । सोऽयं आक्षेपापरनामा उपादानव्यापारः नियोगस्य आश्रीयते इति । तदेतत् अपूर्वात्मनि कार्यरूपे नियोगे सति उपपद्यते । चोदयति– नियोगस्तु ) तद्विषयत्वादेव हि तर्हि कर्तव्यतावगमः ( विषयिणो विषयनान्तरीयकत्वात् ।

निराकरोति- ) न तावदयं शाब्द , शब्देन नियोग मात्रस्याभिधानात् । ( यत्तु नान्तरीयकं भवेदिति, तत्राह-) नापि आर्थं , सर्वनियोगेषु अभावात् ( कर्तव्यताऽव गमस्य । उपसंहरति- ) तस्मादिदमपि दर्शनं अविमृश्य मानसुन्दर इति नाद्रियते वृद्धा ॥ २४ ॥

( सिद्धान्तमुपक्रमते- ) उच्यते ( पृ २३८ ) 'उपदेशो नियोज्यार्थकर्माप्रस्थितचोदना । प्रथितो गुरुवैयात्यो नित्येऽपि न न कल्पते ॥' २५ ॥ यद्यपि आज्ञाऽभ्यर्थनाऽनुज्ञा वेदेऽनुपपन्ना ( तस्यापौरुषे यत्वेन चेतनस्य नियोक्तुरभावात् ) उपदेशस्तु युज्यते ( तस्यापौरुषेयेऽपि सम्भवात् ) । सोऽपि तद्वदेव ( आज्ञा दिवदेव ) प्रेरणात्मकश्चतुर्थो लोके प्रथयते । तथाहि, आज्ञाऽभ्यर्थने हि नियोक्तृपं अनादृतनियोज्यफलं कर्म गोचरयत । नियोज्यार्थं तु ( कर्म ) उपदेश ( गोचर यति । अनेन 'उपदेशो नियोज्यार्थकर्म' इति कारिकांशो विवृत ) । अनुज्ञा तु यद्यपि एव प्रचिता तथापि अनुष्ठातृस्वनियमलात् गोपदेश । ( अनेन 'अप्रस्थित चोदना' इति विवृतम् । अप्रस्थितस्य अप्रवृत्तस्य पुंस प्रस्थापना चोदना इत्यक्षरयोजना ) । नियोज्यार्थकर्म गोचरं अप्रवृत्तप्रवर्तनं उपदेशनाम्ना प्रथते यथा । नहि गा अभ्याज ' ( इत्याज्ञा ) ' माणवक अध्यापय ' ( इत्यभ्यर्थना ) 'कुरु यथाऽभिमत ' ( इत्यनुज्ञा ) इत्युपदेशप्रतीति । नापि 'भैक्ष्य चरेत्' 'ज्वरित पथ्य मश्नीयात्' इति प्रतीति ( आज्ञादिरूपा ) । भूयसा चैव ( प्रकारेण ) पौरुषेयेषु सामायशास्त्रादिषु आज्ञादिभिरनाश्रितो लोके प्रथयते ( न केवल शास्त्रेषु, निरूपणविवचनेष्वपि इति प्रसिद्धतामेवाह-) गोपालादिवच तु च मार्गाख्यानपरेषु अनेन पथा गच्छ ' इति । नहि हीनस्य अभ्यनातार्थे ( अर्थे ) कर्मणि अभ्यर्थनाऽनुज्ञानमपपद्यते । अत एव चोपदेश इति आज्ञादिभ्यो भेदेन तस्य प्रतीतत्वात् ' तस्य ज्ञान मुपदेश ' – १।१।५ – इति तन्त्रो विध आदेश शब्देन दर्शित ( सूत्रकारेण ) ॥ २५ ॥

मानु तन्नो निष्ठ, न पुनस्तौ ( समानाशयार्थानाम् यत्नस्वस्य वाक्यमित्यर्थ ) । ननु उप ( भाष्यकृता ) ' उपदेश इति विशिष्टस्य शब्दस्योच्चा रणम्' ( इति न तत्र रूपतो विशेष उक्त ) । यत्र अनुत्पन्नस्यापि प्रवृत्तिप्रसङ्ग । उच्यते 'विशिष्ट पुरुषा र्थस्य शुद्धस्योपायमाह य । पुरुषार्थो यदा येन यो नरेणाभिकाङ्क्ष्यते ॥' २६ ॥ पुरुषार्थस्योपाय अनवगतमवगमयन् उपदेशादिविशिष्ट (अर्थगतेन विशेषेण विशिष्ट ) शब्द उक्त , अन्यथा सर्व एव शब्द शब्दा न्तराद्भिन इति अविशेषणमेव स्यात् । अतो नाविदि तार्थस्य ( प्रयत्नशालिन पुरुषस्य उपदेशात् ) प्रवृत्ति । सर्वार्थानार्थं चेदम्, अत अथ-शब्द-अभिधा-व्यापारा दिशब्दं च कर्म-कर्तृ करण-मात्रसाधनेन उपदेश शब्देनोच्यते प्रेरणादिवत् । तैरपि हि ( प्रेरणादिशब्दै ) यथानिर्दिष्टमर्थादयो निर्दिश्यन्ते । ( शङ्कते- ) अर्थमात्रं हि प्रवर्तक । ( परिहरति- ) सत्यम्, शब्दोऽपि ( प्रवर्तक ) तत्प्रतिपादनात् ( एतेन कारिकाया पूर्वार्धं व्याख्यातम् । अत्र च पुरुषार्थस्येति गुरुणो नियोगो ऽभिमत । शुद्धस्येति नियोज्यार्थस्यैव, न नियोक्तृप्रय स्येत्यर्थ । ननु यदि पुरुषार्थोपायाभिधायी शब्द उप देश - ) कथं तर्हि अङ्गोपदेश ? ( न खलु अङ्गानि पुरुषार्थानि अपि तु क्रत्वर्थानि । परिहरति- ) अपे क्षितो हि अर्थ पुरुषार्थ , अन्यथा प्रासादेरपि न तथा स्यात् ( तस्यापि स्वय असुखत्वात् ) । अपे क्षितश्च तत्साधनानुग्रह ( साधनानि अङ्गानि ) ॥ २६ ॥

ननु लिङादिभ्य प्रवर्तनाऽवगम्यते ( न पुन पुरु षार्थोपायता ) व्याहत चेद ' उपदेशो नियोज्यार्थकर्मा- प्रस्थितचोदना' इति । (उत्तर-) नेद व्याहतम् । तथाहि, ' पुरो नेष्टाभ्युपायत्वात् क्रियास्वन्य प्रवर्तक । ( ननु तथापि इष्टसाधनतामात्र शब्देन प्रतिपादितम्, कुत पुन प्रवर्तनाऽन्यत्र ? तत्राह- ) प्रवृत्तिहेतु धर्म च प्रवदन्ति प्रवर्तनाम् ॥ ' २७ ॥ प्रवृत्तिसमर्थो हि कश्चित् भावातिशयो व्यापारमभिधान प्रवर्तना । सा च क्रियाणा अपेक्षितोपायतैव । नहि तथात्व ( अपेक्षितो पायत्व ) अप्रतिपद्य तत्र ( क्रियासु ) प्रवर्तते कश्चित् । ( ननु अनपेक्षितोपायतेऽपि नृपाज्ञया प्रवर्तन्ते प्रेक्षा

क्रियासाधनयोगिनि । सामान्येऽस्मिन् विप्रकृष्टे यच्छब्दवदुपायधीः ॥ २८ ॥ ■ ननु प्रतिमा आलम्बनवती न वा ? ( यद्यपि प्रतिमा निर्विषया इत्युक्तम्, तथापि कदाचिदिदं अभ्युपगमसिद्धान्तमात्रं स्यान्न तात्त्विकं इति मत्वा दूषणाभिधित्सया विकल्पितम् ) आलम्बनवती चेत् तदेवावबोद्धव्यं प्रवृत्तिनिबन्धनम् । न च तद् अन्यत् ईहितोपायतायाः । निरालम्बनं तु ज्ञानमनुवृत्तमेव, तस्य नैयायभासकार्यलक्षणत्वात् । विषयाभावात्तु वस्तुस्वरूपमनवे तदनपेक्षस्य प्रवृत्तिः स्यात् । ( कश्चिदाह - ) ननु कारकसंसर्गिणी क्रिया आलम्बनमिष्टैव । ( दूषयति– ) न । तथा अप्रधानैकवचनान्यन्यपि प्रत्यायात ( ' काष्ठैः पचेत् ' इत्यादौ ) गम्यमानत्वात् लिङादियुक्तेभ्यो वचनेभ्य, प्रतिभाभेदात् अप्रवृत्तिप्रसङ्गात् । ( कश्चिदेव शङ्कते– ) ननु नामपदैकमनिर्भरैव वच. समस्ति, येयन्यते । कर्तव्यतापर्यवसायिनी हि वाक्यप्रवृत्तिः । ( परः शङ्कते– ) कथं तर्हि भूतान्वाख्यायिनो वेदान्ताः लौकिकवचांसि च । ( उत्तरमाह कश्चित्– ) कर्तव्यताभेदात् प्रवृत्तिनिवृत्तिप्रतिपत्तिविपर्ययात् । तत्र हि कर्तव्यता भेदवती, वेदान्तेषु शाश्वतं आत्मतत्त्वप्रतिपत्तिपरतैव । लोके च ' इदमिह नित्यादि प्रतिपत्तव्यम् ' इति वाक्यपर्यवसानम् । ( सिद्धान्ती दूषयति– ) नैतत् साम्यम् । ( तिस्रः प्रतिपत्तयः । भूतमयी, क्रियामयी, आलम्बनवती चेति । तत्र भूतमयीं अधिकृत्य आह– ) शब्दात् प्रतिपत्तेरुत्पत्तेः पुनस्तदभावापातात् कर्मफलसम्बन्धोऽभवत् ( यथा कर्मविधिवाक्य न कर्मफलसम्बन्धे विधीतरदपेक्ष्यते तद्वत् ) । विषयोऽपि ( आत्मनि ) यदि शब्दात्, मत्वा एव, अन्यतश्चेत् तदाऽप्रामाण्यम् ( शब्दस्य ) । अथपरताऽपि न ( विधेः प्रयोजनं ) दृष्टार्थत्वात् स्वाध्यायाध्ययनविधेः कर्मरतात् ( उपनिषदा धर्मजिज्ञासा ) ' अविशिष्टस्तु वाक्यार्थः ' इति न्यायात् ( १।२।४।३२ ), अन्यथा तद्विधिरसैद्धान्तिकविषयितार्थस्यमप्रमाणम् । न च पुरुषार्थत्वाय विधिः प्रार्थ्यते, ज्ञानस्य श्रेयोभिव्यक्तिफलत्वात्, कथान्तरानभ्युपगमात् ( ' अपुनरावृत्तिः ' इति हि मोक्ष उच्यते, न चासौ साध्यः ) क्रियापरत्वाच्च विधेः वस्तुस्वरूपपरतायाः अनिर्धारितत्वात् तदतिपरपर्यनुष्ठाने गम्येत, नात्मतत्त्वावबोधः स्यात् । अतः ( ' आत्मा ज्ञातव्यः ' इत्यादिः ) श्रूयमाणो विधिः एवंजातीयेषु अविनिश्चितः, निष्प्राप्तेः ।

ननु विधिरहितस्यानुवादरूपस्य वाक्यादूर्ध्वस्य प्रामाण्यमलभ्यम् । ( इद विकल्प्य दूषयति– ) अथ केयमनुवादता ? प्रमाणान्तराधिगतार्थता, आहोस्विद्भूतार्थता ? प्रमाणान्तराधिगतार्थता चेत् विधिशून्यमपि ( तर्हि भूतार्थे ) अवश्यं ( प्रमाणान्तरविषयीकृतार्थे ) अपौरुषेये नानुवादः । ( अथ ) भूतार्थता चेत् कुतः सापेक्षता ? ( शङ्कते– ) यदि लौकिकवचसा प्रमाणान्तराधिगतगोचरत्वात् भूतार्थाना सापेक्षत्वं दृष्टमौपधपानादिषु । विधयोऽपि लौकिकास्तथा ( सापेक्षा ) इति विधिमत् तत् ( वैदिकं ) सापेक्षमेव । वाक्य ( विधिमद्वैदिकं ) अपौरुषेयत्वात् सापेक्षते तत अपौरुषेयत्वं भूतार्थापि ( वैदिकभूतार्थेऽपि ) अपार्थय । अथ प्रमाणान्तरसम्भवात् भूतार्थस्य ( वैदिकस्य ) सापेक्षता, न विधिमतः । नियमार्थे तदसम्भवात् ( प्रमाणान्तरासंभवात् । उत्तरमाह– ) लौकिकस्यापि ( औषधादिविधेः ) तदनपेक्षत्वप्रसङ्गः । ( चोदयति– ) पुरुषबुद्धिप्रभवत्वात् विनियोगस्य तत्सापेक्षतया तत्र सापेक्षत्वमपौरुषेये वचसि । सोऽपि ( विनियोगः ) न केवल ( नियोग ) बुद्ध्यन्तरनिरपेक्षः । ( परिहरति– ) मानान्तरविषयोऽपि तर्हि ( भूतरूपोऽर्थः नियोग इव ) अपौरुषेयवचननिमित्तानपेक्षः इति यतोऽसौ ( अपौरुषेयता ) अनपेक्षत्वकारणं न मानान्तरसम्भवः, पौरुषेयता न सापेक्षत्वे हेतुः । नियोगसिद्धेऽपि लौकिके वचसि सापेक्षत्वात्, न प्रमाणान्तरसम्भव. ( सापेक्षत्वे हेतुः ) । यथा च सापेक्षत्वे प्रत्यक्षानुमानयोः परस्परविषयसम्भवात् सापेक्षत्वात् प्रमाणत्वहानिः ( हानिप्रसङ्गः ) । अत. प्रमाणान्तरोपलब्धिविषयापुरःपरप्रवृत्तित्वात् विधिमद्विलक्षणता ( पौरुष ) वचन सापेक्षम्, अन्यथाभावाच्च वैदिकमुभयमपि अनपेक्षमिति चतुरस्रम् । ( प्रकृतमुपसंहरति– ) तेन प्रमाणतार्थपि न विधिविवक्षा ।

(येन) तुल्येषु प्रत्ययफलाभ्यासादेरेषु शब्दार्थसम्बन्धविषयेषु अयं एव भावनाशीलाग्, न शब्दार्थसम्बन्धयोः। (तदिदमुक्तं विशेषहेतुः को वीजमर्थं, न तु श्रुतौ अपि अर्थसम्बन्धो वीजं इति)। प्रायशं दृष्टं चोच्छेतु आत्यन्तरमनस्थानं वा शब्दसंबन्धयोर्मोऽस्नातीतानाम्, नार्थेषु (इति विशेषहेतुर्यन्नन्यः)। तेऽपि च भावनानुगमश्चेत् जात्यन्तरधियः तत्कर्मानुभूतानिव रूपप्रत्यवहारात् तत्कृततानुभूतानास्थीस्व ॥ २९ ॥

(चोदयति–) अथापि पूर्वाभ्यस्तसमुत्पत्त्यनुरूपात् बालस्य हर्षभयशोकसम्प्रतिपत्तेः कासांचिद्भावनानामनुगमो न सर्वासाम्, स्मृत्यभावेऽप्यवहारात् बालस्य। (सिद्धान्ती दूषयति–) भवतु, किंतु 'पूर्वसिद्धिव्यपेक्षत्वान्मानं तत्र न किंचन। सिद्धे सामान्यतो धूमविशिष्टे लिङ्गवाक्ययोः ॥' ३० ॥ न तावत् लिङ्गादिजं ज्ञानं तत्र प्रमाणम् (तत्र प्रत्यक्षो वा कर्तव्यताया प्रमाणम्)। संशिष्टतया पूर्वसिद्धिव्यपेक्षत्वेन। नापि शाब्दनाथ तन्निमित्तज्ञानापेक्षत्वेन। नापि लिङ्गवाक्यजे। तयोः सामान्यरूपप्रसिद्धेः विशिष्टग्राहित्वेन अप्रसिद्धपदार्थवाक्यार्थप्रतीत्यनुपपत्तेः (पदार्थैरेव ज्ञातपदार्थविशिष्टस्य वाक्यार्थत्वात्) सामान्यरूपप्रसिद्धिनिरूपणप्रमाणापेक्षार्था तदभावे प्रामाण्याभावः (सामान्यरूपसिद्धिनिरूपकस्य च कर्तव्यताप्रमाणस्याभावात् लिङ्गवाक्ययोः विशिष्टया तया प्रामाण्याभाव – इति कणिका)। यथा चेह जन्मनि, तथा पूर्वस्मिन्, पूर्वतरेऽपि सा (भावना) अपेक्षितेति प्रमाणाभावः। तत्र किं विकल्पमात्रमेतेष्वनादिसम्बन्धनिरूपणं स्यात्, तत्र पुरस्तात् प्रत्युक्तम्। (तत् पारिशेष्यात् कर्तुरिष्टोपायत्वेन प्रवृत्तिहेतुः कर्तव्यताज्ञानस्याख्यानम्) ॥ ३० ॥

अपि च 'कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लौकिकीः। विपरीते त्वकर्तव्यमिति तद्विषये नतः ॥' ३१ ॥ यः खलु प्रत्ययो यमर्थमन्वेति स तस्य विषय इव इष्टप्रत्ययस्य। अपेक्षितोपायता तद्विपरीतता चानुषक्तौ कर्तव्यमकर्तव्यमिति प्रसिद्धिप्रत्ययौ लौकिकानाम्। तेन तयोर्गोचरौ इति गम्यते (अन्वयव्यतिरेकाभ्याम्)। तस्मात् नर्ते क्वाऽपि नान्या कर्तुः समीहितोपायतायाः। यथोक्तं 'कर्मणश्च गुणं फलम्' इति ॥ ३१ ॥

(चोदयति–) कथं तर्हि नित्येषु नियता, कर्तव्यता वा, यथाशक्ति चाङ्गोपसंहारः (कथम्)। तथाहि– यदि तावत् पुनरिष्टं ईप्सितम्, तर्ह्योपेयनियता विहन्येत, तदिच्छाया अनियतत्वात्। तत्र (अनित्यत्वे सति) 'यावज्जीवं' इत्यनर्थकम्। नापि अधिकारिविशेषणतया अर्थवत्, अर्थासिद्धेः (व्यापारोऽप्राभावात् अनर्थकस्य मित्यर्थः)। अथ मतं सर्वेषां सर्वदा समीहितं फलं भविष्यति दुरितनिबर्हणम्। (सिद्धान्ती–) सर्वदैव नियता फलचोदनेन, न शब्दात्। तथाहि, फलस्य नित्यसमीहितत्वात् तत्प्रयोगावश्यकर्तव्यता शास्त्री। शब्दस्तु नित्यसमीहितोपायप्रतीतिमात्रोपलक्षणः। तथासति शब्दव्यापारे तयोः निरङ्गार्थस्यापि वत् सर्वाङ्गोपसंहारप्रसङ्गः, अन्यथा फलाभावात्। शब्दे हि नियतेऽपि परिपूर्णाङ्गसर्वत्र च इत्यप्रमादात् 'यथा शक्नुयात्' इत्युपपन्नं। इतरथा (शब्दस्य नियतत्वे) अङ्गाज्ञानस्याविकल्प्यत्वात् 'यो यज्ञ' इति विश्वजिदादिवत् स्यात्। नहि सर्वेषां समीहितोपाये विश्वजिति फलस्याभावः अधिकारिणः। नानुपस्थितसमीप्सितम्, प्रमाणाभावात्। अर्थापत्तेः अक्रियायां प्रत्यवायेनापि श्रयात्। स्मृतिवाक्यवशोपाभ्यां च तत्कल्पनाया एव (अकरणे प्रत्यवायकल्पनाया एव) युक्तत्वात्। स्मृतिशश्च पुनः तदर्थत्वप्रसात्। प्रतिषिद्धस्य च नियोगत अकर्तव्यस्य हि प्रयासेन, नियोगतः कर्तव्यस्याक्रियाया प्रत्यवायो युक्तः। तथा नियोगोपपत्तेः (अकरणे) प्रत्यवायसंभवात्। ईप्सितोपायेषु इच्छया प्रवृत्ते। तथा न यादृशी प्रवृत्ति, न तादृशी अभ्युदयाय। (परपक्षे विरोधमादर्शयति–) नित्येप्सितोपायनित्यप्रत्यवायपरिहारयथाशक्त्यनुष्ठानरूपत्वाना चासंगतेः अकरणे प्रत्यवायकल्पना (व्यापभी)। तस्मात् नित्येप्सितोपायानि न नित्यानि (कर्माणि)। प्रवृत्तिस्तु तेषु अकरणे प्रत्यवायकल्पनात्, दुरितक्षयकत्वाद्य कर्मेण आनुपूर्व्याद्वशात् कार्यनिरोधिनः पापस्य क्षयात् (स्मृतिः) इति। भावनायाश्च साध्यत्वात्। (परिहारान्तरं) अग्निहोत्रमितिवत् निर्देशार्थत्वात् विपरिणामस्यासंभवात् तृतीयानिर्देशाविरोधः (अग्निहोत्रेणेति)।

( ' अथ मत ' इत्यादिना प्राप्त पक्षं निराकरोति– ) यत्नमेवत् । तथाहि, ' नित्यं नित्येहितोपाये यावज्जीवमिति श्रुतेः । अङ्गान्यतो यथाशक्ति न वा सर्वाणि चान्यथा ॥ ' ३२ ॥ न तावत् इष्टसाधनत्वेऽपि नित्यत्वनिहतिः, नित्येष्टस्यैव साध्यत्वकल्पनात् दुरितनिर्हरणस्य । सुप्ते तस्मिनो या कदाचित् मा ऽभूदस्यमेयेति (आलस्यादिभ्यः), दु खतद्धेतुभ्या तु सर्वदोद्विजमानस्य तन्निवृत्तौ सर्वदा कामः, हितमपि न प्रेप्सतस्तस्य प्रतिबन्धक्षये समीहाऽस्त्येव, तस्मात् इष्टनिबन्धन. पाप्मन क्षय. सदा समीहितः । नित्याना कर्मणा फलनित्यत्वादेव ' यावज्जीव ' इति शब्दावगतात् इति न नित्यत्वविरोध., अनित्ये साध्ये मा विहन्येत । यथाधिकारानुपसंहारश्च नित्यत्वादेव अहीनाङ्गस्य नित्य क्रियासंभवात् । न चेद् वाक्यात् नित्यत्वम्, नहि फलादिनो यावज्जीवशब्द नामनन्ति फलविशेषणशब्द वाऽधीयते, किंतु यावज्जीवश्रुतेरवगतनित्यत्वात् तत एवाथीपत्त्या फलभेदप्रयोगभेदौ कदाचित्कल्पयन्ति । ( अर्थापत्ति दर्शयति– ) अनित्ये साध्ये परिपूर्णाङ्गे च प्रयोगे यावज्जीवशब्दावगतनित्यकर्तव्यताऽनुपपत्तिः । नहि कदाचिदीप्सितोपायाभिलाषा कर्तव्यता परिपूर्णाङ्गसाधनाभिलाषा च यावज्जीवशब्दोऽस्तीति, नित्यत्वाच्च कल्पित फलभेदो न तदेन बाधते । ( यदि शब्दावगम्यमेव नित्यत्व– ) कथ तर्हि नित्येप्सितोपायत्वात् नित्यत्वमुक्तम् । ( उत्तर– ) शब्दावगतस्यैव तस्याविघात. शक्तसामर्थ्यलभ्येनैव तेन ( नित्यसमीहितोपायत्वेन ) उक्तो यथाशक्तिप्रयोगेण तन्त्रेण च ।

( प्रसङ्गात् किंचिदाह– ) तत एव ( यावज्जीवश्रुतिविशिष्टविधि नित्येप्सितस्य फलस्य कल्पितत्वादेव ) भवतो ( नित्यकाम्ययोः ) मानान्तर मृग्यम् । कथं चेद नित्यत्वं कर्मणो यदि नित्यसमीहितसाधनत्व इति नित्यानुष्ठानात् एतद्करणे प्रत्यवायः ( इतरस्याप्यनुष्ठानमिति तुल्यम् । शब्दपूर्वकत्वेन तत्करणस्याङ्गीक्रियमाणाया– ) नाशब्दनित्यत्वमुभयोः ( परस्यात्मनश्च ) । ( पर आह– ) तत्करणे प्रत्यवायात् ( अस्मन्मते ) नित्यत्वम्, ( किंतु ) शब्दादेव । ( परिहरति– ) नैतत्, शब्दादेव भेदवद्यकर्तव्यता किमर्थमकरणे प्रत्यवायकल्पना, शब्दादेव प्रवृत्तिसिद्धेः । न च शब्दः कारकत्वेन प्रवृत्तिहेतुरित्युक्तम् । शापकत्वे चाकरणे प्रत्यवायज्ञापनात् नित्यमनुष्ठापयति इति व्याख्यानमेव ( नित्यत्वं ) स्यात् । तस्मात् अभ्यवसितविधितत्त्वाना ईदृशा नानाविधाः समुल्लासाः ।

( प्रासङ्गिकमुत्सृज्य पूर्वमनुवर्तयति– ) कुकर्त्तृविनिश्चितोऽपि सदा सर्वस्य समीहितसाधनयोरपि सर्वदा ' सर्वदा ' श्रुतिगम्यस्याभावात् सर्वाङ्गप्रयोगः । ननु फलपक्षे शक्त्यनुसार एव न संभवति, वैगुण्यात्, फलाभावप्रसङ्गात् । ( परिहरति– ) किमिदं वैगुण्यम् । ( परः– ) चोदनार्थस्य हानिः, ( सिद्धान्ती– ) न तर्हि वैगुण्यम्, यावज्जीविके यथाशक्त्यङ्गोपेतेऽपि चोदनार्थत्वात् । सचोदनार्थत्वे वा शक्तौ अन्यत्रेऽपि सर्वाङ्गोपसंहार, अन्यथा चोदनार्थनिर्वृत्त्यभावाच्चेति । ( शङ्कते– ) तदा क्रियान्यनिरिक्तस्य अभावात् अङ्गापेक्षा । ( दूषयति– ) अनङ्गत्वमेव तत्र कर्मणो विशेषोपायत्वात् । ( शङ्कते– ) क्रियाऽपि विधिरूपेण शब्दस्वभावा चोदनार्थनिर्वृत्त्यै अपेक्षतेऽङ्गानि इति चेत् । ( निराचष्टे– ) सर्वाङ्गोपसंहारप्रसङ्ग. । ( शङ्कते– ) अथ ' आख्यातानामर्थं ब्रुवता शक्ति. सहकारिणी ' इति यावज्जीवश्रुतेः शक्तिश्चोदनाया । ( निराचष्टे– ) फलादिनो न सा दण्डधारिणा । किंच अद् रूपं चोदनाया. ( ऐषलोद्देशेन द्रव्यत्यागात्मकम् । ननु भवतु कर्मस्वरूप मानान्तरगम्यम्, यत् पुनरेतत् अष्टसु कपालेषु संस्कृतपुरोडाशरूपत्वं अग्निदेवत्व च तत् ' आग्नेयोऽष्टाकपाल. ' इत्येतस्मादुत्पत्तिवाक्यादवगत. अतस्तत्स्वरूपमिति । न चोत्पत्तिवाक्यावगतविनियोगविशेषणे कर्मणि न्यूनातिरेककरणाय प्रमाणान्तर प्रभवति, तत्करणे तत्स्वरूपग्रहणप्रसङ्गात्, अन्यतस्तदनिज्ञानात् इत्याशयवानाशङ्कते– ) यदि दर्शपूर्णमासमङ्गकम् । ( निराकरोति– ) तदुत्पत्तिवाक्यावगतं इतरनैत्यकाना ( अङ्गाना ) अभाव. ( अभावप्रसङ्ग. ) । अथान्यत्र तच्छेष भावनत्वात् । यथोक्तं ' श्रेय. साधनता ह्येषा नित्य वेदात् प्रतीयते ' इति [ श्लोकवा. चोदनासूत्र पृ. ८१. ] ' तस्याधमस्तु पाप. इति हि

तेषामुपदेशः ' इति च [ भाष्य चोदनासूत्रे पृ. १९ ] । नाप्यकरणे प्रत्यवायहेतुता, अभावो हेतुत्वानुपपत्तेः । तुल्ये च साध्यत्वे नानुपपत्तिः प्रयाजादीनाम् ( प्रयाजादीनामङ्गत्वानुपपत्तिः ) । नहि स्वरूपे कार्ये पाऽनुपयोगीति अङ्गम् । प्रयुक्तेरपि एतन्निबन्धनाभावात् ( दर्शपूर्णमासाभ्यां साध्यत्वेन तुल्यस्यापि प्रकरणादिविनियुक्तस्य न प्रयुक्तिहेतुत्वं सम्भवति विनियोगानुसारानुपादानत्व ) । न च दुरितात् कर्मणः अनुपादित्वात् पापक्षयात् प्रवृत्तिः । अनात्मीयत्वे ( अपि ) तदभिन्नरोहणाविपत् । पापकर्मणि च पुरुषकारवैयर्थ्यात् ( नित्यानां कर्मणां प्रागर्जितपापपरिपाकादेवोत्पादात् पुरुषकारवैयर्थ्यात् ) । अनार्जितत्वे वा ( नित्यकर्मणां ) तज्ञाभावात् । शास्त्रीयेण तूपायेन विनाशने ( निवृत्तौ ) न दोषः ।

( चोदयति— ) " यदि तर्हि फलार्थी न सर्वाङ्गोपसंहारः, काम्येऽपि तथा स्यात् । यावज्जीवश्रुतेः इतरत्र ( नित्ये ) एवं ( सर्वाङ्गोपसंहारः ) इति चेत्, इहापि ( काम्ये अपि ) स्वर्गकामश्रुतेरस्तु । यथैव यावज्जीवमप्यत्य अधीनाङ्ग तथा सर्वेण स्वर्गकामेन । ( नित्ये ) यथा यत्र यावन्ति शक्नोति, तत्र तावदुपसंहारः, तथा ( काम्येऽपि ) यो यावन्ति शक्नोति स तावन्ति उपसंहरिष्यति । अङ्गाभिधिविरोधादि स्वर्गकाम श्रुतिः अर्थिमानविषया [ न ? ] विशेषमनुध्यते । शक्यपेक्षया तु अङ्गविध्यविरोधे नित्यवत् न विशेषानुरोधहेतु । अथ मतम्, अनुपयोगं स्वर्गकामश्रुतेः अङ्गविषय एवोपसंहरन् अविशेषप्रवृत्ता यथाशक्तिप्रयत्नायाम् । ( तर्हि ) नित्येऽपि तुल्यम् । यावज्जीवश्रुतेः अनन्यगतित्वात् तन्नैवम् । कामश्रुतिस्तु सर्वाङ्गोपसंहारसमर्थेऽपि उपपन्नैव, तदविरोधात् काम्यमोक्षिन्यायेन ( १।२।२।१४।३७ ) तदनुरोधेनाङ्गनिवृत्तिः । सत्यमविशेषः, दर्शितस्तु स्वर्गकामश्रुतेर्विषयमशोचनक्षणो विशेष । तत्र अङ्गप्रधानविरोधे प्रधानानुरोधः श्रेयान्, नेतरत् । यथा हि ' ब्राह्मणात् मोक्षः नानाविशेषकारणेनानेन ' इति यथाशक्त्युपकरण यवत्सनोपकरणानुरोधेन ब्राह्मणनियमः । एवं नाङ्गविधीनामपि नात्यन्तसांस्कारम् । नच काम्येऽपि ' यदा शक्नुयात् ' इत्येव अस्तु, न ' यो यदा शक्नुयात् ' इति अपेक्ष्यमाणात् " । नैतत् सारम् । एकप्रयोगविधिविरोध्यप्रसङ्गात् अनेकप्रयोगकल्पनाप्रसङ्गात् । फेनल्पस्यार्थे बलद्वयाभावात् विशेषश्रुतेरविशेषात् । ( एष हि— ) स एव प्रयोगविधि अस्यैवाङ्गस्य प्रयोग क्रमेण प्रति विदधाति, न विदधाति इति स्यात् । कल्पनागौरवं च सामर्थ्यभेदेन प्रयोगभेदात् । पदस्य च पदान्तरसम्बन्धे विशेषपरत्वं सर्वकर्मार्थ न कदाचिदन्यायप्रसङ्गः । नित्येऽपि तर्हि एवमेवास्तु ' जीवन् यदा शक्नुयात् ' इति । ( शङ्कते— ) यावदित्यनुपपन्नमिति चेत्, ( परिहरति— ) अनिष्पन्ननिमित्तेषु कथम् ? अपि च सातत्येन होमप्रसङ्गः । अथ कालविशेषोपादानानुरोधात् तथा, हन्त अङ्गविध्यनुरोधादित्यपि यावज्जीवश्रुतिः सामर्थ्ये सन्नमयन्तीति इत्यङ्गविध्यनुरोधात् ' यदा ' इति स्यात् ( यदा शक्नुयात् इत्युपलब्धसिद्धिः ) । अथ मतं जीवतश्च साङ्गे एव कर्मणि अधिक्रियते नाङ्गशून्यविधानम्, अधिकृतस्य तु प्रयोगो यावदधिकारं नाङ्गानुरोधेन निवर्तते, यथाशक्ति तु अधिकारावसानात् तस्य । न च काम्येऽपि प्रसङ्गः, कार्यनिष्ठत्वात् कामाधिकारस्य प्रयोगनिष्ठत्वाच्च नैमित्तिकस्य साधनापेक्षत्वात् कार्यस्य, यावदङ्गं च साधनमात्रप्रतीतेः सर्वाङ्गोपसंहारेणैव कार्यसिद्धिः । ननु कथमस्याधिकार एव कर्तव्यः, सत्यम्, एकत्र निमित्तपर्यन्तः अपरत्र फलपर्यन्तः । तत्र निमित्तपर्यन्ते निमित्तवतोऽधिकृतस्य असत्यङ्गानुष्ठानस्याधिकारातिक्रान्तिः इति यथाशक्ति प्रयोग । फलपर्यन्ते तु अङ्गवैकल्ये फलानुपपत्तेः फलकामिता अधिकारहेतुर्निवर्तते इत्यधिकाराभावात् नाधिकारातिक्रान्तिदोषः इति न ( ? ) यथाकथंचित् प्रयोगः, एवं न यातन्त्रेण प्रयोगः, नाथांतरत्वेषु ( कालेषु ), यथाशक्ति चोपसंहारो नित्येषु, न काम्येषु इति सर्वं चतुरस्रम् ।

( तदेतदेकदेशिमतं निरस्य दूषयति— ) नैद् चतुरस्रम् । इदमत्र भवान् व्याचष्टां किं शक्त्यपेक्षोऽधिकारो यथाऽधिकारं च प्रयोगः, आहोस्वित् शक्त्यपेक्षोऽधिकारः अधिकृतस्य तु यथाशक्ति प्रयोग ? पूर्वस्मिन् कल्पे यथैव कालविशेषयुक्ते कर्मणि ( दर्शपूर्णमासादौ ) तत्कालजीविनोऽधिकृतान् अन्यस्य

कार्यता ॥' ३३ ॥ यस्तावत् यथोक्ताय प्रयोगाय एकान्तेनोऽसमर्थः ( शूद्रपङ्ग्वादिः ) स दूरपर्युदस्त एवाधिकारात् । न त्वसौ तादृशो नियोज्यतया प्रत्येतु पार्यते । तेन शक्त्यङ्गोपदेशो अपेक्ष्य समर्थस्य तावदधिकारप्रतीतिः । सा चेयमधिकारप्रतीतिः ( नैमित्तिके ) नेति पर्यवसिता अभिन्यत्वात् सामर्थ्यस्य ( अनैमित्तिकस्य चावश्यकार्यत्वात् ) । अन्यथा अधिकृतस्य सर्वाङ्गोपसंहाराभावे ( सति ) नानुष्ठानं यथाक्रममन्यथा, अन्यादृशोऽधिकारात् तादृशप्रयोगस्य ( न्यूनाङ्गस्य ) अनाक्षेपात् नानुष्ठानमनधिकारात् । अतः पुनरपि शक्त्यपेक्षा अधिकारप्रतीतिविपर्ययप्रसङ्गाय । शक्तिर्हि प्रमाणेनैवेति तदुक्तम् ( शक्तिभुक्तिः चोदनैकदेश इत्युक्तमाचार्यैः । यदि तु न चोदनैकदेशः स्यात्– ) न प्रमाणान्तरगम्या ( स्यात् ) अनन्यप्रमाणकत्वात्तस्य । ( पूर्वपक्षी– ) सा कालतः अङ्गतो वा आक्षिप्येत, तत्र अङ्गतः नश्वरे शब्दावगतानामङ्गान्तराणां हानात् शब्दविरोधः । कालस्तु तन्नान्तराणामशब्दार्थत्वात् न कश्चिद्विरोधः ( इति काम्ये नैमित्तिके च यदेवेष्ट युक्तम् । सिद्धान्ती– ) न चाय मविशेषो निर्निमित्तेऽधिकारे दृष्टम् , अनेन, ईदृशेन ( भावेन, करणेन, इतिकर्तव्यताविशेषेण ) इत्येतावन्मात्रस्य शब्दार्थत्वात् । सनिमित्ते तु निमित्तश्रुतिर्विशेष , यस्मिं न्न तस्मिन् कार्यस्य तन्निमित्तस्य बाधात्तत् । ( शङ्कते– ) इतरत्रापि स्वर्गकामश्रुतिर्विरोधः । ( समर्थमसमर्थं चाधिमात्र प्रति अनुकूलितश्रुतिरधिश्रुतिः, समर्थं प्रति नियम्यमाना पीडयेत ) इति चेत् । ( समाधत्ते–) अत्रम् ( केवलपदार्थपरत्वादस्याद्विशेषश्रुतेः इति पृ. २२२ ) । न च पुरुषविशेषनिर्देशोऽत्र विवक्षितः सान्तरात् । न च यावज्जीवं प्रयोगः ( प्राप्नोति ), निमित्ते कालविशेषवत् कर्मफलाऽवगमात् । कालविशेषेण तस्यार्थाद्विशेषणात् नैस्यापि निमित्तानुप्रवेशित्वात् । तदुक्तं ( आचार्येण ) ' न काले गुणो, निमित्तं चेतत् ' इति । न गुण एवेत्यर्थः, न त्वङ्गान्तराण्येव ( निमित्तेन– ) असम्भ्यात् वचनव्यक्तिभेदात् , उपादेयानि हि ( कालात्– ) अङ्गान्तराणि, अनुपादेयं निमित्तम् । ' एभिः फलानि वा कुर्यात् ' इत्येषु वचनार्थकः, ' अस्मिन् सति '

इति निमित्ते । नतः अङ्गान्तराणि नात्र निमित्तमनुप्रवेष्टुम् । कालस्त्वनुपादेयः ( निमित्तेन ) समानवचनव्यक्तिः अङ्गमपि सन् निमित्तमनुप्रविशतीति युक्तम् । ( शङ्कते– ) अथ निमित्तोपसंहार एव किं नेष्यते ? ( कश्चित् परिहरति– ) काम्येऽपि नत्वसेष्टव्या । ( शङ्काकारः– ) ननु प्रयोजनमेवात् । ( सिद्धान्ती– ) सत्यम् । हेतुस्तु यावज्जीवश्रुतेरतिरिक्तार्थानाम् । प्रकरणिनोऽपि अङ्गार्थत्वं च ( तस्मात् काम्यविधिपरत्वं प्रकरणसङ्गार्थ काम्यस्याङ्गतायां प्रमाणम् , न निमित्ततायाम् ) । तदेव अनिरोधात् अनिमित्ते काम्ये शक्त्यपेक्षो ' यथा ' इति, निमित्तवति तु निमित्तविरोधात् कालतः एताङ्गतो यथेति ।

( एवं कारिकापूर्वार्धं व्याख्याय पश्चार्धं व्याख्यातुमाक्षिपति– ) किं पुनरिदं ( निमित्तं ) यद्विवक्षितं ? कालतः शक्त्याश्रय ( इति स्वरूपाक्षेपः ), कस्य चेति ( इति संबन्धाक्षेपः ), कुतो गम्यते निमित्तनैमित्तिकभावः ( इति प्रमाणाक्षेपः ), कथं चास्य नैमित्तिकसम्बन्ध । ( स्वरूपाक्षेपं विभजते– ) यदि तावत् ' अस्मिन् सति ' को विरोधः ( कालतः शक्त्याश्रयेण ) नहि कालतोऽपि अवश्याश्रये तस्मिन्सति तदिष्यते ( किंतु– ) तत्रैव, अथ तस्मिन् सति क्रियते एव । ( दूषयति– ) ग्रहादिष्वेव. न स्वीदृशो निमित्तार्थः ( निमित्तशब्दार्थः ) । हेतुर्हि निमित्तम् , न चावश्यं हेतौ कार्यजन्म । कार्ये तु नासति हेतौ । तस्मान्न विरोधः । ( कस्येत्याक्षेपं विभजते– ) यदि कर्मणो निमित्तम् , तत एव कर्मणः नैविधिरैयर्थ्यम् , अनिरूपितादपि निमित्तात् निमित्तवद्दर्शनात् पुण्यस्याभावात् । ( अथ विधेर्निमित्त ) न तस्य निमित्तमुत्पत्तिर्नित्यत्वात् । तस्य तस्मिन् सति न बोधो वाक्यादेव तत्सिद्धेः । ( अथ फलस्य निमित्त तर्हि ) कर्मवैयर्थ्यं तर्हि ( निमित्ते फल ) भवत्येवेति । सत्येव तस्मिन् ( निमित्ते ) कर्मणा फलमिति चेत् , विशेषाभाव सर्वाङ्गोपसंहारेण । अथाधिकारस्य ( निमित्त इति चेत् ) न, ( निमित्तात् किंतु ) नियोगादधिकारः । ( शङ्कते– ) स एव नियोगसंबन्धस्तन्निमित्त । ( दूषयति– ) यदि तर्हि तन्निमित्तको नियोग , न नियोगाधिनि-

निबन्धनानुष्ठानस्य पर्णमयीत्वादीनाम्, फलविधौ तदभावः। अतः अर्थवादः क्रत्वर्थः, फलविधिः पुरुषार्थः। सत्यपि च विध्यधीनानुष्ठानत्वे पर्णमयीत्वस्य क्रतुप्रयोगविध्य विषयत्वात् पुरुषार्थत्वम्। तद्व्यापारपरिमाणं च एवमेव चिन्तितम्। प्रयाजे तु यद्यपि विधितः प्रवृत्तिविशेषरूपा, सामान्यरूपा तु पुरुषे या अन्येनाक्ता पुरुषार्थः। अङ्गापेक्षा तु करणत्वात् पराधीना तज्ज्ञानं च विधेः इति सामान्यतोऽपि (न केवल विशेषतः) प्रवृत्तेस्तदायत्तत्वात् अङ्ग क्रत्वर्थः। (शङ्कते–) इदं तर्हि कथ (भाष्योक्त) 'प्रयोजकः कश्चित् पुरुषार्थः, अप्रयोजकः क्रत्वर्थः' इति। (पृच्छति–) किमत्र कथम्! (चोदकः–) प्रयोज्यौ हि अत्र क्रत्वर्थपुरुषार्थावुक्तौ, कथमेवं भाष्यं 'प्रयोज्यः कश्चित् पुरुषार्थः, कश्चित् क्रत्वर्थः' इति। (परिहरति–) नैष दोषः, पुरुषार्थः क्रत्वर्थः इति समानाधिकरणसमासः, पुरुष. अर्थः (विषय. आश्रयः कामनिमित्तयोः, क्रतुः अर्थः विषयः क्रतुविधेः) इति विग्रहात्। एतदुक्त भवति, कस्यचित् कश्चित् पुरुषः किंचित् प्रयोज्यमित्यर्थः (कस्यचित् कर्मणः काम्यस्य नैमित्तिकस्य वा कश्चित् पुरुष. कामी निमित्तवान् वा प्रयोजकः, किंचित् कर्म काम्यं नैमित्तिकं वा कस्यचित् कामिनो निमित्तवतो वा प्रयोज्यमित्यर्थः)। क्रतुविधेरपि किंचित् प्रयोज्यम्, किंचिद् अप्रयोज्यं यथा आमिक्षावाजिनद्वारेण दध्यानयनम्। (एव भाष्य व्याख्यातम्।) सूत्रे तु पुरुषेच्छाधीनप्रवृत्तिः पुरुषार्थः, क्रतुविध्यधीनप्रवृत्तिश्च क्रत्वर्थं इति। एतदेव क्षिप्तम्)। तत्र 'यस्मिन् प्रीतिः' (४।१।२।२) इति फलादौ अनुष्ठान न विधित इति दर्शितम्। (विचारप्रयोजनमाह–) प्रयोजनं श्येनादिफलस्यानर्थत्वम्। पुनः क्रत्वन्तरत्वेन तदङ्गत्वेन च क्रतुप्रयोगविधिविषयत्वाविषयत्वे शेषलक्षणेन (दर्शिते भवतः)। क्रत्वर्थपुरुषार्थौ विभक्तौ क्रतुशेषत्वाशेषत्वविचारेण (साम्यवैषम्यविचारात् पूर्वं दर्शितौ)। परतस्तु सिद्धे एकशेषत्वे क्रतुविधिप्रयोगविधिव्यापारपरिमाणमात्रचिन्तायाम्। अत एव (साम्यवैषम्यविचारोपक्रमे भाष्यकारेण–) उक्तं अतिक्रान्तस्तृतीयविषय इति।

पञ्चमे तु किं चिन्त्यते। ननु क्रमः (चिन्त्यते), केन प्रमाणेन! (उत्तर–) श्रुत्यादिभिः। (आक्षेप–) नैतत् सारम्। 'चोदनालक्षणोऽर्थो धर्मः', स च चतुर्वस्य एव (विधिनातुर्विध्यात्) इत्युक्तम्। क्रमश्च तद्विविक्तः। न चैष प्रयोगविधेर्विषयः, अननुष्ठेयत्वात्, अप्रत्यर्थत्वात्, क्रमवद्व्यतिरेकेण इदन्तयाऽनिरूपणात्। पदार्था हि क्रमेण अनुष्ठीयन्ते न तु क्रमः। नापि विनियोगविधेः उत्पत्तिविधेर्वा (विषयः)। अत एव (अननुष्ठेयत्वादेव) नाधिकारविधे. (विषय॰) अनियोज्यत्वात्। स्याच्च तावत् श्रौते क्रमनियमे प्रयोगविधि, अर्थादिषु तत्परविध्यसंभवः। (एवमाक्षिप्ते समाधत्ते–) उच्यते। प्रयोगो विध्यर्थ इत्युक्तम्। क्रमभेदश्च प्रयोगविशेषः। यद्यपि, क्रमेण पदार्था अनुष्ठीयन्ते इत्युच्यते। तथा च प्रयोगविधिविषयत्वात् न चोदनालक्षण-धर्मातिवर्ती क्रम.। (एव प्रमेय परिशोध्य विचारस्यापमाददर्शयति–) तत्र प्रथम क्रमतद्व्यतिरेकेण इदन्तयाऽनिरूपितत्वात् अप्रयोज्यतामविनियोज्यतामनुत्पाद्यता च मत्वा विधिविषयत्वमाशङ्क्य प्रयोगविधिविषयता दर्शिता। उत्तरपक्षेण तु उदाहरणबुद्धिः कृता दीक्षापदार्थस्य प्राप्ते.। अक्रमविधेयत्वापि कथंचिदवतीयमानस्य विशिष्टक्रमानुष्ठानस्य विध्यर्थत्वात् कर्तृनियोगविधौ अध्वर्युप्रत्ययस्य आनर्थक्यात् अनेकार्थविधिनो वाक्यभेदात्। दीक्षापदार्थस्य तु प्रतिप्रधानावृत्तेः अनुष्ठानविशेषविधेरेवार्थत्वात् (विधीयते अनेनानुष्ठान इति अनुष्ठानविशेष॰ क्रमः) तद्विधौ 'न पूतः यावयति' इति प्रतिषेधात् (ननु अध्वर्युरूपा बहव. इति तेषां प्रतिप्रस्थानृविषये कथन भविष्यति इत्यत आह–) 'इतरमन्यस्तेषा यतो विशेष. स्यात्' (३।८।१०।२२) इति। अध्वर्युवस्य आर्त्विज्याभावात् उत्तरत्वविशेषश्च। ब्रह्मचारिणश्च आचार्यपरतन्त्रत्वात्। अर्थादिषु तु यद्यपि पदार्थपरो विधिस्तथापि तद्रूपप्रयोजनापेक्षी (अनुष्ठानविशेषं क्रम प्रतिपादयति इति परेण संबन्ध॰) स्वाध्यायविधि–प्रत्याकित–पाठक्रमनियम–प्रयोजनापेक्षश्च (स्वाध्यायविधिप्रत्यायितो य॰ पाठक्रमनियमः तत्प्रयोजन न तदपेक्षः प्रयोगविधिः स्वपरार्थः। क्रम प्रति-

वर्णयता अनिसृष्ट एवाधिकारो भवति । सत्यम्, न्यायस्तु निरूपणे नाभ्युपगमः । न च 'यागं कुर्यात्' इत्यर्थे यथाऽधिकारस्तथोपरिष्टात् वक्ष्यते ॥ ३५ ॥

( एवं पूर्वपक्षयित्वा सिद्धान्तमाह– ) अत्रोच्यते, 'विशेषा एव शब्दार्था इष्टरूपान्वयेऽपि हि । न च प्रवर्तनाबोध इष्टशक्तेर्विनाऽर्थनात् ॥' ३६॥ न तावत् सामान्यं लिङाद्यर्थः, प्रेरणाऽध्येषणाऽभ्यनुज्ञोपदेशानां तु विशेषाणामेव लोके प्रतीतेः, मोहादिभेदानामागतेश्च । नहि प्रवृत्तिहेतुसामान्यबोधः क्वचिदस्ति । सामान्यशब्दात् विशेषप्रतीत्यभावे कस्मात्प्रतीतिः । अतो न तावन्मात्रं शब्दार्थः । विशेषानुपपत्तेस्तु वृक्षादीनामिव कर्तृत्वं लाक्षणिकमनुपपन्नम् । अन्यथा ( लाक्षणिकत्वादिवचनाभावे ) कर्तृप्रयोगप्रतीतिप्रसङ्गात् ( कर्तृमात्रे प्रयोगप्रसङ्गात् ) । नाप्युपाधयो न शब्दार्थाः ( उपदेशादयः ), अप्रतीतानामभेदकत्वात्, अन्यस्य प्रत्ययहेतोरभावात् । 'तदन्ताद्वाच्यः समानशब्दोऽयम्' इति च ( कात्यायन– ) स्मरणात् । ( द्विविधोऽप्युपाधिः उपहितसमानाधिकरणः तद्व्यधिकरणश्च । तद्यथा 'इतिहरिः पद्म' 'गार्गिकया श्लाघते' इति च । तत्र च, समानशब्द स समानाधिकरणोपाधिः स तदन्तवाच्यः प्रत्ययान्तवाच्यो इतिहरिपद्मादि. । न तु असमानशब्द असमानाधिकरणः 'गार्गिकया श्लाघते' इत्यादि. । नहि 'गार्गिकया' इति न्यायाद्यधिकारविहिते वुनि तदन्तेन असमानाधिकरण ( वुन– ) गार्गिकया श्लाघा अभिधीयते इत्यर्थः । ननु तदस्त्या उपाधयः, न पुनरभिधानिमित्तमिव इत्यत आह– ) प्रेरणादीनामपि उपाधित्वात् ( अन्यथा ) सत् इत्येव शब्दार्थत्वप्रसङ्गात् । उपेक्ष्यापि तु ( प्रवर्तनामात्राभिधानं ) उच्यते । सामान्यचोदनायाः विशेषपरत्वात् विशेष एव प्रतिपाद्यः । स च न कश्चित्, सर्वो वा, कश्चिदेव वा, सर्वथा तु विशेषप्रत्ययस्तमपेन सामान्यबोधोऽर्थवान् । तत्र इष्टमच्छन्दनपेक्षायाः अभिप्रायमात्रानुविधायिना तदपेक्षायाश्च तदानुरूपमपेक्षमाणाना प्रवृत्तिहेतव प्रेरणाऽध्येषणाऽभ्यनुज्ञा अनुग्रहबुद्धिप्रभवाः ( चोदनायाः ) न प्रतिपाद्याः । न मोहादयः ( प्रवृत्तिहेतवः ) दोषविशेषात् । ते हि प्रतिपाद्यमाना अप्रवृत्तिहेतव इति प्रवर्तनाऽवबोधो विहन्येत, विपर्यय एव स्यात् । नेष्टता ( इष्टसाधनता इति कणिकायाम् ) कर्मणि ( प्रवृत्तिहेतुः ) प्रत्यक्षविरोधात् । इष्टसाधनतामपि चेत्र गमयेत् अप्रतिपादकत्वमेव स्यात् । सामान्यबोधस्य विशेषप्रत्ययाभावे अनर्थकत्वाभिप्रायापादनात् । तस्य च हेतुद्वयाभावे ( कारणदोषबाधकप्रत्ययाभावे ) अयुक्तत्वात्, तदुक्तं 'असाधकं तु तादर्थ्यात्' इति ( ६।१।१।२ ), भवेदसाधकं कर्म साधयितारं नाधिगच्छेत् अनधिकारि स्यात् इत्यर्थः, तादर्थ्यात् प्रवर्तनामात्रार्थत्वात् ( विधि– ) शब्दस्य प्रीतिसाधनत्वानवगमात्, प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम् । अविशेषे तु प्रीतिसाधनत्वे सिद्धोऽधिकारः । सर्वविशेषप्रत्ययाभावे चासाधकं सावधं स्यादबोधकं अविशेषार्थत्वात् सामान्यचोदनायाः ॥ ३६ ॥

नन्वुक्तं 'प्रख्यवले लिङादीनां व्यञ्जनीया प्रवर्तना । प्रयोक्तृधर्मः' ( कारिका ७ ) इति । सत्यम्, आज्ञादिको नोपदेशः ( प्रयोक्तृधर्मो वेदे ) । ननु उपदेशोऽपि अनुग्रहाभिप्रायात्मक इति न प्रयोक्तृधर्मतामतिवर्तते । नैतत् सारम् । उपदेशे प्रेषादिष्विव प्रवृत्तिहेतुत्वाभावादभिप्रायस्य । तथाहि, 'आज्ञादौ धर्मशक्तेर्हि नाभिप्रायानुरोधिता । उपदेशे कर्मशक्तिमपेक्ष्य प्रवर्तते ॥' ३७ ॥ आज्ञाऽभ्यर्थनयोर्हि कर्मणः सामर्थ्यमनपेक्षमाणः तद्विशेष ( तस्य कर्मणः प्रयोजनविषयविशेष ) मनाद्रियमाण तदभिप्रायानुरोधादेव किंचित् समीहमानः अभिप्रायानुरोधी प्रवर्तते । अनुज्ञानेऽपि यद्यपि क्रियाफलात् प्रवृत्तिः तथाप्यभिप्रायानुकूल्यमपेक्षते । उपदेशे तु सत्यप्यनुग्रहाभिप्राये कर्मणः समीहितसाधनभावे न प्रवर्तते । कर्मशक्तिं त्ववबुध्य ( उपदेष्टुः ) अप्रतारकत्वमात्रेण विप्रलम्भकनिमित्तमात्रेण यथार्थवचनात् असत्यपि अनुग्रहाभिप्राये वक्तुः प्रवर्तते । तस्मादुपदेशे तु सत्यपि अनुग्रहाभिप्रायः शब्दार्थः, अनुग्रहसाधनता तु कर्मणः ( इति मूलपाठः । तस्मादुपदेशप्रवृत्तेः प्रवृत्तिविषयसमीहितसाधनभावाभावानुविधानात् अभिप्रायाऽननुविधानाच्च नानुग्रहाभिप्रायः शब्दार्थः, अभिमतसाधनता तु कर्मणः शब्दार्थः–इति तु कणिका ) ।

न्तु सर्वत्र कर्तृव्यापारगोचरः ' इति ( भावनाविवेके ) । द्रव्यगुणशब्दार्थस्वरूपतोऽपि ( द्रव्यगुणशब्दार्थविशेषस्तु धात्वर्थस्य रूपतोऽपि ) निष्पाद्यस्य साधनत्वात् ( प्राग्सिद्धेः ) सिद्धस्योपादानाभावात् ( गोदोहनादीनां तु अन्यतः सिद्धानां सतामुपादानात् ) । अतैव भावनामनुरञ्जयतो यागादेः तद्विशेषणस्य प्रतीतेः ( भावनाया विशेषणस्य प्रतीते. नाव्यस्तावसायः । यदपि चोदितम् , सर्वाभिमतसाधनत्वेन कर्मणो गुणभावात् गुणप्रधानभावेन द्वैविध्य हीयेतेति तत्राह– ) द्विविधत्वं तु अपूर्वमाशाम्बानहृत्वम् । पुरुषप्रयत्नस्य यागादिविषयस्य स्वर्गे ( साध्ये ) अपि अविरुद्धम्, वृक्षे इव च्छेद्ये परशुविषयत्वम् । न च यागादेर्व्यापारस्य शब्दादेव ( साधनतया ) तत्प्रतीतेः । ज्ञानप्रदीपादीनां चोत्पत्तेरपि व्यापारत्वाभ्युपगमात् ।

( यथोक्तं ' स्वर्गं कुर्यात् ' इत्यवाक्योपदेश इति, तदनुपपन्नम्, द्विधा हि भवति क्रियानर्हता अत्यन्तसत्त्वात् गगनवत्, अत्यन्तासत्त्वाद्वा खपुष्पवत् । न चैतदुभयमपि स्वर्गादौ सम्भवतीत्याह– ) न च स्वर्गो नित्य, अत्यन्तमसत्त्वात् येनानाक्यः । उपायाज्ञानात् इति चेत् ( परिहरति– ) अत एव स ( उपाय. ) ज्ञाप्यते ( विधिना, अतश्च ज्ञातोपायः स्वर्गो भविष्यतीति ) । न चानारभ्यकर्तव्यताप्रसङ्ग. ( स्वर्गादे. ) फलस्यानुवादात् श्रवणाद्युपसंहाराय विधे., ' दध्ना जुहोति ' इति यथा । ( न वयमाचक्ष्महे न फलं विधीयेति, किंतु तदुद्देश्यत्वात् ) फलविषयाया एव प्रवृत्तेः यागविषयत्वेन ( अज्ञातत्वात् ) शब्दो हेतुः ( प्रमाणं ) इति यागो विधीयते । नहि अन्या पुरुषस्य कर्मणि प्रवृत्ति., अन्या करणे, करणे एव प्रवृत्तः फलप्रवृत्तो भवति, कर्मण्येव ( फले ) प्रवर्तमानः करणे प्रवर्तते । तदेव अर्थावगमात् वैयर्थ्यम् । नाप्यन्यत् ( आत्मज्ञानाधिकारानुवेश. ) प्रयोजनम् । ' स्वर्गकामो यागं कुर्यात् ' इति यागविधे शब्दे तत्समवायात् ( तत्रैव तात्पर्यसमवायात् ) अप्रमाणत्वात् ( आत्मज्ञानाधिकारानुप्रवेशस्य । तत्परत्वे वा– ) श्रुतहानात् अश्रुतकल्पनाच्च ( श्रुतयागकर्तव्यताहानात् अश्रुतात्मज्ञानानुप्रवेशकल्पनाच्च ) । न च दृष्टमेव प्रयोजनं आत्मप्रतिपत्तिः, कर्मभिः कृतकामनिबर्हणेन दान्तेन कामैरनाकृष्टमनसा आत्मतत्त्वस्य बुभुत्सितत्वात् । यदि नन्तु कामनिबर्हणानि कर्माणि, तैश्च कृती न प्रयोजनान्तरमपेक्षते कामी, तथा च तत्पर एव कर्मविधि इति नान्यपरत्वे प्रमाणम् ( कामनानपेक्षितत्वात् ) । न नाशकरम्, धर्मोऽभिधायकत्वात् श्रेयस. प्रीतिरूपत्वात्, प्रीतेश्च कामेषु प्रत्यात्मसपेक्षत्वात् । न च भोगो निबर्हणम्, नहि कामानां तृप्तिरस्ति । अथ प्रवृत्त्यन्तरनिवृत्त्या, तथापि यदि कामी यागेन कुर्यात् नान्येनोपायेन कामम्, को विशेषः कामपक्षे ( कामाक्षेपे इति कश्चिकायाम् ) केवलं कामनिवृत्त्याय प्रवृत्तौ, यथ च पक्षेऽपि अप्राप्तविधौ अन्यनिवृत्ति. । अथ कामी यागं कुर्यात् कामम्, ( उत्तर– ) दुर्लभमर्थद्वयं अविशेषतः श्रौतत्वस्थापितारिकम् । ( यागं कुर्यादिति श्रौते सम्भवति, न कामनिवृत्तिरर्थापत्तिः युक्ता आश्रयितुमिति ) यागविधिपरत्वे न कामनिषेध, कामनिषेधपरत्वे न यागविधि. । अर्थात् ( अर्थापत्त्या ) कामनिवृत्ति. ( इति चेन्न ) उभयस्याप्यसम्भवात् । सर्वदृष्टार्थप्रवृत्तिनिरोधे च कर्मविधिहनेऽपि अपार्थकाः स्युः दृष्टोपायसाध्यत्वात् तद्धर्मस्य ( यागादे ) । स्वाभाविकत्वाच्च फलोपभोगस्य स्वभावतश्च एतस्मात्सर्थं छन्दना आश्रित स्यात् । तस्मात् महद्दण्डपदमिद ' दृष्टैव कर्मविधय आत्मज्ञानाधिरम्भारोहन्ति ' इति । नियोगस्यानुष्ठापकत्वं शास्त्रस्य इति ज्ञाननियोगोऽपि नियोगस्यानुज्ञापनमात्र इति न तत्र आत्मप्रतिपत्ति. । ( शङ्कते– ) ज्ञानस्वभावादिति चेत्, ( निराकरोति– ) विधिवैयर्थ्यात् । अवहन्त्यादिवत् इति चेत्, न, नियमार्थत्वात् ( अवहन्त्यादिविधेः ) । न ज्ञानविशेषनियम, पक्षेऽपि अज्ञाने । समत्वेन च सम्भवात् न तत्परिच्छेदः । ( उपसंहरति– ) तस्मात्साधने भावार्थे अधिकारसिद्धि. । साधनस्य चास्य विधि. इत्युक्तम् ॥ विधिविवेकः समाप्त. ।